# उदाहारः

सुरभारतीपरिचरणप्रयतान्तःकरणानां सदाचारशरणानां भारतीयसंस्कृति-संरक्षणतत्पराणां श्रीमतां तत्रभवतां भवतामतिरोहित एषोऽर्थो यद्दिव्यसाहित्ये [illegible] कीदृशं स्थानमिति ।

यद्यपि कविकर्मनिर्वहणप्रवणानां समेष्वपि साहित्याङ्गेषु परममहदुत्तरदायित्वं, परं नाटकाऽभिधानेन समुपनिबद्धे प्रबन्धे ग्रन्थकारस्य यादृशः कार्यभारस्तथा नेतराङ्गेषु । इममेवार्थं लक्ष्यीकृत्य व्यलेखि भरतेन महामुनिना—

'न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।
न स योगो न तत्कर्म नाटके यन्न दृश्यते ॥' इति ।

तादृशस्य नाटकस्योत्पत्तिविषये विदुषां सुमहान्मतभेदः परिलक्ष्यते । 'नाटकस्य पूर्वप्रादुर्भावो यवन ( ग्रीस ) देशात्तत एव भारतीया आर्यास्तस्य निर्माणमभिनयं च शिक्षितवन्त' इति बहूनां प्रतीच्यविदुषां तदनुसारिणां चाऽभिमतम् । अत्राय ते भारतीयनाटके प्रयुज्यमानं यवनिकाशब्दमुदाहरन्ति ।

परं वेदसंहितायां, ब्राह्मणभागे, प्राचीनमहाकाव्ये, पाणिनीयायामष्टाध्याय्यां पातञ्जले महाभाष्ये च पुरातननाटकानां बहूनि निदर्शनानि समुपलभ्यन्ते । एवं च रामायणे 'व्यामिश्रक' शब्दः संस्कृतप्राकृतनाटकाऽर्थे प्रयुक्तः । अष्टाध्याय्यां 'पाराशर्य्यशिलालिभ्यां भिक्षुनटसूत्रयोः' ( ४।३।११० ) 'कर्मन्दकृशाश्वादिनिः' ( ४।३।१११ ) इति सूत्रद्वये महामुनिना पाणिनिना शिलालिकृशाश्वयोर्नटसूत्रयोरुल्लेखो व्यधायि । महाभाष्ये च 'शौभिक-शौभिका-शोभनिका-' प्रभृतिशब्दैः सुकृतिना मुनिवरपतञ्जलिना भारते नाट्यरङ्गस्य विद्यमानता स्फुटीकृता । तत्रैव च 'घातयति-कंसवध' प्रभृतिशब्दानां च प्रयोगोऽवलोक्यते । किं बहुना ? मगधराजो बिम्बिसारो नागराजउमानन्दाय नाटकाऽभिनयमकारयत् । बुद्धदेवस्तु नाट्याभिनयस्याऽकर्तव्यतामुपादिशत्तदनुगामिने । एवं चाऽतिपुरातनादनिर्दिष्टसमयादारभ्य वैदग्ध्यालोकमध्यां प्रयोगस्थानीतत्वामपि भारते वर्षे नाटकप्रचारपर्यालोचनया 'भारतीयं नाटकं यवनदेशाद्गृहीत'मिति मतं सर्वतोभावेन दुर्विदग्धानामज्ञानविजृम्भितम् ।

अथाऽवशिष्टो यवनिकाशब्दविचारः । शुद्धः शब्दो जवनिका यमनिका वा वर्तते । ततो यवनिकापदं यमनिकाया अपभ्रंशरूपेणैव सर्वसाधारणप्रयोगेषु लब्धाऽ-

स्यैकस्मिन्पुराणे हस्तलिखितपुस्तके 'प्रकरणमिदं कुमारिलशिष्यस्योम्वेकाचार्यस्ये'ति निर्दिष्टम्। उम्वेकाचार्यश्च निखिलविद्वत्कुलललामकुमारिलभट्टकृतस्य श्लोकवार्तिकस्य टीकाकारत्वेन प्रसिद्धः। एवं च चित्सुखाचार्यप्रणीततत्त्वप्रदीपिकाऽऽख्यस्य विख्यातवेदान्तग्रन्थस्य व्याख्याकारेण प्रत्यग्रूपकृत उम्वेकनामचर्चाप्रसङ्गे भवभूतेरुम्वेकस्य च तादात्म्यप्रतिपादनेनाऽप्यस्याऽर्थस्य समर्थनं भवति।

परमत्रायमयं विमर्शः—भवभूतिना स्वगुरुर्ज्ञाननिधिरिति वर्णितो न कुमारिलभट्टस्तत एतल्लेखनं न प्रमाणपदवीमारोढुमीष्ट इति केचित्। अस्मन्मते तु कुमारिलभट्टस्यैव नामान्तरमुपाधिर्वा ज्ञाननिधिरिति संभवेत्। 'परमहंसानां श्रेष्ठ' इति ज्ञाननिधेर्विशेषणदर्शनात्तस्योत्तरमीमांसाचार्यत्वमेव सिध्येत्, कुमारिलभट्टस्तु पूर्वमीमांसायामेव निष्णात आसीदतः कथं नाम ज्ञाननिधिकुमारिलयोरैक्यं प्रतीयत इति विप्रतिपत्तौ—यस्मिन् विषये विदुषां कृतिः समासाद्यते तदितरविषये तेषामाचार्यत्वं न संभवतीत्येषा किमीश्वरस्यादेश उताहो राज्ञः? कुमारिलभट्टो वेदान्तेऽपि कृतभूरिपरिश्रम आसीदित्यत्र विचारः—

'इत्याह नास्तिक्यनिराकरिष्णुरात्माऽस्तितां भाष्यकृदत्र युक्त्या।
दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन॥'

श्लोकवार्तिकस्थितयैतया तदुक्त्या परिपोषमाप्नोति। अपरं च तदानीन्तना आचार्याः प्रायशोऽध्ययनाऽनन्तरमेव तत्तन्मतानां खण्डनमण्डनादिव्यापारेषु प्रवृत्ता अभूवन्निति तदानीन्तनमनीषिण इव स्वोत्प्रेक्षितवचनबलादेव तादृशव्यवसायमकार्षुः।

यद्वा किमेकस्य शिष्यस्य गुरुबाहुल्यं न संभवति? 'नैकः सर्वं विजानाती'ति नयेन तत्तच्छास्त्रेषु तत्तद्विशिष्टज्ञानवैदग्ध्यप्रदर्शकत्वाऽपि शिष्यस्य बहवो गुरवः स्युः। इत्थं च भट्टोम्वेकाऽपरपर्यायस्य भवभूतेः पूर्वमीमांसायां कुमारिलभट्ट उत्तरमीमांसायां च ज्ञाननिधिर्नाम गुरुरासीदित्यपि संभावनापदवीमारोहति। अपरं महावीरचरिते चतुर्थेऽङ्के 'दाण्डायन-सौधातकि-' संलापे 'समांसो मधुपर्क' इत्याकारकवाक्यकदम्बकं मीमांसकपदस्य भवभूतेः श्रौतकर्मसमर्थकं दृश्यते। इत्थमेव 'पदवाक्यप्रमाणज्ञः' इत्येतद्विशेषणमस्य धीभूमेरस्य मीमांसकत्वमपि स्फुटं प्रतिपादयति। एवं श्लोकवार्तिके तात्पर्यटीकाया रचयिता नाम्नोम्बेकः, परं तत्र भट्टपदस्य पूर्वसंनिवेशेन भट्टोम्बेक इति कारणं प्रदर्शितमस्माभिर्न भवभूतेः पितामहोऽपि भट्टगोपालः। तदनुसारेण गोपालो भट्टपदस्य पूर्वसंनिवेशेन भट्टगोपाल इति स्यात्, ततो भट्टपद नाम्नो रूपेण तदेकदेशत्वेन वा न पुनाऽप्यु-

'कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः ।
जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम् ॥'

श्लोकोऽयं काश्मीराऽधीश्वरस्य मुक्तापीडललितादित्यस्योत्कर्षवर्णनेऽभिहितः । ललितादित्येनाऽऽयत्तीकृतस्याऽस्यैव कान्यकुब्जाऽधीशस्य यशोवर्मणः सभायां भवभूतिः समास्तार आसीत् । यशोवर्मसमयश्च प्रायः सप्तपञ्चदशाधिकसप्तमशतकं विक्रमीयमित्यैतिहासिकैरुररीकृतमतोऽयमेव कालो भवभूतेरपीति मन्तव्य' ।

अयं महाकविरुज्जयिन्या, कान्यकुब्जे, काश्मीरे चैवमन्यत्राऽपि सततं पर्यटनशील आसीत्, कालिदास-बाणभट्टादिवज्जीविताऽवस्थाया न तादृशीं प्रतिष्ठामापेति विषयोऽस्यैव जातपूर्वचर्चान्मालतीमाधवस्थादेतस्मात्पद्यादनुमातुं शक्यते—

'ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्ति ते किमपि तान्प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा कालो ह्यय निरवधिर्विपुला च पृथ्वी ॥'इति

अस्य निरीक्षणेन महाकवेः खिद्यमानमानसत्वं साधारणमानवानामप्यतिरोहितं भवति । स्वाश्रयदातुर्यशोवर्मदेवस्य पराजयेनाऽपि तस्य हृदये प्रकाशरूपेण निर्वेदातिशयो लब्धाऽवकाशः स्यादित्ययमप्यर्थ ऊहितुं शक्यते, । 'उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा कालो ह्ययं निरवधिर्विपुला च पृथ्वी' त्येतत्कथनेन तादृशेऽपि काले कविवरे स्वभावोचितस्याऽऽत्माऽभिमानस्य सत्वं कस्य सचेतसश्चेतसि स्वकीयं महत्त्वं न स्थापयति । यथाऽय कविवरोऽलौकिक्या काव्यशक्त्या परमाऽनुपमस्तथैव शास्त्रीये पाण्डित्ये चाऽत्युद्भट एवाऽऽसीदितीयं वार्ताऽदसीयाभिन्नस्थान्मालतीमाधवीयपद्यादवसीयते—

'यद्वेदाऽध्ययनं तथोपनिषदां सांख्यस्य योगस्य च
ज्ञान तत्कथनेन किं ? न हि ततः कश्चिद् गुणो नाटके ।
यत्प्रौढत्वमुदारता च वचसां यच्चार्थतो गौरवं
तच्चेदस्ति, ततस्तदेव गमक पाण्डित्यवैदग्ध्ययोः ॥' इति ।

अस्मादेव हेतो कविवरेण स्वीया समस्ताऽपि कृति' प्रायो गौडीरीत्या महताऽऽडम्बरेण प्रकाशिता, परं यत्र कुत्राऽपि वैदर्भी रीतिरभ्युद्गता तत्राऽप्यधिगता प्रकर्षाधिक्यात्पूरिता सफलता । किं बहुना स्वविषय एतदीयकथनमेतत्तथ्यपूर्णं भवति—

'य ब्रह्माणमिय देवी वाग्वश्यैवाऽनुवर्तत ।' इति । ( २।२ )

अस्य शास्त्रीयपाण्डित्यव्यञ्जकानि कानिचिदुदाहरणानि प्रदर्श्यन्ते—महावीर-

प्रयुज्यते, विशेषणरूपेणैव प्रयुज्यमानत्वात्। शास्त्रचतुष्टयवेत्ता भट्टपदोपाधिको भवति। इत्थं च भट्टगोपालनामसादृश्यादपि भवभूतिभट्टोम्वेकयोरेकभूयत्वं संगच्छते।

अपरमिदमपि प्रमाणं तथ्यकोटिमाटीकते—तात्पर्यटीकायाः प्रक्रमे भट्टोम्वेकेन 'ये नाम केचिदिह न' इति श्लोकोऽवतारितः। स्फुटमेवैष श्लोको भवभूतिकर्तृको मालतीमाधवप्रकरणे सूत्रधारमुखतो वर्णितः। अतो निःसङ्कोचं शक्यते वक्तुमेतद्यथा कालिदासेन केचिच्छ्लोका रघुवंशकुमारसम्भवयोः समानरूपेणाऽवतारितास्तथैव भवभूतिना स्वप्रणीतकृतिद्वितयेऽपि श्लोक एषोऽविशेषरूपेण विचक्षणानां लोचनगोचरीकृतः।

ननु ग्रन्थ उद्धरणादेव यस्य कस्याऽपि श्लोकस्य ग्रन्थकर्तृकर्तृकत्वं स्यात्तदा सुगृहीतनामधेयेन कुमारिलभट्टेन निजग्रन्थे 'सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः' इत्युद्धृतस्य कालिदासीयश्लोकार्द्धस्याऽपि तदीयत्वं स्यादतोऽस्य युक्तिर्विचारसहा नेति चेन्न। लौकिकोक्तेरपि शास्त्रार्थे क्वचिदुपादेयत्वाद्भट्टपादेन प्रामाणिकरूपेणोद्धृतमिदं श्लोकार्द्धम्, परं भट्टोम्वेकेन स्वनिर्मितग्रन्थान्तरश्लोक उपोद्घातत्वेनाऽवतारितः। ग्रन्थारम्भ एव परकर्तृकश्लोकं न कोऽपि मतिमान्विन्यसेत्।

यद्येवं तर्हि कुमारिलभट्टेन श्लोकवार्तिकप्रारम्भे—

'विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे।
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्द्धधारिणे॥'

इति सप्तशत्यप्रभूतस्य कीलकस्तोत्रस्याऽऽद्यः श्लोकः कथमुद्धृत इति चेन्न। अस्य परकर्तृकत्वेऽपि शङ्करनमस्कारात्मकेन यद्वा प्रणिपाताकारेण वा मङ्गलरूपेण कुमारिलभट्टकृतं प्रदर्शनं नाऽस्मदीयमतप्रतिकूलम्। एतत्प्रातिलोम्येन 'ये नाम' इत्यादि पद्यं तु न मङ्गलप्रयोजनकं, प्रत्युत स्वकृतिषु परोद्भावितदोषकषायितचेतसा नूनमेवमनेन भवभूतिना स्ववैशिष्ट्यप्रकटीकरणायैव विन्यस्तमिति भवभूतिभट्टोम्वेकयोः सत्ता नाऽन्योन्याभावगर्भेति सर्वं निरवद्यम्।

भवभूतिग्रन्थतस्तस्य समयचरितादिविषयः पूर्वोल्लिखिताऽतिरिक्तो न प्राप्यते। अस्य महाकवेः रूपकत्रयमपि कालप्रियानाथोत्सवेऽभिनीतमासीदिति तत्रैव व्यक्तं विभाव्यते। अयं कालप्रियानाथ उज्जयिनीस्थो महाकालेश्वर इत्यवसीयते।

मार्त्तण्डवंशतिलकेन विचक्षणपुङ्गवेन कविवरकल्हणेन स्वकृतेतिहासमध्ये राजतरङ्गिण्याम्—

'कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः।
जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम् ॥'

श्लोकोऽयं काश्मीराऽधीश्वरस्य मुक्तापीडललितादित्यस्योत्कर्षवर्णनेऽभिहितः। ललितादित्येनाऽऽयत्तीकृतस्याऽस्यैव कान्यकुब्जाऽधीशस्य यशोवर्मणः सभायां भवभूतिः सभास्तार आसीत्। यशोवर्मसमयश्च प्रायः सप्तपञ्चदशाधिकसप्तमशतक विक्रमीयमित्यैतिहासिकैरुररीकृतमतोऽयमेव कालो भवभूतेरपीति मन्तव्यः।

अयं महाकविरुज्जयिन्या, कान्यकुब्जे, काश्मीरे चैवमन्यत्राऽपि सततं पर्यटनशील आसीत्, कालिदास–बाणभट्टादिवज्जीविताऽवस्थाया न तादृशीं प्रतिष्ठामापेति विषयोऽस्यैव जातपूर्वचर्चान्मालतीमाधवस्यादेतस्मात्पद्यादनुमातुं शक्यते—

'ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्ति ते किमपि तान्प्रति नैष यत्नः।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥'इति

अस्य निरीक्षणेन महाकवे खिद्यमानमानसत्वं साधारणमानवानामप्यतिरोहितं भवति। स्वाश्रयदातुर्यशोवर्मदेवस्य पराजयेनाऽपि तस्य हृदये प्रकाशरूपेण निर्वेदातिशयो लब्धाऽवकाशः स्यादित्ययमप्यर्थं ऊहितु शक्यते,। 'उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा कालो ह्ययं निरवधिर्विपुला च पृथ्वी' त्येतत्कथनेन तादृशेऽपि काले कविवरे स्वभावोचितस्याऽऽत्माऽभिमानस्य सत्वं कस्य सचेतसश्चेतसि स्वकीयं महत्त्वं न स्थापयति। यथाऽय कविवरोऽलौकिक्या काव्यशक्त्या परमाऽनुपमस्तथैव शास्त्रीये पाण्डित्ये चाऽत्युद्भट एवाऽऽसीदितीयं वार्ताऽदसीयाभिन्नस्यान्मालतीमाधवीयपद्यादवसीयते—

'यद्वेदाऽध्ययनं तथोपनिषदां सांख्यस्य योगस्य च
ज्ञान तत्कथनेन किं ? न हि तत. कश्चिद् गुणो नाटके।
यत्प्रौढत्वमुदारता च वचसां यच्चार्थतो गौरवं
तच्चेदस्ति, ततस्तदेव गमक पाण्डित्यवैदग्ध्ययोः ॥' इति।

अस्मादेव हेतो कविवरेण स्वीया समस्ताऽपि कृति• प्रायो गौडीरीत्या महताऽऽडम्बरेण प्रकाशिता, परं यत्र कुत्राऽपि वैदर्भी रीतिरभ्युद्गता तत्राऽप्यधिगता प्रकर्षाधिक्यात्पूरिता सफलता। किं बहुना स्वविषय एतदीयकथनमेतत्तथ्यपूर्णं वर्वर्त्ति—

'यं ब्रह्माणमिय देवी वाग्वश्यैवाऽन्ववर्तत।' इति। (७१२)

अस्य शास्त्रीयपाण्डित्यव्यञ्जकानि कानिचिदुदाहरणानि प्रदर्श्यन्ते—महावीर-

चरिते कविवरेण पुरोधःप्रशंसायां 'राष्ट्रगोप' पुरोहित' इत्याकारक ऐतरेयब्राह्मणस्य कश्चिन्मन्त्र उद्धृत ।

उत्तररामचरितस्य चतुर्थाङ्के जनकाऽऽननादेव 'असुर्या नाम ते लोका' इत्यादिवाक्यानि निर्गमय्य भवभूतिनेशावास्योपनिषद्विज्ञता विज्ञप्ता । तत्रैव—

> विद्याकल्पेन मरुता मेघानां भूयसामपि ।
> ब्रह्मणीव विवर्तानां क्वापि प्रविलयः कृतः ॥' इति ( ६।६। ) ।

अनेन श्लोकेन कृतिवरेणाऽद्वैतवेदान्तसिद्धान्त उद्भासितः । मालतीमाधवे च महाकविना योगे तन्त्रे च स्वस्यापरतन्त्रत्व विशदीकृतम् । इत्थमापातत आलोकनेनाऽप्यस्य लोकोत्तरं वैदुष्यमवसीयते ।

साम्प्रतं भवभूतिकालिदासयोश्चाऽऽशिकतुलनोपकल्प्यते । बाह्यजगच्चित्रणे यथा कालिदास· सफलप्रयासस्तथैवाऽन्तर्जगदालेख्यलेखने श्लाघनीयाऽनुभूतिर्भवभूतिरिति । स्वस्वविषयसाफल्ये द्वावपि कविमूर्धन्यौ परमधन्यौ चेति समसम्मतया निष्प्रपचं शक्यते वक्तुम् ।

'एक एव भवेदङ्गी शृङ्गारो वीर एव वा' इत्याकारकाऽऽलङ्कारिकनयपरिसरणपुर सरं कालिदासेनाऽवश्यमेव स्वीय पुरातनसिद्धान्तपारवश्यं प्रकाशितं, परं कविकुलकुमुदसुधासूतिना भवभूतिनाऽत्र विषये नैज प्रतननियमाऽनिघ्नत्वं निर्विघ्नमेव प्रसाधितम् । सहृदयहृदयद्रावका करुणरस एनेनैव महाकविना शृङ्गारवीररसकक्षायामवतारित इतीयमेव का कथा ? सर्वथा स्वयुक्तिशक्त्येतरेषा समेषामपि रसानां करुणस्यैव शेषत्वेन प्रवेशो विनिवेशित· । अमुमेवाऽर्थं प्रतिपादितवान् महाधीमान कविवरोऽनया वाचोभङ्ग्या—

> 'एको रस· करुण एव निमित्तभेदाद्भिन्न· पृथक्पृथगिवाश्रयते विवर्तान्
> आवर्तबुद्बुदतरङ्गमयान्विकारानम्भो यथा, सलिलमेव तु तत्समग्रम् ॥'
> इति ( ३।४७ ) ।

अत पार्यते वक्तुं विषयेऽत्र भवभूतिर्मतिवैशिष्ट्येन कालिदासमतिशेते ।

श्लाघनीयप्रतिभानिन्दामयोर्भवभूतिकालिदासयोर्द्वयोरपि कृतिषु विपुलहृदयैः कवेयो गभीरध्वनि· प्रचुरपरिमाणे निभाल्यते । कालिदास· प्रकृतिदेव्या मनोरमा मूर्तिमनाहतभावेनाऽद्राक्षीत्, पर भवभूतिस्तस्या भीषणा प्रशान्तगम्भीरा च मूर्ति समीचीनया विधया लोचनगोचरीचकार । अतएव दण्डकारण्ये दृश्यपदार्थाना दर्शने तादृशी प्रशान्तगम्भीरा भीषणा च प्रकृतिप्रतिकृति· पुरत प्रादुर्भवति ।

सम्प्रति भवभूतिकृतप्रकृतकृतिवैशिष्ट्यं प्रतिपाद्यते। उत्तररामचरिताभिधानं नाटकमिदं वाल्मीकिरामायणस्योत्तरकाण्डस्थकथाभागात्संगृहीतं विद्यते। अस्य नाटकस्योत्तरकाण्डस्थकथानकत्वाद्वा महावीरचरितपरिशिष्टाऽशरूपेण स्थितत्वादेतादृशं नामधेयं समजनि। आहोस्विदुत्तरमुत्कृष्टं रामचरितं यस्मिंस्तदुत्तररामचरितम्। अत्रत्यरामचरितस्योत्कृष्टत्वं चेत्थम्—युद्धकाण्डं यावत्स्थितस्य रामचरितस्य रामे मातापित्रादिगुरुजनभक्ति, पत्न्यनुजप्रजाजनाऽनुरक्तिश्चेत्यादयो गुणा वर्तन्ते, परं तेऽप्युत्तरकाण्डस्थरामचरिते प्रजाजनाऽनुरञ्जनाऽर्थमादर्शस्थापनार्थं च मर्यादापुरुषोत्तमस्य भगवतः श्रीरामस्य सीतानिर्वासनं सर्वविधसामर्थ्योल्लासिते परमोद्दामयौवनेऽपि विवेकवशीकृतस्य चेतसो निर्वासनत्वं, सर्वथैवाऽनुपमानं धीरधुर्वहत्वं, वर्णाश्रमधर्मसंरक्षणचणत्वं, सपत्नीकत्वेन सम्पादनीयेऽश्वमेधेऽपि सीताया प्रतिकृत्यैव मखकार्यनिर्वाहकत्वं चैवमादिगणनाऽतीतगुणगणाऽपेक्षया सुतरां न चकास्तीति निश्चप्रचम्, अत एवैतादृशभास्वरचरित्रचित्रणात्मकत्वादस्य नाटकस्य कविकृतमुत्तररामचरितमिति नामधेयं मतिमुकुरे हृदयङ्गमरूपेण प्रतिफलति।

अत्र नाटके बहवोंऽशाः कविकल्पनाप्रसाधिताः समुपलभ्यन्ते। दिग्दर्शनं यथा—आलेख्यदर्शनम्। आत्रेय्या वनदेवतया वासन्त्या सम तमसायाश्च मुरलया सह संलापः निस्तमसः सीतायास्तमसया सरिता सत्रा निर्विष्टपूर्वस्थाननिध्यानम्। प्राचेतसाश्रमपदे कौसल्याजनकादीनां सम्मेलनम्। भरतमुनिकर्तृको रामायणनाटकाऽभिनयः। चरमेऽङ्के च सीतारामयोर्विस्मयहर्षोत्कर्षावायकः समागमश्चेत्यादयो बहवो भागाः कवेरनल्पकल्पनाविलासप्रसूताः। भवभूतिरत्र द्वादशसंवत्सरघटनासंघटनं चकार। आलङ्कारिकसमयपरिरक्षणार्थं बहुषु स्थलेषु कविवरेण्येन विष्कम्भकादितः संवादद्वाराऽनेकघटनाः संघटिताः।

अत्रत्य आलेख्यदर्शनाऽङ्कः संस्कृतसाहित्येऽनुपमः सर्वथैवाऽपूर्वश्च। चित्रदर्शनप्रयोजनविषये विदुषामनेका विप्रतिपत्तयः प्रतिपत्तिपथे प्रादुर्भवन्ति। दिग्दर्शनं यथा—रामस्य राज्याऽभिषेकाऽनन्तरं नैरन्तर्येण सुखाऽनुभूतिसमये सीताकर्तृकं पूर्वाऽनुभूतवनवासादिवियोगदुःखप्रत्यभिज्ञापकमालेख्यदर्शनं नाऽभविष्यच्चेत्तर्हि किंचित्क्षणाऽनन्तरमेव भविष्यतस्तत्क्षणं निरवधिरूपेण प्रतीयमानस्य विरहदुःखस्य मर्षणक्षमत्वं सीताया नाऽभविष्यत्। उक्तं चाऽत्रैव—

'पुरन्ध्रीणां चित्तं कुसुमसुकुमारं हि भवति।' इति।

अतश्चित्रदर्शनं सीतानिर्वासनव्यापारस्याऽसाधारणमुपकारकारणमिति केचित्।

अपरेषा मते तु कालिदासाऽपेक्षया स्ववैलक्षण्यं लक्षयितुं भवभूतिना चित्रदर्शनं निजकृतावतारितम्। यथा वा महाकविना कालिदासेन—

'तयोर्यथाप्रार्थितमिन्द्रियाऽर्थानासेदुषोः सद्मसु चित्रवत्सु।
प्राप्तानि दुःखान्यपि दण्डकेषु सञ्चिन्त्यमानानि सुखान्यभूवन्'॥ (१४।२५)

इति रघुवंशश्लोके सीतारामयोश्चित्रदर्शनोदन्त एव प्रदर्शित। परं भवभूतिना तदेव चित्रमात्माऽनल्पकल्पनाकूर्चिकया परिवर्द्धय कुशलवयोर्जृम्भकाऽस्त्रायासादन-ससाधनकार्यजात विधाय स्वस्योत्कर्ष सरक्षित। महाकवेरेवमादिकल्पनाऽवलोकनेनैव केनाऽप्युक्तम्—

'उत्तरे रामचरिते भवभूतिर्विशिष्यते।' इति।

महर्षिवाल्मीकिकृत सीताविसर्जनवर्णनं पठित्वा कोऽपि हृदयालुर्नयनजलसवरणं कर्तुं न पारयति। भवभूतिस्तस्यैव करुणस्य विश्लेषणे स्वनिष्ठा सकलामपि शक्तिमुपयुयोज। पुञ्जीभूतमुपल विदार्य रामस्याऽगाधः सहधर्मिणीप्रणयाऽम्बुधिस्तलस्पर्शरहितो दु खप्रवाहश्चाऽपरीवाहं भवभूतिकृतौ सञ्चरते। विमृश्यता तावद्दुरपनेयविरहदु खस्यैतस्मादधिकमालेख्य कथ नाम विधातु पार्यते—

'अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्।' इति। (१।२८)

अत एव गोवर्द्धनाचार्य आर्यासप्तशत्यामित्थ भवभूतिनुतिं प्रत्यपादयत्—

'भवभूतेः सम्बन्धाद् भूधरभूरेव भारती भाति।
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा॥' इति॥

नाटक आवश्यकत्वेनाऽभिमतस्य विदूषकस्याऽभावेऽत्र बहव सूरिवरा भूरितरविचार प्रदर्शयन्ति। परमस्मन्मतेऽत्र करुणरसस्य शेपित्वाद्धास्यरसपोषकस्य विदूषकस्य न तादृश उपयोग। तथाऽप्येकत्र स्थले मुनिकुमारमुखतो हयवर्णनव्यपदेशेन मधुरया गिरा गुम्फित एक श्लोक समुपलभ्यते। स यथा—

'पश्चात्पुच्छं वहति विपुल तच्च धूनोत्यजस्र
दीर्घग्रीव स भवति खुरास्तस्य चत्वार एव।
शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रान्
किं चाऽऽख्यातैर्व्रजति स पुनर्दूरमेह्येहि याम॥' इति। (४।२६)।

इत्थं चेदोत्तररामचरित आलङ्कारिकाणा कथाया वर्णनस्य च दृष्ट्या रमणीयसरणिप्रचलिता स्वातन्त्र्यविभूषिता प्रतिभा परिलक्षिता भवति। कवेरेतादृश एव कृतिस्वातन्त्र्ये केनाऽपि विदुषाऽभिहितम्—

'अपारे काव्यसंसारे कविरेकः प्रजापतिः ।
यथाऽस्मै रोचते विश्वं तथेदं परिवर्तते ॥
शृङ्गारी चेत्कविः काव्यं सर्वं रसमयं भवेत् ।
स एव वीतरागश्चेन्नीरसं सर्वमेव तत् ॥' इति ।

परमत्राऽपरोऽय द्वापरः पुरत आविर्भवति । कवेरेतादृशे स्वातन्त्र्ये सत्यपि तत् कृतघटनाऽन्यथाकारे किमप्युचितं बीजमुपादायैव प्रसरति । ससीममेव तत्स्वातः त्र्यमिति वक्तव्यम् । अत्राऽर्थे यथा निगदितं विश्वनाथकविराजेन—

'यत्स्यादनुचितं वस्तु नायकस्य रसस्य वा ।
विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत् ॥' इति ।

अनुचितमितिवृत्तं यथा—रामस्य छद्मना वालिवधः । तच्चोदात्तराघवे नोक्त- व । वीरचरिते तु वाली रामवधार्थमागतो रामेण हत इत्यन्यथाकृतः ।' इति ।

यन्नाम महाकविना चरमेऽङ्के सीतारामयोः समागमोत्पादनेन प्रकृतनाटकं संयो- गान्तं विहितं तदैतिहासिकनयाऽनुगुणं कथङ्कारं संगच्छते ? तथा च रामकर्तृकस्य सीतापरित्यागस्य रागद्वेषमूलकत्वाऽभावात्तस्य नाऽनुचितेतिवृत्तता, यथाऽन्यथाकारः संभवेत् । संयोगात्मककृत्या कृतिना माङ्गलिकी भारतीयरीतिपरम्परा पुरातनसंस्थापरा कारितेति सत्यम् । परमिहैतिहासिकानामुताहो पुरातनभारतीयानां परम्परा संरक्षणो- येति कतरः पक्षो वरतर इत्यालोचनीयम् ।

अयेयमुपन्यस्यत एतादृश्या विचिकित्सारुजायाः समाधानरूपा चिकित्सा । पद्म- पुराणीया पातालखण्डस्थां रामाऽश्वमेधीयां कथामनुसृत्य महाकविना समारचित एष व्यतिकरः । अतो निरङ्कुशदोपलेशेनाऽप्यपरामृष्टत्वात् प्रत्युत पुरातनोभयविधनिय- माऽनुसरणतः कृतिवरस्यैतत्कृत्य भूषणमेव न तु सहदूषणमिति सर्वं रमणीयम् ।

यद्येवं तर्हि रामायणेन पद्मपुराणस्य विसंवादः साऽपवाद एवेति चेन्न । 'यः कल्पः स कल्पपूर्वः' इति न्यायेन 'कल्पभेदाच्चरित्रभेदः' इति व्यवस्थिततत्त्वादितिहासेन पद्म- लक्षणस्य सुसंवाद इत्युच्चैर्वादः ।

सम्प्रति समासेनोत्तररामचरितस्यवर्णनीयाऽस्थानामुल्लेखः क्रियते । निभा- ल्यतां तावत्कीदृशोऽयन्त्प्युत्कर्षाऽऽधायकः श्लोकः—

'लौकिकानां हि साधूनामर्थं वागनुवर्तते ।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति' ॥ ( १।१० ) इति ।
'युक्तः प्रजानामनुरञ्जने स्यास्तस्माद्यशो यत्परमं धनं वः' ( १।११ )

अपरेषां मते तु कालिदासाऽपेक्षया स्ववैलक्षण्यं लक्षयितुं भवभूतिना चित्रदर्शनं निजकृतावतारितम् । यथा वा महाकविना कालिदासेन—

'तयोर्यथाप्रार्थितमिन्द्रियार्थानासेदुषोः सद्मसु चित्रवत्सु ।
प्राप्तानि दुःखान्यपि दण्डकेषु सञ्चिन्त्यमानानि सुखान्यभूवन्' ॥ (१४।२५)

इति रघुवंशश्लोके सीतारामयोश्चित्रदर्शनोदन्त एव प्रदर्शित । परं भवभूतिना तदेव चित्रमात्माऽनल्पकल्पनाकूर्चिकया परिवर्द्धय कुशलवयोर्जृम्भकाऽस्त्राद्यासादन-ससाधनकार्यजातं विधाय स्वस्योत्कर्ष सरक्षित । महाकवेरेवमादिकल्पनाऽवलोकनेनैव केनाऽप्युक्तम्—

'उत्तरे रामचरिते भवभूतिर्विशिष्यते ।' इति ।

महर्षिवाल्मीकिकृत सीताविसर्जनवर्णनं पठित्वा कोऽपि हृदयालुर्नयनजलसवरणं कर्तुं न पारयति । भवभूतिस्तस्यैव करुणस्य विश्लेषणे स्वनिष्ठां सकलामपि शक्तिमुपयुयोज । पुञ्जीभूतमुपल विदार्य रामस्याऽगाधः सहधर्मिणीप्रणयाऽम्बुधिस्तलस्पर्शरहितो दुःखप्रवाहश्चाऽपरीवाहं भवभूतिकृतौ सञ्चरते । विमृश्यता तावद्-दुरपनेयविरहदुःखस्यैतस्मादधिकमालेख्य कथ नाम विधातु पार्यते—

'अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ।' इति । ( १।२८ )

अत एव गोवर्द्धनाचार्य आर्यासप्तशत्यामित्थं भवभूतिस्तुतिं प्रत्यपादयत्—

'भवभूतेः सम्बन्धाद् भूधरभूरेव भारती भाति ।
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा ॥' इति ॥

नाटक आवश्यकत्वेनाऽभिमतस्य विदूषकस्याऽभावेऽत्र बहवः सूरिवरा भूरितरविचारं प्रदर्शयन्ति । परमस्मन्मतेऽत्र करुणरसस्य शेषित्वाद्धास्यरसपोषकस्य विदूषकस्य न तादृश उपयोग । तथाऽप्येकत्र स्थले मुनिकुमारमुखतो हयवर्णन-व्यपदेशेन मधुरया गिरा गुम्फित एक श्लोक समुपलभ्यते । स यथा—

'पश्चात्पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
दीर्घग्रीव स भवति खुरास्तस्य चत्वार एव ।
शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रान्
किं वाऽऽख्यातैर्व्रजति स पुनर्दूरमेह्येहि याम ॥' इति । (४।२६) ।

इत्थं चेहोत्तररामचरित आलङ्कारिकाणा कथाया वर्णनस्य च दृष्ट्या रमणीयसरणिप्रचलिता स्वातन्त्र्यविभूषिता प्रतिभा परिलक्षिता भवति । कवेरेतादृश एव कृतिस्वातन्त्र्ये केनाऽपि विदुषाऽभिहितम्—

'तटस्थं नैराश्यादपि च कलुषं विप्रियवशा-
द्वियोगे दीर्घेऽस्मिन्झटिति घटनोत्तम्भितमिव ।
प्रसन्नं सौजन्याद्दयितकरुणैर्गाढकरुणं
द्रवीभूतं प्रेम्णा तव हृदयमस्मिन्क्षण इव ॥' इति । ( ३।१३ )

एवं च स्ववयस्यया वासन्त्या राम उपालब्धेऽपि राममयजीवितायाः सीतायास्तत्र स्वाऽनभिमतिप्रदर्शनं सतीधर्मस्य परां काष्ठामवगमयति । सीताप्रशंसाप्रसङ्गे व्यक्तिविशेषनैरपेक्ष्येण गुणानां प्रतीक्ष्यत्वं कथं प्रसाधितमिति चिन्त्यताम्—

'शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं द्रढयति ।
शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्याऽसि जगतां
गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ॥' इति । (४।११)

रक्षाऽवसरेऽपि लवचन्द्रकेत्वो रक्तसम्बन्धनिबन्धनस्य मिथोऽनुरागस्य द्योतिकोक्तिरियं स्वाभाविकत्वोपेता—

'यदृच्छासंवादः किमु गुणगणानामतिशयः
पुराणो वा जन्मान्तरनिबिडबद्धः परिचयः ।
निजो वा सम्बन्धः किमु विधिवशात्कोऽप्यविदितो
ममैतस्मिन्दृष्टे हृदयमवधानं रचयति ॥' इति । ( ४।१६ )

प्रणयस्य कारणाऽनपेक्षत्वं कीदृश्या विच्छित्त्या प्रदर्शितम्—

'व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥' इति ( ६।१२ )

सीतापरित्यागे रामस्य निर्दोषता महता कौशलेन प्रतिपादिता कविवरेण—

'घोरं लोके विततमयशो या च वह्नौ विशुद्धि-
र्लङ्काद्वीपे कथमिव जनस्तामिह श्रद्दधातु ।
इक्ष्वाकूणां कुलधनमिदं यत्समाराधनीयः
कृत्स्नो लोकस्तदिह विषमे किं स वत्सः करोतु ॥' इति (७।६)

अतिशयसङ्क्षेपेणाऽनायासलब्धेण मतिपथागतानि कानिचिद्वैशिष्ट्यानि प्रदर्शितानि, तानि नैतावत्त्वेन परिज्ञेयानि ।

इत्याकारकस्य महर्षिश्रेष्ठस्य वशिष्ठस्यादिष्टमाकर्ण्य भगवता श्रीरामचन्द्रेण यन्नाम प्रतिवाक्यं प्रयुक्तं तत्साम्प्रतिकेऽनभीप्सितराजतन्त्रे स्वतन्त्रभारते भारतीयैः 'पुरा धर्मनियन्त्रितराजतन्त्रे राज्ये कीदृशो वाचामगोचरः प्रकर्ष आसीदि' त्यालोचनीयोऽय विषय । तद्यथा—

'स्नेहं दयां च सौख्यं च यदि वा जानकीमपि ।
आराधनाय लोकस्य मुञ्चतो नाऽस्ति मे व्यथा ॥' इति । ( १।१२ )

पुरा संयोगदशायामनुभूतस्य सुखस्य कीदृशं निदर्शनमेतत्—

'जीवत्सु तातपादेषु नूतने दारसंग्रहे ।
मातृभिश्चिन्त्यमानाना ते हि नो दिवसा गताः ॥' इति ( १।१९ )

प्रणयस्य कीदृशोऽयमसाधारण॰ परिचय॰—

'अद्वैत सुखदुःखयोरनुगत सर्वास्ववस्थासु यद्-
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात्परिणते यत्प्रेमसारे स्थित
भद्रं तस्य सुमानुषस्य कथमप्येक हि तत्प्रार्थ्यते ॥' इति ( १।३९ )

लोकोत्तराणा चेतस कविकृतोऽयमभिनव॰ सस्तवः कीदृश सहृदयहृदयावर्जक इति विवेचयन्तु तावत्—

'वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥' इति ( २।७ )

दण्डकारण्ये वासन्तीविहितमिद मध्याह्नवर्णनमतीव स्वाभाविकम्—

'कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन सम्पातिभि-
र्घर्मस्रंसितवन्धनैः स्वकुसुमैरर्चन्ति गोदावरीम् ।
छायाऽपस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः
कूजत्क्लान्तकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः ॥' इति (२।९)

पतिनिर्वासिताया सीताया एतद्वर्णनं कस्य हृदये करुणा नोत्पादयेत्—

'परिपाण्डु दुर्बलकपोलसुन्दर दधती विलोलकवरीकमाननम् ।
करुणस्य मूर्तिरथवा शरीरिणी विरहव्यथेव वनमेति जानकी ॥' इति (३।४)

द्वादशसंवत्सरपर्यन्तं पतिवियोगव्यथामनुभूय सीतायाः शम्बूकवधाऽर्थं दण्डकाऽरण्यसमायातस्य रामस्य वाक्यमाकर्ण्य यादृशी हृदयदशाऽभूत्तस्याः कीदृशमन्तस्तत्त्वोद्घाटकं वर्णनमिदम्—

'तटस्थं नैराश्यादपि च कलुषं विप्रियवशा-
द्वियोगे दीर्घेऽस्मिञ्झटिति घटनोत्तम्भितमिव ।
प्रसन्नं सौजन्याद्दयितकरुणैर्गाढकरुणं
द्रवीभूतं प्रेम्णा तव हृदयमस्मिन्क्षण इव ॥' इति । (३।१३)

एवं च स्ववयस्यया वासन्त्या राम उपालब्धेऽपि राममयजीवितायाः सीतायास्तत्र स्वाऽनभिमतिप्रदर्शनं सतीधर्मस्य परां काष्ठामवगमयति । सीताप्रशंसाप्रसङ्गे व्यक्ति-विशेषनैरपेक्ष्येण गुणानां प्रतीक्ष्यत्वं कथं प्रसाधितमिति चिन्त्यताम्—

'शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं द्रढयति ।
शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्याऽसि जगतां
गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ॥' इति । (४।११)

रक्षाऽवसरेऽपि लवचन्द्रकेत्वो रक्तसम्बन्धनिबन्धनस्य मिथोऽनुरागस्य द्योतिकोक्तिरियं स्वाभाविकत्वोपेता—

'यदृच्छासंवादः किमु गुणगणानामतिशयः
पुराणो वा जन्मान्तरनिबिडबद्धः परिचयः ।
निजो वा सम्बन्धः किमु विधिवशात्कोऽप्यविदितो
ममैतस्मिन्दृष्टे हृदयमवधानं रचयति ॥' इति । (५।१६)

प्रणयस्य कारणाऽनपेक्षत्वं कीदृश्या विच्छित्त्या प्रदर्शितम्—

'व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥' इति (६।१२)

सीतापरित्यागे रामस्य निर्दोषता महता कौशलेन प्रतिपादिता कविवरेण—

'घोरं लोके विततमयशो या च वह्नौ विशुद्धि-
र्लङ्काद्वीपे कथमिव जनस्तामिह श्रद्दधातु ।
इक्ष्वाकूणां कुलधनमिदं यत्समाराधनीयः
कृत्स्नो लोकस्तदिह विषमे किं स वत्सः करोतु ॥' इति (७।६)

अतिशयसङ्क्षेपेणाऽनायासरूपेण मतिपथागतानि कानिचिद्वैशिष्ट्यानि प्रदर्शितानि, तानि नैतावत्त्वेन परिज्ञेयानि ।

कुत्रचिच्च समस्तपदबाहुल्येन प्रसङ्गाऽननुगुणानि दीर्घवाक्यानि हृदयोद्वेजकत्वेन सदूषणान्यपि वर्तन्त इत्यपि समालोचकधर्मं निर्वहन्नावेदयामि । परं गुणभूयस्त्वेन तादृशदोषनिमीलनमेव सर्वैरपि स्वीक्रियते ।

विस्तृतवर्णनाऽर्थं सर्वविधाऽवकाशस्याऽऽवश्यकता विद्यते । भगवत्कृपाऽभवि·ष्यच्चेत्तर्हि संस्कृतसाहित्येतिहासे भवभूतिवैशिष्ट्यवर्णनं विशदरूपेणाऽकरिष्यम् । अतः सम्प्रत्येतावतैव विरम्यते ।

भवभूतिकृतित्वेन प्रथितिमाप्तं गदाधरभट्टसंकलिते रसिकजीवने पद्यद्वितयं बृहच्छार्ङ्गधरपद्धतौ च एकं संहत्य पद्यत्रयं समुपलभ्यते । तद्यथा—

'अलिपटलैरनुयाता सहृदयहृदयज्वरं विलुम्पन्तीम्
मृगमदपरिमललहरीं समीर ! किं पामरेषु रे किरसि ॥" इति ।

एवं च—

'किं चन्द्रमाः प्रत्युपकारलिप्सया करोति गोभिः कुमुदाऽवबोधनम् ।
स्वभाव एवोन्नतचेतसां सतां परोपकारव्यसनं हि जीवितम् ॥' इति ।

पद्यद्वितयमिदं रसिकजीवनस्थं, तथा च—

'निरवद्यानि पद्यानि यदि नाट्यस्य का क्षतिः ? ।
भिक्षुकक्षाविनिक्षिप्तः किमिक्षुर्नीरसो भवेत् ? ॥' इति ।

इदं पद्यं बृहच्छार्ङ्गधरपद्धतिस्थितं वर्तते । अतो भवभूतिकृत्यन्तरमप्यनुमानविषयीक्रियते, सम्प्रति तदनुपलब्धेस्तूष्णीकत्वमेव कक्षीक्रियते ।

इदानीं विद्वल्लोककृतभवभूतिश्लोकाऽऽलोकार्थं किञ्चित्प्रयत्यते । सहृदयहृदया·ऽऽनन्दवर्द्धनेन गोवर्द्धनेन कृता भवभूतिप्रशंसा पूर्वमेव गता ।

कान्यकुब्जाऽधिपतियशोवर्मसभास्तारो वाक्पतिराज प्राकृतभाषामये स्वनिर्मिते 'गउड वहो' इत्यभिख्ये काव्ये निम्नस्थयाऽनया गाथया भवभूतिकृतिं समवर्णयत्—

भवभूइजलहिनिग्गयकव्वामयरसकणा इव फुरन्ति ।
जस्स विसेसा अज्जवि वियडेसु कहाणिवेसेसु ॥' इति ।

संस्कृतच्छाया यथा—

भवभूतिजलधिनिर्गतकाव्याऽमृतरसकणा इव स्फुरन्ति ।
यस्य विशेषा अद्याऽपि विकटेषु कथानिवेशेषु ॥' इति ।

कवीन्द्रः क्षेमेन्द्रो भवभूतेः शिखरिणीमित्थं वर्णितवान्—

'भवभूतेः शिखरिणी निरर्गलतरङ्गिणी ।
रुचिरा घनसन्दर्भे या मयूरीव नृत्यति ॥' इति ।

तिलकमञ्जरीकारो महाकविर्धनपालो भवभूतिमित्थं प्राशंसत्—

'स्पष्टभावरसा चित्रैः पदन्यासैः प्रवर्तिता।
नाटकेषु नटस्त्रीव भारती भवभूतितः॥' इति।

कविविभूतेर्भवभूतेर्विषये कस्यचिद्विदुषोऽभिमतमिदम्—

'सुकविद्वितयं मन्ये निखिलेऽपि महीतले।
भवभूतिः शुकश्चाऽयं वाल्मीकिस्तु तृतीयकः॥' इति।

भवभूतिविषये कस्यचित्कृतिन आकूतमिदम्—

'रत्नावलीपूर्वकमन्यदास्तामसीमभोगस्य वचोमयस्य।
पयोधरस्येव हिमाऽद्रिजायाः परं विभूषा भवभूतिरेव॥' इति।

काष्ठां गता क्व भवभूतिवचोविभूतिर्मच्चिद्गताऽतिलघुता सहजा च कुत्र?
श्रीकृष्णदासकृतिश्रेष्ठिवराऽनुनीतटीकाऽनुवादकृतिताऽऽस्पदमस्मि नीतः॥१॥
छात्राऽर्थमेव विवृतोऽस्ति मम प्रयासः सम्प्राप्यतेऽत्र न विदग्धवचोविलासः।
भ्रान्त्यादिदोषविसरं समुपेक्ष्य तावद् गृह्णन्त्विमं गुणगणग्रहणप्रवीणाः॥ २॥
समजनि समयः समात्रयास्समधिक एव कृतिस्त्वियं समाप्ता।
चतिकरदुरदृष्टदोषराशेः सचपलमात्मप्रकाशनं न चाशा॥ ३॥

ज्ञापनमेतदपि सम्प्रति प्राप्तकालं मन्ये तावदुत्तररामचरितस्य त्रिचतुरास्वपि प्राचीनाऽर्वाचीनासु व्याख्यासु कृतनयनपथाऽतिथित्वास्वपि वाधूलवीरराघवविरचिता पुरातनी भवभूतिभावतलस्पर्शिनीसमाख्या व्याख्या चन्द्रकलाऽभिख्यायामस्मदीयकृतौ विशेषरूपेण साहाय्यग्रहणाऽर्थं समवलम्बिता।

जातो यदीयदयया मम बोधलेशस्तद्द्वारतस्तदनु शास्त्रपथप्रवेशः।
तांस्तादृशान्गुरुजनानसकृत्प्रणम्य वन्दे च तानपि, यतोऽत्र कृतौ कृतिरवम्॥

सोत्साहप्रदानं प्रणिधानपुरःसरं चानुवादादिकार्यजाते मदुपकारमाचरते कल्याणभाजनाय कविवराय सुहृद्वर्यश्रीवेदारनाथशर्ममहाभागाय विलसन्त्वनेके धन्यवादाः।

एवमेव मुद्रायन्त्रतो मद्विप्रकृष्टस्थितावपि प्रकृष्टमतिविभवेन सम्पादनादिकृत्यव्यूहं निष्प्रत्यूहं समापयद्भ्यो व्याकरणसाहित्याचार्येभ्यः श्रीहरगोविन्दमिश्रमहोदयेभ्योऽमन्दप्रणयप्रकारानपूर्वकं समुपह्रियन्ते धन्यवादसन्दोहाः। इति शम्।

पाशुपतक्षेत्रम्।
(नक्साल, नेपालः)
संवत् २००६ वृषसंक्रान्तिः
२ घ० रा०

विद्वदाश्रवः—
शेषराजशर्म्मा

कुत्रचिच्च समस्तपदबाहुल्येन प्रसङ्गाऽननुगुणानि दीर्घवाक्यानि हृदयोद्वेजकत्वेन सदूषणान्यपि वर्तन्त इत्यपि समालोचकधर्मं निर्वहन्नावेदयामि । परं गुणभूयस्त्वेन सादृशदोषनिमीलनमेव सर्वैरपि स्वीक्रियते ।

विस्तृतवर्णनाऽर्थं सर्वविधाऽवकाशस्याऽऽवश्यकता विद्यते । भगवत्कृपाऽभविष्यच्चेत्तर्हि संस्कृतसाहित्येतिहासे भवभूतिवैशिष्ट्यवर्णनं विशदरूपेणाऽकरिष्यम् । अतः सम्प्रत्येतावतैव विरम्यते ।

भवभूतिकृतित्वेन प्रथितिमाप्तं गदाधरभट्टसंकलिते रसिकजीवने पद्यद्वितयं बृहच्छार्ङ्गधरपद्धतौ च एकं सहृत्य पद्यत्रयं समुपलभ्यते । तद्यथा—

'अलिपटलैरनुयातां सहृदयहृदयज्वरं विलुम्पन्तीम्
मृगमदपरिमललहरीं समीर ! किं पामरेषु रे किरसि ॥'' इति ।

एवं च—

'किं चन्द्रमाः प्रत्युपकारलिप्सया करोति गोभिः कुमुदाऽवबोधनम् ।
स्वभाव एवोन्नतचेतसां सतां परोपकारव्यसनं हि जीवितम् ॥' इति ।

पद्यद्वितयमिदं रसिकजीवनस्थं, तथा च—

'निरवद्यानि पद्यानि यदि नाट्यस्य का क्षतिः ? ।
भिक्षुकक्षाविनिक्षिप्तः किमिक्षुर्नीरसो भवेत् ? ॥' इति ।

इदं पद्यं बृहच्छार्ङ्गधरपद्धतिस्थितं वर्तते । अतो भवभूतिकृत्यन्तरमप्यनुमाविषयीक्रियते, सम्प्रति तदनुपलब्धेस्तूष्णीकत्वमेव कक्षीक्रियते ।

इदानीं विद्वल्लोककृतभवभूतिश्लोकाऽऽलोकार्थं किञ्चित्प्रयत्यते । सहृदयहृदयाऽऽनन्दवर्द्धनेन गोवर्द्धनेन कृता भवभूतिप्रशंसा पूर्वमेव गता ।

कान्यकुब्जाऽधिपतियशोवर्मसभास्तारो वाक्पतिराज प्राकृतभाषामये स्वनिर्मिते 'गउड वहो' इत्यभिख्ये काव्ये निम्नस्थयाऽनया गाथया भवभूतिकृतिं समवर्णयत्—

भवभूइजलहिनिग्गयकव्वामयरसकणा इव फुरन्ति ।
जस्स विसेसा अज्जवि वियडेसु कहाणिवेसेसु ॥' इति ।

संस्कृतच्छाया यथा—

भवभूतिजलधिनिर्गतकाव्याऽमृतरसकणा इव स्फुरन्ति ।
यस्य विशेषा अद्याऽपि विकटेषु कथानिवेशेषु ॥' इति ।

कवीन्द्रः क्षेमेन्द्रो भवभूतेः शिखरिणीमित्थं वर्णितवान्—

'भवभूतेः शिखरिणी निरर्गलतरङ्गिणी ।
रुचिरा घनसन्दर्भे या मयूरीव नृत्यति ॥' इति ।

तिलकमञ्जरीकारो महाकविर्धनपालो भवभूतिमित्थं प्राशंसत्—

'स्पष्टभावरसा चित्रैः पदन्यासैः प्रवर्तिता ।
नाटकेषु नटस्त्रीव भारती भवभूतित. ॥' इति ।

कविविभूतेर्भवभूतेर्विषये कस्यचिद्विदुषोऽभिमतमिदम्—

'सुकविद्वितयं मन्ये निखिलेऽपि महीतले ।
भवभूतिः शुकश्चाऽय वाल्मीकिस्तु तृतीयकः ॥' इति ।

भवभूतिविषये कस्यचित्कृतिन आकूतमिदम्—

'रत्नावलीपूर्वकमन्यदास्तामसीमभोगस्य वचोमयस्य ।
पयोधरस्येव हिमाऽद्रिजायाः परं विभूषा भवभूतिरेव ॥' इति ।

काष्ठां गता क्व भवभूतिवचोविभूतिर्मच्चिद्गताऽतिलघुता सहजा च कुत्र ?
श्रीकृष्ण दासकृतिश्रेष्ठिवराऽनुनीतटीकाऽनुवादकृतिताऽऽस्पदमस्मि नीतः ॥१॥
छात्राऽर्थमेव विवृतोऽस्ति मम प्रयासः सम्प्राप्यतेऽत्र न विदग्धवचोविलासः ।
भ्रान्त्यादिदोषविसरं समुपेक्ष्य तावद् गृह्णन्त्विम गुणगणग्रहणप्रवीणाः ॥ २ ॥
समजनि समयः समाश्रयात्समधिक एव कृतिस्त्वियं समाप्ता ।
क्षतिकरदुरदृष्टदोषराशेः सचपलमात्मप्रकाशनं न चाप्ता ॥ ३ ॥

ज्ञापनमेतदपि सम्प्रति प्राप्तकाल मन्ये तावदुत्तररामचरितस्य त्रिचतुरास्वपि प्राचीनाऽर्वाचीनासु व्याख्यासु कृतनयनपथाऽतिथित्वास्वपि वाधूलवीरराघवविरचिता पुरातनी भवभूतिभावतलस्पर्शिनीसमाख्या व्याख्या चन्द्रकलाऽभिख्यायामस्मदीयकृतौ विशेषरूपेण साहाय्यग्रहणाऽर्थं समवलम्बिता ।

जातो यदीयदयया मम बोधलेशस्तद्द्वारतस्तदनु शास्त्रपथप्रवेशः ।
तांस्तादृशान्गुरुजनानसकृत्प्रणम्य वन्दे च तानपि, यतोऽत्र कृतौ कृतिरवम् ॥

सोत्साहप्रदानं प्रणिधानपुरःसरं चानुवादादिकार्यजाते मदुपकारमाचरते कल्याणभाजनाय कविवराय सुहृद्वर्यश्रीकेदारनाथशास्त्रिमहाभागाय वितसन्त्वनेके धन्यवादाः।

एवमेव मुद्रायन्त्रतो मद्विप्रकृष्टस्थितावपि प्रकृष्टमतिविभवेन सम्पादनादिकृत्यव्यूहं निष्प्रत्यूहं समापयद्भ्यो व्याकरणसाहित्याचार्येभ्यः श्रीहरगोविन्दमिश्रमहोदयेभ्योऽमन्दप्रणयप्रकाशनपूर्वकं समुपह्रियन्ते धन्यवादसन्दोहाः । इति शम् ।

पाशुपतक्षेत्रम् ।
( नक्साल, नेपाल )
संवत् २००६ वृषसंक्रान्तिः
२ उ० रा०

विद्वदाश्रवः—
शेषराजशर्म्मा

# अथ नाटकनायकादिलक्षणम् ।

तत्र नाटकलक्षणं यथा साहित्यदर्पणे—

नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम् ।
विलासद्धर्यादिगुणवद्युक्त नानाविभूतिभि. ॥
सुखदु.खसमुद्भूति नानारसनिरन्तरम् ।
पञ्चादिका दशपरास्तत्राऽङ्का. परिकीर्तिताः ॥
प्रख्यातवशो राजर्षिर्धीरोदात्त: प्रतापवान् ।
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥
एक एक भवेदङ्गी शृङ्गारो वीर एव वा ।
अङ्गमन्ये रसाः सर्वे कार्यं निर्वहणेऽद्भुतम् ॥
चत्वारः पञ्च वा मुख्या' कार्यव्यापृतपूरुषाः ।
गोपुच्छाऽग्रसमाग्रन्तु वन्धन तस्य कीर्तितम् ॥ इत्यादि ।

उत्तररामचरितस्य नायकः श्रीरामचन्द्रो दिव्याऽदिव्यो ( दिव्योऽप्यात्मनि नराऽभिमानी ) धीरोदात्तस्तल्लक्षणं यथा—

'अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रत. कथितः ॥' इति ।

नायिका च सीतादेवी स्वीया मुग्धा च । तल्लक्षणं यथा—

'विनयाऽऽर्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया ।' इति ।
'प्रथमाऽवतीर्णयौवनमदनविकारा रतौ वामा ।
कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥' इति ।

एतौ चाऽलम्बनविभावौ—

'आलम्बन नायकाऽऽदिस्तमालम्ब्य रसोद्गमात् ।'

इति तल्लक्षणम् । पञ्चवटी वृक्षादि-दर्शनादीन्युद्दीपनविभावाः—

'उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये' ।

इति तल्लक्षणम् । विलापमोहादयोऽनुभावा — ।

'उद्बुद्ध कारणं स्वै स्वैर्बहिर्भाव प्रकाशयन् ।
लोके य कार्यरूप. सोऽनुभावः काव्यनाट्ययोः ॥'

इति तल्लक्षणम् विषादादयो व्यभिचारिणः । रतिश्च स्थायी भावः । करुणविलम्भाऽऽख्यः शृङ्गाररसोऽङ्गी । तल्लक्षणं यथा—

'यूनोरेकतरस्मिन्गतवति लोकान्तरं पुनर्लभ्ये ।
विमनायते यदैकस्तदा भवेत्करुणविप्रलम्भाख्यः ॥' इति ।

वीराऽद्भुतरौद्रादयोऽङ्गरसा' ।

रीतिश्च प्रायेण गौडी । अन्तराऽन्तरा वैदर्भ्यादयोऽपि परिलक्ष्यन्ते । गौलक्षणं यथा—

'ओजःप्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः । समासबहुला गौडी' इति ।

गुणश्च प्रायोमाधुर्याख्यस्तल्लक्षणं यथा—

'चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते ।
सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात् ॥' इति ।

# उत्तररामचरित-सुभाषितगद्यपद्यसंग्रहः।

## प्रथमोऽङ्कः

'सर्वथा व्यवहर्तव्ये कुतो ह्यवचनीयता।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः॥' १।६

'सङ्कटा ह्याहिताऽग्नीनां प्रत्यवायैर्गृहस्थता'। १।८

'सन्तापकारिणो बन्धुजनविप्रयोगा भवन्ति'

'लौकिकानां हि साधूनामर्थं वागनुवर्तते।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति॥' १।१०

'तीर्थोदकं च वह्निश्च नाऽन्यतः शुद्धिमर्हतः।' १।१३

'नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा मूर्ध्नि स्थितिर्न चरणैरवताडनानि।' १।१४

## द्वितीयोऽङ्कः

'सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति।' २।१

'प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः, प्रकृत्या कल्याणी मतिरनवगीतः परिचयः।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं रहस्यं साधूनामनुपधि विशुद्धं विजयते॥' २।२

## तृतीयोऽङ्कः

'पूरोत्पीडे तटाकस्य परीवाहः प्रतिक्रिया। शोकक्षोभे च हृदयं प्रलापैरवधार्यते॥' ३।२९

'अन्धतामिस्रा ह्यसुर्या नाम ते लोकास्तेभ्यः प्रतिविधीयन्ते य आत्मघातिनः'।

## चतुर्थोऽङ्कः

'सन्तानवाहीन्यपि मानुषाणां दुःखानि सद्बन्धुवियोगजानि।
दृष्टे जने प्रेयसि दुःसहानि स्रोतःसहस्रैरिव संप्लवन्ते॥' ४।८

'गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः'। ४।११

'पुरन्ध्रीणां चित्तं कुसुमसुकुमारं हि भवति।' ४।१२

'सुहृदिव प्रकटय्य सुखप्रदां प्रथममेकरसामनुकूलताम्।
पुनरकाण्डविवर्तनदारुणो विधिरहो विशिनष्टि मनोरुजम्॥' ४।१५

'आविर्भूतज्योतिषां ब्राह्मणानां ये व्याहारास्तेषु मा संशयो भूत्।
भद्रा ह्येषां वाचि लक्ष्मीर्निषक्ता नैते वाचं विप्लुतार्थां वदन्ति॥' ४।१८

## पञ्चमोऽङ्कः

'तेजस्तेजसि शाम्यतु। ५।७ 'तारामैत्रकं चक्षूरागः'।

'अहेतुः पक्षपातो यस्तस्य नाऽस्ति प्रतिक्रिया।
स हि स्नेहात्मकस्तन्तुरन्तर्भूतानि सीव्यति॥' ५।१७

'वीराणां समयो हि दारुणरसः स्नेहक्रमं बाधते'। ५।१९

'लतायां पूर्वलूनायां प्रसवस्योद्भवः कुतः' । ५।२०
'न रथिनः पादचारमभियुञ्जन्ति' ।
'ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः ।
सा योनिः सर्ववैराणां सा हि लोकस्य निष्कृतिः ॥' ५।२६
'कामन्दुग्धे विप्रकर्षत्यलक्ष्मीं कीर्तिं सूते दुर्हृदो निष्प्रलाति ।
शुद्धां शान्तां मातरं मङ्गलानां धेनुं धीराः सूनृतां वाचमाहुः ॥' ५।३०
'सिद्धं ह्येतद्वाचि वीर्यं द्विजानां बाह्वोर्वीर्यं यत्तु तत्क्षत्रियाणाम् ।' ५।३२
'वृद्धास्ते न विचारणीयचरिताः' । ५।३५

## षष्ठोऽङ्कः

'न किञ्चिदपि कुर्वाण सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥' ६।५
'सर्वमतिमात्रं दोषाय' ।
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः' । ६।११
'स्नेहश्च निमित्तसव्यपेक्ष इति विप्रतिषिसद्धमेतत्' ।
'व्यतिषजति पदार्थानान्तरः कोऽपि हेतुर्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥' ६।१२
'न तेजस्तेजस्वी प्रसृतमपरेषां विषहते स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।
मयूखैरश्रान्तं तपति यदि देवो दिनकरः किमाग्नेयो ग्रावा निकृत इव तेजांसि वमति ॥' ६।१४
'प्रियानाशे कृत्स्नं किल जगदरण्यं हि भवति' । ६।३०
'चिरं ध्यात्वा ध्यात्वा निहित इव निर्माय पुरतः
प्रवासेऽप्याश्वासं न खलु न करोति प्रियजनः ।
जगज्जीर्णारण्यं भवति च कलत्रेऽप्युपरते
कुकूलानां राशौ तदनु हृदयं पच्यत इव ॥' ६।३८

## ( सप्तमोऽङ्कः )

'साक्षात्कृतधर्माणो महर्षयः' ।
'को नाम पाकाऽभिमुखस्य जन्तुर्द्वाराणि दैवस्य पिधातुमीष्टे' । ७।४
'अव्याहताऽन्तःप्रकाशा हि देवताः सत्त्वेषु' । 'साऽनुषङ्गाणि कल्याणानि' ।

# कथासारः ।

## प्रथमाऽङ्के

नान्यन्ते सूत्रधारो नाटककारस्य भवभूतेः परिचयं वितरति । तेन रामराज्याऽभिषेकोत्सवप्रसङ्गेन प्रवृत्ता गीतवाद्यादिमङ्गलचर्चा किमर्थं विरतेति पृष्टे नटो रामेण निमन्त्रिताः सर्वेऽपि ब्रह्मर्ष्यादयः स्वस्वावासस्थानं प्रति प्रहिताः, एवं च महाराज रोमपादस्याऽपत्यकृतिकायाः कौशल्यासुतायाः शान्तायाः पत्युर्ऋषिश्रेष्ठस्य ऋष्यशृङ्गस्य द्वादशवार्षिकसत्रे वसिष्ठाऽधिष्ठिताः पुरस्कृताऽरुन्धतीका राममातरो गतास्ततो गीतवाद्यादिमाङ्गलिककृतिर्निवृत्तेति समादधाति । तत्प्रसङ्ग एव जनकृतं सीताऽपवादं च सूचयति । सूत्रधारकर्तृके रामाऽवस्थितिविषयकेऽनुयोगे स्वजनकस्य जनकस्य राजर्षेर्विदेहदेशप्रयाणेन विमनसः सीतायाः परिसान्त्वनार्थं रामो धर्मासनाद्वासगृहं प्रविशतीति नटः प्रत्युत्तरयति ।

( इति प्रस्तावना ) ।

जनकवियोगपरिदूनायाः सीतायाः खेदविरामार्थं रामः पर्यसान्त्वयत् । ऋष्यशृङ्गाश्रमादष्टावक्र आगच्छत् । अष्टावक्रः सीतां प्रति वसिष्ठस्य वीरपुत्रप्राप्तिरूपामाशिषं रामं प्रति चाऽरुन्धत्यादीनां सीतादोहदपूरणं कर्तव्यमितिसन्देशं चाऽसूसुचत् । सीतां प्रति च ऋष्यशृङ्गस्य 'सपुत्रां त्वां द्रक्ष्यामी'ति सन्देशं च कथितवान् । तथैवाऽष्टावक्रो रामं प्रति 'प्रजाजनाऽनुरञ्जने युक्तः स्याः' इति वसिष्ठसन्देशं च जगाद । रामश्च प्रतिज्ञातवान् । अष्टावक्रे निष्क्रान्ते कुमारलक्ष्मण आजगाम । स च दुर्मनसः सीताया मनोविनोदनार्थं वीथिकायामभिलिखितं रामचरितमयं चित्रपटमानिनाय । चित्रपटे चरितस्य कियान्भागोऽस्तीति रामप्रश्ने 'यावदार्याया हुताशनशुद्धिरि'ति लक्ष्मणवचनं श्रुत्वा रामः सीतां सान्त्वितवान् । सीतया चित्रदर्शनोत्तरं 'क एत उपरिस्थिता आर्यपुत्रमुपस्तुवन्ती'वेति पृष्टे लक्ष्मणः 'आर्यस्य कौशिकेन मुनिना ताडकावधे प्रसादीकृतान्येतानि जृम्भकाऽस्त्राणी'ति प्रत्यब्रवीत् । रामश्च गर्भिणीं सहधर्मिणीं 'सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ती'ति जगाद । तदनु सर्वेऽपि विवाहादिवृत्ताऽवबोधकांश्चित्रपटाऽवयवानपश्यन् । रामश्चित्रे गङ्गां दृष्ट्वा 'हे देवि ! त्वं सीतायां शिवाऽनुध्यानपरा भवे'ति प्रार्थितवान् । अथ ते वनवाससमये पुरावलोकितान्पर्वतवृक्षादिपदार्थानवालोकयन् । ततः सीताहरणानन्तरं रामस्य

कारुणिकीमवस्थां लक्ष्मणः प्रत्यपादयत्। जटायुविक्रमप्रदर्शनाऽनन्तरं लक्ष्मणो माल्यवन्तं पर्वतं वर्णितवान्। ततो रामः पुराऽनुभूतसीताविप्रयोगस्मृत्या तं न्यवारयत्। सीता च भूयो वनविहरणे भागीरथ्यवगाहने च स्वदोहदमभिव्यञ्जितवती। रामश्च तदिच्छापूरणाय लक्ष्मणमादिशत्। तदादेशाऽनुष्ठानाय रथं सज्जीकर्तुं लक्ष्मणे गते गर्भभराऽऽयासिता सीताऽशेत। अत्राऽन्तरे जनवृत्तान्तज्ञानाय प्रहितो दुर्मुखाऽभिधानोऽपसर्पो रामोपकण्ठमसर्पत्। रामेण निर्बन्धपृष्टः सोऽपि साऽतिशयविषादं सीताविषयकं लोकापवादं प्राकाशयत्। रामोऽमूर्च्छत्, प्राप्तसंज्ञः पर्यदेवयच्च बहुधा। ततो लवणत्रासित ऋषिसङ्घोऽब्रह्मण्यपदसमुच्चारणपूर्वक समुपस्थित इत्युदन्तं राम आकर्णितवान्, लवणोन्मूलनाय शत्रुघ्नप्रेषणं भावयामास। तदनु 'हे देवि! श्लाघ्यां स्वदुहितरं जानकीमवेक्षस्वे'ति पृथिवीं प्रार्थयामास रामो निरगमच्च ततः। सीता च प्रबोधाऽनन्तरं राममन्विष्टवती। दुर्मुखश्च 'वनप्रयाणाऽर्थं सज्जो रथ' इति लक्ष्मणवचनं सीतायै कथयामास। सीता रघुकुलदेवादिप्रणिपातपुरःसरं गमनोद्यमं व्यधात्। ततः सर्वे निष्क्रान्ताः।

## द्वितीयाऽङ्के

वाल्मीकेराश्रमादध्ययनार्थं पञ्चवटीं समायाताऽऽत्रेयी वनदेवता सीतासखीं वासन्तीमुपागच्छत्। वासन्ती चाऽर्घ्यादिना ता सत्कृतवती। 'सति वाल्मीकिमहर्षौ दूरेऽत्राऽगस्त्यादिमहर्षिभ्यो विद्यामधिगन्तुं कीदृशोऽयं प्रयास' इति वासन्तीप्रश्ने— 'वाल्मीकेराश्रमे केनाऽपि देवताविशेषेण स्तन्यत्यागमात्रके वयसि वर्तमानं दारकद्वयमुपनीतम्। 'कुशो लवश्चे'ति तयोरभिधाने। तयोराजन्मसिद्धानि जृम्भकाऽस्त्राणि। तयोश्च वाल्मीकिना क्रमत उपनयनान्ताः संस्कारा आचरिताः। तौ चाऽतीव मेधाविनावतस्ताभ्यां सहाऽस्मदादेर्नाऽध्ययनयोग। एवं च जातुचित्तमसा गतस्य महर्षेर्वाल्मीकेर्व्याधनिहतक्रौञ्चशोकेन 'मा निषादे'त्याकारको लोकेऽनागतपूर्वः श्लोकः प्रकाशितः। तदनु तं पद्मयोनी रामचरितं निर्मातुमादिदेश, तदर्थं कुत्राऽप्यप्रतिहतं प्रातिभं चक्षुश्च तस्मै व्यतरत्। अथ च वाल्मीकी रामायणं प्रणीतवानिति विघ्नद्वयाऽऽपत्त्या तत्राऽऽध्ययनमसम्भवम्' इत्यात्रेयी प्रतिवाक्यं प्रत्यपादयत्। तत आत्रेयी सीतास्मृत्या दुःखमनुबभूव। वासन्तीप्रश्ने "सीतानिर्वासनं रामश्च हिरण्मय्याः सीताप्रतिकृत्याः सहधर्मचारिणीत्वेन राजमखमश्वमेधं प्रक्रान्तवान्। एवं च तेन यज्ञियहयरक्षकश्च लक्ष्मणात्मजश्चन्द्रकेतुः प्रहितः।

अत्रान्तरे मृतब्राह्मणकुमारजीवनार्थं तपस्यन्तं शम्बूकाऽभिधानं शूद्रं हन्तुं रामः पुष्पकमारुह्य सञ्चरितुमारब्धवानित्यात्रेयी कथयामास । तदनन्तरमात्रेयी प्रायात् ।

( इति शुद्धविष्कम्भकः । )

ततः पुष्पकविहारिणा रामेण जनस्थाने हतः शम्बूको दिव्यं रूपं समधिगम्य तं तुष्टाव । तदनु शम्बूकेन सह रामस्य संलापः । तत्र रामो बहुशः सीताया अस्मरत् । रामाऽनुज्ञाप्राप्त्या शम्बूके गते सीतास्मरणेन बाष्पकण्ठो रामो व्यलपत् । शम्बूकः पुनरागत्याऽगस्त्यस्य 'मदीयमाश्रमं समागच्छतु भवान्, लोपामुद्रा च प्रतीक्षते, ततः पुष्पकयानेनाऽश्वमेधाय सज्जो भविष्यसी'ति सन्देशं निवेदितवान् । रामश्च तमभ्युपागमत् । तदनु द्वावपि निष्क्रान्तौ ।

## तृतीयाऽङ्कः

मुरलाऽभिधाना नदी लोपामुद्राया गोदावरीं प्रति 'रामस्य स्थितिर्निरतिशयकरुणपरिपूर्णाऽस्ति । प्रतिनिवर्तमानो रामभद्रः पञ्चवटीं प्राप्तः सीतया समं पूर्वाऽनुभूतान्प्रदेशान्नियतं पश्येत् । तत्र तस्य शोकाधिक्येनाऽनिष्टमाशङ्कनीयम् । तद्भगवति गोदावरि ! त्वया रामस्य भव्यसाधनार्थं सावधानया भाव्यम् ।' इत्याकारकं सन्देशं प्रापयितुं गच्छामी'ति मार्गमिलितामात्मसखीं तमसाख्यां सरितमब्रवीत् ।

तमसा च मुरलां कथितवती—वाल्मीकितपोवनाऽन्तिके लक्ष्मणेन परित्यक्ता सीता पराभवजया प्रसवजन्यया च वेदनया युगपदभिभूताऽऽत्मानं गङ्गाप्रवाहे निचिक्षेप, तत्रैव सुतद्वितयं प्रसूता पृथिवीभागीरथीभ्यामभ्युपपन्ना पातालं प्रापिता । स्तन्यत्यागाऽनन्तरं तस्यास्तनयद्वितयमपि गङ्गादेवी वाल्मीकये स्वयमर्पितवती । साम्प्रतं तु पञ्चवट्यागतं रामचन्द्रं सरयूमुखाच्छ्रुत्वा भगवती भागीरथी लोपामुद्रावदाशङ्क्य सीतया समं केनचित्कृत्यव्यपदेशेन गोदावरीं द्रष्टुमागता । भागीरथ्या प्रबोधिता सीता—'वत्से ! अद्य कुशलवयोर्द्वादशवर्षप्रवेशोत्सवोऽस्ति । तदात्मनः पुराणश्वशुरं सवितारं स्वकरलूनैः पुष्पैरुपतिष्ठस्व । भूतलवर्तिनीं त्वां देवा अपि न द्रक्ष्यन्ति' इति । अहमपि सीतासंरक्षणार्थं गङ्गादेव्याऽऽदिष्टाऽस्मीति । इत्थं संलप्य उभे अपि निष्क्रान्ते ।

( इति शुद्धविष्कम्भकः । )

ततः पुष्पाऽवचयनतत्परा सीता प्रविशति । सा च वासन्तीमुखात्पुराऽऽत्मवर्द्धितं गजकलभं परगजाक्रान्तं श्रुत्वा ससम्भ्रमं पूर्ववदार्यपुत्रमाह्वयत् ।

अत्राऽन्तर एव रामः पुष्पकमारुह्याऽऽगच्छत् । रामवचनाऽऽकर्णनेन सीतो-

-रघुकर्ता सूचितवती । रामस्य कृशशरीरं शोचनीयां च दशां दृष्ट्वा सीता मुमूर्च्छं । रामश्च मुहुर्मुहु: पर्यदेवयत् , मूर्च्छितवांश्च । सीता च तमसावचसा संज्ञाऽऽधानाऽर्थं रामं करकिसलयेनाऽस्पृशत् । तत: प्राप्तसंज्ञो रामश्च तदामर्शनं स्तुतवान् । रामदर्शनमाशङ्क्य सीता भीता सत्यपसरणं प्रार्थयत् । तमसा च गङ्गाप्रभावं वर्णयित्वा तां न्यरुणत् । रामश्च स्पर्शाऽनुभूत्यनन्तरमपि सीतादर्शनाऽनुपलब्धेरात्मनो भ्रमं न्यरूपयत् । अत्रान्तरे पुनरपि सीतापोषितगजकलभकवृत्तान्त आकर्णितः । रामश्चैवं श्रुत्वोत्थित: । ततो वनदेवता वासन्ती राममुपजगाम । वासन्ती च सीतापोषितहस्तिशावकविजयं निवेदयामास । ततो वासन्तीरामसंलापः । अन्तराऽन्तरा तमसासीतासंलापश्च । वासन्ती रामं सीतावर्द्धितं ससहचरीकं मयूरमदर्शयत् । वासन्ती सीतानिर्वासने रामोपालम्भमकार्षीत् । सीतायै च वासन्तीकृतः स पत्युपालम्भो नाऽरोचत ।

ततो वासन्ती सीतादु:खचिन्तनेन मूर्च्छितवती । तया निर्वासितसीतावृत्तान्ते पृष्टे रामः 'तादृशे श्वापदाऽऽकीर्णेऽरण्ये सीता नियत विलुप्ताऽवयवा भवेदि'त्युत्तरं व्यतरत् । तदनु रामविलापनमाकर्ण्य वासन्ती तस्मै धैर्यमुपादिशत् । रामः पुनरमुह्यत् । सीता च पुनस्तमसोपदेशात्करकिसलयाऽऽमर्शनेन रामं प्राबोधयत् । प्रबोधप्राप्त्यनन्तरं रामो वासन्त्यै सीतासमासादनमसूसुचत् । वासन्ती च सीतासाक्षात्काराऽभावेन तद्वचनं न प्रत्येति स्म । निरतिशयमन्युभारेण रामो मुहुर्मुहुर्न्यलपत् । वासन्त्यै राम· स्वेनाऽनुष्ठीयमानेऽश्वमेधे सहधर्मचारिणीं हिरण्मयीं सीताप्रतिकृतिं वर्णितवान् । रामोऽयोध्यागमनार्थं वासन्तीमपृच्छत् । सीता च रामाऽदर्शने कातरताऽतिशय प्रादर्शयत् । वासन्ती च रामगमनमन्वजानात् । सरिद्वरा तमसा करुणरसस्य सर्वरसेषु प्राधान्यं साधितवती । अवसाने च तमसावासन्त्यौ सीतारामौ प्रत्याशिषं प्रत्यपादयताम् । ततः सर्वे निष्क्रान्ता· ।

## चतुर्थाऽङ्के

भगवतो वाल्मीकेराश्रमपदे द्वौ तापसबालकौ समलपताम् । तत्र दाण्डायनः सौधातकिं प्रति वाल्मीकेराश्रमपदं प्राशंसत् । सौधातकिराश्रमस्थितस्य स्त्रीसार्थेन समायातस्याऽतिथेः परिचयं दाण्डायनमपृच्छत् । दाण्डायनश्च 'ऋष्यश्रृङ्गाश्रमात्साऽरुन्धतीकाभिर्दशरथपत्नीभिः सममायातोऽयं वसिष्ठ' इति प्रतिवाक्यं व्याजहार । सौधातकिश्च वसिष्ठस्य मधुपर्कप्रसङ्गे कपिलाया गोरालम्भनेन तं व्याघ्रत्वेनोत्प्रेक्षितवान् । दाण्डायनश्च श्रौतवाक्यात्तत्कर्मणः ( मधुपर्के पशुवधात्मकस्य ) समर्थनं कृत-

मान्। सौधातकिश्च पुनरुपालब्धवान्—'यद्येवं तर्ह्यद्यैव पर्यागतस्य राजर्षेर्जनकस्य कृते दधिमधुत एव सम्पन्नो मधुपर्को न पुनर्वत्सतरी विशसिता। मधुपर्के समासत्वं यद्यनिवर्तनीयं स्यात्कथमिदं वैषम्यमि'ति। दाण्डायनश्चानिवृत्तमांसानामभ्यर्णां कृत एव मधुपर्कस्य समांसत्वं, निवृत्तमांसस्य कृते तु न। जनकस्य निवृत्तमांसत्वे हेतुस्तादृश सीतादुष्परिणामाकर्णनम्। अत एव स वैखानसः संवृत्त, 'चन्द्रद्वीपतपोवने कतिपयान्संवत्सरान् यावत्तपश्चचारे'ति प्रत्यपीपदत्। सौधातकिना 'जनकस्य सम्बन्धिन्या दर्शनं वृत्तं नो वे'ति पृष्टे 'भगवता वसिष्ठेन 'स्वयमुपेत्य जनको द्रष्टव्य' इत्यरुन्धतीमुखेन कौसल्या सूचिते'ति दाण्डायन प्रतिवाक्यं प्रायुङ्क्त। ततः सौधातकिः क्रीडनप्रस्तावमकरोत्। दाण्डायनश्च—'जनक आश्रमस्य बहिर्वृक्षमूलमधितिष्ठतीति निजगाद।

( इति मिश्रविष्कम्भकः। )

ततो जनकः प्रवेशानन्तरं सीताया कृते निरतिशय शोकं प्राकाशयत्। तदनु अरुन्धतीकौसल्याकञ्चुकिन प्राविशन्। कौसल्या लज्जया सीताविरहजेन दुःखाऽतिशयेन च जनकदर्शने परिहर्तुमैच्छत्। अरुन्धतीकञ्चुकिनौ च कौशल्या प्राबोधयताम्। अनन्तरं जनक उपसरणपूर्वक प्रणतिपुरःसरं चाऽरुन्धतीं स्तुतवान्। सा चाशिषं तस्मै व्यतरत। ततस्ते सर्वेऽपि सीतारामविषयां चर्चामकुर्वन्। जनकश्च दशरथप्रशंसां कौशल्यायाः शोचनीयतां च प्रतिपाद्य सीतां प्रति रामव्यवहारे क्षोभाऽतिशयं रामे कोपं च प्राकाशयत्।

विप्रबटुभिः समं लव आगमत्तत्र कौसल्यादय सोत्कण्ठाऽतिशयं तं व्यलोकयंस्तत्र च सीतारामयोराकृतिं गुणांश्च व्यतर्कयन्। जनकश्च कञ्चुकिद्वारा वाल्मीकिं लवपरिचयमपृच्छत्। वाल्मीकिश्च तत एव 'उचितसमये ज्ञानं भविष्यती'ति सूचितवान्। लवश्च विनयपूर्वकं जनकादीनामन्तिकमाजगाम। तेन साकं कौसल्यादीनां संलापः आत्मपरिचये पृष्टे लव सभ्रातृकस्य ( कुशसहितस्य ) स्वस्य वाल्मीकेरन्तेवासितामचकथत्। अत्राऽन्तरे यज्ञियहयसंरक्षणप्रसङ्गेन लक्ष्मणकुमारस्य चन्द्रकेतोरागमनमाकर्ण्याऽरुन्धतीजनकौ तद्दर्शनोत्कण्ठां प्रादर्शयताम्। लवश्च चन्द्रकेतुपरिचयमपृच्छत्। संस्तवप्राप्त्यनन्तरं लव स्वीयं रामायणकथाप्रावीण्यमसूसुचत्। तस्मिन्नन्तरे हयदर्शनाऽनन्तरं विस्मयाऽऽविष्टा बटवो लवमाकारयन्, लवश्चाऽश्वमेधाऽश्वाऽवलोकनाय बटुभिः सह ततः सविनयं निरगमत्। अश्वरक्षकाणा दर्पपूर्णोक्तिश्रवणेन क्षत्रमात्राऽभिभवकुपितो लवो हयमहरत्। ततश्चन्द्रकेतुपुरुषा लवमत-

र्जयन्। स च निर्भीकरूपेण संग्रामसंनद्धोऽवर्तत। ततः सर्वे निष्क्रान्ताः।

## पञ्चमाऽङ्कः

ततश्चन्द्रकेतुर्बहुभिरश्वरक्षकैः सैनिकैः सममेकाकित्वेन विग्रहमाचरत साग्रहस्य लवस्य विक्रमं सुमन्त्रं सारथिं प्रति प्राशंसत्। चन्द्रकेतुः स्वसैन्यपलायनेन क्षोभमनुबभूव, द्वन्द्वयुद्धाऽर्थं च लवमाह्वयत्। लवे चन्द्रकेतुना सार्धं युद्धार्थं प्रसितेऽन्तरमासाद्य सैनिकास्तमाक्रामन्। लवश्च तेषां निवारणार्थं जृम्भकाऽस्त्रं प्राहरत्। सुमन्त्रश्च सैन्यघोषप्रशमनेन लवेन जृम्भकाऽस्त्रं प्रयुक्तमित्यतर्कयत्, गुरुसम्प्रदायप्राप्तव्याना जृम्भकास्त्राणां प्राप्तिर्लवस्य कथमजायतेति सातिशयं व्यस्मयत च। ततो लवचन्द्रकेत्वो रणाऽङ्गणे प्रणयसम्भाषणम्। सुमन्त्रश्च लवस्य सीतासुतत्वमाशास्त। अनन्तरं स नैराश्यं चाऽन्वभवत्। चन्द्रकेतुः 'संग्रामाऽर्थं रथमारोहतु भवान्, नो चेदहं रथादवतरामी'ति लवं कथयामास। सुमन्त्रश्चन्द्रकेतुं समभ्यनन्दत्। अनभ्यस्तरथचर्यत्वव्यपदेशपूर्वकं लवश्च रथारोहणे स्वाऽनिच्छां प्रादर्शयत्। चन्द्रकेतुश्च रथादवतीर्य सुमन्त्रमभिवादयामास। सुमन्त्रश्च तमाशिषा समयुङ्क्त। ततो लवचन्द्रकेत्वोः संवादः। लवोऽश्वरक्षकाणां परुषतरवचनानि निनिन्द। तस्मिन्नेवाऽवसरे बाल्यादिवधे रामचरित्रेऽपि किमप्याक्षेपवाक्यं प्रायुङ्क्त। ततो द्वावपि युद्धसन्नद्धौ संजातौ। अनन्तरं सर्वे निष्क्रान्ताः।

## षष्ठाऽङ्कः

ततो विमानमारुह्य विद्याधरी विद्याधरश्चोभावपि लवचन्द्रकेत्वोर्युद्धं द्रष्टुं प्राविशताम्, तत्प्रयुक्ताग्नेयवारुणवायव्याऽस्त्राणि च प्राशंसताम्।

'शम्बूकवधाऽनन्तरं तत्रैव युद्धस्थले भगवान् रामचन्द्रः समागतस्तं दृष्ट्वा चन्द्रकेतुः प्रणतो लवश्च शान्तोऽभूदि'ति विद्याधरोऽवर्णयत्।

( इति मिश्रविष्कम्भः। )

गुणगणाऽभिरामो भगवान् रामश्च पुष्पकाऽवतरणाऽनन्तरं प्रणतं चन्द्रकेतुं परिष्वज्य कुशलमप्राक्षीत्। चन्द्रकेतुश्च प्रत्युत्तरवितरणपूर्वकं 'मामिव मन्मित्रं लवं पश्यतु भवानि'त्यावेदयत्। ततो रामः शुभलक्षणगुणगणभूषितं लवं प्रशंसितवान्, तत्राऽऽत्मीयं निष्कारणं प्रणयं च प्रकाशितवान्। लवश्च राममहिमाऽतिशयेन विस्मितोऽभूच्चन्द्रकेतुं रामचन्द्रपरिचयमपृच्छच्च। चन्द्रकेतुश्च परिचयनिर्देशमकार्षीत्। लवकृताऽभिवादनानन्तरं रामस्तमालिङ्गितवान्। लवश्च तं स्वधृष्टतायां क्षमामयाचत। रामश्च 'क्षत्रियस्यैतद्भूषणमि'ति प्रशंसितवान्।

लवेन जृम्भकाऽस्त्रेषु संहृतेषु रामस्तस्मिंस्तदस्त्रादनेन विस्मयमन्वभवत्। अत्राऽन्तरे संग्रामवार्तां निशम्य साटोपं कुशस्तत्रागतः। लवश्च 'रामसन्निधौ शान्तिर्ग्राह्ये'ति कथयित्वा रामपरिचयं च कुशं प्रति प्रत्यपादयत्। कुशश्च रामं प्रणतः। रामश्च तमाश्लिष्यत्, कुशलवयो राजलक्षणानि च ददर्श, एवं च तयोः सीतासादृश्योपलब्ध्या सीताऽपत्यत्वमपि समभावयत्। रामाऽनुरोधेन कुशलवौ रामायणीयश्लोकान् कथयामासतुः। रामश्च शोकाक्रान्तचेता अभूत्।

अत्रान्तरे शिशुकलहाकर्णनेनाऽरुन्धतीवसिष्ठवाल्मीकिकौशल्याजनका अत्रागच्छन्तीति श्रुत्वा रामः शोकभयाऽभिभूतत्वेन तद्दर्शनं प्रति सङ्कुचितोऽभवत्। ततः सर्वे निष्क्रान्ताः।

## सप्तमाऽङ्कः

शुभलक्षणो लक्ष्मणो महर्षिवाल्मीकेरनुरोधाद्रामायणनाटकमभिनेतुं रामादेशेन गङ्गातीरे सर्वेषामपि दर्शकानां कृते समुचितस्थानसंवेशमकार्षीत्। रामश्चागत्य 'कुशलवयोरत्र चन्द्रकेतुसदृशी प्रतिष्ठा कर्तव्ये'त्यादिशत्। ततः सूत्रधारो नाटकं प्रारभत।

अथो लक्ष्मणेन श्वापदगणाकीर्णेऽरण्ये परित्यक्ताया आसन्नप्रसूतिवेदनायाः सीताया 'भागीरथ्यामात्मानं पातयिष्यामी'ति वचनं नेपथ्येऽश्रूयत।

(इति प्रस्तावना)

रामश्च नाटकाऽभिनीतमप्येवमर्थं तथ्यं मत्वाऽऽवेगं प्रकाशितवान्। लक्ष्मणश्च तं समसान्त्वयत्। ततश्चैकैकं शिशुमुत्सङ्गे नीत्वा सीतामवलम्ब्य पृथिवीभागीरथ्यौ प्राविशताम्। ते च देव्यौ सीतायै यमलपुत्रोत्पत्तिमसूचताम्। सीता च यमलप्रसवेन हर्षमनुभूय मूर्च्छिता। प्राश्निकजनस्थो लक्ष्मणश्च सीताकर्तृके पुत्रप्रसवे हर्षं व्यञ्जितवान्। अत्राऽन्तरे रामश्च मूर्च्छितः। गङ्गापृथिव्यौ च सीतां समाश्वासयताम्, तत्प्रश्ने स्वकीयपरिचयं च व्यतरताम्। ततस्तनयां प्रत्यनयाचरणेन क्षुब्धा पृथिवी रामं प्रत्युपालम्भं व्यञ्जितवती। भागीरथी च तामन्वनयत्, सीता च जननीमात्माऽङ्गविलयमयाचत। पृथिवी च 'वत्से! अवेक्षणीयौ ते पुत्रकौ' इति तां प्राबोधयत्। ततो देव्यावसमत्तोऽपि सीतां पवित्रतरेत्युद्घोषयताम्। अत्राऽन्तरे प्रदीप्तानि जृम्भकाऽस्त्राणि 'चित्रदर्शनक्षणे रघुनन्दनवचनमनुसृत्य वयं त्वत्पुत्रावाश्रयाम' इति सीतायै न्यवेदयन्। ततः सीता 'मत्पुत्रयोः क्षात्रसंस्कारं क आचरिष्यती'ति जगाद। भागीरथी च तत्कर्मणि वाल्मीकिमचिकीर्तत्। लक्ष्मणश्च रामसविधे कुशलवौ सीतापुत्रत्वेन समभावयत्।

ततः सीता भूयः स्वजननीं स्वस्यास्तदङ्कविलयं ययाचे। तदनु पृथिवी 'स्तन्यत्यागं यावत्त्वया पुत्रयोर्निरीक्षणं कर्तव्यं, पश्चाद्यथा ते रोचिष्यते' इत्यादिदेश। ततः सीता देवीभ्या समं निष्क्रान्ता। अनन्तरं वैदेहीदेहविलयं सम्भाव्य रामः पुनरमूर्च्छत्। लक्ष्मणो रामपरित्राणाऽर्थं वाल्मीकिमयाचयत। ततो नेपथ्ये— 'आतोद्यमपनीयताम्। सर्वे जना महर्षिणा वाल्मीकिनाऽभ्यनुज्ञातमाश्चर्यं पश्यन्तु'' इति वाक्यमश्रूयत। ततो 'भागीरथीवसुन्धराभ्या सार्धं सीतादेवी जलादुत्तिष्ठती' त्येतद्वाक्यं लक्ष्मणोऽब्रवीत्। नेपथ्ये च 'देव्यरुन्धति! आवाभ्या गङ्गापृथिवीभ्यां पतिव्रता वधूः सीता तवाऽर्पिता' इति वाक्यं न्यशाम्यत।

रामस्य मूर्च्छाऽपगमाऽभावेन सर्वेऽपि खिन्ना अजायन्त। अरुन्धती च 'पाणिस्पर्शेन रामं जीवये'ति सीतामादिदेश। सीतया तथाऽऽचरिते प्राप्तसंज्ञो रामः सीतां दृष्ट्वाऽहृष्यत्, सविध एवाऽरुन्धतीं शान्तामृष्यश्रृङ्गादीन्गुरुजनांश्च विलोक्य लज्जां चाऽनुभूतवान्।

नेपथ्ये 'रामभद्र! आलेख्यदर्शने 'सीताया शिवाऽनुध्यानपरा भवे'ति त्वया यथा कथितं तथैव मयाऽऽचरितमि'ति गङ्गाया उक्तिरश्रूयत। पुनरपि नेपथ्ये 'आयुष्मता सीतायाः परित्यागे 'भगवती वसुन्धरे श्लाघ्यां दुहितरं जानकीमवेक्षस्वे'ति यथा प्रार्थितं तथैव कार्यं साधितं चे''ति पृथिव्या उक्तिर्न्यशाम्यत।

ततो भगवती वसिष्ठजायाऽरुन्धती बहुशः सीतासतीत्वं प्रशस्य 'रामकर्तृके सीतापरिग्रहे वः कीदृशमभिमतमि''ति सर्वानपि पप्रच्छ।

लक्ष्मणश्च 'सर्वे पौरा जानपदाश्च प्रजावतीं सतीशिरोमणिं सीतां प्रणमन्ति, लोकपालाः सप्तर्षयश्च पुष्पवृष्टिभिरुपतिष्ठन्ते' इत्यकथयत्। ततोऽरुन्धती सीतापरिग्रहाय राममाज्ञापयामास। रामश्चाऽभ्युपागमत्। लक्ष्मणः कृताऽर्थो भूत्वा सीतां ननाम, सीता च तमाशिषा संयुयोज। ततोऽरुन्धत्या उक्त्या वाल्मीकिः कुशलवौ चाऽऽनयत्। पुत्रयोर्मातापितृसमागमेन हर्षप्रकर्षः समभूत्। सीता वाल्मीकिमभिवादयामास, ततश्चाशिषं चाऽधिजगाम। अत्रैवाऽन्तरे लवणमुन्मूल्य शत्रुघ्नः समाययौ। वाल्मीकिना 'किं ते भूयः प्रियमाचरामी'त्युक्ते रामः 'भवत्कर्तृका पापनाशिनी कल्याणवर्द्धिनीयं कथा वर्तते, शब्दब्रह्मविदः कवेर्नाटकरूपेण परिणतां तामिमां वाणीं बुधाः परिभावयन्त्वि'ति प्रार्थयामास। ततः सर्वे निष्क्रान्ताः।

इति संस्कृतकथासारः समाप्तः।

---

# हिन्दी कथासार

## पहला अङ्क ।

नान्दीके अन्तमें सूत्रधार नाटककार भवभूतिका परिचय देता है। 'रामके राज्याऽभिषेकोत्सवमें प्रवृत्त गीतवाद्यादि क्यों वन्द हुआ ?' ऐसा उसके पूछनेपर 'रामने निमन्त्रित ब्रह्मर्षि आदि सब लोगोंको अपने अपने स्थान में भेज दिया, इसी तरह—महाराज रोमपादकी दत्तक पुत्री कौसल्याकी पुत्री शान्ताके पति ऋष्यश्रृङ्गके बारह वरस में समाप्त होनेवाले सत्रमें वसिष्ठ ऋषिकी निगरानीमें रामकी मातायें अरुन्धतीको भी साथमें लेकर चली गई है, इस लिए गीतवाद्यादि उत्सव बन्द हो गया है' नट ऐसा जवाब देता है। उसी अवसरमें प्रजाकृत सीताके अपवादकी भी सूचना करता है। सूत्रधारके 'राम इस समय कहां है ?' ऐसा पूछनेपर 'अपने पिता जनकके मिथिला जानेसे खिन्न सीताको दिलासा देनेके लिए राम न्यायाऽऽलयसे अन्तःपुरमें प्रवेश करते हैं' नट ऐसा उत्तर देता है। ( इति प्रस्तावना। )

पिताके वियोगसे खिन्न सीताका दुःख हटानेके लिए राम दिलासा देते हैं। ऋष्यश्रृङ्गके आश्रम से अष्टावक्र ऋषि आये। अष्टावक्रने सीताको 'वीर पुत्रको जनानेवाली हो' इस तरहका वसिष्ठका आशीर्वाद और रामको अरुन्धती आदिका 'सीताका दोहद पूर्ण करना चाहिये' ऐसे सन्देशकी सूचना दी, और सीताको ऋष्यश्रृङ्गका 'पुत्रके उत्पन्न होनेपर तुम्हें देखूंगा' ऐसा सन्देश भी कहा। फिर अष्टावक्रने रामको वसिष्ठका 'आप प्रजाओंके अनुरञ्जनमें तत्पर हों' ऐसा सन्देश भी सुनाया। रामने भी ऐसा करनेके लिए प्रतिज्ञा की। अष्टावक्रके जानेपर कुमार लक्ष्मण आये। वे अपने साथ खेदग्रस्त सीताके मनोविनोद के लिए रामचरित्रज्ञापक चित्रपट भी ले आये। 'चित्रपटमें चरित्रका कितना भाग लिखा गया है ?' रामके ऐसा पूछनेपर 'भौजाईकी अग्निशुद्धि तक ( लिखा गया है )।' ऐसा लक्ष्मणका वचन सुनकर रामने सीताको सान्त्वना दी। सीताने चित्र देखकर 'ये कौन ऊपर रहकर जैसे आर्यपुत्रकी स्तुति कर रहे हैं ?' ऐसा पूछने पर लक्ष्मणने 'ताडकाको मारनेके बाद विश्वामित्र ऋषिसे आर्यको उपहार दिये गये ये जृम्भकास्त्र हैं' ऐसा जवाब दिया। रामने भी गर्भिणी सीताको 'ये अस्त्र तुम्हारे पुत्रके पास रहेंगे' ऐसा कहा। उसके बाद सबने चित्रपटमें विवाह आदि

चरित्रको देखा। रामने चित्रमें गङ्गाजीको देखकर 'हे देवि! आप सीताकी कल्याणचिन्तामें तत्पर हों' ऐसी प्रार्थना की। तब उन लोगोंने वनवासके समयमें पहले देखे गये पहाड़ और पेड़ आदि पदार्थोंको देखा। तब सीताहरणके अनन्तर रामको करुणापूर्ण अवस्थाका लक्ष्मणने प्रतिपादन किया। जटायुका पराक्रम देखकर लक्ष्मणने माल्यवान् पर्वतका वर्णन किया। तब रामने पूर्वानुभूत सीताविरहकी याद होनेसे उनको रोका। सीताने भी फिर वनविहारमें और गङ्गास्नानमें अपनी इच्छाको जताया। रामने उनकी दोहदेच्छाको पूर्ण करनेके लिए लक्ष्मणको आज्ञा दी। उनकी आज्ञा पूर्ण करनेके लिए रथ तैयार करनेके लिए लक्ष्मणके जानेपर गर्भभारसे परिश्रान्त सीता सो गईं। इस बीचमें लोकवृत्तान्त जाननेके लिए भेजा गया दुर्मुख नामका गुप्तचर रामके पास आया। रामके आग्रहके साथ पूछनेपर उसने अत्यन्त विषादके साथ सीताके विषयमें लोकाऽपवादको कहा। यह सुन राम बेहोश हो गये, फिर होशमें आकर अनेक प्रकारसे विलाप करने लगे। तब 'लवणसे त्रासित ऋषिसमुदाय शरणके लिए उपस्थित हैं' ऐसी खबर रामने सुनी और उन्होंने लवणको मारनेके लिए शत्रुघ्नको भेजनेका विचार किया। तदनन्तर 'हे देवि! अपनी पुत्री सीताकी देखरेख कीजिए' पृथ्वीसे ऐसी प्रार्थनाकर राम वहांसे बाहर निकले। जागकर सीताने रामको ढूंढा। दुर्मुखने—'वनयात्राके लिए रथ तैयार है' ऐसा लक्ष्मणका वाक्य सीताको कहा। सीताने रघुकुलके देवताओंको नमस्कार कर जानेका उद्यम किया। तब सब निकले।

## दूसरा अङ्क।

वाल्मीकिके आश्रमसे अध्ययनके लिए आई हुईं आत्रेयी वनदेवता सीताकी सखी वासन्तीके समीप गईं। वासन्तीने भी आर्घ्य आदिसे उनका सत्कार किया। 'वाल्मीकि महर्षिकी मौजूदगीमें भी यहां इतनी दूर अगस्त्य आदि महर्षियोंसे पढ़नेके लिये आपका यह कैसा प्रयास है?' ऐसा वासन्तीके पूछनेपर 'वाल्मीकिके आश्रममें किसी देवतासे दूध छूटनेके अनन्तरकी अवस्थामें वर्तमान दो वालक लाये गये। कुश और लव यह उनका नाम है। उन दोनोंमें जृम्भक अस्त्र जन्मसिद्ध हैं। वाल्मीकि ऋषिने उन दोनोंका क्रमके साथ उपनयन तक सब संस्कार किया। वे दोनों बालक अतिशय मेधावी हैं, इस लिए उनके साथ हम लोगोंका पढ़ना नहीं हो सकता। इसी तरह किसी समय महर्षि तमसा नदीमें गये हुए थे, उसी समय एक व्याधने एक क्रौञ्चपक्षीको मारा; उस शोकसे

किया। अतिशय शोकके कारण राम वारवार विलाप करने लगे। रामने वासन्ती-से अश्वमेध यज्ञमें सोनेकी सीतामूर्तिको सहधर्मचारिणी वनानेकी वात कही और अयोध्या जानेके लिए वासन्तीको पूछा। सीताने रामके वियोगमें अतिशय कातरता दिखलाई। वासन्तीने रामको जानेकी आज्ञा दे दी। तमसाने सव रसोंमें करुणरसकी प्रधानताको सिद्ध किया। अन्तमें तमसा और वासन्तीने सीता और रामको आशीर्वाद दिया। तव सव चले गये।

## चौथा अङ्क।

भगवान् वाल्मीकिके आश्रममें दो तपस्विवालकोंकी वातचीत हुई। उनमें दाण्डायनने सौधातकिसे वाल्मीकिके आश्रमकी प्रशंसा की। सौधातकिने दाण्डायनसे स्त्रियोंको साथमें लेकर वाल्मीकिके आश्रममें आये हुए अतिथिका परिचय पूछा। दाण्डायनने 'ऋष्यशृङ्गके आश्रमसे अरुन्धती और दशरथकी पत्नियोंके साथ ये वसिष्ठ ऋषि आये हुए हैं' ऐसा उत्तर दिया। सौधातकिने वसिष्ठके मधुपर्कप्रसङ्गमें कपिला गायके आलम्भनसे उनपर व्याघ्र (वाघ) होनेकी सभावना की। दाण्डायनने श्रौतवाक्यसे उस कर्म ( मधुपर्कमें पशुसंस्कार ) का समर्थन किया। सौधातकिने फिर उपालम्भ किया—'यदि ऐसा हो तो आज ही आये हुए राजर्षि जनकके लिए दही और मधु ( शहद ) से ही मधुपर्क सम्पन्न हुआ, वछियाकी हत्या नहीं हुई। मधुपर्कमें मांस होना ही चाहिए तो यह विषमता कैसे?' । दाण्डायनने 'मांसपरित्याग नहीं किये हुए पूज्य जनों के लिये ही मधुपर्कमें मांस होना चाहिये, मांसपरित्याग किये हुए पूज्य जनके लिये नहीं। जनकके मांस छोड़नेमें हेतु—सीताका उस तरहका दुष्परिणाम सुना ही है। इसीलिये वे वानप्रस्थ हो गये हैं, चन्द्रद्वीप तपोवनमें कई वर्षों तक उन्होंने तपस्या भी की है ऐसा प्रतिपादन किया। सौधातकिके 'समधिनके साथ जनककी भेंट हुई या नहीं ?' ऐसा पूछनेपर दाण्डायनने 'भगवान् वसिष्ठने 'स्वयं जाकर जनकसे मिलना चाहिए' अरुन्धतीके द्वारा कौशिल्याको ऐसी सूचना दी' ऐसा उत्तर दे दिया। तव सौधातकिने खेलनेका प्रस्ताव किया। दाण्डायनने—'जनक आश्रम के वाहर वृक्षोंके नीचे वैठे हैं' ऐसा कहा ( इति मिश्र विष्कम्भक )।

तब जनकने प्रवेश कर सीताके लिये अतिशय शोकको प्रकाशित किया। अनन्तर अरुन्धती, कौसल्या और कञ्चुकीने प्रवेश किया। कौसल्याने लज्जासे और सीताके विरहसे उत्पन्न अतिशय शोकसे भी जनकसे मिलनेकी इच्छा नहीं

की। अरुन्धती और कञ्चुकीने कौशिल्याको समझाया। तब जनकने समीप जाकर नमस्कारपूर्वक अरुन्धतीकी स्तुति की। अरुन्धती उन्हें आशीर्वाद दिया। तब सबलोग सीता और रामके विषयकी चर्चा करने लगे। जनकने दशरथकी प्रशंसा और कौसल्याकी शोचनीयताका प्रतिपादन कर सीताके प्रति रामके व्यवहारमें अतिशय क्षोभ और रामके विषयमें क्रोध दिखलाया। ब्राह्मण वटुओंके साथ वहांपर लव आ गये, कौसल्या और जनक आदिने बहुत ही उत्कण्ठाके साथ उन्हें देखा और उनमें सीता और रामके आकार और गुणोंकी तर्कना की। जनकने कञ्चुकीके द्वारा वाल्मीकिसे लवका परिचय पूछा। वाल्मीकिने उसी तरह 'उपर्युक्त समयमें पता लगेगा' ऐसी सूचना दी। लव नियमपूर्वक जनक आदिके समीपमें आ गये। उनके साथ कौसल्या आदिकी बातचीत हुई। अपना परिचय पूछे जानेपर लवने 'भाई (कुश) के साथ मै वाल्मीकिका शिष्य हू' ऐसा कहा। इस बीचमें यज्ञके घोड़ेकी रक्षाके प्रसङ्गसे लक्ष्मणकुमार चन्द्रकेतुका आगमन सुनकर अरुन्धती और जनकने उनको देखनेकी उत्कण्ठा जताई। लवने चन्द्रकेतुका परिचय पूछा। परिचय पानेके बाद लवने रामायणकी कथामें अपनी प्रवीणता दिखलाई। इस बीचमें घोड़ेको देखकर वटुओंने आश्चर्ययुक्त होकर लवको बुलाया। लव भी अश्वमेधके अश्वको देखनेके लिए वटुओंके साथ वहासे नम्रतापूर्वक निकले।

अश्वरक्षकोंकी दर्पपूर्ण उक्ति सुनकर सम्पूर्ण क्षत्रियोंके तिरस्कारसे क्रुद्ध होकर लवने अश्वका हरण किया। चन्द्रकेतुके पुरुषोंने लवको धमकाया। वे भी निर्भीक रूपसे लड़नेके लिये तत्पर हुए। तब सब निकल पड़े।

## पांचवां अङ्क।

तब चन्द्रकेतुने बहुतेरे अश्वरक्षक सैनिकोंके साथ अकेले लड़ते हुए लवके पराक्रमका सारथि सुमन्त्रसे प्रशंसा की। चन्द्रकेतु अपने सैनिकोंके भागनेसे क्षुब्ध हो गये और उन्होंने द्वन्द्वयुद्धके लिये लवको ललकारा। लवके चन्द्रकेतुके साथ लड़नेमें तत्पर होनेपर छिद्र पाकर चन्द्रकेतुके सैनिकोंने लवपर आक्रमण कर दिया। लवने भी उनको हटानेके लिए जृम्भक अस्त्रका प्रयोग किया। सुमन्त्रने सैनिकोंका कोलाहल बन्द होनेसे 'लवने जृम्भक अस्त्र छोड़ा' ऐसा विचार किया। गुरुसम्प्रदायसे पाये जानेवाले जृम्भक अस्त्रोंकी प्राप्ति लवको कैसे हुई? ऐसा विचार कर सुमन्त्र बहुत ही विस्मित हुए। तब लड़ाईके मैदानमें लव और

चन्द्रकेतुका प्रेमसम्भाषण हुआ। सुमन्त्रने भी लवके सीतापुत्र होनेकी आशा की। पीछे वे निराश भी हो गये। चन्द्रकेतुने 'लड़नेके लिए आप दूसरे रथपर चढ़ें, नहीं तो मैं रथसे उतरता हूं' लवको ऐसा कहा। सुमन्त्रने चन्द्रकेतुका अभिनन्दन किया। रथपर चढ़नेका अभ्यास न होनेका बहाना कर लवने अपनी अनिच्छा दिखलाई। चन्द्रकेतुने रथसे उतरकर सुमन्त्रको अभिवादन किया। सुमन्त्रने उनको आशीर्वाद दिया। तब लव और चन्द्रकेतुका संवाद हुआ। लवने घोड़ेके रखवारोंके कठोर वचनोंकी निन्दा की, इसी अवसरमें बाली आदिके वधमें रामके चरित्रमें भी कुछ आक्षेप युक्त वाक्य कहा। तब दोनों ही युद्ध के लिए तैयार हो गये। अनन्तर सबलोग चले गये।

## छठवां अङ्क।

तब विमानपर चढ़कर विद्याधरी और विद्याधरने लव और चन्द्रकेतुका युद्ध देखनेके लिए प्रवेश किया और उनसे छोड़े गये आग्नेय, वारुण और वायव्य अस्त्रोंकी प्रशंसा भी की। 'शम्बूकको मारकर उसी युद्धस्थलमें भगवान् रामचन्द्र आ गये, उन्हें देखकर चन्द्रकेतुने प्रणाम किया और लव भी शान्त हो गये।' विद्याधरने विद्याधरीसे ऐसा कहा ( इति विष्कम्भक )।

भगवान् रामने पुष्पकसे उतरकर, प्रणाम करनेवाले चन्द्रकेतुको आलिङ्गन कर कुशल पूछा। चन्द्रकेतुने भी जवाब देकर 'मेरी तरह मेरे मित्र लवको भी आप देखें, ऐसा निवेदन किया। तब रामने शुभलक्षणसे भूषित लवकी प्रशंसा की और उनमें अपने निष्कारण प्रेमका प्रकाशन किया। लव भी रामके अतिशय महत्त्वसे विस्मित हो गये और उन्होंने चन्द्रकेतुसे रामका परिचय भी पूछा। चन्द्रकेतुने परिचयका निर्देश किया। लवके अभिवादन करनेपर रामने उन्हें आलिङ्गन किया। लवने अपनी ढिठाईपर उनसे क्षमा मांगी। रामने भी 'क्षत्रियका यह ( लड़ना ) भूषण है' ऐसा कहकर तारीफ की। लवके जृम्भकास्त्रका संहार करनेपर उनमें अस्त्रप्राप्ति होनेसे राम विस्मित हो गये। इसी बीचमें लड़ाईकी खबर सुनकर क्रोधपूर्वक वहां पर कुश आये। लवने भी 'रामके समीपमें शान्तिधारण करना चाहिए, ऐसा कहकर उन्हें रामका भी परिचय दे दिया। कुशने रामको प्रणाम किया। रामने उनको आलिङ्गन किया और कुश और लवमें राजचिह्नोंको देखा। इसी तरह उन दोनोंमें सीताका सादृश्य देखनेसे उनके सीतापुत्र होनेकी सम्भावना भी की। रामके अनुरोधसे कुश और लवने रामायणके श्लोकोंको

कहा। राम भी शोकसे आक्रान्त चित्तवाले हो गये। इसी बीचमें 'बालकोंकी संग्रामवार्ता सुननेसे अरुन्धती, वसिष्ठ, वाल्मीकि, कौसल्या और जनक यहां आ रहे हैं' ऐसा सुनकर राम शोक और भयसे अभिभूत होनेसे उनसे मिलनेमें सङ्कुचित हो गये। तब सब निकल गये।

## सातवां अङ्क।

लक्ष्मणने वाल्मीकिके अनुरोधसे रामायण नाटकका अभिनय करनेके लिए रामकी आज्ञासे गङ्गाके तीरमें सब दर्शकोंके लिए उचित स्थानका प्रबन्ध किया। आकर रामने भी 'यहां पर कुश और लवकी प्रतिष्ठा चन्द्रकेतुकी तरह करनी चाहिए' ऐसी आज्ञा दी।

तब हिंस्रजन्तुओंसे व्याप्त जङ्गलमें छोडी गई और प्रसववेदनासे पीडित सीताका 'गङ्गाजीमें शरीरपात करूंगी' ऐसा वचन नेपथ्यमें सुनाई पड़ा।

( इति प्रस्तावना )

रामने नाटकमें अभिनय किये गये इस विषयको सत्य जानकर आवेग-प्रकाशन किया। लक्ष्मणने उनको सान्त्वना दी। तब एक एक बालकको गोदमें लेकर सीताको सहारा देकर पृथिवी और गङ्गाने प्रवेश किया। उन दोनोंने सीताको यमल पुत्रोंकी उत्पत्तिकी सूचना दी। सीता भी यमल पुत्रोंकी उत्पत्तिसे प्रसन्न होकर मूर्छित हो गई। लक्ष्मणने भी सीताकी पुत्रोत्पत्तिमें हर्ष प्रकाशित किया। इस बीचमें राम मूर्छित हो गये। गङ्गा और पृथिवीने सीताको दिलासा दिया और उनके पूछने पर अपना परिचय भी दिया। तब पुत्रीके प्रति अनीतिके आचरणसे क्षुब्ध होकर पृथिवीने रामको उलाहना दिया। गङ्गाजीने उनसे अनुनय किया। सीताने मातासे अपने अङ्कमें लीन करनेकी याचना की। पृथिवीने 'पुत्री! तुम्हें अपने दोनों पुत्रोंकी देखरेख करनी चाहिए' ऐसा कहकर उन्हें समझाया। तब दोनों देवियोंने 'सीता हमलोगोंसे अधिक पवित्र हैं' ऐसी घोषणा की। इस बीचमें प्रदीप्त जृम्भकास्त्रोंने 'चित्रदर्शनके अवसरमें रामके वचनका अनुसरण करके हमलोग आपके दोनों पुत्रोंका आश्रय लेते हैं।' सीताको ऐसा निवेदन किया। तब सीताने 'मेरे पुत्रोंका क्षत्रियसंस्कार कौन करेगा' ऐसा कहा। गङ्गाने उस काममें वाल्मीकिका नाम लिया। लक्ष्मणने रामके समीपमें कुश और लवके सीतापुत्र होने की सम्भावना की। तब सीताने फिर अपनी मातासे अपने अङ्कमें लीन करनेकी याचना की। तब पृथिवीने 'दूध न छूटने

तक तुम्हें दोनों पुत्रोंकी देखरेख करनी चाहिये। पीछे जैसा तुम्हें पसन्द हो' ऐसी आज्ञा दी। तब सीता गङ्गा और पृथिवीके साथ निकलीं। अनन्तर सीताकी लोकान्तरप्राप्तिकी सभावना कर राम फिर मूर्च्छित हो गये। लक्ष्मणने रामकी रक्षाके लिए वाल्मीकिसे प्रार्थना की। तब नेपथ्यमें 'वाद्य हटाये जाय। सब लोग वाल्मीकिसे आदिष्ट आश्चर्य को देखें।' ऐसा वाक्य सुना गया। तब लक्ष्मणने 'पृथ्वी और गङ्गाके साथ सीता देवी जलसे निकल रही हैं' ऐसा कहा। नेपथ्यमें भी 'देवि अरुन्धती! हम दोनों गङ्गा और पृथिवी, पतिव्रता वधू सीताको तुम्हें अर्पण करती हैं।' ऐसा वाक्य सुनाई पड़ा। रामके होश न आनेसे सब खिन्न हो गये। अरुन्धतीने 'हाथसे छूकर रामको जिलाओ' सीताको ऐसी आज्ञा दी। सीताके वैसा ही करने पर होशमें आकर राम सीताको देखकर प्रसन्न हुए और निकटमें ही अरुन्धती, शान्ता और ऋष्यशृङ्ग आदि गुरुजनोंको देखकर लज्जित भी हो गये। नेपथ्यमें 'रामभद्र! चित्र देखनेपर 'सीताकी कल्याणचिन्तामें तत्पर हो' यह आपने जो कहा था वैसा ही मैंने किया' गङ्गाकी ऐसी उक्ति सुनी गई। फिर भी नेपथ्यमें 'आयुष्मान्‌ने सीताके परित्यागके अवसरमें 'भगवति पृथ्वी! पुत्री जानकीकी देखरेख कीजिए' ऐसी जो प्रार्थना की थी वैसा ही कार्य किया गया।' ऐसा पृथ्वीका वचन सुनाई पड़ा। तब भगवती अरुन्धतीने अनेक प्रकारोंसे सीताके पातिव्रत्यकी प्रशंसा कर 'रामके सीताग्रहण करनेमें आपलोगोंका क्या मत है?' सबसे ऐसा पूछा तो लक्ष्मणने 'सब नागरिक और देशवासी लोग सतीशिरोमणि सीता देवीको प्रणाम कर रहे हैं, लोकपाल और सप्तर्षि पुष्पवृष्टियोंसे पूजा कर रहे हैं।' ऐसा कहा। तब अरुन्धतीने सीताको स्वीकार करनेके लिए रामको आज्ञा दी और रामने भी स्वीकार किया। लक्ष्मणने कृतार्थ होकर सीताको प्रणाम किया और उन्होंने लक्ष्मणको आशीर्वाद दिया। तब अरुन्धतीके कहनेसे वाल्मीकि कुश और लवको ले आये। दोनों पुत्रोंको माता और पिताके समागमसे बहुत ही हर्ष हुआ। सीताने वाल्मीकिको प्रणाम कर उनसे आशीर्वाद पाया। इसी बीचमें लवणको मारकर शत्रुघ्न आ गये। वाल्मीकिके 'आपका फिर कौनसा प्रिय कार्य करूं' ऐसा कहने पर रामने—'आपसे रचित यह कथा पापनाशन करनेवाली और कल्याण बढ़ानेवाली है, शब्द ब्रह्मको जाननेवाले कविके नाटकरूपसे परिणत इस वाणीका विद्वान् लोग विचार करें।' ऐसी प्रार्थना की। तब सब चले गये।

---

## नाटकीयपात्र-परिचयः ।

### पुरुषाः—

सूत्रधारः—प्रधाननटः ।

नटः—सूत्रधारसहकारी ।

रामचन्द्रः—अयोध्याऽधिपः सूर्यवंशीयो राजा ।

लक्ष्मणः—सुमित्रासुतो रामाऽनुजः ।

शत्रुघ्नः—सुमित्रायाः कनीयान्पुत्रो लक्ष्मणाऽनुजः ।

जनकः—मिथिलाऽधीश्वरो रामश्वशुरः ।

अष्टावक्रः—मुनिविशेषः ।

वाल्मीकिः—रामायणनिर्माता महर्षिः ।

सौधातकिः—वाल्मीकिशिष्यः ।

दाण्डायनः— " " ।

कुशलवौ—रामपुत्रौ ।

चन्द्रकेतुः—लक्ष्मणपुत्रः ।

सुमन्त्रः—सारथिः ।

विद्याधरः—देवयोनिविशेषः ।

कञ्चुकी—अन्तःपुरचरो वृद्धब्राह्मणः ।

दुर्मुखः—गुप्तचरः ।

शम्बूकः—शूद्रतापसः ।

मुनिकुमाराः, सैनिकादयश्च ।

## स्त्रियः—

सीतादेवी—जनकतनया, रामस्य पत्नी ।

वासन्ती—वनदेवता, सीताया सखी ।

आत्रेयी—काचिद् ब्राह्मणजातीया ब्रह्मचारिणी ।

तमसा—काचिन्नदीविशेषाऽधिष्ठात्री देवी ।

मुरला— " " " " ।

भागीरथी—गङ्गादेवी ।

कौशल्या—रामजननी ।

पृथिवी—सीताजननी ।

अरुन्धती—वसिष्ठस्य पत्नी ।

विद्याधरी—विद्याधरपत्नी ।

प्रतीहारी—अन्तःपुरद्वारस्य रक्षित्री ।



॥ श्री ॥

# उत्तररामचरितम्

## 'चन्द्रकला'–'विद्योतिनी'–टीकाद्वयोपेतम् ।

### प्रथमोऽङ्कः

इदं कविभ्यः* पूर्वेभ्यो नमोवाकं प्रशास्महे ।

---

द्वैमातुरोऽप्यस्त्यगजात्मजो यो विघ्नप्रहर्ताऽपि च विघ्नराजः ।
विनायकोऽपि त्रिदशेश्वरो य स सर्वकृत्ये सततं क्रियाच्छुभम् ॥ १ ॥
सतां दुर्गतानां खलैः पीडितानां समुद्धारकार्ये कृताऽनेकरूपः ।
तथैवार्यधर्मस्य संरक्षकोऽसौ मुकुन्दः कृतौ मां कृतार्थं करोतु ॥ २ ॥
औदार्यादिसमन्विता सुकृतिनी साध्वी कुलाऽलङ्कृति-
विद्याधर्मदयाऽनुरागसहिता मान्या प्रसूसन्निभा ।
स्वर्याताऽप्यगणेयसद्गुणगणैरस्मन्मनः संस्थिता
सा मद्भ्रातृवधूः प्रतीक्ष्यचरणा 'पद्मप्रिया' प्रीयताम् ॥ ३ ॥
क्व मतिर्मम दूषणाऽन्विता, भवभूतेः क्व च सारवद्वचः ।
तदपि प्रकृतिः सुदुस्त्यजा, सुतरां मां चपलं करोत्यपि ॥ ४ ॥

अथ तत्रभवान् महाविद्वान् पदवाक्यप्रमाणविचक्षणः सत्काव्यनिर्माणयापितक्षणः श्रोत्रियधुरन्धरो भवभूतिनामा कविवरो मर्यादापुरुषोत्तमस्य भगवतो रामस्य उत्तरचरितमवलम्ब्य उत्तररामचरिताऽभिधानं नाटकं कर्तुकामो निर्विघ्नपूर्वकं प्रारिप्सितसमाप्तिफलकं नतिरूपं रूपकप्रयोज्यं नान्दीपाठात्मकं मङ्गलमाचरति—इदमित्यादि । पूर्वेभ्यः कविभ्यः, नमोवाकम् 'आत्मनः अमृतां कलां

---

पहलेके वाल्मीकि आदि कवियोंको नमस्कार कर 'ब्रह्मा की सनातन अमृतभूत देवी वाणी-

---

* 'गुरुभ्यः' इति पाठान्तरम् ।

*विन्देम देवतां वाचममृतामात्मनः कलाम् ॥ १ ॥

( नान्द्यन्ते– )

देवतां वाचं विन्देम' इदं प्रशास्महे इत्यन्वयः । पूर्वेभ्यः = प्राचीनेभ्यः, कविभ्यः = काव्यकर्तृभ्यः, व्यासवाल्मीकिभासकालिदासादिभ्य इत्यर्थः । नमोवाकं = नमस्कारोच्चारणपूर्वकमित्यर्थः । वचनं वाकः, 'वच परिभाषणे' इति धातोर्भावे घञ् कुत्वं च, नमो वाको यस्मिन् ( कर्मणि ) तद्यथा तथा इति क्रियाविशेषणम् । आत्मनः = ब्रह्मणः, 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ।' इत्यमरः । अमृतां = सनातनीममृतवन्मधुररसां वेत्यर्थः । अविद्यमानं मृतं ( मरणम् ) यस्याः सा अमृता ताम्, 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः' इति नञ्बहुव्रीहिः । कलाम् = अंशभूतां, देवतां = देवरूपिणीं, वाचं = वाणीं, विन्देम = प्राप्नुयाम, तौदादिकस्य 'विद्लृ लाभे' इति धातोर्लिङि उत्तमपुरुषबहुवचनम् । 'वन्देमहि च तां वाणीम्' इति पाठान्तरे—तां = प्रसिद्धां, वाणीं = सरस्वतीं, वन्देमहि=अभिवादनं स्तुतिं वा करवामेत्यर्थः । इदम् = इत्याकारकमाशंसनम्, प्रशास्महे = प्रार्थयामहे, प्रोपसर्गपूर्वकस्यादादिकस्य 'आङः शासु इच्छायाम्' इति धातोर्लटि बहुवचनम्, आङ्पूर्वत्वमत्र प्रायिकम्, क्रियाग्रहणादिह चतुर्थी । अत्र 'अभिवादनशीलस्य नित्यं वृद्धोपसेविनः । चत्वारि तस्य वर्द्धन्ते आयुर्विद्या यशो बलम् ॥' इति स्मरणाद् मधुररसवद्वाणीसिद्धिमूलकस्य यशसः प्राप्त्यर्थं प्राचीनकवीनां नमस्करणमवगन्तव्यम् । अनुष्टुब्वृत्तम् ।

श्लोकोऽयं 'तथाऽप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ।' इति वचनात् नान्दीरूपः । नान्दीलक्षणं यथा— 'आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥ मङ्गल्यशङ्खचन्द्राऽब्जकोककैरवशंसिनी । पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत ॥' इति । तत्र च द्वादशपदेयं नान्दी । उपसर्गतिङन्तयोः समासाऽभावेन प्रोपसर्गस्य भिन्नपदत्वात् द्वादशपदत्वमवसेयम् ॥१॥

नान्द्यन्ते—इति । नान्द्याः = ( पूर्वोक्तायाः स्तुतेः ) अन्ते = समाप्तौ । सूत्रधारः = सूत्रं ( कथासूत्रम् ) धारयतीति, नटाऽध्यक्षः, स च आगत्य वदतीति शेषः, सूत्रोपपदपूर्वकात् णिजन्तात् 'धृञ् धारणे' इति धातोः 'कर्मण्यण्' इत्यण् ।

को हमलोग पावें' ऐसी प्रार्थना करते हैं ॥ १ ॥

( नान्दीके बाद )

* 'वन्देमहि च तां वाणीम्' इति पुस्तकान्तरस्थः पाठः ।

सूत्रधारः—अलमतिविस्तरेण । अद्य खलु भगवतः कालप्रियानाथस्य यात्रायामार्यमिश्रान्विज्ञापयामि—एवमत्रभवन्तो विदांकुर्वन्तु । अस्ति खलु तत्रभवान्काश्यपः श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणज्ञो

---

अलमिति । अत्यन्तं विस्तरोऽतिविस्तरस्तेन अलम्, 'गम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजिका' इति वचनात् इह साधनक्रिया प्रति अतिविस्तरः करणम् । अतिविस्तरेण साध्यं नाऽस्तीत्यर्थः ।

अद्येति—अद्य = अस्मिन्दिने, खलु = निश्चयेन वाक्याऽलङ्कारो वा, भगवत = ज्ञानशक्त्यादिगुणसंपन्नस्य, कालप्रियानाथस्य = कालप्रिया नाम दुर्गा, तस्या नाथः शिवस्तस्य केषाचिन्मते कालप्रियानाथ उज्जयिन्या महाकालेश्वर इत्यवसेयम् । इयं च कथा पौराणिकी वेदितव्येति तलस्पर्शिन्या वीरराघवः । 'कालप्रियनाथस्य' इति पाठे विदर्भदेशे भवभूतिनिवासे पद्मपुरे स्थापितस्य शिवस्येत्यर्थः । एतन्मालतीमाधवाऽध्येतॄणामतिरोहितम् । यात्रायाम् = वार्षिकोत्सवे, आर्यमिश्रान् = आर्याश्च ते मिश्रा आर्यमिश्रास्तान् गौरवितानित्यर्थः । 'गौरवितास्त्वार्यमिश्रा' इति त्रिकाण्डशेष । यद्वा आर्येषु = ( कुलीनेषु ) आहोस्वित् 'कर्तव्यमाचरन्कर्म ह्यकर्त्तव्यमनाचरन् । तिष्ठति प्रकृताचारे स वा आर्य इति स्मृत ॥' इति स्मृत्युक्तलक्षणलक्षितेषु । मिश्रा = ( श्रेष्ठा ) तान् । विज्ञापयामि = आवेदयामि । किमित्यपेक्षायामाह—एवमिति । अत्रभवन्त = पूज्याः, एवम् = इत्थं, विदाङ्कुर्वन्तु = जानन्तु 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' इति "विद ज्ञाने" इति धातोर्लोट्याम्, गुणाऽभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । तत्रभवान् = पूज्य, काश्यप = कश्यपगोत्रोत्पन्न, 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यण्, 'तद्धितेष्वचामादेः' इत्यादिवृद्धिश्च । श्रीकण्ठपदलाञ्छन = श्रीकण्ठश्च तत् पदं श्रीकण्ठपदं, तत् लाञ्छनं ( चिह्नम् ) यस्य सः श्रीकण्ठनामधेय इत्यर्थः । श्री ( सरस्वती ) कण्ठे यस्य स श्रीकण्ठः, 'सप्तमी

---

सूत्रधार—विस्तृत नान्दीपाठकी आवश्यकता नहीं । आज भगवान् कालप्रियानाथ ( महादेव ) की यात्रामें महाशयोंको निवेदन करता हूँ—"आप लोग यह जानिए कि—कश्यप गोत्रमें उत्पन्न, व्याकरण, मीमांसा और न्यायशास्त्र जाननेवाले, जतुकर्णीके पुत्र और 'भवभूति' ऐसी उपाधिसे युक्त श्रीकण्ठ नामके विद्वान् हैं ।

भवभूतिर्नाम जतुकर्णीपुत्रः ।

यं ब्रह्माणमियं देवी वाग्वश्येवानुवर्तते ।

---

'विशेषणे वहुव्रीहौ' इत्यत्र सप्तमीतिपदज्ञापितो व्यधिकरणवहुव्रीहिः, इति केचित् । पदवाक्यप्रमाणज्ञ =पदं च वाक्यं च प्रमाण च (पदवाक्यप्रमाणानि, 'चाऽर्थे द्वन्द्व' इति द्वन्द्वसमास । पदवाक्यप्रमाणानि जानातीति पदवाक्य-प्रमाणज्ञ, 'आतोऽनुपसर्गे क' इति कप्रत्यय, 'उपपदमतिङ्' इत्युपपदस-मास । शुद्ध्यशुद्धिनिरूपणेन पदसंस्कारकत्वात्पदशास्त्रं = व्याकरणशास्त्रं पाणि-न्यादिनिर्मितम् । विधिनिषेधाऽर्थवादात्मकवाक्यप्रपञ्चविवेचकत्वात् वाक्यशास्त्र= मीमांसाशास्त्रं जैमिन्यादिनिर्मितम् । प्रत्यक्षाऽनुमानोपमानशब्दात्मकाना प्रमा-णानामुपपादकत्वात् प्रमाणशास्त्रं=न्यायशास्त्रं गौतमादिप्रणीतम् । पदवाक्यप्रमा-णज्ञ = व्याकरणमीमांसान्यायशास्त्राऽभिज्ञ इत्यर्थ । भवभूति = भवस्येव भूति (ज्ञानसम्पत्ति ) यस्य स इति केचित्, ईश्वर एव भिक्षुरूप सन्नागत्य कवये भूतिम् ( ऐश्वर्यम्, ज्ञानसम्पत्तिमित्यर्थ ) दत्तवानतो भवाद्भूतिर्यस्य स इत्यपरे । प्राचीनास्तु—'साऽम्बा पुनातु भवभूतिपवित्रमूर्त्ति' इति श्लोकश्रवणसन्तुष्टो राजा भवभूतिरित्येनं ख्यापयामासेति कथाऽत्राऽनुसन्धेया इति । अन्ये तु 'तपस्वी का गतोऽवस्थामिति स्मेराननाविव । गिरिजाया स्तनौ वन्दे भवभूतिसिताननौ ॥' इत्याकारकस्य कविप्रणीतस्य श्लोकस्य वैचित्र्येण सन्तुष्टा जना कवये 'भवभूति' रित्युपाधिं वितेरु । कालिदासस्य दीपशिखेव, भारवेरातपत्रमिव, माघस्य घण्टेव उत्तररामचरितप्रणेतुश्च भवभूतिरित्युपाधिश्चैवमेव संगच्छते, 'न ह्यमूला जन-श्रुति' इति न्यायात् । एवं च 'श्रीकण्ठपदलाञ्छन' ईदृशप्रयोगदर्शनात् 'श्रीकण्ठ' इति पदं कविनामधेयं, 'भवभूति' इत्युपाधिरिति अर्थद्वयं सम-र्थितं भवति । भवभूतिपदोत्तरमव्ययसंज्ञक नामपदमपि भवभूतिपदस्याऽतिप्रसिद्धिं निगमयति । दृश्यते च लोके नामाऽपेक्षयोपाधेरतिप्रसिद्ध्या नामनिर्वाहक-त्वम् । एवं स्थिते सति भवभूतिपदस्य उपाधित्वं निराकुर्वन्त एवं तस्यैव नाम-धेयत्वं श्रीकण्ठपदस्य च उपाधित्वं समर्थयन्तोऽश्रद्धेया । जतुकर्णीपुत्र = जतु-कर्ण्या पुत्र ।

**यमिति** । यं ब्रह्माणम् इयं देवी वाक् वश्या इव अनुवर्तते । तत्प्रणीतम्

---

जिन भवभूतिको देवी सरस्वती वशवर्तिनीकी तरह होकर अनुसरण करती हैं, उन्हीं

उत्तरं रामचरितं तत्प्रणीतं प्रयोक्ष्यते ॥ २ ॥

एषोऽस्मि कार्य*वशादायोध्यकस्तदानींतनश्च संवृत्तः । (समन्तादवलोक्य) भो भोः, यदा तावदत्रभवतः पौलस्त्यकुलधूमकेतोर्महाराजरामस्यायं पट्टाभि-

---

उत्तरं रामचरितं प्रयोक्ष्यते इत्यन्वयः । यं, ब्रह्माणं = ब्राह्मणम्, अध्ययनादिषट्कोपेतमित्यर्थः 'अध्यापनमध्ययनं यजनं याजनं तथा । दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् ॥' इति स्मृतेः । 'ब्रह्मा विप्रः प्रजापतिः' इत्यमरः । इयं = सन्निहिता, देवी=भगवती, वाक्=वाणी, सरस्वतीत्यर्थः, वश्या इव = अधीना इव अनुवर्तते = अनुसरति, स्वामिनश्चेटीव यस्येच्छानुरोधेन आविर्भवति तिरोभवति चेति भावः । तत्प्रणीतं = तेन ( ब्राह्मणेन ) प्रणीतं ( कृतम् ), भवभूतिकृतमित्यर्थः । उत्तरं = राज्याभिषेकाऽनन्तरभवमुत्कृष्टं च, रामचरितं = रामचरित्रं, प्रयोक्ष्यते = अभिनेष्यते, राज्याभिषेकात्पूर्वकालिकस्य रामचरित्रस्य महावीरचरिते प्रयुक्तत्वादिति भावः । अत्र 'वश्येवे'त्यत्रोत्प्रेक्षा, तथा च ब्रह्मपदसूचित उपमाऽलङ्कारो व्यङ्ग्यः, शब्दशक्तिमूलो ध्वनिः ॥ २ ॥

एष—इति । एषः = अहं ( सूत्रधार इत्यर्थः ), कार्यवशात् = अभिनयानुसारात्, आयोध्यकः—अयोध्यायां भव आयोध्यकः, अयोध्यावासीत्यर्थः । 'धन्वयोपधाद्वुञ्' इति वुञ् 'युवोरनाऽकौ' इति तस्य अकादेशश्च । तदानीन्तनः = तात्कालिकः रामाऽभिषेकसमयस्थ इत्यर्थः, तदानीं भवस्तदानीन्तनः, 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च' इति ट्युप्रत्ययस्तुडागमः । 'युवोरनाकौ' इत्यनादेशश्च । संवृत्तः = संजातः, अस्मीति शेषः ।

समन्तात् = सर्वत्र, अवलोक्य = दृष्ट्वा, भो भोः = हे नट ! इति भावः । 'अथ सम्बोधनार्थकाः । स्युः पाट् प्याडङ्ग हे है भोः' इत्यमरः । यदा, तावत् = यतः, अत्रभवतः = पूज्यस्य, पौलस्त्यकुलधूमकेतोः = रावणवंशाग्नेः । पुलस्त्यस्यापत्यं पुमान् पौलस्त्यो रावणः, 'तस्यापत्यम्' इत्यण्, 'तद्धितेष्वचामादेः' इत्यादिवृद्धिश्च । पौलस्त्यस्य कुलं, तस्य धूमकेतुरिव धूमकेतुरिति

---

भवभूतिसे निर्मित उत्तररामचरितका अभिनय किया जाता है ॥ २ ॥

यह मैं कार्यवश अयोध्यावासी और उस कालका रहनेवाला हो गया हूँ । ( चारो तरफ देख कर ) हे नट ! जब कि रावणवंशके अग्नितुल्य दाहक महाराज रामचन्द्रजीका रात दिन

---

* 'कवी-'ति पुस्त० ।

षेकसमयो रात्रिन्दिवमसंहृतनान्दीकः; तत्किमिदानीं विश्रान्तचारणानि चत्वरस्थानानि ?

( प्रविश्य )

नटः—भाव ! प्रेषिता हि स्वगृहान्महाराजेन लङ्कासमरसुहृदो महात्मानः प्लवङ्गमराक्षसाः सभाजनोपस्थायिनश्च नानादिगन्तपावना*ब्रह्मर्षयो राज-

---

लाक्षणिकोऽयं शब्दः । धूमः केतुः (लिङ्गं, चिह्नमित्यर्थः) यस्य सः, यथा वह्निर्वंश-कुलदाहकस्तथा श्रीरामोऽपि रावणवंशदाहक इत्यर्थः । महाराजरामस्य=राजेन्द्रराम-चन्द्रस्य, अयम्=एषः, पट्टाभिषेकसमयः=राज्याऽभिषेककालः, रात्रिन्दिवम्=अहर्नि-शमित्यर्थः, रात्रौ च दिवा चेति विग्रहे द्वन्द्वः 'अचतुरे' त्यादिना रात्रेर्मान्तत्वनिपातः । असंहृतनान्दीकः=अविच्छिन्नमङ्गल इत्यर्थः, अस्तीति शेषः, असंहृता नान्दी यस्मिन् सः, 'नद्यृतश्चे' ति कप् । तत् = तस्मात् कारणात्, किं = किमर्थम्, इदानीम् = अधुना, चत्वरस्थानानि=प्राङ्गणभागाः, 'अङ्गणं चत्वराजिरे' इत्यमरः । विश्रान्त-चारणानि=चारणशून्यानि, वर्तन्त इति शेषः । विश्रान्ताश्चारणा येषु तानि, 'अनेक-मन्यपदार्थे' इति बहुव्रीहिः' भारता इत्यपि नटाश्चारणाश्च कुशीलवाः" इत्यमरः ।

प्रविश्येति । नेपथ्यात् रङ्गशालायां प्रवेशं कृत्वेत्यर्थः ।

नटः = कश्चन सूत्रधारसहकारी, भाव = हे विद्वन् ! महाराजेन = रामचन्द्रेण, लङ्कासमरसुहृदः = लङ्कायाः समरः तस्मिन् सुहृदः, लङ्कायुद्धसहकारिण इत्यर्थः । महात्मानः = महान् आत्मा ( प्रयत्नः ) येषां ते महाप्रयत्ना इत्यर्थः, 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मवर्त्म च'त्यमरः । प्लवङ्गमराक्षसाः = वानररक्षांसि, प्लवेन गच्छन्तीति प्लवङ्गमाः, 'गमश्च' इति खच्, खित्वाद् 'अरुर्द्विषदजन्तस्य मुम्' इति मुम् 'खच्च डिद्वा' इति डित्त्वे 'प्लवगः' इत्यपि । प्लवङ्गमपदं भल्लू-कानामप्युपलक्षणम्, 'कपिप्लवङ्गप्लवगशाखामृगबलीमुखाः' इत्यमरः । रक्षांसि

---

अविच्छिन्न मङ्गलवाला यह राज्याऽभिषेकका समय है, तब क्यों अभी अङ्गणस्थानमें चारण लोग नहीं दिखाई पड रहे हैं ।

( प्रवेश कर )

**नट**—महाराजने लङ्कायुद्धके सहायक महात्मा सुग्रीव आदि वानर और विभीषण आदि राक्षसोंको एवं अभिनन्दनके लिए उपस्थित अनेक दिशाओंको पवित्र करने वाले वसिष्ठ आदि ब्रह्मर्षियोंको और जनक आदि राजर्षियोंको भी अपने अपने घरमें भेज दिया, जिनके

---

* 'न्तागसा' इति पा० ।

र्षयश्च, यत्समाराधनायैतावतो दिवसान्प्रमोद आसीत् ।

सूत्रधारः—आ, अस्त्येतन्निमित्तम् ।

नटः— अन्यच्च—

वसिष्ठाधिष्ठिता देव्यो गता रामस्य मातरः ।
अरुन्धतीं पुरस्कृत्य यज्ञे जामातुराश्रमम् ॥ ३ ॥

---

-एव राक्षसाः 'प्रज्ञादिभ्यश्च' इति स्वार्थे ( प्रकृत्यर्थे ) अण् । 'क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति परिभाषया पुंस्त्वम् । प्लवङ्गमाश्च राक्षसाश्चेतरेतरयोगद्वन्द्वः । सभाजनोपस्थायिनश्च = अभिनन्दनार्थमुपस्थिताः, सभाजनायोपतिष्ठन्तीति विग्रहे णिनिः । नानादिगन्तपावनाः=पवित्रीकृतबहुदिश इत्यर्थः । नाना दिगन्ता नानादिगन्ताः 'सुप्सुपे'ति समासः । नानादिगन्तान् पावयन्तीति नानादिगन्तपावनाः, ण्यन्तात् पूङ्धातोः बाहुलकात् कर्तरि ल्युट् । ब्रह्मर्षयः = गौतमादयः, राजर्षयश्च = जनकादयश्च, यत्समाराधनाय = येषां सत्काराय, तादर्थ्ये चतुर्थी । एतावतः = इयतः, दिवसान् = दिनानि व्याप्य, अत्यन्तसंयोगे द्वितीया । प्रमोदः = हर्ष उत्सवो वा, आसीत् = अभूत् ।

सूत्रेति । आ = एवम्, स्मरणद्योतकोऽयं निपातः । अत एव 'निपात एकाजनाङ्' इति प्रगृह्यत्वात् 'प्लुतप्रगृह्या अचि नित्यम्' इति प्रकृतिभावः, ततः 'अकः सवर्णे दीर्घः' इति दीर्घो न । एतत् = इदं, निमित्तं = कारणम्, अस्ति = वर्तते, कारणमेतन्मया प्राग्विस्मृतमभूत्, साम्प्रतं त्वत्कथनेन पुनः स्मृतमिति भावः ।

नट इति । अन्यच्च = अपरं च ।

वसिष्ठेति । वसिष्ठाधिष्ठिता देव्यो रामस्य मातरः अरुन्धतीं पुरस्कृत्य यज्ञे जामातुः आश्रमम् गताः इत्यन्वयः । वसिष्ठाधिष्ठिताः = वसिष्ठेन ( कुलगुरुणा ) अधिष्ठिता ( संरक्षितत्वेन नीताः ), देव्यः = कृताभिषेकाः, रामस्य = रामचन्द्रस्य, मातरः = कौसल्याकैकेयीसुमित्राः, अरुन्धतीं = वसिष्ठपत्नीं, पुरस्कृत्य = अग्रतः कृत्वा, पुरः कृत्वेति पुरस्कृत्य, 'पुरोऽव्ययम्' इति गतिसंज्ञा 'कुगति-

---

सत्कारके लिए इतने दिनों तक उत्सव था ।

सूत्रधार—ओ, यह कारण है ।

नट—और भी कारण है ।

वसिष्ठकी संरक्षतामें रामचन्द्र की मातायें महारानी कौशल्या आदि अरुधती को आगे

**सूत्रधारः**—वैदेशिकोऽस्मीति पृच्छामि । कः पुनर्जामाता ?

**नटः**—कन्यां दशरथो राजा शान्तां नाम व्यजीजनत् ।
अपत्यकृतिकां राज्ञे रोमपादाय तां ददौ ॥ ४ ॥

विभाण्डकसुतस्तामृष्यश्रृङ्ग उपयेमे । तेन द्वादशवार्षिकं सत्रमारब्धम् ।

---

प्रादयः' इति गतिसमासः 'नमस्पुरसोर्गत्योः' इति सत्त्वं 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति क्त्वास्थाने ल्यवादेशः । यज्ञे = यज्ञनिमित्तम् , 'निमित्तात्कर्मयोगे' इति सप्तमी । जामातुः कन्यापतेः =ऋष्यश्रृङ्गस्येत्यर्थः , आश्रमं, गताः =याताः इत्यर्थः ।राजधान्या निमन्त्रितैः पूज्यजनैश्च रहितत्वात्कथमुत्सवो भवेदिति भावः ॥ ३ ॥

सूत्रेति । वैदेशिकः = विदेशवासी, विभिन्नः ( अयोध्याया इति शेषः ) देशः विदेशः, 'कुगतिप्रादयः' इति समासः । विदेशे भवो वैदेशिकः, 'तत्र भवः' इति ठञ् 'ठस्येकः' इति तस्य इकादेशः आदिवृद्धिश्च । अस्मि = भवामि ( अहमिति शेषः ), इति = अनेन कारणेन, पृच्छामि = अनुयुनज्मि । जामाता = दुहितृपतिः, कः ?

कन्यामिति । राजा दशरथः शान्तां नाम कन्यां व्यजीजनत् । राज्ञे रोमपादाय अपत्यकृतिकां तां ददौ इत्यन्वयः । राजा = महाराजः, दशरथः, शान्तां नाम, कन्यां = कुमारीं, व्यजीजनत् = उत्पादयामास, व्युपसर्गपूर्वकात् 'जनी प्रादुर्भावे' इति धातोर्णिचि लुङ् । राज्ञे = महाराजाय, रोमपादाय, अपत्यकृतिकां = कृत्रिमकन्यारूपामित्यर्थः । कृता एव कृतिका, स्वार्थे कन् 'प्रत्ययस्थात्कात्पूर्वस्याऽत इदाप्यसुपः' इतीत्वं च । अपत्यं च सा कृतिका अपत्यकृतिका, ताम् ( कर्मधारयः ) 'अपत्यकृतिका या च कृत्रिमा पुत्रिका भवेत्' इति कोशः । कृत्रिमाऽपत्यविधाने प्रमाणं—'सदृशं तु प्रकुर्याद् यं गुणदोषविचक्षणम् । पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः ॥' इति मनुः । तां = शान्तां, ददौ = दत्तवान् इत्यर्थः ।

विभाण्डकेति । विभाण्डकसुतः = विभाण्डकस्य ( तन्नामकस्य कस्यचिन्मुनेः ) सुतः ( पुत्रः ) ऋष्यश्रृङ्गः = तदाख्यो मुनिः, तां = शान्ताम् , उपयेमे =

---

-कर यज्ञके लिये दामाद ( ऋष्यश्रृङ्ग ) के आश्रममें गई हुई है ॥ ३ ॥

**सूत्रधार**—मैं परदेशी हूं, इसलिए पूछता हूं । दामाद कौन है ?

**नट**—महाराज दशरथने शान्ता नामकी कुमारीको उत्पन्न किया, रोमपाद नामक राजाको कृत्रिम पुत्रीके तौर पर उन्हें दे दिया ॥ ४ ॥

विभाण्डक ऋषिके पुत्र ऋष्यश्रृङ्गने उन ( शान्ता ) से विवाह किया । उन्होंने बारह वर्ष-

तदनुरोधात्कठोरगर्भामपि *जानकीं विमुच्य गुरुजनस्तत्र यातः ।

सूत्रधारः—तत्किमनेन ? एहि, राजद्वारमेव स्वजातिसमयेनोपतिष्ठावः ।

---

उदवहत् 'उपायमः स्वकरणे' इत्यात्मनेपदम् । ब्राह्मणस्य क्षत्रियकन्यापरिणयने प्रमाणं—

'शूद्रैव भार्या शूद्रस्य, सा च स्वा च विशः स्मृते ।
ते च स्वा चैव राज्ञः स्युस्ताश्च स्वा चाऽग्रजन्मन ॥' मनुः ।

अत्राऽर्थे 'तिस्रो ब्राह्मणस्य वर्णानुपूर्व्येण' इति पारस्करगृह्यसूत्रमपि प्रमाणम् ।

तेन = ऋष्यश्रृङ्गेण, द्वादशवार्षिकं = द्वादशवर्षसमाप्यं, द्वादश वर्षाणि भावि इति द्वादशवार्षिकं, 'तमधीष्टो भृतो भूतो भावी' इति ठञ् 'अनुशतिकादीनां च' इत्युभयपदवृद्धिः । सत्रं = यज्ञविशेषः, आरब्धम् = प्रक्रान्तम् । तदनुरोधात् = तस्य ( ऋष्यश्रृङ्गस्य ) अनुरोधात् ( अनुवर्तनात्, 'सीतागर्भिणी वर्तते अतस्तस्या अत्रागमनमनुचितम्' इत्याकारिकाया ऋष्यश्रृङ्गेच्छाया अनुवर्तनादिति भावः ), कठोरगर्भा = कठोरो गर्भो यस्याः सा कठोरगर्भा, ता पूर्णगर्भामित्यर्थः । जानकीं = सीता, विमुच्य = त्यक्त्वा, गुरुजनः = पूज्यजनः, वशिष्ठादिरित्यर्थः । तत्र = ऋष्यश्रृङ्गाश्रमे, यातः = गतः ।

सूत्रेति । तत् = तर्हि, अनेन = चत्वरस्यानाना विश्रान्तचारणत्वेन, किं = कोऽर्थः, अस्माकं क्रियते इति शेषः । एहि = आगच्छ, स्वजातिसमयेन = आत्मजात्याचारेण, नटाऽनुष्ठेयकर्मणा स्तुतिरूपेणेति भावः । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । राजद्वारमेव = भूपालप्रतीहारमेव, उपतिष्ठावः = लिप्सया उपगच्छावः 'वा लिप्सायामिति वक्तव्यम्' इति आत्मनेपदस्य वैकल्पिकत्वात्पक्षे परस्मैपदम् ।

---

में समाप्त होने वाले यज्ञका आरम्भ किया है । उनके अनुरोधसे पूर्ण गर्भवाली सीताको भी छोड कर वसिष्ठ आदि गुरुजन वहां गये हुए हैं ।

**सूत्रधार**—तो हमको इससे क्या ? आओ, अपनी (नट की) जातिके आचारके अनुसार हम लोग राजद्वारमें ही रहें ।

---

* 'वधूम्' इत्यधिकः पाठः ।

स्नेहात्सभाजयितुमेत्य दिनान्यमूनि
नीत्वोत्सवेन जनकोऽद्य गतो विदेहान् ।
देव्यास्ततो विमनसः परिसान्त्वनाय
धर्मासनाद्विशति वासगृहं नरेन्द्रः ॥ ७ ॥

( इति निष्क्रान्तौ )

इति प्रस्तावना ।

---

स्नेहादिति । स्नेहात् सभाजयितुम् एत्य अमूनि दिनानि उत्सवेन नीत्वा जनकोऽद्य विदेहान गत. । तत. विमनस देव्याः परिसान्त्वनाय नरेन्द्र' धर्मासनात् वासगृहं विशति इत्यन्वय. । स्नेहात् = प्रेम्णः, सभाजयितुम् = अभिनन्दितुम्, एत्य=आगत्य, अयोध्यायामिति शेष । अमूनि=व्यतीतानि, कालविप्रकृष्टानीत्यर्थ । दिनानि = दिवसान्, उत्सवेन = राज्याभिषेकोत्सवेन, नीत्वा = यापयित्वा, जनक'= विदेहेश्वरः, अद्य = अस्मिन् दिने, विदेहान् = स्वनिवासजनपदं, गत = यात, तत = तस्मात्, स्वपितृगमनात् कारणादित्यर्थ । विमनस = दुर्मनस., देव्या = सीताया', परिसान्त्वनाय–तद्दु खाऽपनोदनार्थमनुनयाय, 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । नरेन्द्र = रामचन्द्र, धर्मासनात् = धर्माधिकरणात्, वासगृहं= गर्भागारं, विशति=प्रविशति । वसन्ततिलकावृत्तम्, 'उक्ता वसन्ततिलका तभजा जगौ ग' इति लक्षणम् ॥ ७ ॥

इतीति । इति=एवमुक्त्वा, निष्क्रान्तौ=निर्गतौ, सूत्रधारनटाविति शेष. ।

प्रस्तावनेति । प्रस्तावनालक्षणं यथा साहित्यदर्पणे—'नटी विदूषको चाऽपि पारिपार्श्वक एव वा । सूत्रधारेण सहिता सलाप यत्र कुर्वते ॥ चित्रैर्वाक्यै' स्वकार्योत्थै' प्रस्तुताक्षेपिभिर्मिथ । आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा ६—३१, ३२ ॥' इति । तत्र च पञ्चविधासु प्रस्तावनासु प्रयोगाऽतिशयाऽऽख्या प्रस्तावनेयम् । तल्लक्षणं यथा—'यदि प्रयोग एकस्मिन्प्रयोगोऽन्य. प्रयुज्यते । तेन पात्र=प्रवेशश्चेत्प्रयोगाऽतिशयस्तदा' ॥ इति ।

---

स्नेहसे अभिनन्दन करनेके लिए आकर इतने दिन उत्सवसे बिता कर महाराज जनक आज मिथिलामें गये हैं, इस कारणसे दु ख मानती हुई सीताको सान्त्वना ( दिलासा ) देनेके लिये महाराज रामचन्द्र न्यायालयसे वासभावनमें गये हुए हैं ॥ ७ ॥

( दोनों जाते हैं )

इति प्रस्तावना ।

( ततः प्रविशत्युपविष्टो रामः सीता च )

**रामः**—देवि ! वैदेहि ! विश्वसिहि, ते हि गुरवो न शक्नुवन्ति* विहातुमस्मान् ।

किंत्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति ।
संकटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता ॥ ८ ॥

---

तत इति । ततः=सूत्रधारनटयोर्निष्क्रमणाऽनन्तरम् । उपविष्टः=आसनस्थः, उपविष्टपदं देहलीदीपन्यायेन सीतेत्यत्र च सम्बद्ध्यते । तत्र उपविष्टेति च लिङ्गव्यत्ययः कल्प्यः ।

राम इति । विश्वसिहि=विश्वासं कुरु, 'समाश्वसिहि' इति पाठान्तरे समाश्वस्ता भवेत्यर्थः । 'श्वस प्राणने' इति धातोर्लोटि मध्यमपुरुषैकवचने 'रुदादिभ्यः सार्वधातुके' इतीट् । हि =यत , ते=देशकालविप्रकृष्टाः, गुरवः=जनकादयः, अस्मान् विहातु = त्यक्तुं, न शक्नुवन्ति = न समर्था भवन्ति, कालान्तरे पुनरागमिष्यन्तीति भावः ।

किन्त्विति । किन्तु अनुष्ठाननित्यत्वं स्वातन्त्र्यम् अपकर्षति । हि आहिताऽग्नीनां गृहस्थता प्रत्यवायैः सङ्कटा इत्यन्वयः । यदि ते गुरवोऽस्मान् विहातुं न शक्नुवन्ति तर्हि कथं परित्यज्य गता इत्यत्राह—किन्तु = पक्षान्तरे, अनुष्ठाननित्यत्वम्=अनुष्ठानानाम् ( अग्निहोत्रादिकार्याणाम् ) नित्यत्वम् ( नियतत्वम् ), अकरणे प्रत्यवायस्मरणरूपत्वमिति भावः । स्वातन्त्र्यं=स्वच्छन्दता, चिरकाल, प्रवासादिरूपामिति भावः, स्वतन्त्रस्य भाव, कर्म वा स्वातन्त्र्यं, तत् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ष्यञ् । अपकर्षति=निरुणद्धि, हि=यतः, आहिताग्नीनाम् = अग्निहोत्रिणामिति भावः । आहिताः ( आधानसंस्कारेण स्थापिताः ) अग्नयः ( दक्षिणाऽग्निगार्हपत्याहवनीयाख्याः ) यैस्ते आहिताऽग्नयस्तेषाम्, 'निष्ठा' इति निष्ठान्तस्य पूर्वप्रयोगः, वाऽऽहिताग्न्यादिषु' इति पक्षान्तरे अग्न्याहितानाम् इति च । गृहस्थता = गार्हस्थ्यम् , प्रत्यवायैः = विहिताऽननुष्ठानरूपपातकैः, सङ्कटा=सङ्कटस्वरूपा, भवतीति शेषः ॥ ८ ॥

---

( तव बैठे हुए राम और सीताजी प्रवेश करते हैं )

**राम**—महारानी ! सीते ! विश्वास करो । वे गुरुजन हमलोगोंको नहीं छोड सकते हैं । किन्तु अनुष्ठानकी नित्यता स्वतन्त्रता छीन लेती है क्यों कि अग्निहोत्रियों को गृहस्थभाव अनेकों प्रत्यवायोंसे सङ्कटमय होता है ॥ ८ ॥

---

* 'चिरम्' इत्यधिकं क्वचित् पाठः ।

**सीता**—जाणामि अज्जउत्त ! जाणामि । किंदु संदावआरिणो बन्धुजणविप्पओआ होन्ति । ( जानामि आर्यपुत्र ! जानामि, किन्तु सतापकारिणो बन्धुजनविप्रयोगा भवन्ति )

**रामः**—एवमेतत् । एते हि हृदयमर्मच्छिदः ससारभावाः* । येभ्यो बीभत्समानाः संत्यज्य सर्वान्कामानरण्ये विश्राम्यन्ति मनीषिणः ।

---

सीतेति । आर्यपुत्र = आर्य ( श्रेष्ठ , श्वशुर इत्यर्थः ) तस्य पुत्र आर्यपुत्रस्तत्सम्बुद्धौ, 'पत्नी चार्येति संभाष्या आर्यपुत्रेति यौवने' इति भरतनयात् सीताया आर्यपुत्रकथन संगच्छते । द्वितीयो जानामिशब्दोऽवधारणार्थकः । सन्तापकारिण = सन्तापदायिनः, बन्धुजनविप्रयोगाः = पित्रादिविरहाः ।

राम इति । एतत् = बन्धुजनविप्रयोगस्य सन्तापकारकत्वम् , एवम् = ईदृशम् , अपरिहार्यमित्यर्थ । एते = विद्यमाना , संसारभावाः=लोकस्वभावा , प्रियवियोगाऽप्रियसंयोगादिका इत्यर्थ । मिथ्याज्ञानजन्या वासना संसारः इति नैयायिका । मनीषिणामरण्यविश्रामहेतुश्च इष्टवियोगोऽनिष्टसंयोगश्च । ससरन्ति अस्मिन्निति संसारः, समुपसर्गपूर्वकात् 'सृ गतौ' इति धातोर्घञ् । हृदयमर्मच्छिदः = हृदयमर्मस्थलभेदकाः, अतीवदुःखप्रदा इत्यर्थ । येभ्य = ससारभावेभ्य , 'बीभत्समाना' इति पदेन योगे 'जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्' इति पञ्चमी । बीभत्समानाः—जुगुप्समाना , 'बध बन्धने' इति स्वार्थे सनि रूपम् । मनीषिणः—मनस ईषा ( गतिर्दर्शनं वा ) मनीषा, 'शकन्ध्वादिषु पररूपं वाच्यम्' इति पररूपत्वम् , मनीषाऽस्ति येषां ते मनीषिणः, 'व्रीह्यादिभ्यश्च' इति इनिः, 'धीरो मनीषी ज्ञः प्राज्ञः सङ्ख्यावान्पण्डित कविः' इत्यमरः । कामान्—विषयादीन् , संत्यज्य—त्यक्त्वा अरण्ये—वने, विश्राम्यन्ति—तपस्यन्ति, 'श्रमु तपसि खेदे च' इति धातोर्लट् , 'शमामष्टाना दीर्घ श्यनि' इति दीर्घत्वम् ।

---

**सीता**—जानती हू आर्यपुत्र ! मैं जानती हू, परन्तु बन्धुजनोंके विरह, सन्ताप करने वाले होते हैं ।

**राम**—यह ठीक है । ये ससार के भाव ( स्वभाव ) हृदयके मर्मस्थलको भेदन करने वाले हैं । जिनसे घृणा करते हुए विद्वान् लोग सब विषयादियोंको छोड कर जङ्गलमें तपस्या करते हैं ।

---

* 'भागा' इति क्वचित् पाठ ।

( प्रविश्य )

कञ्चुकी—रामभद्र ! ( इत्यर्धोक्ते साशङ्कम् ) महाराज !—

रामः—( सस्मितम् ) आर्य ! ननु रामभद्र ! इत्येव मां प्रत्युपचारः शोभते तातपरिजनस्य । तद्यथाभ्यस्तमभिधीयताम् ।

---

प्रविश्येति । सीतारामवासगृहमिति शेषः ।

कञ्चुकः परिच्छदोऽस्याऽस्तीति कञ्चुकी । कञ्चुकिलक्षणं यथा—'अन्तःपुरचरो वृद्धो विप्रो रूपगुणाऽन्वितः । सर्वकार्याऽर्थकुशलः कञ्चुकीत्यभिधीयते ॥ जरावैक्लव्ययुक्तेन विशेद्गात्रेण कञ्चुकी ॥' इति भरतः । रामस्य बाल्याऽवस्थायां लालनशिक्षणादिषु वात्सल्यात् 'रामभद्र' इति सम्बोधयतः कञ्चुकिनः पूर्वाऽभ्याससंस्कारवशात् इदानीमपि तथैव सम्बोधनम् । साम्प्रतं तु जातराज्याभिषेकं रामं प्रति तथा सम्बोधनमनुचितमित्यतः साशङ्कं कञ्चुकी पुनः महाराज इति कथयति ।

राम इति । सस्मितं = स्मितेन सहितं सस्मितं मन्दहास्यपूर्वकं, 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः, 'वोपसर्जनस्य' इति सहस्य सभावः । वयोवृद्धेन तातपरिजनेन, तत्राऽपि ब्राह्मणेन, अतः पितृतुल्येन कञ्चुकिना पूर्वाऽभ्यासवशात् 'रामभद्र' इति सम्बोधने अनौचित्यविचारणं व्यर्थमेवेत्यतो रामस्य स्मितत्वम् ।

ब्राह्मणस्य पितृतुल्यत्वे च—

'ब्राह्मणं दशवर्षं तु शतवर्षं तु भूमिपम् ।
पितापुत्रौ विजानीयाद् ब्राह्मणस्तु तयोः पिता ॥'

इति मनूक्तिः प्रमाणम् । स्मितलक्षणं च यथा—'ईषद्विकासिनयनं स्मितं स्यात्स्पन्दिताऽधरम् ॥', इति साहित्यदर्पणः । आर्य = महाशय ! नन्विति अनुनये । तातपरिजनस्य = पितृभृत्यस्य, मां प्रति = रामचन्द्रं प्रति, 'अभितः-परितः-समया-निकषा-हा-प्रतियोगेऽपि' इति द्वितीया । रामभद्र इत्येव, उपचारः=व्यवहारः, शोभते=शोभितो भवति । ततः=तस्माद्धेतोः, यथाऽभ्यस्तम्=अभ्यसनमभ्यस्तम् । 'नपुंसके भावे क्तः' इति क्तः, अभ्यस्तमनतिक्रम्य यथाभ्यस्तम्, पूर्वाऽभ्यासाऽनुसारमित्यर्थः, 'अव्ययं विभक्ती' त्यादिना यथार्थेऽव्ययीभावः । अभिधीयताम् =

---

( प्रवेश कर )

कञ्चुकी—रामभद्र ! ( ऐसा आधा ही कहने पर आशङ्काके साथ ) महाराज !

राम—( मुस्कुराहटके साथ ) आर्य ! पिताजीके सेवक-आपका मेरे लिए 'रामभद्र' इस

कञ्चुकी—देव ! ऋष्यश्रृङ्गाश्रमादष्टावक्रः संप्राप्तः ।

सीता—अज्ज ! तदो किं विलम्बीअदि ( आर्य ! ततः किं विलम्ब्यते )।

रामः—त्वरितं प्रवेशय ।

( कञ्चुकी निष्क्रान्तः । प्रविश्य— )

अष्टावक्रः—स्वस्ति वाम् ।

रामः—भगवन् ! अभिवादये, इत आस्यताम् ।

---

उच्यताम्, 'रामभद्र' इति नाम्नैव आकार्यतामिति भावः । एतेन रामस्य क्षमावत्त्वं सूच्यते, तच्च धीरोदात्तनायकलक्षणाऽनुगुणम्, धीरोदात्तलक्षणं यथा साहित्यदर्पणे—'अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः । स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥' इति ।

कञ्चुकीति । देव = महाराज ! कञ्चुकिनः राजानं प्रति 'देव' इति सम्बोधनं 'राजा स्वामीति देवेति भृत्यैः' इति साहित्यदर्पणानुकूलम् । अष्टावक्र = 'अष्टावक्रनामा ऋषिः' अष्टसु शरीराऽवयवेषु वक्रोऽष्टावक्रः, 'अष्टनः संज्ञायाम्' इत्यात्वम् । सम्प्राप्तः = समायातः, इहेति शेषः ।

सीतेति । ततः = तदा, किं = किमर्थं, विलम्ब्यते = विलम्बः क्रियते, प्रवेशाऽर्थमिति शेषः ।

राम इति । त्वरितम् = अविलम्बं यथा तथा, प्रवेशय = प्रवेशं कारय ।

अष्टावक्र इति । वां = युवाभ्याम्, 'स्वस्ति' इति पदेन योगे 'नमः स्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च', इति चतुर्थी । युवयोः कल्याणं भूयादित्यर्थः, 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ' इति वामादेशः ।

राम इति । भगवन् = लोकस्थित्याद्यभिज्ञ ! भगवल्लक्षणं च—

'उत्पत्तिं च स्थितिं चैव लोकानामगतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥' इति ।

---

शब्दसे व्यवहार ही सुहाता है, इस कारण से अभ्यासके अनुसार ही कहिए।

कञ्चुकी—महाराज ! ऋष्यश्रृङ्ग के आश्रमसे अष्टावक्र ऋषि आये हैं।

सीता—आर्य ! तब क्यों विलम्ब करते हैं ?

राम—उन्हें जल्दी प्रवेश कराइये ।

( कञ्चुकी चला गया । प्रवेश करके )

अष्टावक्र—आप दोनोंका कल्याण हो ।

राम—भगवन् ! नमस्कार करता हूं । यहां बैठिए ।

सीता—भअव, णमो दे । अवि कुसलं सजामादुअस्स गुरुअणस्स अज्जाए सन्ताए अ । ( भगवन् , नमस्ते । अपि कुशलं सजामातृकस्य गुरुजनस्यार्याया शान्तायाश्च ? ) ।

रामः—निर्विघ्नः सोमपीथी *आवुत्तो मे भगवानृष्यश्रृङ्गः, आर्या च शान्ता ?

सीता—अम्हे वि सुमरेदि ? ( अस्मानपि स्मरति । )

---

अभिवादये = नमस्करोमि, भवन्तमिति शेषः । इत =अस्मिन् स्थान इत्यर्थः । आस्यताम् = उपविश्यताम् ।

सीतेति । ते = तुभ्यं, 'तेमयावेकवचनस्य' इति त आदेशः । सजामातृकस्य = जामात्रा सहितः सजामातृकस्तस्य ऋष्यश्रृङ्गसहितस्येत्यर्थः, बहुव्रीहिसमासत्वात् 'नद्यृतश्च' इति समासान्तः कप् । गुरुजनस्य = पूज्यजनस्य, कौशल्यादेरित्यर्थः । आर्यायाः = पूज्यायाः, शान्तायाश्च = तदाख्याया ननान्दुश्च । कुशलम् । अपि = कल्याणं किम्, अपि प्रश्नार्थकः । 'गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि' इत्यमरः ।

राम इति । सोमपीथी = पीथं, पानं 'पातृतुदिवचिरिचिसिचिभ्यस्थक्' इति औणादिकस्थक् । सोमस्य पीथं सोमपीथं, तदस्याऽस्तीति, 'अत इनिठनौ' इतीनि प्रत्ययः । 'सोमपीथी तु सोमपः' इत्यमरः । मे = मम, आवुत्तः = भगिनीपतिः 'भगिनीपतिरावुत्तः' इत्यमरः । 'भावुक' इति पाठेऽपि स एवाऽर्थः, 'नाट्योक्तौ भगिनीपतिः' इति हेमचन्द्रः । निर्विघ्नः = विघ्नरहितः किं ? काकुप्रश्नाऽर्थो निष्पन्नः । आर्या = पूज्या, ज्येष्ठस्वसृत्वात् । निर्विघ्ना इति लिङ्गविपरिणामः ।

---

सीता—आपको नमस्कार है । दामाद (ऋष्यश्रृङ्ग) के साथ कौसल्या आदि गुरुजन और पूजनीया देवीका भी कल्याण है ?

राम—सोमपान करनेवाले मेरे भगिनीपति ( जीजाजी ) भगवान् ऋष्यश्रृङ्ग और पूजनीया जीजी शान्ता भी सकुशल हैं ? ।

सीता—हमलोगोंको भी याद करते हैं ?

---

* 'भावुक' इत्यपि पाठः । 'भावुको भगिनीपतिः' ।

अष्टावक्रः—( उपविश्य । ) अथ किम् । देवि, कुलगुरुर्भगवान् वसिष्ठ-स्त्वामिदमाह—

विश्वंभरा भगवती भवतीमसूत
राजा प्रजापतिसमो जनकः पिता ते ।
तेषां वधूस्त्वमसि नन्दिनि ! पार्थिवानां

---

अष्टावक्र इति । अथ किम् = एवम्, शान्ता ऋष्यश्रृङ्गश्चेत्युभावपि कुशलिनौ तथा युष्माकमपि स्मरत इत्यर्थ । अथ किमिति पदं स्वीकारव्यञ्जकमव्ययमिति शब्दरत्नावली, निश्चयार्थकमिति केचित् । देवि = राजमहिषि । 'देवी कृताऽभिषेकाया'मित्यमरः । कुलगुरु = रघुवंशगुरु ।

विश्वम्भरेति । हे नन्दिनि ! भगवती विश्वम्भरा भवतीमसूत, प्रजापतिसमो राजा जनकस्ते पिता, त्वं तेषां पार्थिवानां वधूरसि येषां कुलेषु सविता गुरु, वयं च (गुरव) इत्यन्वय । हे नन्दिनि=नन्दनं नन्द (आनन्द ), सोऽस्या अस्तीति नन्दिनी, तत्सम्बुद्धौ हे नन्दिनि=हे सौभाग्यवति !, 'ऋन्नेभ्यो ङीप्' इति ङीप् । भगवती = श्रीसम्पन्ना, विश्वम्भरा = विश्वं बिभर्तीति, 'संज्ञायां भृतॄवृजिधारिसहितपिदम' इति खच्, 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमश्च । 'भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा' इत्यमरः । भवतीं = त्वाम्, असूत = प्रसूतवती, एतेन सीताया अयोनिजत्वं सूच्यते । प्रजापतिसम = प्रजापतिना, प्रजापतेर्वा सम "तुल्याऽर्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्' इति तृतीया, षष्ठी वा; तत समास, ब्रह्मज्ञानाद् ब्रह्मतुल्य इत्यर्थ । राजा = महाराज, जनक = जनकाऽऽख्य क्षत्रिय, ते = तव, पिता = तात, अस्तीति शेष । तत्र मातृकुलं, पितृकुलं च कुलद्वयमपि अतीव श्लाघनीयमिति भावः । त्वं, तेषां = प्रसिद्धानां रघ्वादीनामित्यर्थ । पार्थिवानां = राज्ञां, वधू = स्नुषा, असि, येषां = राज्ञां, कुलेषु = वंशेषु, उद्भूताऽवयवभेदविवक्षया बहुत्वम् । सविता=सूर्य, गुरु = पिता, वंशप्रवर्तकत्वेनेत्यर्थ । वयं च=अहं च, 'अस्मदो द्वयोश्च' इति एकत्वे विवक्षिते बहुवचनम् । गुरव इति बहुवचनान्तत्वेन विभक्तिविपरिणाम, हितोपदेष्टार इत्यर्थ । अत्र 'प्रजापति-

---

अष्टावक्र—( बैठ कर ) और क्या ? महारानी ! कुलगुरु भगवान् वसिष्ठ ने आपको ऐसा कहा है—

हे सौभाग्यवति ! भगवती पृथ्वीने आपको उत्पन्न किया, प्रजापतिके तुल्य राजा जनक

येषां कुलेषु सविता च गुरुर्वयं च ॥ ६ ॥

तत्किमन्यदाशास्महे । केवलं वीरप्रसवा भूयाः ।

रामः—अनुगृहीताः स्मः ।

लौकिकानां हि साधूनामर्थं वागनुवर्तते ।

---

सम'' इत्यत्रोपमा, 'जनकः पिता' इत्यत्र पुनरुक्तवदाभासः 'सविता च गुरुर्वयं चे'त्यत्र द्वयोः पदयोरेकगुरुत्वधर्माऽभिसम्बन्धात्तुल्ययोगिता चेत्येतेषामङ्गाङ्गिभावेन सङ्करः । वसन्ततिलकावृत्तं, तल्लक्षणं यथा—'उक्ता वसन्ततिलका तभजा जगौ गः' इति ॥९॥

तदिति । तत् = तस्मात्कारणात् , अन्यत् = अपरं, किम् , आशास्महे = इच्छामः, 'आङः शासु इच्छायाम्' इति धातोर्लट् । पुत्रभिन्नाः सर्वेऽपि त्वत्सौभाग्यद्योतका विषया वर्तन्त एव, अतस्ते नाशास्या इति भावः । तर्हि किमाशास्यमित्याह—केवलमिति । वीरप्रसवा = प्रसूयते इति प्रसवः, प्रोपसर्गपूर्वकात् 'षूङ् प्राणिप्रसवे' इति धातोः 'ऋदोरप्' इत्यप् । 'प्रसवो गर्भमोचने । उत्पादे स्यादपत्येऽपि फलेऽपि कुसुमेऽपि च' इत्यादि मेदिनी । वीरः प्रसवो यस्याः सा वीरप्रसवा, वीरमाता इत्यर्थः । केवलम् = एव, भूयाः = भवतात् , त्वमिति शेषः । 'आशिषि लिङ्लोटौ' इति आशीर्लिङ् ।

राम इति । अनुगृहीताः = कृतानुग्रहाः , स्मः = भवामः । द्वित्वे विवक्षिते । 'अस्मदो द्वयोश्च' इति बहुवचनम् ।

लौकिकानामिति । 'लौकिकानां साधूनां वाक् अर्थम् अनुवर्तते हि; पुनः आद्यानाम् ऋषीणां वाचम् अर्थः अनुधावति' इत्यन्वयः । लौकिकानां = लोकभवानां साधारणानामित्यर्थः , साधूनां = सज्जनानां, वाक् = वाणी, अर्थं = वस्तु, अनुवर्तते = अनुसरति, वृतुधातोरुपसर्गयोगेन सकर्मकत्वम् । हि = निश्चयेन । पुनः = परन्तु, आद्यानां = प्रधानानाम् , ऋषीणाम् = महामुनीनां, वशिष्ठादीनामित्यर्थः । वाचं = वाणीम् , अर्थः = वस्तु, अनुधावति = अनुसरति । लौकिकानां साधूनां वाणी वस्त्वपेक्षिणी, वसिष्ठप्रमुखानामृषीणां तु वाण्यपेक्षं वस्तु वर्तते, अतोऽस्माकं वीरः पुत्रो भविष्यत्येवेति भावः । अत्रेतर-

---

-आपके पिता हैं, आप उन राजाओं की कुलवधू हैं, जिनके कुलमें सूर्य और हम गुरु हैं ॥९॥

इस कारणसे और क्या आशीर्वाद दें। आप वीरपुत्रकी माता हों।

राम—हमलोग अनुगृहीत हुए।

लौकिक सज्जनोंकी वाणी अर्थका अनुसरण करती है, परन्तु प्रधान ऋषियोंकी वाणी-

ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥ १० ॥

अष्टावक्रः—इदं च भगवत्याऽरुन्धत्या देवीभिः शान्तया च भूयो भूयः संदिष्टम्—'यः कश्चिद्गर्भदोहदो* भवत्यस्याः सोऽवश्यमचिरान्मानयितव्य' इति।

रामः—क्रियते यद्येषा कथयति।

अष्टावक्रः—ननान्दुः पत्या च देव्याः संदिष्टम्—'वत्से, कठोरगर्भेति

---

साध्वपेक्षया वसिष्ठादीनामृषीणामाधिक्यप्रतिपादनाद् व्यतिरेकाऽलङ्कारः। तल्लक्षणं यथा—'आधिक्यमुपमेयस्योपमानान्न्यूनताऽथ वा। व्यतिरेक' इति। अनुष्टुप् छन्दः ॥ १० ॥

अष्टावक्र इति। अरुन्धत्या = वसिष्ठपत्न्या, देवीभि = कृताऽभिषेकाभि। कौशल्यादिभिरित्यर्थ। भूयो भूय = वारं वारम्। सन्दिष्टं = सन्देश कृत। अस्या = सीताया, य कश्चित् = य कोऽपि, दुष्पूरोऽपीत्यर्थ। गर्भदोहद = गर्भस्य दोहद, गर्भिण्यभिलाष इत्यर्थः। गर्भदौर्हृदमित्यस्याऽपि अयमेवाऽर्थ। गर्भदौर्हृदोदय इति पाठे गर्भिण्यभिलाषोत्पत्तिरित्यर्थः। अचिरात् = सत्वरम्। मानयितव्य = संभावयितव्यः।

'दोहदस्याऽप्रदानेन गर्भो दोषमवाप्नुयात्।
वैरूप्यं मरणं चाऽपि तस्मात्कार्यं प्रियं स्त्रिया ॥' इति स्मृतेति भाव।

राम इति। क्रियते = विधीयते, अस्या दोहदपूरणमिति शेषः। एषा = पुर स्थिता सीतेत्यर्थ, कथयति यदि = सूचयति चेदित्यर्थ। अतिशालीनतया अनया स्वदोहदसूचनमेवाऽशक्यं, यदि सूचयति, अवश्यमेव करोमीति भाव।

अष्टावक्र इति। ननान्दु = पतिस्वसु, शान्ताया इत्यर्थ। 'ननान्दा तु स्वसा पत्यु' इत्यमरः। पत्या = भर्त्रा, ऋष्यश्रृङ्गेणेत्यर्थ। देव्या = सीतायाः,

---

का अर्थ अनुसरण करता है ॥ १० ॥

अष्टावक्र—भगवती अरुन्धतीने, कौसल्या आदि महारानियोंने एवम् शान्ताने भी वारवार यह सन्देश कहा है कि—'गर्भिणी अवस्थामें सीताजीका जो कुछ अभिलाष हो आपको उसे बहुत शीघ्र पूरा करना चाहिए'।

राम—यदि यह कहती है तो करता हूँ।

अष्टावक्र—ननदके पति (ननदोई) ऋष्यश्रृङ्गने महारानीको सन्देश दिया है—'वत्से!

---

* 'दौर्हृदोदयो' इति पुस्तकान्तरस्थ पाठ।

नानीतासि वत्सोऽपि रामभद्रस्त्वद्विनोदार्थमेव स्थापितः तत्पुत्रपूर्णोत्सङ्गा-मायुष्मतीं द्रक्ष्यामः' इति ।

रामः—( सहर्षलज्जास्मितम् । ) तथास्तु । भगवता वसिष्ठेन न किंचि-दादिष्टोऽस्मि । ?

अष्टावक्रः—श्रूयताम् ।

जामातृयज्ञेन वयं निरुद्धास्त्वं बाल एवासि नवं च राज्यम् ।

---

कठोरगर्भा = कठोरो गर्भो यस्याः सा परिणतगर्भा इत्यर्थः । नाऽऽनीताऽसि = न आपिताऽसि, मदाश्रम इति शेषः ।

'गर्भिणी कुञ्जराऽश्वादिशैलहर्म्याऽधिरोहणम् ।
व्यायामं शीघ्रगमनं शकटारोहणं त्यजेत् ॥' इति

प्रयोगपारिजातोद्धृतकश्यपवचनस्मरणादिति भावः ।

त्वद्विनोदाऽर्थमेव = त्वन्मनोरञ्जनाऽर्थमेव, न तूपेक्षयेति भावः । पुत्र-पूर्णोत्सङ्गा=पुत्रेण पूर्णः पुत्रपूर्णः, स उत्सङ्गो यस्याः सा पुत्रपूर्णोत्सङ्गा, ताम् तनयपूर्णाऽङ्कामित्यर्थः । आयुष्मतीं = जैवातृका, त्वामित्यर्थः । वात्सल्यसूचिकेयमुक्तिः । 'जैवातृकः स्यादायुष्मान्' इत्यमरः । द्रक्ष्यामः = अवलोकयिष्यामः ।

राम इति । स्वीकरोति आशीःप्रायामुक्तिं—तथास्त्वित्यनेन ।

अष्टावक्र इति । श्रूयताम्=आकर्ण्यताम् ।

जामात्रिति । 'जामातृयज्ञेन वयं निरुद्धाः, त्वं बाल एव असि । राज्यं च नवम्, प्रजानाम् अनुरञ्जने युक्तः स्याः । तस्मात् यशः, यत् व परमं धनम्' इत्यन्वयः । जामातृयज्ञेन = जामातुः ( ऋष्यशृङ्गस्य ) यज्ञः ( मख ) जामातृयज्ञस्तेन, जामातृपदेन तद्वचनस्य आदरणीयता गम्यते । वयं निरुद्धाः = उपरुद्धाः, यज्ञसमाप्तेः प्रागत्रागन्तुमसमर्था इति भावः । त्वं = रामः, बाल एव = अप्रौढ एव, राज्यशासन इति भावः । राज्यं च, नवं = नूतनम् । अतः—

---

प्रसवकालके निकट होनेसे तुम्हें नहीं बुलाया है । वत्स रामचन्द्रको भी तुम्हारे दिलबहलावके लिये ही वहाँ रक्खा है । इस कारणसे पुत्रसे भरी गोदवाली आयुष्मती तुमको हम पीछे देखेंगे'

राम—( हर्ष लज्जा और मुस्कुराहटके साथ ) ऐसा ही हो । भगवान् वसिष्ठने मुझे कुछ आज्ञा नहीं दी है ?

अष्टावक्र—सुनिए ।

दामाद (ऋष्यशृङ्ग) के यज्ञसे हम लोग रुके हुए हैं, आप बालक ही हैं, और राज्य नया है ।

युक्तः प्रजानामनुरञ्जने स्यास्तस्माद्यशो यत्परमं धनं वः ॥ ११ ॥

रामः—यथा समादिशति भगवान्मैत्रावरुणिः ।

स्नेहं दयां च सौख्यं च यदि वा जानकीमपि ।

---

प्रजानां = जनानाम्, अनुरञ्जने = अनुरागोत्पादने, युक्तः = संनद्धः, तत्पर इति यावत् । स्याः = भवेः । तस्मात् = प्रजाऽनुरञ्जनात्, यशः = कीर्तिः, भविष्यतीति शेषः । यत्=यशः, व =युष्माकम् , रघुवंश्यानां राज्ञामित्यर्थः । परमं= श्रेष्ठम्, अनश्वरमिति भावः, धनमभिमतमिति शेषः । इदं नाटकाऽर्थभूतं बीजमुपन्यस्तम् । इन्द्रवज्रा वृत्तम्, तल्लक्षणं यथा—'स्यादिन्द्रवज्रा यदि तौ जगौ गः ।' इति ॥ ११ ॥

राम इति । भगवान्=ऐश्वर्यसम्पन्नः, मैत्रावरुणिः = वसिष्ठः, मित्रश्च वरुणश्च मित्रावरुणौ 'चाऽर्थे द्वन्द्वः' इति इतरेतरयोगद्वन्द्वः, मित्रावरुणयोर्नियतसाहचर्यात् 'देवता द्वन्द्वे च' इत्यानङ् । मित्रावरुणयोरपत्यं पुमान् मैत्रावरुणिः 'अत इञ्' इति इञ् प्रत्ययः । 'तद्धितेष्वचामादेः' इत्यादिवृद्धिश्च । यथा= येन प्रकारेण, समादिशति=आज्ञापयति, तथा करोमीति शेषः । अथात्रेयं पौराणिकी कथाऽनुसन्धेया—'उर्वशीदर्शनेन मित्रावरुणयोर्देवतयो रेत कुम्भाद्बहिरभ्यन्तरे च पतितम् । ततो बहिर्वसिष्ठः, अभ्यन्तरे अगस्त्यश्च समुत्पन्नः' इति ।

स्नेहमिति । 'लोकस्य आराधनाय स्नेहं दया सौख्यं च—यदि वा जानकीमपि मुञ्चतो मे व्यथा न अस्ति' इत्यन्वयः ।

लोकस्य = जनस्य, प्रजानामित्यर्थः । आराधनाय = अनुरञ्जनाय, 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी । स्नेहं = प्रेमाणम्, पत्न्यादिविषयमिति भावः, दया = करुणां, गर्भिण्यादिविषयामिति भावः । सौख्यं च = सुखं च, पुत्रलालनादिजन्यमिति भावः, यदि वा = अथवा, जानकीमपि = सीतामपि

---

अत आप प्रजाओंको प्रसन्न करनेमें तत्पर होवें, उससे यश होता है, जो कि आप लोगोंका श्रेष्ठ धन है ॥ ११ ॥

राम—भगवान् वसिष्ठ जैसी आज्ञा करते हैं ।

प्रजाओंके अनुरञ्जनके लिए प्रेम, दया, सुख और सीताको भी छोड़ते हुए मुझको दुःख नहीं है ॥ १२ ॥

आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा ॥ १२ ॥

सीता—अदो जेव्व राहवधुरन्धरो अज्जउत्तो । ( अत एव राघवधुरंधर आर्यपुत्रः । )

रामः—कः कोऽत्र भोः । विश्राम्यतात्*दष्टावक्रः ।

अष्टावक्रः—( उत्थाय परिक्रम्य च । ) अये, कुमारलक्ष्मणः प्राप्तः । ( इति निष्क्रान्तः । )

( प्रविश्य )

लक्ष्मणः—जयति जयत्यार्यः । आर्य ! अर्जुनेन चित्रकरेणास्मदुपदिष्टमार्यस्य चरितमस्यां वीथ्यामभिलिखितम् । तत्पश्यत्वार्यः ।

---

'प्राणेभ्योऽपि गरीयसी' इत्युक्तरीत्या प्राणाधिकामपीति भावः, मुञ्चतः = त्यजतः, मे = मम, व्यथा = दुःखं, न अस्ति = न वर्तते । वर्तमाननिर्देशेन सीतापरित्यागस्य आसन्नता व्यज्यते, अत्र 'जानकीमपी'त्यत्र वस्त्वन्तरं किमुतेत्यन्याऽर्थागमादर्थापत्तिः तथा 'मुञ्चत' इत्येकया क्रियया स्नेहादीनां पदार्थानां सम्बन्धात्तुल्ययोगितेत्यनयोः सङ्करः ॥ १२ ॥

सीतेति । अत एव = प्रजानुरञ्जनाऽतिशयादेव, राघवधुरन्धरः = रघुवंश्यराजश्रेष्ठः ।

राम इति । विश्राम्यताद् = विश्रामं प्राप्नोतु, आशिषि परस्मैपदलोटस्तातङ् ।

अष्टावक्र इति । 'नाऽसूचितं विशेत्पात्रम्' इति भरतोक्त्या अष्टावक्रमुखेन लक्ष्मणागमनं सूच्यते 'अये' इत्यादिना ।

लक्ष्मण इति । आर्यः = पूज्यः, भवानित्यर्थः । जयति = सर्वोत्कर्षेण वर्तते, द्विरुक्तिर्दार्ढ्यसूचनाय । अस्मदुपदिष्टम् = अस्माभिः उपदिष्टम् ( उपवर्णितम् ) । वीथ्यां = भित्तौ, चित्रमयश्रेण्यामित्यर्थः । अभिलिखितं = चित्रितम् ।

---

सीता—इसीसे आर्यपुत्र रघुवंशके धुरन्धर हैं ।

राम—यहाँ कौन है जो ! अष्टावक्र ऋषि विश्राम करें ।

अष्टावक्र—(उठ और घूम कर) अये ! कुमार लक्ष्मण आ गये हैं (ऐसा कह कर जाते हैं)

( प्रवेश कर )

लक्ष्मण—जय हो, आर्य की जय हो । आर्य ! अर्जुन नामक चित्रकारने हमसे कहे गये आपके चरित्रको इस दीवारपर चित्रित किया है । आप उसे देखिए ।

---

* 'भगवान्' इत्यधिकः पाठः ।

रामः—जानासि वत्स ! दुर्मनायमानां देवीं विनोदयितुम् । तत्कियन्तमवधिं यावत् ।

लक्ष्मणः—यावदार्याया हुताशनशुद्धिः ।

रामः—शान्तम् ( ससान्त्ववचनम् । )

उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः ।
तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः ॥ १३ ॥

राम इति । दुर्मनायमाना = दुःखितचित्ता जनकस्य स्वदेशगमनादिति भावः । दुःस्थितं मनो यस्याः सा दुर्मना, अदुर्मना दुर्मना इव भवति दुर्मनायमाना, ताम् 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः' इति क्यङ् सलोपश्च, ङित्वात् 'अनुदात्तङित आत्मनेपदम्' इत्यात्मनेपदम्, ततः शानच् । विनोदयितुं = सन्तोषमुत्पादयितुम् । तत् = चित्रं, कियन्तं = किं परिमाणमस्य कियान्, किंपरिमाणमित्यर्थः । अवधिं यावत् = सीमां व्याप्य, अस्तीति शेषः, इति प्रश्नः । 'ततोऽन्यत्राऽपि दृश्यते' इति द्वितीया 'अन्यारादितरर्तेदिगि'त्यादि सूत्रे प्रौढमनोरमायाम् ।

लक्ष्मण इति । आर्यायाः = पूज्यायाः, प्रजावत्या इत्यर्थः । हुताशनशुद्धिः = हुताशनेन ( अग्निना ) शुद्धिः । यावच्छब्दोऽवधारणाऽर्थकः । हुताशनशुद्धिरेवाऽवधिरित्यर्थः ।

राम इति । शान्तम् = 'हुताशने विशुद्धिः' इति नो ब्रूहीत्यर्थः । 'शान्तमिति वारणार्थम्' इति मेदिनी । ससान्त्ववचनम् = अतिशयमधुरवाक्यसहितं यथा तथा ।

उत्पत्तीत्यादि । 'उत्पत्तिपरिपूतायाः अस्याः पावनान्तरैः किम् ? तीर्थोदकं वह्निश्च अन्यतः शुद्धिं न अर्हतः' इत्यन्वयः । उत्पत्त्या = जन्मना एव, परिपूतायाः = पवित्रायाः, अयोनिजत्वेनेति भावः । अस्याः = सीतायाः, पावनान्तरैः = अन्यानि पावनानि पावनान्तराणि तैः, 'मयूरव्यंसकादयश्च' इति

१ राम—वत्स ! दुःखित चित्तवाली सीताका दिल बहलाना जानते हो ! चित्र कहाँ तक लिखा गया है ।

लक्ष्मण—भौजाईकी अग्निशुद्धि तक ।

राम—ऐसा मत कहो । ( अति मधुर वचनों के साथ )

जन्मसे ही पवित्र सीताजी की पवित्रताके लिए अग्नि आदि पदार्थों की क्या जरूरत है ?

देवि देवयजनसम्भवे ! प्रसीद । एष ते जीवितावधिः प्रवादः ।
क्लिष्टो* जनः किल† जनैरनुरञ्जनीय-
स्तन्नो यदुक्तमशुभं च न तत्क्षमं ते ।

समासः । अग्न्यादिभिरन्यैः पवित्रताजनकैः पदार्थैरिति भावः । किं = किं क्रियते, स्वतः शुद्धाया अन्यतः शुद्धिसम्पादनं पुनरुक्तिवन्निरर्थकमिति भावः । पूर्वोक्तिं द्रढयति—तीर्थोदकमिति । तीर्थोदकं = तीर्थजलं वह्निश्च = अग्निश्च, अन्यतः=अन्यस्मात्, वस्त्वन्तरादित्यर्थः, शुद्धिं = पवित्रता, न अर्हतः=संपादयितुं न योग्यौ भवतः । शुक्रशोणितजन्यशरीराऽभावात्सीताया गङ्गादितीर्थजलस्य अग्नेश्च इव स्वतः शुद्धत्वादन्यतः शुद्धिसम्पादनं नावश्यकमिति भावः । अत्र दृष्टान्ताऽलङ्कारः ॥ १३ ॥

देवीति । सीताया उत्पत्तिपरिपूतत्वे हेतुं प्रदर्शयति—देवीति । देवयजनसंभवे=इज्यतेऽस्मिन्निति यजनं यज्ञक्षेत्रं, 'करणाऽधिकरणयोश्च' इत्यधिकरणे ल्युट् । देवयजने संभवः ( उत्पत्तिः ) यस्याः सा देवयजनसम्भवा, तत्सम्बुद्धौ, हे देवयज्ञक्षेत्रोत्पन्ने इत्यर्थः । प्रसीद=प्रसन्ना भव, खेदं मा कुरु इति भावः, अपवादस्य अपरिहार्यत्वादिति तत्त्वम् । एषः = हुताऽशनशुद्धिविषयकः, प्रवादः=लोकाऽपवादः, रावणगृहस्थितिमूल इत्यर्थः । ते = तव, जीविताऽवधिः = जीवितं जीवनं 'नपुंसके भावे क्तः' इति क्तः । जीवितमवधिर्यस्य सः, यावज्जीवनस्थायीत्यर्थः ।

क्लिष्ट इति । 'क्लिष्टो जनः जनैः अनुरञ्जनीयः किल, तत् ते नः, यत् अशुभम् उक्तम्, तत् न क्षमम् । सुरभिणः कुसुमस्य मूर्ध्नि स्थितिः नैसर्गिकी सिद्धा, चरणैः अवताडनानि न ( नैसर्गिकाणि सिद्धानि )' इत्यन्वयः । क्लिष्टः = प्राप्तक्लेशः, दुःखित इत्यर्थः, जनः = मनुष्यः, जनैः = अन्यैर्मनुष्यैः, अनुरञ्जनीयः = आराधनीयः, क्लेशविस्मारणेन लालनीयः न तु पूर्वानुभूतदुःखस्मारणेन क्लेशयितव्य इत्यर्थः । किल = निश्चयेन, तत् = तस्मात्, ते=तव, विषय इति शेषः 'भार्या पुत्रः स्वका तनुः' इति मनुस्मरणात् भार्याविषयकोऽपवादः पतिविषयोऽपि; अत आह

तीर्थजल और अग्नि दूसरे पदार्थोंसे शुद्धिलाभ नहीं करते हैं ॥ १३ ॥

देवि—यज्ञक्षेत्रसे उत्पन्न हे सीते ! प्रसन्न हो । अग्नि-शुद्धि-विषयक यह तुम्हारा प्रवाद आजीवन रहेगा ।

दुःखित को प्रसन्न करना लोगोंका कर्तव्य है, इस कारणसे तुम्हारे विषयमें जो हम

* 'कष्टम्' इति पु० पा० । † 'कुल'—इति पु० ।

नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न चवणैरवताडनानि ॥ १४ ॥

सीता—होदु* अज्जउत्त, होदु। एहि। पेक्खह्म दाव दे चरिदम्। (इत्युत्थाय परिक्रामति।) ( भवत्वार्यपुत्र, भवतु। एहि। प्रेक्षामहे तावत्ते चरितम्। )

लक्ष्मणः—इदं तदालेख्यम्।

सीता—(निर्वर्ण्य।) के एदे उवरिणिरन्तरट्ठिदा उवत्थुवन्दि विअ अज्जउत्तम्

'न' इति। न = अस्माकम्, आवयोरिति भाव.। दम्पत्योरेकस्य निन्दायामेकहृदयत्वादितरस्यापि निन्दासद्भावादिति भावः। तत्, अशुभम् = अमङ्गल 'हुताशनशुद्धि' इत्याकारमित्यर्थ, उक्तं = कथितं, तत् = कथनं, न क्षमं = नोचितम्। अयं भावः—प्राप्तक्लेशाना जनाना क्लेशविस्मारणात्मकेन लालनादिना अनुरञ्जनीयत्वेऽपि 'यावदार्याया हुताशनशुद्धि' इति वचनम् आवयोरुभयोरपि विषयेऽमङ्गलव्यञ्जकं, तत्राऽपि उत्पत्तिपरिपूतायास्ते विषये तु अनौचित्यव्यञ्जकमपि इति। पूर्वोक्तिं दृष्टान्तेन द्रढयति—नैसर्गिकीति। सुरभिण.= सुगन्धप्रधानस्य, कुसुमस्य = पुष्पस्य, मूर्ध्नि = शिरसि, स्थितिः = स्थानम्, नैसर्गिकी = निसर्गादागता 'तत आगत' इति ठञ्, स्वाभाविकीत्यर्थ। सिद्धा = प्रसिद्धा, चरणै. = पादैः, अवताडनानि = प्रहारा', न=न नैसर्गिकाणि सिद्धानीत्यर्थः। अत्र प्रथमचरणे कष्टं जन. कुलधनैरनुरञ्जनीय' इति पाठान्तरं तत्र कुलधनैः = महाकुलै', जन. ( लोकः ) कष्टं ( दु ख ) यथा तथा अनुरञ्जनीय इत्यर्थ.। अत्र दृष्टान्ताऽलङ्कारः तल्लक्षणं यथा-'दृष्टान्तस्तु सधर्म्मस्य वस्तुनः प्रतिबिम्बनम्' इति। वसन्ततिलकावृत्तम् ॥ १४ ॥

सीतेति। भवतु = अस्तु, स प्रवाद इति शेषः। स प्रवादः कमपि खेदं मे मनसि न जनयतीति भाव । प्रेक्षामहे = पश्यामः।

लक्ष्मण इति। आलेख्यं = चित्रम्।

सीतेति। निर्वर्ण्य = 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्।' इत्य-

लोगोंका अमङ्गल वाक्य कहा गया है, वह उचित नहीं है। खुशबूदार फूलका शिर में रहना स्वभावसिद्ध है, परन्तु उसको चरणोंसे ताडन करना स्वभावसिद्ध नहीं ॥ १४ ॥

**सीता**—अपवाद हो जाय, आर्यपुत्र! हो जाय। मुझे परवाह नहीं। आपका चरित्र देखें।

**लक्ष्मण**—यह चित्र है।

**सीता**—ऊपर सट कर खडे हो कर ये कौन आर्यपुत्रकी स्तुति कर रहे हैं।

* 'भो' इति पाठ ।

( क्र एते उपरि निरन्तरस्थिता उपस्तुवन्तीवार्यपुत्रम् । )

लक्ष्मणः—देवि ! एतानि तानि सरहस्यानि जृम्भकास्त्राणि, यानि भगवतः कृशाश्वा*त्कौशिकां†मृषिमुपसंक्रान्तानि । तेन ताटकावधे प्रसादीकृतान्यार्यस्य ।

रामः—वन्दस्व देवि, दिव्यास्त्राणि ।

ब्रह्मादयो ब्रह्महिताय तप्त्वा परःसहस्रं शरदां तपांसि ।

---

मर' । उपरि = ऊर्ध्वदेशे, आकाशे इत्यर्थः । निरन्तरस्थिता=निर्गतमन्तरं यस्मिन् कर्मणि निरन्तरं, तद्यथा तथा स्थिता' निरन्तरस्थिता', 'सह सुपा' इति समासः, निरवकाशस्थिता इत्यर्थः । परस्परसंश्लिष्टत्वेन स्थिता इति भाव । उपस्तुवन्ति = स्तोत्रं कुर्वन्ति ।

लक्ष्मण इति । सरहस्यानि = प्रयोगसंहारमन्त्रसमूहो रहस्यं, तेन सहितानि 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । 'वोपसर्जनस्य' इति सहस्य वैकल्पिकः समावः । जृम्भकाऽस्त्राणि = जृम्भकनामकानि अस्त्राणि । कृशाश्वात् = कृशाश्वनामकात् ऋषेः, 'आख्यातोपयोगे' इति पञ्चमी । कौशिकं = विश्वामित्रं, कुशिकस्याऽपत्यं पुमान् कौशिकस्तम्, 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यण् । तेन = विश्वामित्रेण । ताटकावधे = रामकृते ताटकावधे सति इत्यर्थः, 'यस्य च भावेन भावलक्षणम्' इति सप्तमी । प्रसादीकृतानि = प्रसादेन दत्तानीत्यर्थ' ।

राम इति । दिव्यास्त्राणि = दिवि भवानि दिव्यानि, 'द्युप्रागपागुदक्प्रतीचो यत्' इति यत् प्रत्ययः । दिव्यानि च तानि अस्त्राणि दिव्याऽस्त्राणि, तानि 'विशेषणं विशेष्येण बहुलम्' इति समासस्तत' 'तत्पुरुषः समानाऽधिकरणः कर्मधारय' इति कर्मधारयसंज्ञा । वन्दस्व = नमस्कुरु 'वदि अभिवादनस्तुत्यो·' इति धातोर्लोट् ।

ब्रह्मादय इति । 'ब्रह्मादयः पुराणा गुरवो ब्रह्महिताय शरदां पर·सहस्रं तपांसि

---

लक्ष्मण—देवि ! ये मन्त्रयुक्त वे जृम्भक अस्त्र हैं, जो भगवान् कृशाश्वसे कौशिक ऋषि के पास चले गये । उन्होंने ताटकावध के अवसरमें इन्हें अनुग्रहके साथ आर्य ( श्रीरामचन्द्रजी ) को दिया था ।

राम—देवि ! दिव्य अस्त्रोंको नमस्कार करो ।

ब्रह्मा आदि प्राचीन आचार्यों ने वेद या ब्राह्मणोंके हितके लिए हजार वर्षों से भी अधिक

---

* 'कृशाश्व' इति विश्वामित्रस्य कश्चित्पूर्वपुरुष ( प्रपितामहः ) ।

† कुशिक विश्वामित्रस्य पितामह· । गाधिर्नाम राजा तस्य पिता ।

एतान्यदर्शन्गुरवः पुराणाः स्वान्येव तेजांसि तपोमयानि ॥ १५ ॥

सीता—णमो एदाणम्। ( नम एतेभ्य । )

रामः—सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ति ।

---

तप्त्वा स्वानि एव तपोमयानि तेजांसि एतानि अदर्शन्' इत्यन्वय । दिव्यरूपता वन्दनकारण च सूचयति ब्रह्मादय इत्यादिना । ब्रह्मादय = ब्रह्मा आदिर्येषा ते ब्रह्मप्रभृतय इत्यर्थः, । पुराणा = पुरातना , गुरव = आचार्या, ब्रह्महिताय=ब्रह्मणे-वेदाय विप्राय वा हितं = रक्षणम् ब्रह्महित, तस्मै 'हितयोगे च' इति चतुर्थी तत. 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितै' इति चतुर्थीतत्पुरुषसमासः । 'वेद-स्तत्त्वं तपो ब्रह्म ब्रह्मा विप्र प्रजापति' इत्यमर । शरदा = वर्षाणा 'हायनोऽस्त्री शरत्समा' इत्यमर । पर:सहस्र = सहस्रात् परं पर सहस्र, सहस्राधिकं वर्ष-मित्यर्थ । तथथा तथेति क्रियाविशेषणम् । 'पञ्चमी भयेन' इत्यत्र योगविभागात् समास इति कैयटादिमतम् । भाष्यकारमते तु सुप्सुपासमास । 'राजदन्तादिषु परम्' इति परशब्दस्य पूर्वनिपात 'पारस्करप्रभृतीनि च संज्ञायाम्' इति सुट् इति भानुजिदीक्षिता । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । तपांसि = तपस्या , तप्त्वा = कृत्वा, स्वानि एव = आत्मीयानि एव, तपोमयानि = तपो-रूपाणि, कार्यकारणयोरभेदोपचारादिति भाव । तेजांसि = तेजोभूतानि, एतानि = जृम्भकादीनि अस्त्राणि, अदर्शन् = अपश्यन् । एतेन अस्त्राणामतीव महत्त्वम-भिव्यज्यते । प्रथमे, तृतीये, चतुर्थे च चरणे 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति लक्षणलक्षिता इन्द्रवज्रा; द्वितीये च 'उपेन्द्रवज्रा जतजास्ततो जगौ' इति लक्षणलक्षिता उपेन्द्रवज्रा तथा च उभयो: समावेशात् 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता' इति लक्षणलक्षिता उपजाति ॥ १५ ॥

राम इति । सर्वथा = सर्वैः प्रकारै:, 'प्रकारवचने थाल्' इति थाल् । इदानीम् = साम्प्रतम् , प्रसवकालस्य सामीप्यात् त्वयि प्रसूतायामित्यर्थ । त्वत्प्र-सूतिं = तव सन्तानम् , उपस्थास्यन्ति = प्राप्स्यन्ति ।

---

काल तक तपस्या कर अपने ही तपोमय तेज स्वरूप इन अस्त्रोंको देख लिया है ॥ १५ ॥

**सीता—**इन्हें नमस्कार है।

**राम—**अब ये सब तरहसे तुम्हारे पुत्रको प्राप्त होंगे।

सीता—अणुगहीदह्मि । ( अनुगृहीतास्मि । )

लक्ष्मणः—एष मिथिलावृत्तान्तः ।

सीता—अम्महे, दलन्तणवणीलुप्पलसामलसिणिद्धमसिणसोहमाणमंसलेन देहसोहग्गेण विह्मअत्थिमिदताददीसन्तसोम्मसुन्दरसिरी अणादरत्थुडिदसंकरसरासणो सिहण्डमुद्धमुहमण्डलो अज्जउत्तो आलिहिदो । ( अहो, दलन्नवनीलोत्पलश्यामलस्निग्धमसृणशोभमानमांसलेन देहसौभाग्येन विस्मयस्तिमिततातदृश्यमानसौम्यसुन्दरश्रीरनादरत्रुटितशंकरशरासनः शिखण्ड (१) मुग्धमुखमण्डल आर्यपुत्र आलिखितः ।

---

सीतेति । अनुगृहीताऽस्मि = कृताऽनुग्रहाऽस्मि, प्रसूतेरपि अत्रप्राप्तेरिति भावः ।

लक्ष्मण । एष = अयं, मिथिलावृत्तान्तः = मिथिलानगरोदन्तः ।

सीतेति । अम्महे इति आश्चर्यव्यञ्जकमव्ययम् । दलदित्यादि = दलत् विकसत् यत् नवं=नूतनम्, नीलोत्पलं=नीलकमलम्, इन्दीवरमित्यर्थः । तदिव श्यामलं= श्यामम्, स्निग्धं = चिक्कणम्, मसृणं=कोमलम्, अत एव शोभमानम्=देदीप्यमानम्, एतादृशं च तत् मांसलं= बलवत्, तेन 'बलवान्मांसलोंऽसलः' इत्यमरः । देहसौभाग्येन=शरीरसौन्दर्येण । विस्मयेन=आश्चर्येण, स्तिमितः=निश्चलः यः तातः=पिता जनक इत्यर्थः, तेन दृश्यमाना = अवलोक्यमाना सौम्या = आह्लादकरी, सुन्दरश्रीः= रुचिरशोभा यस्य सः । अनादरेण = अनायासेन, त्रुटितं = भग्नं शङ्करशरासनं = शिवचापं येन सः । शिखण्डमुग्धमुखमण्डलः—शिखण्डेन = काकपक्षेण, मुग्धं = सुन्दरं, मुखमण्डलं = वदनमण्डलम् यस्य सः, 'काकपक्षः शिखण्डकः' इत्यमरः । बहुव्रीह्यन्तं पदत्रयमपि 'आर्यपुत्र' इत्यस्य विशेषणम् । एतादृशः आर्यपुत्रः = रामः, आलिखितः = चित्रितः ।

---

सीता—मैं अनुगृहीत हूँ ।

लक्ष्मण—यह मिथिलाका वृत्तान्त है ।

सीता—ओहो ! खिले हुए नीलकमलकी तरह श्याम वर्ण, चिकना, कोमल, चमकदार और पुष्ट शरीर-सौन्दर्य होनेके कारण आश्चर्यसे निश्चल पिताजी (जनक) ने जिनकी सौम्य और सुन्दर शोभा देख ली, अनायास महादेवके धनुषको तोड़नेवाले और काकपक्षसे सुन्दर मुखमण्डल वाले ऐसे आर्यपुत्र लिखे गये हैं ।

---

( १ ) काकपक्ष इति क्वाचित्कः पाठः ।

लक्ष्मणः—आर्ये ! पश्य पश्य ।

सम्बन्धिनो वसिष्ठादीनेष तातस्तवार्चति ।
गौतमश्च शतानन्दो जनकानां पुरोहितः ॥ १६ ॥

रामः—सुश्लिष्टमेतत् ।

जनकानां रघूणां च सम्बन्धः कस्य न प्रियः ।

---

लक्ष्मण इति । 'पश्य पश्य' इति वीप्सया दर्शनक्रियायामाग्रहाऽतिशयो व्यज्यते ।

सम्बन्धिन इति । 'एष तव तातः जनकाना पुरोहित गौतमः शतानन्दश्च सम्बन्धिन वसिष्ठादीन् अर्चति' इत्यन्वय । एष = अयं, तव = भवत्या, तात = पिता, जनक इत्यर्थः, जनकाना = लक्षणया जनकवंशोद्भवाना राज्ञामित्यर्थः । पुरोहित = पुरोधा, 'पुरोधास्तु पुरोहित' इत्यमरः । गौतम = गौतमपुत्रः, शतानन्दश्च = शतानन्दनामा ऋषिश्च, सम्बन्धिनः = वरसम्बन्धयुक्तान्, वसिष्ठादीन् = वसिष्ठ आदिर्येषां ते वसिष्ठादयस्तान् वसिष्ठदशरथप्रभृतीन् इत्यर्थः । अर्चति = पूजयति । अत्र तातशतानन्दयोरर्चनरूपैकक्रियाभिसम्बन्धात् तुल्ययोगिताऽलङ्कारः, तल्लक्षणं यथा—'पदार्थाना प्रस्तुतानामन्येषा वा यदा भवेत् । एकधर्माऽभिसम्बन्ध स्यात्तदा तुल्ययोगिता ॥' इति ॥ १६ ॥

राम इति । एतत् = चित्रं, जनकरघुवंशसम्बन्धप्रदर्शकमित्यर्थ । सुश्लिष्टं = सुसम्बद्धं, मणिकाञ्चनसमागमन्यायादिति भाव ।

जनकानामिति । 'जनकाना रघूणा च सम्बन्धः कस्य प्रियो न, यत्र स्वयं कुशिकनन्दनः दाता ग्रहीता च (अस्ति)' इत्यन्वय । जनकाना=जनकवंशोद्भवानां, रघूणा च = रघुवंशोद्भवानां च, लक्षणया अयमर्थो निष्पन्नः; तद्धितप्रत्ययस्य लुगभावादिति भाव । सम्बन्ध=अपत्यसम्बन्धः, कस्य = पुरुषस्य, प्रियः=अभीष्टः,

---

लक्ष्मण—आर्ये ! देखिए देखिए ।

ये आपके पिताजी ( जनक ) और जनकवशके पुरोहित गौतमपुत्र शतानन्दजी वरसम्बन्धसे युक्त वसिष्ठ आदिकी पूजा कर रहे हैं ॥ १६ ॥

राम—यह चित्र सुसम्बद्ध है ।

जनक और रघुवशके राजाओंका सम्बन्ध किसे अभीष्ट नहीं ? जिस सम्बन्धमें स्वयम्

यत्र दाता ग्रहीता च स्वयं कुशिकनन्दनः ॥ १७ ॥

**सीता**—एदे क्खु तक्कालकिदगोदाणमङ्गला चत्तारो भादरो विआहदिक्खिदा तुझे । अह्मो ! जाणामि तस्सिं जेव्व पदेशे तस्सि जेव्व काले वत्तामि । (एते खलु तत्कालकृतगोदानमङ्गलाश्चत्वारो भ्रातरो विवाहदीक्षिता यूयम् । अहो ! जानामि तस्मिन्नेव प्रदेशे तस्मिन्नेव काले वर्ते । )

**रामः**—

समयः स वर्तत इवैष यत्र मां

---

न = नाऽस्ति, सम्बन्धोऽयं सर्वस्याऽप्यभीष्टोऽस्तीत्यर्थः । यत्र = यस्मिन् सम्बन्धे, स्वयं, कुशिकनन्दनः = कौशिकः, विश्वामित्र इत्यर्थ । दाता=जनकस्य कन्यादानप्रेरकत्वेन दातेत्यर्थः । ग्रहीता च = रामस्य धनुर्भङ्गप्रेरकत्वेन ग्रहीता चेत्यर्थः । कन्यादाने कन्याग्रहणे चोभयत्राऽपि विश्वामित्रस्य प्रेरकत्वेन तस्मिन् दातृत्वं ग्रहीतृत्वं चोपचर्यत इति भावः । अत्र 'कस्य न प्रिय' इत्यत्र 'अपि तु सर्वस्यैवेत्यर्थस्याऽऽपतनादर्थापत्तिरलङ्कारः ॥ १७ ॥

सीतेति । तत्कालकृतगोदानमङ्गलाः = तस्मिन् काले शिवधनुर्भङ्गाऽनन्तरसमये, कृतं=विहितम् , गोदानम्=केशान्तसंस्काराख्यं क्षौरकर्म एव मङ्गलं कल्याणम् येषा ते । गावः = लोमानि, केशाः इति भावः 'दीयन्ते खण्ड्यन्ते अस्मिन् ( संस्कारे ) इति गोदानं, गोपूर्वकात् 'दो अवखण्डने' इति धातोः 'करणाऽधिकरणयोश्च' इत्यधिकरणे ल्युट् । 'गौर्नाऽऽदित्ये वलीवर्दे क्रतुभेदर्षिभेदयोः । स्त्री तु स्याद्दिशि भारत्या भूमौ च सुरभावपि । पुंस्त्रियो स्वर्गवज्राऽम्बुरश्मिदृग्बाणलोमसु' इति केशवः । केशान्तसंस्कारविषय उक्तं भगवता मनुना—'केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते । राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः ।' इति । विवाहदीक्षिताः=विवाहेन उद्वाहेन दीक्षिताः = संजातदीक्षा , गृहीतविवाहदीक्षा इति भावः । जानामि=स्मरामि । तस्मिन्नेव प्रदेशे=मिथिलायां, तस्मिन्नेव काले = विवाहसमये ।

समय इति । हे सुमुखि । एष समयो वर्तते इव, यत्र गौतमाऽर्पितः आगृ-

---

विश्वामित्र ऋषि दान और ग्रहण करनेवाले हो गये हैं ॥ १७ ॥

**सीता**—उस समय केशान्तसंस्कार किये हुए विवाहदीक्षित ये आप चार भाई हैं । अहो ! उसी स्थान ( मिथिला ) में और उसी समय में मैं हूँ, ऐसा लग रहा है ।

**राम**—हे सुमुखि ! यह वह समय ऐसा लग रहा है, जिस ( समय ) में शतानन्दसे

लक्ष्मणः—आर्ये ! पश्य पश्य ।

सम्बन्धिनो वसिष्ठादीनेष तातस्तवार्चति ।
गौतमश्च शतानन्दो जनकानां पुरोहितः ॥ १६ ॥

रामः—सुश्लिष्टमेतत् ।

जनकानां रघूणां च सम्बन्धः कस्य न प्रियः ।

---

लक्ष्मण इति । 'पश्य पश्य' इति वीप्सया दर्शनक्रियायामाग्रहाऽतिशयो व्यज्यते ।

**सम्बन्धिन** इति । 'एष तव तात॰ जनकाना पुरोहित गौतम॰ शतानन्दश्च सम्बन्धिन वसिष्ठादीन् अर्चति' इत्यन्वय॰ । एष = अयं, तव = भवत्या॰, तातः = पिता, जनक इत्यर्थः, जनकानां = लक्षणया जनकवंशोद्भवाना राज्ञामित्यर्थः । पुरोहित = पुरोधा॰, 'पुरोधास्तु पुरोहित' इत्यमरः । गौतमः = गौतमपुत्रः, शतानन्दश्च = शतानन्दनामा ऋषिश्च, सम्बन्धिनः = वरसम्बन्धयुक्तान् , वसिष्ठादीन् = वसिष्ठ आदिर्येषा ते वसिष्ठादयस्तान् वसिष्ठदशरथप्रभृतीन् इत्यर्थ॰ । अर्चति = पूजयति । अत्र तातशतानन्दयोरर्चनरूपैकक्रियाभिसम्बन्धात् तुल्ययोगिताऽलङ्कारः, तल्लक्षणं यथा—'पदार्थाना प्रस्तुतानामन्येषा वा यदा भवेत् । एकधर्माऽभिसम्बन्ध स्यात्तदा तुल्ययोगिता ॥' इति ॥ १६ ॥

**राम** इति । एतत् = चित्रं, जनकरघुवंशसम्बन्धप्रदर्शकमित्यर्थः । सुश्लिष्टं = सुसम्बद्धं, मणिकाञ्चनसमागमन्यायादिति भाव॰ ।

**जनकानामिति** । 'जनकाना रघूणा च सम्बन्धः कस्य प्रियो न, यत्र स्वयं कुशिकनन्दनः दाता ग्रहीता च (अस्ति)' इत्यन्वय॰ । जनकाना=जनकवंशोद्भवाना, रघूणां च = रघुवंशोद्भवानां च, लक्षणया अयमर्थो निष्पन्नः ; तद्धितप्रत्ययस्य लुगभावादिति भाव॰ । सम्बन्ध =अपत्यसम्बन्धः, कस्य = पुरुषस्य, प्रियः=अभीष्ट॰,

---

**लक्ष्मण**—आर्ये ! देखिए देखिए ।

ये आपके पिताजी ( जनक ) और जनकवंशके पुरोहित गौतमपुत्र शतानन्दजी वरसम्बन्धसे युक्त वसिष्ठ आदिकी पूजा कर रहे हैं ॥ १६ ॥

**राम**—यह चित्र सुसम्बद्ध है ।

जनक और रघुवंशके राजाओंका सम्बन्ध किसे अभीष्ट नहीं ? जिस सम्बन्धमें स्वयम्

भवतु । अन्यतः सञ्चारयामि । ( प्रकाशम् । ) आर्ये ! दृश्यतां द्रष्टव्यमेतत् । अयं च भगवान्भार्गवः ।

सीता—( ससंभ्रमम् । ) कम्पिदह्मि । ( कम्पितास्मि । )

रामः—ऋषे ! नमस्ते ।

लक्ष्मणः—आर्ये ! पश्य । अयमार्येण—( इत्यर्धोक्ते । )

रामः—( साक्षेपम् । ) आर्य ! बहुतरं द्रष्टव्यम् । अन्यतो दर्शय ।

सीता—( सस्नेहबहुमानं निर्वर्ण्य । ) सुट्ठु सोहसि अज्जउत्त ! एदिणा विणअमाहप्पेण । ( सुष्ठु शोभसे आर्यपुत्र ! एतेन विनयमाहात्म्येन । )

लक्ष्मणः—एते वयमयोध्यां प्राप्ताः ।

---

सर्वश्राव्यं यथा तथा इत्यर्थः, 'सर्वश्राव्यं प्रकाशं स्यात्' इति तल्लक्षणम् । एतत् = चित्रं, द्रष्टव्यं = विलोकनीयम् । भार्गवः = परशुरामः ॥

सीतेति । ससंभ्रमं = संभ्रमेण = त्वरया सहितं यथा तथा ससंभ्रमं, सत्वरमित्यर्थः, त्वरा च भयनिमित्तेत्यवधेयम्, 'संभ्रमस्त्वरा' इत्यमरः ॥

लक्ष्मण इति । आर्येण = रामेण, अयं = परशुरामः, पराजित इति शेषः ॥

राम इति । साक्षेपम्—आक्षेपेण = स्वप्रशंसासूचकलक्ष्मणवाक्यनिषेधेन, सहितं यथा तथा, ब्राह्मणस्यावमाननं तत्रापि महर्षेः परशुरामस्य, एवं स्वपराक्रमश्रवणं चैतदुभयमपि अनुचितमतो धीरोदात्तनायकस्य श्रीरामचन्द्रस्य लक्ष्मणप्रतिषेधनं बोध्यम् । अन्यतः = स्थलान्तरे ॥

सीतेति । सस्नेहबहुमानं = स्नेहश्च बहुमानश्च स्नेहबहुमानौ, ताभ्यां सहितं यथा तथा इति सस्नेहबहुमानं, प्रेमसहितं सहाऽतिसम्मानं चेत्यर्थः । निर्वर्ण्य = दृष्ट्वा, 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः । सुष्ठु = अतीव ॥

---

रही हैं, अच्छा, इनकी दृष्टि दूसरे तरफ ले जाता हूं। (प्रकाश भावसे) इस देखने लायक दृश्यको देखिए। ये भगवान् परशुराम हैं।

सीता—( जल्दबाजीके साथ ) कम्पित हो गई हूं।

राम—ऋषे ! आपको नमस्कार है।

लक्ष्मण—आर्ये ! देखिए। इनको आर्यने—( ऐसा आधा कहनेपर )

राम—( बात काट कर ) अरे ! बहुत कुछ देखना है। दूसरे स्थलमें दिखलाओ।

सीता—( प्रेम और बहुत आदरके साथ ) आर्यपुत्र ! इस नम्रताके प्रभावसे आप बहुत शोभित होते हैं।

लक्ष्मण—ये हम लोग अयोध्यामें पहुँच गये।

समनन्दयत्सुमुखि ! गौतमार्पितः ।
अयमागृहीतकमनीयकङ्कण-
स्तव मूर्तिमानिव महोत्सवः करः ॥ १८ ॥

लक्ष्मणः—इयमार्या । इयमप्यार्या माण्डवी । इयमपि वधूः श्रुतकीर्तिः ।

सीता—वच्छ, इयं वि अवरा का । ( वत्स, इयमप्यपरा का । )

लक्ष्मणः—( सलज्जास्मितम् । अपवार्य ) अये, ऊर्मिलां पृच्छत्यार्या ।

---

हीतकमनीयकङ्कण अयं तव करः मूर्तिमान् महोत्सव इव मा समनन्दयत्' इत्यन्वयः । हे सुमुखि = हे सुन्दरि, एषः = अयम् , सः = पूर्वोऽनुभूतः, समयः = कालः, वर्तते इव = विद्यते इव, अतीतः समयोऽपि चित्रदर्शनेन साम्प्रतिक इव आविर्भवतीत्यर्थः । यत्र = यस्मिन् काले, गौतमार्पितः = शतानन्ददत्तः, आगृहीतकमनीयकङ्कणः = आगृहीतं ( धृतम् ) कमनीयं ( सुन्दरम् ) कङ्कणं ( करभूषणम् ) येन सः । अयं=पुरोनिर्दिष्टः, तव भवत्याः, करः=पाणिः, मूर्तिमान्=शरीरी, महोत्सव इव=महोद्धव इव, मा = रामं, समनन्दयत्=आनन्दितमकरोत् । अत्र 'वर्तत इवे'त्यत्र क्रियोत्प्रेक्षा, 'मूर्तिमान् महोत्सव इवे'त्यत्र गुणोत्प्रेक्षा च तथा च द्वयोरनपेक्षया स्थितेः संसृष्टिः । मञ्जुभाषिणीवृत्तम्, 'सजसा जगौ भवति मञ्जुभाषिणी' इति तल्लक्षणम् ॥ १८ ॥

लक्ष्मण इति । इयम् = अङ्गुलिनिर्दिष्टा । आर्या = भवती । लक्ष्मणाऽपेक्षया भरतस्य ज्यायस्त्वात् माण्डव्यर्थम् आर्यापदेन उक्तिः संगच्छते । श्रुतकीर्तिः = शत्रुघ्नपत्नी ।

सीतेति । लज्जया स्वपत्न्या ऊर्मिलायाश्चर्चामकुर्वन्तं लक्ष्मणं सीता परिहासार्थं पृच्छति—वत्सेति ।

लक्ष्मण इति । सलज्जास्मितं = लज्जा च स्मितं च लज्जास्मिते, ताभ्यां सहितं यथा तथा व्रीडेषद्धास्यपूर्वकमित्यर्थः । अपवार्य = अन्यश्रावणादृते, स्वगतमित्यर्थः । अन्यत = विषयान्तरे । सञ्चारयामि = आकर्षामि । प्रकाशं =

---

अर्पित इस तुम्हारे हाथने मूर्तिवाले महोत्सवकी तरह मुझे आनन्दित किया था ॥ १८ ॥

लक्ष्मण—यह आप हैं । यह आर्या माण्डवी ( भरत-पत्नी ) हैं और यह वधू श्रुतकीर्ति (शत्रुघ्नपत्नी ) है ।

सीता—वत्स ! और यह दूसरी कौन है ?

लक्ष्मण—( लज्जा और मन्दहास्यके साथ । स्वगत ) अरे ! आर्या ऊर्मिलाको पूछ

भवतु। अन्यतः सञ्चारयामि। (प्रकाशम्।) आर्ये! दृश्यतां द्रष्टव्यमेतत्। अयं च भगवान्भार्गवः।

सीता—(ससंभ्रमम्।) कम्पिदह्मि। (कम्पितास्मि।)

रामः—ऋषे! नमस्ते।

लक्ष्मणः—आर्ये! पश्य। अयमार्येण—(इत्यर्धोक्ते।)

रामः—(साक्षेपम्।) अयि! बहुतरं द्रष्टव्यम्। अन्यतो दर्शय।

सीता—(सस्नेहबहुमानं निर्वर्ण्य।) सुट्ठु सोहसि अज्जउत्त! एदिणा विणअमाहप्पेण। (सुष्ठु शोभसे आर्यपुत्र! एतेन विनयमाहात्म्येन।)

लक्ष्मणः—एते वयमयोध्यां प्राप्ताः।

---

सर्वश्राव्य यथा तथा इत्यर्थः, 'सर्वश्राव्य प्रकाशं स्यात्' इति तल्लक्षणम्। एतत् = चित्रं, द्रष्टव्यं = विलोकनीयम्। भार्गवः = परशुरामः॥

सीतेति। ससंभ्रमं = संभ्रमेण = त्वरया सहितं यथा तथा ससंभ्रमं, सत्वरमित्यर्थः, त्वरा च भयनिमित्तेत्यवधेयम्, 'सम्भ्रमस्त्वरा' इत्यमरः॥

लक्ष्मण इति। आर्येण = रामेण, अयं = परशुरामः, पराजित इति शेषः॥

राम इति। साक्षेपम्—आक्षेपेण = स्वप्रशंसासूचकलक्ष्मणवाक्यनिषेधेन, सहितं यथा तथा, ब्राह्मणस्यावमाननं तत्रापि महर्षेः परशुरामस्य, एवं स्वपराक्रमश्रवणं चैतदुभयमपि अनुचितमतो धीरोदात्तनायकस्य श्रीरामचन्द्रस्य लक्ष्मणप्रतिषेधनं बोध्यम्। अन्यतः = स्थलान्तरे॥

सीतेति। सस्नेहबहुमानं = स्नेहश्च बहुमानश्च स्नेहबहुमानौ, ताभ्यां सहितं यथा तथा इति सस्नेहबहुमानं, प्रेमसहितं सहाऽतिसम्मानं चेत्यर्थः। निर्वर्ण्य = दृष्ट्वा, 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः। सुष्ठु = अतीव॥

---

रही हैं, अच्छा, इनकी दृष्टि दूसरे तरफ ले जाता हूं। (प्रकाश भावसे) इस देखने लायक दृश्यको देखिए। ये भगवान् परशुराम हैं।

सीता—(जल्दबाजीके साथ) कम्पित हो गई हूं।

राम—ऋषे! आपको नमस्कार है।

लक्ष्मण—आर्ये! देखिए। इनको आर्यने—(ऐसा आधा कहनेपर)

राम—(बात काट कर) अरे! बहुत कुछ देखना है। दूसरे स्थलमें दिखलाओ।

सीता—(प्रेम और बहुत आदरके साथ) आर्यपुत्र! इस नम्रताके प्रभावसे आप बहुत शोभित होते हैं।

लक्ष्मण—ये हम लोग अयोध्यामें पहुँच गये।

रामः—( सास्रम् । ) स्मरामि हन्त ! स्मरामि ।

जीवत्सु तातपादेषु नूतने दारसंग्रहे ।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥ १६ ॥

इयमपि तदा जानकी ।

प्रतनु*विरलैः प्रान्तोन्मीलन्मनोहरकुन्तलै-

राम इति । सास्रम् = अस्रैः सहितं यथा तथा, अश्रून्मोचनपूर्वकमित्यर्थः । अश्रून्मोचनं च स्वर्गस्थपितृस्मरणेनाऽवधेयम् ।

जीवत्स्विति । तातपादेषु जीवत्सु, दारसंग्रहे नूतने ( सति ) मातृभिश्चिन्त्यमानानां नस्ते दिवसा गता हि इत्यन्वयः । तातपादेषु = पितृचरणेषु, पितरि दशरथे इत्यर्थः, पूजायां पादशब्दो बहुवचने, 'उत्तमानां स्वरूपं तु पादशब्देन भण्यते' इति वीरराघवः, पितृनामाऽग्रहणं तु पितुर्गुरुत्वात्, 'आत्मनाम गुरोर्नाम नामाऽतिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठाऽपत्यकलत्रयोः ॥' इति स्मृतिप्रतिषेधाद्बोध्यम्, जीवत्सु=प्राणधारणं कुर्वत्सु, दारसंग्रहे=विवाहे, नूतने= नवे सति, 'यस्य च भावेन भावलक्षणम्' इत्युभयत्राऽपि सप्तमी । मातृभिः = जननीभिः, कौशल्यादिभिरित्यर्थः । चिन्त्यमानानां = 'कथमस्मत्पुत्राः सुखं प्राप्नुयुः' इति क्रियमाणचिन्तानामित्यर्थः । नः = अस्माकं, ते = पूर्वाऽनुभूताः, दिवसाः = दिनानि, गताः = व्यतीताः हि=निश्चयेन, तादृशाः सुखदिवसाः पुनर्न प्राप्स्यन्त इति भावः । अत्र यच्छब्दं विना केवलतच्छब्दसद्भावाद्विधेयाविमर्शाऽभिधानो दोषो नाशङ्कनीयः, तच्छब्दस्य अनुभूताऽर्थकत्वात् 'प्रक्रान्तप्रसिद्धाऽनुभूताऽर्थकस्तच्छब्दो यच्छब्दोपादानं नाऽपेक्षते' इत्यालङ्कारिकनयेनेत्यवधेयम् ॥ १६ ॥

इयमिति । इयं = पुरः स्थिता, जानकी = सीता, श्लोकस्थितेन 'अकृत' इति क्रियापदेन सम्बद्ध्यते ॥

प्रतन्विति । प्रतनुविरलैः प्रान्तोन्मीलन्मनोहरकुन्तलैः दशनकुसुमैः मुग्धालोकं मुखं दधती ( इयम् ) शिशुः ललितललितैः ज्योत्स्नाप्रायैः अकृत्रिमविभ्रमैः

राम—( आँसू गिरा कर ) स्मरण करता हूं, हाय ! स्मरण करता हूं ।

जिन दिनोंमें पिताजी जीवित थे, नूतन विवाहका अवसर था और मातायें 'हमारे पुत्र कैसे सुखी होंगे' इस चिन्तामें थीं, हमारे वे दिन चले गये ॥ १९ ॥

उस समय यह सीता भी—

सूक्ष्म और विरल (अनिविड) तथा कपोलमें फैले हुए सुन्दर केशोंसे और फूलोंकी तरह

* 'पतन' इति पुस्तकान्तरपाठः ।

दशनकुसुमैर्मुग्धालोकं शिशुर्दधती मुखम् ।
ललितललितैर्ज्योत्स्नाप्रायैरकृत्रिमविभ्रमै-
रकृत मधुरैरम्बानां मे कुतूहलमङ्गकैः ॥ २० ॥

---

मधुरैः अङ्गकैः मे अम्बाना (च) कुतूहलम् अकृत इत्यन्वयः । प्रतनुविरलैः-प्रतनूनि च तानि विरलानि प्रतनुविरलानि तैः, सूक्ष्माऽनिविडैरित्यर्थः, 'पतनविरलैः' इति पाठे-पतनेन ( हेतुना ) अनिविडैः इत्यर्थः, पदमेतत् 'दशनकुसुमैः' इत्यस्य विशेषणं बोध्यम् । प्रान्तोन्मीलन्मनोहरकुन्तलैः-प्रान्ते = कपोलप्रान्ते, उन्मीलन्त = विकसन्तः, लक्षणया शोभमाना इत्यर्थः, एतादृशा ये मनोहरकुन्तलाः = सुन्दरकेशाः तैः, एवं च दशनकुसुमैः-दशनाः कुसुमानि इव दशनकुसुमानि = तैः, पुष्पसदृशदन्तैरित्यर्थः, "उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे' इति समासः, 'दशनमुकुलैः' इति पाठे दन्तकुड्मलैरित्यर्थः, उभयत्राऽपि 'हेतौ' इति 'इत्थंभूतलक्षणे' इति वा तृतीया, मुग्धालोकं = सुन्दरदर्शनमित्यर्थः, मुग्ध आलोको यस्य तत् मुग्धालोकम्, 'आलोकौ दर्शनद्योतौ' इत्यमरः । मुखम् = आननं, दधती-दधातीति दधती शतृप्रत्ययः, धारयन्तीत्यर्थः, 'उभे अभ्यस्तम्' इति अभ्यस्तसंज्ञत्वात् 'नाऽभ्यस्ताच्छतुः' इति नुम् न । इयं, शिशुः = बालिका सीतेत्यर्थः, ललितललितैः = ललितात् ललितानि ललितललितानि तैः = सुन्दरादपि सुन्दरैः ईप्सितादपि ईप्सितैर्वा; यद्वा 'सुकुमारतयाऽङ्गाना विन्यासो ललितं भवेत्' इत्युक्तेः सौकुमार्येण अङ्गविन्यासाद्धेतो सुन्दरैरीप्सितैर्वा । ज्योत्स्नाप्रायैः = ज्योत्स्नाभिः प्रायाणि ज्योत्स्नाप्रायाणि तैः, चन्द्रिकासदृशैः इत्यर्थः, 'प्रायश्चानशने मृत्यौ प्रायो वाहुल्यतुल्ययोः' इति विश्वः । अकृत्रिमविभ्रमैः = अकृत्रिमा विभ्रमा येषा तानि अकृत्रिमविभ्रमाणि, तैः = स्वाभाविकविलासैरित्यर्थः । मधुरैः = प्रियैः, अङ्गकैः = अनुकम्पितानि अङ्गानि=हस्तपादाद्यवयवाः, इति अङ्गकानि तैः, 'अनुकम्पायाम्' इति कन्प्रत्ययः, अतिसौकुमार्येण अनुकम्पितैरङ्गैरित्यर्थः, यद्वा अल्पार्थे 'अल्पे' इति कन् बाल्येनाऽल्पैरङ्गैरित्यर्थः । मे = मम, अम्बानाम् = कौशल्यादीना मातॄणा च, 'अङ्गानाम्' इति पाठे हस्तपादाद्यवयवानामित्यर्थः । कुतूहलं = कौतुकम्, अकृत = अकरोत्, 'डुकृञ् करणे' इति धातोर्लुङ् 'ह्रस्वादङ्गात्' इति सिचो लोपः, 'स्वरित-

---

दाँतोंसे सुन्दर दर्शनवाले मुखको धारण करती हुई अल्प वयवाली अत्यन्त सुन्दर, चाँदनी-

लक्ष्मणः—एष मन्थरावृत्तान्तः ।

रामः—( सत्वरमन्यतो दर्शयन् । ) देवि वैदेहि ?

इङ्गुदीपादपः सोऽयं शृङ्गवेरपुरे पुरा ।
निषादपतिना यत्र स्निग्धेनासीत्समागमः ॥ २१ ॥

लक्ष्मणः—(विहस्य । स्वगतम् ।) अये, मध्यमाम्बावृत्तान्तोऽन्तरित आर्येण ।

---

सित. कर्त्रभिप्राये क्रियाफले' इति कर्त्रभिप्राये क्रियाफले घोत्ये आत्मनेपदम् । तेन रामस्य कौशल्यादीनां च कुतूहलकरणफलं सीताया अवगम्यते । अत्र 'दशनकुसुमै.' 'ज्योत्स्नाप्रायैः' इत्यत्र द्वे लुप्तोपमे समुच्चयाऽलङ्कारश्चेत्येते-षामङ्गाङ्गिभावेन सङ्करः । हरिणी वृत्तम् 'रसयुगहयैर्न्सौ म्रौ स्लौ गौ यदा हरिणी तदा' इति तल्लक्षणात् ॥ २० ॥

लक्ष्मण इति । मन्थरावृत्तान्तः = मन्थरा नाम कैकेयीदासी, तद्वृत्तान्त. ।

राम इति । सत्वर = शीघ्रम् , 'अनुत्तरम्' इति पाठे उत्तररहितम् इत्यर्थः, अन्यत' = मन्थरावृत्तान्तसूचकस्थलादन्यत्र ।

इङ्गुदीति । शृङ्गवेरपुरे अय स इङ्गुदीपादप , यत्र पुरा स्निग्धेन निषादपतिना समागम आसीत् इत्यन्वय । शृङ्गवेरपुरे = शृङ्गवेरनामके गुहनगरे, अयम् अङ्गुलीनिर्दिष्टः, स. = पूर्वदृष्ट , इङ्गुदीपादप = तापसतरु', यत्र = यस्मिन् , पुरा = पूर्वं, वनगमनकाल इत्यर्थ , स्निग्धेन = स्नेहयुक्तेन, निषादपतिना = निषादराजेन, गुहेनेत्यर्थ' ; समागम' = सम्मेलनम् , आसीत्=अभवत् , अस्माकमिति शेष' ॥२१॥

लक्ष्मण इति । मध्यमाऽम्बावृत्तान्त = मध्यमाऽम्बा=कैकेयी, तस्या वृत्ता-न्तः = उदन्त', मन्थरासंलापन–दशरथ–मन्त्रणारामप्रेषणादिरूप इत्यर्थः । अन्त-रित' = व्यवहितः, चित्रान्तरदर्शनेन परित्यक्त इति भाव', मातृनिन्दाप्रसङ्गस्य पतितत्वात् कैकेयीवृत्तान्तरूपश्चित्राऽश' परिहृत इति तात्पर्यम् । 'वृत्तान्तं परिहृतम्' इति पाठस्तु 'वार्ता प्रवृत्तिर्वृत्तान्तः' इति नामलिङ्गानुशासनविरुद्ध-

---

के सदृश और स्वाभाविक विलासोंसे सम्पन्न प्रीतिजनक अङ्गोंसे मेरा और माताओंका भी कुतूहल पैदा करती थी ॥ २० ॥

लक्ष्मण—यह मन्थराका वृत्तान्त है ।

राम—( जल्दीसे दूसरी तरफ दिखाते हुए ) देवि सीते !

शृङ्गवेरपुरमें यह वही इङ्गुदीका पेड़ है, जहाँ पहले स्नेहयुक्त निषादराज ( गुह ) से भेंट हुई थी ॥ २१ ॥

लक्ष्मण-(हँस कर, मन ही मन)अरे ! मझली माता (कैकेयी)का वृत्तान्त आर्यने छोड़ दिया।

सीता—अह्मो, एसो जडासंजमणवुत्तन्तो । ( अहो, एष जटासंयमनवृत्तान्तः । )

लक्ष्मणः—

पुत्रसंक्रान्तलक्ष्मीकैर्यद् वृद्धेक्ष्वाकुभिर्धृतम् ।
धृतं बाल्ये तदार्येण पुण्यमारण्यकव्रतम् ॥ २२ ॥

सीता—एसा पसण्णपुण्णसलिला भअवदी भाईरही । ( एषा प्रसन्नपुण्यसलिला भगवती भागीरथी । )

रामः—रघुकुलदेवते ! नमस्ते ।

---

त्वात् बहुभिः परिहृतः, परं 'स्थितस्य गतिश्चिन्तनीया' इति न्यायेन मध्यमाऽम्वाया वृत्तस्य = चरित्रस्य, अन्तं = स्वरूपमित्यर्थः कार्यः ।

सीतेति । जटासंयमनवृत्तान्तः = जटावन्धनोदन्तः ।

लक्ष्मण इति । पुत्रसंक्रान्तलक्ष्मीकैः वृद्धेक्ष्वाकुभिः यत् धृतं, तत् पुण्यम् आरण्यकव्रतम् आर्येण वाल्ये धृतम् इत्यन्वयः । पुत्रसंक्रान्तलक्ष्मीकैः = पुत्रेषु संक्रान्ता लक्ष्मीर्येषां ते पुत्रसंक्रान्तलक्ष्मीकास्तैः = पुत्रप्राप्तराजलक्ष्मीकैरित्यर्थः, 'उरःप्रभृतिभ्यः कप्' इति कप् 'न कपि' इति ह्रस्वप्रतिषेधः । वृद्धेक्ष्वाकुभिः = वृद्धैः इक्ष्वाकुवंशोत्पन्नैः राजभिः, यत् = आरण्यकव्रतं, धृतम् = गृहीतं, तत्, पुण्यं=पवित्रम्, आरण्यकम्=वानप्रस्थसम्वन्धि, व्रतं=नियमः, आर्येण=पूज्येन, रामेणेत्यर्थः, वाल्ये = वालस्य भावस्तस्मिन् शैशवे, धृतं = गृहीतम् ॥ २२ ॥

सीतेति । प्रसन्नपुण्यसलिला = प्रसन्नं = स्वच्छम्, पुण्यं = पवित्रम्, सलिलं जलं यस्याः सा ।

राम इति । ते = तुभ्यं, 'नमः' इति पदेन योगे 'नमः स्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च' इति चतुर्थी ।

---

सीता—ओहो ! यह जटा वाधनेका वृत्तान्त है ।

लक्ष्मण—पुत्रको राजलक्ष्मी देकर इक्ष्वाकुवंशके वूढे राजाओंने जो वनवासका व्रत लिया था, उस पवित्र व्रतको आर्यने वाल्याऽवस्थामें ही ले लिया ॥ २२ ॥

सीता—यह निर्मल और पवित्र जलवाली भगवती भागीरथी ( गङ्गा ) हैं ।

राम—रघुवंशकी देवि ! आपको नमस्कार है ।

तुरगविचयव्यग्रानुर्वीभिदः सगराध्वरे
कपिलमहसा रोषात्प्लुष्टान्पितुश्च* पितामहान् ।
अगणिततनूतापस्तप्त्वा तपांसि भगीरथो
भगवति ! तव स्पृष्टानद्भिश्चिरादुदतीतरत् ॥ २३ ॥

तुरगेति । हे भगवति ! भगीरथ अगणिततनूताप· ( सन् ) तपासि तप्त्वा तव अद्भिः स्पृष्टान् सगराऽध्वरे तुरगविचयव्यग्रान् उर्वीभिद· रोषात् कपिलमहसा प्लुष्टान् च पितुः पितामहान् चिरात् उदतीतरत् इत्यन्वयः । हे भगवति = हे देवि ! भगीरथः = तन्नामकोऽस्मत्पूर्वज , अगणिततनूतापः = उपेक्षितशरीरदुःखः सन् , 'अगणिततनूपातम्' इति पाठे—उपेक्षितशरीरनाशम् इत्यर्थः, तत्र क्रियाविशेषणमेतत्पदमिति बोध्यम् । तपासि = तपस्या , तप्त्वा = संतप्य, तव = भवत्या·, अद्भि· = जलेन, स्पृष्टान् = आमृष्टान् , सगराऽध्वरे = सगरयज्ञे, तुरगविचयव्यग्रान् = तुरगस्य = अश्वमेधीयाश्वस्य इन्द्रापहृतस्येति यावत् , विचये = अन्वेषणे व्यग्रान् = व्यासक्तान् , अश्वाऽन्वेषणाकुलानित्यर्थः, 'व्यग्रो व्यासक्त आकुले' इत्यमरः, उर्वीभिद· = भूमिविदारकान् , रोषात्=क्रोधात् , कपिलमहसा=कपिलमुनितेजसा, प्लुष्टान् = दग्धान् 'प्लुष दाहे' इति धातो· क्तप्रत्यय·, पितुः = जनकस्य, दिलीपस्येत्यर्थ·, पितामहान् = सगरात्मजान् , स्वप्रपितामहस्य असमञ्जसस्य षष्टिसहस्रसंख्यकान् भ्रातॄनित्यर्थ·, चिरात् = बहुकालाऽनन्तरम् , उदतीतरत् = उदतारयत् , 'उददीधरत्' इति पाठे उद्धृतवानित्यर्थ· । पुरा महाराजः सगरोऽश्वमेधशताऽनुष्ठाने मतिमकरोत् । तत समाप्ते नवनवतितमेऽश्वमेधे यदा स शततममश्वमेधं प्रारभत, तदा स्वकीयपदनाशभीरुरिन्द्रस्तदीयमश्वमपहृत्य तपस्यतः कपिलमुनेरन्तिके निदधौ । अनन्तरं षष्टिसहस्रसंख्यका सगरात्मजा अन्वेषणक्रमेणोर्वीं विदार्य हयं आपु·, कपिलस्यैतत्कर्मेति मत्वा च तद्धननोद्यतास्ते कपिलतेजसा भस्मीभूता इति पौराणिकमुपाख्यानमत्र द्रष्टव्यम् । हरिणीवृत्तं, तदुक्त— 'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति ॥ २३ ॥

हे भगवति ! सगरके यज्ञमें घोड़ोंके अन्वेषणमें आकुल , भूमिको विदारण करनेवाले और क्रोधसे कपिल मुनिके तेजसे जले हुए पिता ( दिलीप ) के पितामहों ( सगरपुत्रों ) को भगीरथने शरीरके क्लेशकी परवाह न कर तपस्या करके बहुत कालके अनन्तर आपके जलस्पर्शसे तार लिया ॥ २३ ॥

* 'प्र' इति पुस्तकान्तरपाठ ।

सा त्वमम्ब ! स्नुषायामरुन्धतीव सीतायां शिवानुध्याना भव ।

लक्ष्मणः—एष भरद्वाजावेदितश्चित्रकूटयायिनि वर्त्मनि वनस्पतिः कालिन्दीतटे वटः श्यामो नाम ।

( रामः सस्पृहमवलोकयति । )

सीता—सुमरेदि वा तं पदेसं अज्जउत्तो ? ( स्मरति वा तं प्रदेशमार्यपुत्रः ? )

रामः—अयि, कथं विस्मर्यते ?

अलसललितमुग्धान्यध्वसम्पातखेदा-

---

सेति । सा=तादृशी, अम्ब=हे मातः ! स्नुषायां = पुत्रवध्वां, शिवाऽनुध्याना= शिवमनुध्यानं यस्याः सा, कल्याणचिन्तनतत्परेत्यर्थः ।

लक्ष्मण इति । भरद्वाजवेदितः = भरद्वाजेन = तन्नाम्ना मुनिना, आवेदितः= निवेदितः, चित्रकूटयायिनि = चित्रकूटपर्वतगामिनि, वर्त्मनि = मार्गे, कालिन्दी-तटे = यमुनातीरे, 'कालिन्दी सूर्यतनया यमुना शमनस्वसा ।' इत्यमरः, श्यामो नाम = नाम्ना श्याम इति, वनस्पतिः = वृक्षः ।

राम इति । सस्पृहं = सकौतुकम् , अवलोकयति = पश्यति ।

सीतेति । वा=अथवा, स्मरति स्मरणं करोति, आर्यपुत्रः = भगवान् रामचन्द्र इत्यर्थः, तं प्रदेशम् = तत् स्थानम् ।

राम इति । अयि इति कोमलामन्त्रणे, प्रिये इत्यर्थः । कथं = केन प्रकारेण विस्मर्यते=स्मरणं क्रियते ।

अलसेति । यत्र त्वम् अध्वसम्पातखेदात् अलसललितमुग्धानि अशिथिलपरिरम्भैः दत्तसंवाहनानि परिमृदितमृणालीदुर्बलानि अङ्गकानि मम उरसि कृत्वा निद्राम् अवाप्ता इत्यन्वयः । यत्र = यस्मिन् प्रदेशे, त्वम् = भवती सीता, अध्वसम्पातखेदात् = सम्पतनं सम्पातः, 'भावे' इति घञ् , अध्वनि सम्पातः तेन खेदस्त-

---

हे माता ! ऐसी आप बहू सीतामें अरुन्धतीकी तरह कल्याणकी चिन्ता करनेवाली हों ।

लक्ष्मण—चित्रकूटको जानेवाले मार्गमें यमुनाके तीरमें भरद्वाज ऋषिसे कहा गया यह श्याम नामका वड़का पेड है ।

( राम अभिलाषके साथ देखते हैं । )

सीता—आर्यपुत्र ! उस जगहकी याद कर रहे हैं क्या ?

राम—ओः ! किस तरह भूला जा सकता है ?

जहाँपर तुम मार्गमें चलनेके परिश्रमसे आलस्ययुक्त, कोमल और सुन्दर, दृढ आलिङ्गनोंसे

अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेव व्यरंसीत् ॥ २७ ॥

लक्ष्मणः—एष पञ्चवट्यां शूर्पणखाविवादः ।

सीता—हा अज्जउत्त ! एत्तिअ दे दंसणम् ? (हा आर्यपुत्र ! एतावत्ते दर्शनम् ?)

---

अनिर्वचनीयमतिगोपनीयमित्यर्थः यत्किञ्चिद्वा, मन्दं मन्दम् = अतिसूक्ष्मशब्दं, यथा तथा, अन्यैरश्राव्यमित्यर्थः । अक्रमेण = पौर्वापर्याभावेन, जल्पतोः = वदतोः, तथा च अशिथिलपरिरम्भव्यापृतैकैकदोष्णोः = अशिथिलः = दृढः, यः परिरम्भः = आलिङ्गनम्, तस्मिन् व्यापृतः = सक्रियः, एकैको दोः बाहुः ययोस्तौ अशिथिलपरिरम्भव्यापृतैकैकदोषौ, तयोः, 'पद्दन्नोमासि'ति सूत्रेण दोःशब्दस्य दोषन्नादेशः, 'भुजबाहू प्रवेष्टो दोः' इत्यमरः, एतादृशयोरावयोः, अविदितगतयामा = अविदिता = अज्ञाताः, आनन्दनिमग्नत्वेनेति शेषः, गता = याताः, यामाः = प्रहराः, यस्याः सा, तथाभूता रात्रिरेव = रजन्येव, व्यरंसीत् = विरराम, आनन्दाऽनुभूतिपारवश्येन रात्रिरपि अल्पक्षणवत् यातेति भावः । व्यरंसीदित्यत्र विपूर्वात् 'रमु क्रीडायाम्' इति धातोर्लुङ् 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् 'यमरमनमाता सक् च' इति सगिटौ । मालिनी वृत्तम् ॥ २७ ॥

लक्ष्मण इति । पञ्चवट्याम् = पञ्चानां वटानां समाहारः पञ्चवटी, तस्याम्, तद्धितार्थोत्तरपदसमाहारे च' इति समासस्तस्य 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञा 'द्विगोः' इति ङीप् च, यद्यपि समाहारार्थोऽयं द्विगुः, तेन शास्त्रोक्तविधिना स्थापिताऽश्वत्थादिवृक्षपञ्चकसमूहोऽयमर्थः संवृत्तः, परं लक्षणया पञ्चवट्युपलक्षितः स्थानविशेषो लक्ष्यते । शूर्पणखाविवादः = शूर्पाणीव नखा यस्याः सा शूर्पणखा = रावणाऽनुजा काचिद्राक्षसी, 'नखमुखात्संज्ञायाम्' इति ङीषभावः, 'पूर्वपदात्संज्ञायामगः' इति णत्वम्, तया विवादः, अस्माकमिति शेषः ।

सीतेति । एतावत् = एतत्समयपर्यन्तम्, दर्शनं = विलोकनम् । शूर्पणखाविवादस्य किञ्चित्कालानन्तरमेव सीताऽपहरणादित्यर्थः ।

---

और एक एक बाहुको गाढ आलिङ्गनमें लगाते हुए हम दोनोंकी, बीते हुए प्रहरोंका भी पता न लगकर रात ही बीत गई ॥ २७ ॥

लक्ष्मण—यह पञ्चवटीमें शूर्पणखासे विवाद है ।

सीता—हा आर्यपुत्र ! यहीं तक आपका दर्शन है ?

रामः—अयि वियोगत्रस्ते ! चित्रमेतत् ।

सीता—जह्वा तह्वा होदु । दुज्जणो असुहं उप्पादेइ । (यथा तथा भवतु । दुर्जनोऽसुखमुत्पादयति )

रामः—हन्त, वर्तमान इव मे जनस्थानवृत्तान्तः प्रतिभाति ।

लक्ष्मणः—

अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना
तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि ।
जनस्थाने शून्ये विकलकरणैरार्यचरितै-

---

राम इति । अयीति कोमलामन्त्रणे । वियोगत्रस्ते = मद्विरहभीते ! एतत् = समीपतरवर्ति, चित्रम् = आलेख्यम् । चित्रमपि साक्षादिव पश्यन्त्याः सीताया विस्मृतिनिवारणार्थमिदं रामप्रबोधन ज्ञेयम् ।

सीतेति । यथा तथा = चित्रगता वास्तविकी वा, भवतु = अस्तु । दुर्जनः = असाधुः, असुखं = दुःखम् , उत्पादयति = जनयति ।

राम इति । हन्त = खेदसूचकमव्ययमेतत् । जनस्थानवृत्तान्त =दण्डकारण्योदन्तः, सीताहरणरूपः; अतीतोऽपीति शेषः । वर्तमान इव प्रतिभाति = संस्काररूपेण मनस्यवस्थितोऽपि प्रत्यक्षवद्भवतीत्यर्थः ।

अथेदमिति । अथ पापैः रक्षोभि कनकहरिणच्छद्मविधिना इदं तथा वृत्तं, यथा क्षालितमपि व्यथयति । शून्ये जनस्थाने विकलकरणै आर्यचरितैः ग्रावा अपि रोदिति, वज्रस्य अपि हृदयं दलति इत्यन्वय । अथ = शूर्पणखाविवादाऽनन्तरं, 'मङ्गलाऽनन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ ।' इत्यमरः, पापैः = पापाऽऽचारैः, रक्षोभिः = राक्षसैः, रावणमारीचादिभिरित्यर्थः, कनकहरिणच्छद्मविधिना = कनकहरिणस्य = सुवर्णमृगस्य, छद्मविधिना = कपटाऽनुष्ठानेन, इदम्=एतत् , चित्रे दृश्यमानं वस्तु, तथा = तादृशं, वृत्तं = निष्पन्नं, यथा = यादृशं, क्षालितमपि = कृतप्रतीकारमपि, व्यथयति = तापयति, स्मरण इति शेषः । शून्ये = सीतारहिते, जनस्थाने=दण्डकारण्ये, विकलकरणैः = विकलानि = स्वस्वव्यापाराऽसमर्थानि, कर-

---

राम—विरहसे डरी हुई हे सीते ! यह चित्र है ।

सीता—जैसा कुछ भी हो । दुर्जन दुःख पैदा करता है ।

राम—हन्त ! जनस्थानका वृत्तान्त मुझे वर्तमानकी तरह मालूम हो रहा है ।

लक्ष्मण—उसके बाद पापी राक्षसोंने सोनेके बने हुए मृगकी कपटविधिसे ऐसा किया, जो

रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥ २८ ॥

सीता—( सास्रमात्मगतम् । ) अह्मो, दिणअरकुलाणन्दणो एव्वं वि मह कालणादो किलन्तो आसि ( अहो, दिनकरकुलानन्दन एवमपि मम कारणात् क्लान्त आसीत् । )

लक्ष्मणः—( रामं निर्वर्ण्य साकूतम् । ) आर्य ! किमेतत् ?

---

णानि = चक्षुरादीनि इन्द्रियाणि, येषु तानि विकलकरणानि, तैः, 'विकल-करुणैः' इति पाठे—विकलैः = वैकल्यपूर्णैः करुणैः = शोकोद्दीपकैरित्यर्थः । आर्यचरितैः = आर्यस्य = पूज्यस्य, रामस्येत्यर्थः, चरितैः = चरित्रैर्मूर्च्छाप्रभृति-व्यापारैरित्यर्थः, ग्रावा अपि = शिला अपि, 'पाषाणप्रस्तरग्रावोपलाऽश्मानः शिला दृषत् ।' इत्यमरः, रोदिति = अश्रूणि विमुञ्चति, 'रुदिर् अश्रुविमोचने' इति धातोर्लट्, 'रुदादिभ्यः सार्वधातुके' इतीट् । वज्रस्य अपि = कुलिशस्यापि, हृदयं = मध्यप्रदेशः, दलति = द्विधा भिन्नं भवति । अत्र 'ग्रावाऽपि रोदिति' 'वज्रस्याऽपि हृदयं दलती' त्यत्र ग्राव्णो रोदनस्य वज्रहृदयस्य दलनस्य असम्बन्धत्वकथनादतिशयोक्तिद्वयस्य मिथोऽनपेक्षया स्थितेः संसृष्टिः । शिखरिणी वृत्तम्, 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' । इति तल्लक्षणम् ॥२८॥

सीतेति । आत्मगतं = स्वगत, 'सर्वप्रकाश श्रव्य स्यादश्रव्यं स्वगतं मतम्' । इति दशरूपकम् । दिनकरकुलानन्दन = सूर्यवंशहर्षदायक !, एवम् = इत्थम्, अपि, मम = सीतायाः हेतोः, क्लान्त = ग्लानः, 'क्लिष्ट' इति पाठे—प्राप्तक्लेश इत्यर्थः, आसीत् = अभूत् ।

लक्ष्मण इति । निर्वर्ण्य = दृष्ट्वा, 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः । साकूतं = साऽभिप्रायम्, रामसान्त्वनाऽभिप्रायसहितमित्यर्थः । आर्य = पूज्य !, एतत् = वक्ष्यमाणम्, किम् = किमस्ति ?

---

कि बदला लेनेपर भी अभी तक दुःख देता है । निर्जन जनस्थानमें नेत्र आदि इन्द्रियोंकी क्रियामें असमर्थ आर्यके चरित्रोंसे पत्थर भी आँसू गिराता है और वज्रका भी हृदय विदीर्ण होता है ॥ २८ ॥

सीता—( आँखोंमें आँसू भरकर और मन ही मन ) अहो ! सूर्यकुलके आनन्दजनक ( रामचन्द्र ) भी मेरे कारणसे इस तरह क्लान्त हो गये थे ।

लक्ष्मण—( रामचन्द्रको दिलासा देनेके अभिप्रायसे देखकर ) आर्य ! यह क्या ?

अयं तावद्बाष्पस्त्रुटित इव मुक्तामणिसरो
विसर्पन्धाराभिर्लुठति धरणीं जर्जरकणः ।
निरुद्धोऽप्यावेगः स्फुरदधरनासापुटतया
परेषामुन्नेयो भवति चिरमाध्मातहृदयः ॥ २६ ॥

रामः—वत्स !

---

अयमिति । तावत् धाराभिर्विसर्पन् जर्जरकणः अयं बाष्पः त्रुटितः मुक्ता-मणिसरः इव धरणीं लुठति । चिरमाध्मातहृदयः आवेगः निरुद्धोऽपि स्फुरदधर-नासापुटतया परेषाम् उन्नेयो भवति इत्यन्वयः । तावदिति वाक्यारम्भार्थकम-व्ययम् , धाराभिः = प्रवाहैः, विसर्पन् = विशेषेण गच्छन् , जर्जरकणः = चूर्णित-विन्दुः, अयं = सन्निकृष्टस्थः, बाष्पः = अश्रु, 'बाष्पौघ' इति पाठे अश्रुसमूह इत्यर्थः, त्रुटितः = छिन्नः, मुक्तामणिसर इव = मुक्ताहार इव, धरणीं = पृथ्वीं, लुठति = पतति, लुठधातोरकर्मकत्वेऽपि 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्' इति पृथिव्याः कर्मत्वम् , चिरं = वहुकालपर्यन्तम् , आध्मातहृदयः = आपूरितहृदयः, 'भराध्मातहृदय' इति पाठे-भरेण = अतिशयेन आपूरितहृदय इत्यर्थः, 'विरसाध्मातहृदय' इति पाठे-विरसेन = दुःखेन आपूरितहृदय इत्यर्थः । आवेगः = दुःखाऽतिशय, निरु-द्धोऽपि = अन्तर्गुप्तोऽपि, स्फुरदधरनासापुटतया-स्फुरच्च तत् अधरनासापुटं, तस्य भावस्तत्ता, तया = किञ्चिच्चलदोष्ठनासिकत्वेन- परेषाम् = अन्येषाम् , 'उन्नेय' इति पदेन योगे 'कृत्यानां कर्तरि वा' इति कर्तरि षष्ठी । उन्नेयः = अनुमेयः, भवति, वेगरोधाद्बहिर्दृश्यमानपरिदेवनाऽभावेऽपि नासिकाऽधरस्फुरणेन हृदयस्थो दुःखा-ऽतिशयोऽनुमीयत इति भावः । अत्रोपमाऽलङ्कारः । पश्चार्द्धे चाऽनुमाना-लङ्कारस्तथा च द्वयोरङ्गाङ्गिभावेन सङ्करः । शिखरिणी वृत्तम् ॥ २९ ॥

---

प्रवाहोंसे फैलता हुआ और चूर्ण २ विन्दुओंसे युक्त यह आपका आँसू, टूटी हुई मो-तियोंकी मालाकी तरह जमीन पर गिरता है। वहुत कालतक हृदयको पूर्ण करनेवाला अतिशयित यह दुःख रोके जानेपर भी होठ और नाकका स्फुरण होनेसे दूसरोंसे अनुमेय होता है ॥ २९ ॥

रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥ २८ ॥

सीता—( सास्रमात्मगतम् । ) अह्मो, दिणअरकुलाणन्दणो एव्वं वि मह कालणादो किलन्तो आसि ( अहो, दिनकरकुलानन्दन एवमपि मम कारणात् क्लान्त आसीत् । )

लक्ष्मणः—( राम निर्वर्ण्य साकूतम् । ) आर्य ! किमेतत् ?

---

णानि = चक्षुरादीनि इन्द्रियाणि, येषु तानि विकलकरणानि, तैः, 'विकलकरुणैः' इति पाठे–विकलैः = वैकल्यपूर्णैः करुणैः = शोकोद्दीपकैरित्यर्थः । आर्यचरितैः = आर्यस्य = पूज्यस्य, रामस्येत्यर्थः, चरितैः = चरित्रैर्मूर्च्छाप्रभृतिव्यापारैरित्यर्थः, ग्रावा अपि = शिला अपि, 'पाषाणप्रस्तरग्रावोपलाऽश्मानः शिला दृषत् ।' इत्यमरः, रोदिति = अश्रूणि विमुञ्चति, 'रुदिर् अश्रुविमोचने' इति धातोर्लट्, 'रुदादिभ्यः सार्वधातुके' इतीट् । वज्रस्य अपि = कुलिशस्यापि, हृदयं = मध्यप्रदेशः, दलति = द्विधा भिन्नं भवति । अत्र 'ग्रावाऽपि रोदिति' 'वज्रस्याऽपि हृदयं दलती' त्यत्र ग्राव्णो रोदनस्य वज्रहृदयस्य दलनस्य असम्बन्धत्वकथनादतिशयोक्तिद्वयस्य मिथोऽनपेक्षया स्थिते **संसृष्टिः** । **शिखरिणी** वृत्तम्, 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' । इति तल्लक्षणम् ॥२८॥

**सीतेति** । आत्मगतं = स्वगत, 'सर्वप्रकाशं श्रव्यं स्यादश्रव्यं स्वगतं मतम्' । इति दशरूपकम् । दिनकरकुलानन्दन = सूर्यवंशहर्षदायक !, एवम् = इत्थम्, अपि, मम = सीतायाः हेतोः, क्लान्तः = ग्लानः, 'क्लिष्ट' इति पाठे–प्राप्तक्लेश इत्यर्थः, आसीत् = अभूत् ।

**लक्ष्मण इति** । निर्वर्ण्य = दृष्ट्वा, 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः । साकूतं = साऽभिप्रायम्, रामसान्त्वनाऽभिप्रायसहितमित्यर्थः । आर्य = पूज्य !, एतत् = वक्ष्यमाणम्, किम् = किमस्ति ?

---

कि बदला लेनेपर भी अभी तक दुःख देता है । निर्जन जनस्थानमें नेत्र आदि इन्द्रियोंकी क्रियामें असमर्थ आर्यके चरित्रोंसे पत्थर भी आँसू गिराता है और वज्रका भी हृदय विदीर्ण होता है ॥ २८ ॥

**सीता**—( आँखोंमें आँसू भरकर और मन ही मन ) अहो ! सूर्यकुलके आनन्दजनक ( रामचन्द्र ) भी मेरे कारणसे इस तरह क्लान्त हो गये थे ।

**लक्ष्मण**—( रामचन्द्रको दिलासा देनेके अभिप्रायसे देखकर ) आर्य ! यह क्या ?

अयं तावद्बाष्पस्त्रुटित इव मुक्तामणिसरो
विसर्पन्धाराभिर्लुठति धरणीं जर्जरकणः ।
निरुद्धोऽप्यावेगः स्फुरदधरनासापुटतया
परेषामुन्नेयो भवति चिरमाध्मातहृदयः ॥ २६ ॥

रामः—वत्स !

---

अयमिति । तावत् धाराभिर्विसर्पन् जर्जरकणः अयं बाष्पः त्रुटितः मुक्तामणिसरः इव धरणीं लुठति । चिरमाध्मातहृदयः आवेगः निरुद्धोऽपि स्फुरदधरनासापुटतया परेषाम् उन्नेयो भवति इत्यन्वयः । तावदिति वाक्यारम्भार्थकमव्ययम् , धाराभिः = प्रवाहैः, विसर्पन् = विशेषेण गच्छन् , जर्जरकणः = चूर्णितबिन्दुः, अयं = सन्निकृष्टस्थः, बाष्पः = अश्रु, 'बाष्पौघ' इति पाठे अश्रुसमूह इत्यर्थः, त्रुटितः = छिन्नः, मुक्तामणिसर इव = मुक्ताहार इव, धरणीं = पृथ्वीं, लुठति = पतति, लुठधातोरकर्मकत्वेऽपि 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्' इति पृथिव्याः कर्मत्वम् ,, चिरं = बहुकालपर्यन्तम् , आध्मातहृदयः = आपूरितहृदय, 'भराध्मातहृदय' इति पाठे-भरेण = अतिशयेन आपूरितहृदय इत्यर्थः, 'विरसाध्मातहृदय' इति पाठे–विरसेन = दुःखेन आपूरितहृदय इत्यर्थः । आवेगः = दुःखाऽतिशयः, निरुद्धोऽपि = अन्तर्गुप्तोऽपि, स्फुरदधरनासापुटतया–स्फुरच्च तत् अधरनासापुटं, तस्य भावस्तत्ता, तया = किञ्चिच्चलदोष्ठनासिकत्वेन- परेषाम् = अन्येषाम् , 'उन्नेय' इति पदेन योगे 'कृत्यानां कर्तरि वा' इति कर्तरि षष्ठी । उन्नेयः = अनुमेयः, भवति, वेगरोधाद्बहिर्दृश्यमानपरिदेवनाऽभावेऽपि नासिकाऽधरस्फुरणेन हृदयस्थो दुःखाऽतिशयोऽनुमीयत इति भावः । अत्रोपमाऽलङ्कारः । पश्चार्द्धे चाऽनुमानालङ्कारस्तथा च द्वयोरङ्गाङ्गिभावेन सङ्करः । शिखरिणी वृत्तम् ॥ २९ ॥

---

प्रवाहोंसे फैलता हुआ और चूर्ण २ विन्दुओंसे युक्त यह आपका आँसू, टूटी हुई मोतियोंकी मालाकी तरह जमीन पर गिरता है । बहुत कालतक हृदयको पूर्ण करनेवाला अतिशयित यह दुःख रोके जानेपर भी होठ और नाकका स्फुरण होनेसे दूसरोंसे अनुमेय होता है ॥ २९ ॥

तत्कालं प्रियजनविप्रयोगजन्मा
तीव्रोऽपि प्रतिकृतिवाञ्छया विसोढः ।
दुःखाग्निर्मनसि पुनर्विपच्यमानो
हृन्मर्मव्रण इव वेदनां तनोति ॥ ३० ॥

सीता—हद्धी हद्धी । अहं वि अदिभूमिं गदेण रणरणएण अज्जउत्तसुण्णं विअ अत्ताणं पेक्खामि । ( हा धिक् हा धिक् । अहमप्यतिभूमिं गतेन रणरणकेनार्यपुत्रशून्यमिवात्मानं पश्यामि ।

तत्कालमिति । प्रियजनविप्रयोगजन्मा तीव्रोऽपि प्रतिकृतिवाञ्छया तत्कालं विसोढः दुःखाग्निः पुनर्मनसि विपच्यमानः ( सन् ) हृन्मर्मव्रण इव वेदनां तनोति इत्यन्वयः । प्रियजनविप्रयोगजन्मा=प्रियजनस्य=अभीष्टजनस्य, सीताया इति भावः, विप्रयोगः = विरहः, तस्माज्जन्म यस्य सः = सीताविरहोत्पन्न इत्यर्थः, अत्र 'सप्तमी बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपद' इति काव्यालङ्कारसूत्राऽनुशासनात् व्यधिकरणबहुव्रीहिः, तीव्रोऽपि = अतितु सहोऽपि, प्रतिकृतिवाञ्छया = सीताहरणकर्तृ रावणवधेच्छयेत्यर्थः, तत्कालम् = स चाऽसौ कालस्तत्कालस्तं, 'कालाऽध्वनोरत्यन्तसंयोगे' इति द्वितीया, तस्मिन् काले इत्यर्थः । विसोढः = मर्षितः, दुःखाग्निः = शोकाऽनलः, पुनः = भूयोऽपि, चित्रदर्शन इति शेषः, मनसि = चित्ते, विपच्यमानः=स्वयमेव परिपाकमाश्रित्येत्यर्थः, कर्मणः कर्तृत्वविवक्षया 'कर्मवत्कर्मणा तुल्यक्रियः' इत्यातिदेशिकयगात्मनेपदत्वम्, हृन्मर्मव्रण इव = वक्षोमर्मस्फोटक इव, वेदनां = यातनां, तनोति = विस्तारयति, 'करोति' इति पाठे = विदधातीत्यर्थः । उपमालङ्कारः, प्रहर्षिणी वृत्तं, 'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' इति तल्लक्षणम् ॥ ३० ॥

सीतेति । हद्धी हद्धी = 'प्राकृते हाधिगित्यर्थे हद्धी वीप्सापदान्वितम्' । इति सागरः । अतिभूमिं गतेन=परां काष्ठामारूढेन, रणरणकेन=औत्सुक्येन, रण्यते=शब्द्यते यत्र रणो घञ् द्वित्वानन्तरं संज्ञायां कन् । 'औत्सुक्ये रणरणकः स्मृतः' इति हलायुधः । आर्यपुत्रशून्यमिव=भवद्रहितमिव, आत्मानम्=स्वम्, पश्यामि=अवलोकयामि

प्रियजन ( सीता ) के विरहसे उत्पन्न, दुःसह होनेपर भी बदला लेनेकी इच्छासे उस समय सहा गया दुःखानल फिर भी मनमें परिपक्व होता हुआ हृदयके मर्मस्थलके फोडे की तरह दुःख देता है ॥ ३० ॥

सीता—हा ! धिक् ! ! हा ! धिक् ! ! मैं भी बहुत बढ़ी हुई उत्कण्ठासे अपनेको आर्यपुत्रसे रहित-सी देख रही हूं ।

लक्ष्मणः—(स्वगतम् ।) भवतु, आक्षिपामि । (चित्रं विलोक्य प्रकाशम् ।) अथैतन्मन्वन्तरपुराणस्य तत्रभवतस्तातजटायुषश्चरित्रविक्रमोदाहरणम् ।

सीता—हा ताद ! णिव्वूढो दे अवच्चसिणेहो । ( हा तात ! निर्व्यूढस्तेऽपत्यस्नेहः । )

रामः—हा तात काश्यप शकुन्तराज ! क नु खलु पुनस्त्वादृशस्य महत-

---

लक्ष्मण इति । स्वगतम् = आत्मगतम् , भवतु=अस्तु, आक्षिपामि=अन्यतो मनः प्रेरयामि, रावणमारीचच्छलसंस्मृत्या सीतारामयोरतीतविरहाऽग्नेरुद्दीप्तत्वादिति भावः । चित्रम् = आलेख्यम् , विलोक्य = दृष्ट्वा, प्रकाशम् = श्रव्यम् । अथ = अनन्तरम् , पदमिदं चित्रान्तरदर्शनारम्भद्योतकमव्ययम् । एतत् = समीपतरवर्ति, मन्वन्तरपुराणस्य = अन्यो मनुः मन्वन्तर, 'मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः' इत्यमरः, 'मयूरव्यंसकादयश्च' इति समासः, मन्वन्तरादपि पुराणस्तस्य । मन्वन्तरादपि प्राचीनतरस्येत्यर्थः, 'पञ्चमी विभक्ते' इति पञ्चमी, 'पञ्चमी भयेन' इत्यत्र 'पञ्चमी ति योगविभागात्समासः । तत्रभवतः = पूज्यस्य, पितृमित्रत्वादियमुक्तिः । गृध्रराजस्य = दाक्षाय्याऽधिपतेः, तातजटायुषः = तातसुहृत् जटायुस्तातजटायुस्तस्य = पितृमित्रस्य जटायुषः इत्यर्थः, 'शाकपार्थिवादीनां सिद्धय उत्तरपदलोपस्योपसंख्यानम्' इति मध्यमपदलोपी समासः । चरित्रविक्रमोदाहरणं = वृत्तपराक्रमनिदर्शनं, तत्र चरित्रं = सच्चरित्रं, सीतारक्षणप्रयासरूपमित्यर्थः, विक्रमः = रावणरथभङ्गादिरूपः पराक्रम इत्यर्थः ।

सीतेति । ते = तव, अपत्यस्नेहः = सन्तानवात्सल्यम् , निर्व्यूढः = सम्पन्नः , मद्रक्षणार्थं प्राणव्ययादिति भावः ।

राम इति । 'हा' इति शोके, तात = पितः ! काश्यप = हे कश्यपपौत्र ! अयं हि जटायुः कश्यपस्य विनताख्यायां पत्न्यामुत्पन्नस्य अरुणस्य कनीयान् पुत्रः संपातेरनुजश्चेति बोध्यम् । शकुन्तराज = पक्ष्यधीश ! त्वादृशस्य = त्वत्सदृशस्य,

---

लक्ष्मण—( मन ही मन ) अच्छा । दूसरी ओर इनका मन खींचता हूं । (चित्र देखकर प्रकाश भावसे) अब यह मन्वन्तरसे भी प्राचीनतर माननीय और पिताजीके मित्र जटायुके चरित्र और पराक्रम का उदाहरण है ।

सीता—हा पिताजी ! आपका सन्तानस्नेह सम्पन्न हुआ ।

राम—हा पिताजी ! कश्यपपौत्र ! पक्षिराज ! आपके सदृश महान् , सत्पात्र और परो-

स्तीर्थभूतस्य साधोः संभवः ?

लक्ष्मणः—अयमसौ जनस्थानस्य पश्चिमतः कुञ्जवान्नाम पर्वतो दनुकबन्धाधिष्ठितो दण्डकारण्यभागः। तदिदममुष्य परिसरे* मतङ्गाश्रमपदम्। तत्र श्रमणा नाम सिद्धा शबरतापसी। तदेतत्पम्पाभिधानं पद्मसरः।

सीता—जत्थ किल अज्जउत्तेण विच्छिण्णामरिसधीरत्तणं पमुक्ककण्ठं परुण्णं आसि। (यत्र किलार्यपुत्रेण विच्छिन्नामर्षधीरत्वं प्रमुक्तकण्ठं प्ररुदितमासीत्।)

---

तीर्थभूतस्य = सत्पात्रभूतस्य, साधोः=साध्नोति परकार्याणि इति साधुस्तस्य=परोपकारशीलस्येत्यर्थः। सम्भवः=उत्पत्तिः, न क्वाऽपीत्यर्थः। नाऽन्यः कोऽपि स्वप्राणव्ययेनाऽपि परार्थं प्रति यततेति भावः।

लक्ष्मण इति। जनस्थानस्य = एतन्नामकदण्डकारण्यैकदेशस्य, पश्चिमतः = प्रत्यक्तः, कुञ्जवान् नाम पर्वतः = 'कुञ्जवान्' इति नाम्ना प्रसिद्धः शैलः, 'चित्रकुञ्जवान्' इति पुस्तकान्तरस्य पाठः। दनुकबन्धाऽधिष्ठितः=दनुकबन्धेन=दनुनामकेन शिरोरहितेन केनचिद्राक्षसेन, अधिष्ठितः = अध्युषितः, 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्' इत्यमरः। दण्डकारण्यभागः=दण्डकारण्यस्य, भागः = अंशः, एकदेश इत्यर्थः, अमुष्य = कुञ्जवतः पर्वतस्य, परिसरे = पर्यन्तभुवि, 'पर्यन्तभूः परिसरः' इत्यमरः, 'ऋष्यमूकपर्वते' इति पाठे ऋष्यमूकाख्ये शैल इत्यर्थः। मतङ्गाश्रमपदं = मतङ्गस्य=मतङ्गनाम्नः कस्यचिन्मुनेः, आश्रमपदं = तपःस्थानम्। सिद्धा = तपःसिद्धा, शबरतापसी = शबरजातीया काचन तपस्विनी, पम्पाऽभिधानं = पम्पा अभिधानं यस्य तत् = पम्पाख्यम्, पद्मसरः = पद्मप्रचुरं सरः = कासारः, अस्तीति शेषः।

सीतेति। यत्र = पम्पासरसि, विच्छिन्नाऽमर्षधीरत्वम् = अमर्षश्च धीरत्वं च अमर्षधीरत्वे, तत्र अमर्षो रावणविषयः क्रोधः, धीरत्वं धैर्यम्, विच्छिन्ने अमर्षधीरत्वे यस्मिन्कर्मणि तद्यथा तथेति क्रियाविशेषणम् = नष्टक्रोधधैर्यं यथा तथेत्यर्थः,

---

पकारोंकी फिर कहाँ उत्पत्ति सम्भव है ?

लक्ष्मण—जनस्थानके पश्चिममें दनुनामक कबन्धसे निवास किया गया दण्डकारण्यका एक भाग यह कुञ्जवान् नामका पर्वत है। इसकी पर्यन्तभूमिमें मतङ्ग ऋषिका आश्रमस्थान है। वहाँपर श्रमणा नामकी सिद्ध शबरतपस्विनी है और यह वही पम्पा नामका कमलोंसे भरा हुआ तालाब है।

सीता—जहाँपर आर्यपुत्र क्रोध और धैर्यको छोडकर पुक्का फाडकर रोये थे।

---

* 'ऋष्यमूकपर्वते' इति पुस्तकान्तरपाठः।

रामः—देवि ! परं रमणीयमेतत्सरः ।

एतस्मिन्मदकलमल्लिकाक्षपक्ष-
न्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।
बाष्पाम्भःपरिपतनोद्गमान्तराले
संदृष्टाः कुवलयिनो मया*विभागाः ॥ ३१ ॥

'विसज्जिदामरिसधीरत्तणम्' इति पाठे 'विसृष्टाऽमर्षधीरत्वम्' इति संस्कृतच्छाया, तत्र त्यक्तक्रोधधैर्यमित्यर्थः, विच्छड्डिदामरिसाधीणम्' इति पाठे विच्छर्दिताऽमर्षाऽधीनम्' इति संस्कृतच्छाया, अस्य प्रदीप्ताऽसहिष्णुताऽधीनम्' इत्यर्थः । प्रमुक्तकण्ठं—प्रमुक्तः = प्रकर्षेण त्यक्तः, कण्ठः = कण्ठस्वरः, लक्षणयाऽयमर्थः, यस्मिन् कर्मणि तद्यथा तथा ।

राम इति । एतत्=इदं, परम् = अत्यन्तम् , रमणीयम् = मनोहरम् ,=सरः= पम्पाख्यमित्यर्थः ।

एतस्मिन्निति । एतस्मिन् मदकलमल्लिकाक्षपक्षन्याधूतस्फुरदुरुदण्डपुण्डरीकाः कुवलयिनो विभागा मया बाष्पाम्भःपरिपतनोद्गमान्तराले संदृष्टा इत्यन्वयः । एतस्मिन् = पम्पासरसि, मदकलमल्लिकाक्षपक्षन्याधूतस्फुरदुरुदण्डपुण्डरीकाः=मदेन कलः = अस्फुटमधुरशब्दः, येषां ते मदकलास्तादृशा ये मल्लिकाक्षाः = मलिनैश्चञ्चुचरणैर्युक्ता हंसविशेषाः, तेषां पक्षैः = पतत्रैः, न्याधूतानि = कम्पितानि, स्फुरन्ति = शोभमानानि, उरुदण्डानि = बृहन्नालानि, पुण्डरीकाणि = श्वेतकमलानि, येषु ते; तथैव कुवलयिनः = उत्पलयुक्ताः, विभागाः = पम्पासरःप्रदेशाः, मया = रामचन्द्रेण, 'भुवः' इति पाठे 'भुवो विभागाः' इत्यन्वयः कार्यः । बाष्पाम्भःपरिपतनोद्गमाऽन्तराले = बाष्पाऽम्भसाम् = अश्रुजलानाम् , परिपतनं = क्षरणम् , उद्गमश्च= नेत्रयोर्मध्ये प्रादुर्भावश्च, तयोरन्तरालं = मध्यकालः, तस्मिन् । संदृष्टाः = विलोकिताः । अश्रुपाताऽऽविर्भावयोर्नेत्रपिधानाद्दर्शनाऽभावः, अतस्तन्मध्यकाले प्रतिबन्धाऽभावात् त्वद्विरहाऽनुभूतावपि तादृशा रमणीयाः पम्पासरःप्रदेशा मया विलोकिताः, एतेन विरहदुःखवृद्धिर्गम्यते । प्रहर्षिणी वृत्तम् ॥ ३१ ॥

राम—देवि ! यह पम्पा सरोवर वस्तुतः सुन्दर है ।

यहाँपर मदसे मधुरशब्दवाले मल्लिकाक्ष नामक हंसविशेषोंके पङ्खोंसे कम्पित और शोभित बड़े नालदण्डोंवाले श्वेतकमलोंसे युक्त पम्पासरोवरके प्रदेशोंको मैंने आँसुओंके गिरने और निकलनेके मध्य समयमें देखा ॥ ३१ ॥

* 'भुवः' इति पाठान्तरम् ।

स्तीर्थभूतस्य साधोः संभवः ?

लक्ष्मणः—अयमसौ जनस्थानस्य पश्चिमतः कुञ्जवान्नाम पर्वतो दनुकवन्धाधिष्ठितो दण्डकारण्यभागः। तदिदममुष्य परिसरे* मतङ्गाश्रमपदम्। तत्र श्रमणा नाम सिद्धा शवरतापसी। तदेतत्पम्पाभिधानं पद्मसरः।

सीता—जत्थ किल अज्जउत्तेण विच्छिण्णामरिसधीरत्तणं पमुक्ककण्ठं परुण्ण आसि। (यत्र किलार्यपुत्रेण विच्छिन्नामर्षधीरत्व प्रमुक्तकण्ठं प्ररुदितमासीत्।)

---

तीर्थभूतस्य = सत्पात्रभूतस्य, साधो॰=साध्नोति परकार्याणि इति साधुस्तस्य=परोपकारशीलस्येत्यर्थ॰। सम्भव =उत्पत्ति॰, न क्वाऽपीत्यर्थ॰। नाऽन्यः कोऽपि स्वप्राणव्ययेनाऽपि परार्थं प्रति यतेतेति भाव॰।

लक्ष्मण इति। जनस्थानस्य = एतन्नामकदण्डकारण्यैकदेशस्य, पश्चिमत॰ = प्रत्यक्त॰, कुञ्जवान् नाम पर्वत॰ = 'कुञ्जवान्' इति नाम्ना प्रसिद्ध॰ शैलः, 'चित्रकुञ्जवान्' इति पुस्तकान्तरस्य॰ पाठ॰। दनुकवन्धाऽधिष्टित =दनुकवन्धेन= दनुनामकेन शिरोरहितेन केनचिद्राक्षसेन, अधिष्टित = अध्युषित॰, 'कवन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्' इत्यमर॰। दण्डकारण्यभाग॰=दण्डकारण्यस्य, भाग॰ = अंशः, एकदेश इत्यर्थ॰, अमुष्य = कुञ्जवत पर्वतस्य, परिसरे = पर्यन्तभुवि, 'पर्यन्तभू॰ परिसर' इत्यमर॰, 'ऋष्यमूकपर्वते' इति पाठे ऋष्यमूकाख्ये शैल इत्यर्थ। मतङ्गाश्रमपदं = मतङ्गस्य=मतङ्गनाम्न॰ कस्यचिन्मुनेः, आश्रमपदं = तप॰स्थानम्। सिद्धा = तप॰सिद्धा, शवरतापसी = शवरजातीया काचन तपस्विनी, पम्पाऽभिधानं = पम्पा अभिधानं यस्य तत् = पम्पाख्यम्, पद्मसरः = पद्मप्रचुरं सर॰ = कासार॰, अस्तीति शेष।

सीतेति। यत्र = पम्पासरसि, विच्छिन्नाऽमर्षधीरत्वम् = अमर्षश्च धीरत्वं च अमर्षधीरत्वे, तत्र अमर्षो रावणविषय॰ क्रोध॰, धीरत्वं धैर्यम्, विच्छिन्ने अमर्षधीरत्वे यस्मिन्कर्मणि तद्यथा तथेति क्रियाविशेषणम् = नष्टक्रोधधैर्यं यथा तथेत्यर्थ॰,

---

पकारोकी फिर कहाँ उत्पत्ति सम्भव है ?

लक्ष्मण—जनस्थानके पश्चिममें दनुनामक कवन्धसे निवास किया गया दण्डकारण्यका एक भाग यह कुञ्जवान् नामका पर्वत है। इसकी पर्यन्तभूमिमें मतङ्ग ऋषिका आश्रमस्थान है। वहाँपर श्रमणा नामकी सिद्ध शवरतपस्विनी है और यह वही पम्पा नामका कमलोंसे भरा हुआ तालाव है।

सीता—जहाँपर आर्यपुत्र क्रोध और धैर्यको छोड़कर पुक्का फाड़कर रोये थे।

---

* 'ऋष्यमूकपर्वते' इति पुस्तकान्तरपाठ।

राम:—देवि ! परं रमणीयमेतत्सरः ।

एतस्मिन्मदकलमल्लिकाक्षपक्ष-
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।
बाष्पाम्भःपरिपतनोद्गमान्तराले
संदृष्टाः कुवलयिनो मया* विभागाः ॥ ३१ ॥

'विसज्जिदामरिसधीरत्तणम्' इति पाठे 'विसृष्टाऽमर्षधीरत्वम्' इति संस्कृतच्छाया, तत्र त्यक्तक्रोधधैर्यमित्यर्थः, विच्छड्डिदामरिसाधीणम्' इति पाठे विच्छर्दिताऽमर्षाऽधीनम्' इति संस्कृतच्छाया, अस्य प्रदीप्ताऽसहिष्णुताऽधीनम्' इत्यर्थः । प्रमुक्तकण्ठं-प्रमुक्तः = प्रकर्षेण त्यक्तः, कण्ठः = कण्ठस्वरः, लक्षणयाऽयमर्थः, यस्मिन् कर्मणि तद्यथा तथा ।

राम इति । एतत्=इदं, परम् = अत्यन्तम् , रमणीयम् = मनोहरम् ,=सरः= पम्पाख्यमित्यर्थः ।

एतस्मिन्निति । एतस्मिन् मदकलमल्लिकाक्षपक्षव्याधूतस्फुरदुरुदण्डपुण्डरीकाः कुवलयिनो विभागा मया बाष्पाम्भःपरिपतनोद्गमान्तराले संदृष्टा इत्यन्वयः । एतस्मिन् = पम्पासरसि, मदकलमल्लिकाक्षपक्षव्याधूतस्फुरदुरुदण्डपुण्डरीकाः=मदेन कलः = अस्फुटमधुरशब्दः, येषां ते मदकलास्तादृशा ये मल्लिकाक्षाः = मलिनैश्चञ्चुचरणैर्युक्ता हंसविशेषाः, तेषां पक्षैः = पतत्रैः, व्याधूतानि = कम्पितानि, स्फुरन्ति = शोभमानानि, उरुदण्डानि = बृहन्नालानि, पुण्डरीकाणि = श्वेतकमलानि, येषु ते; तथैव कुवलयिन = उत्पलयुक्ताः, विभागाः = पम्पासर प्रदेशाः, मया = रामचन्द्रेण, 'भुवः' इति पाठे 'भुवो विभागा' इत्यन्वयः कार्यः । बाष्पाम्भःपरिपतनोद्गमाऽन्तराले = बाष्पाऽम्भसाम् = अश्रुजलानाम् , परिपतनं = क्षरणम् , उद्गमश्च= नेत्रयोर्मध्ये प्रादुर्भावश्च, तयोरन्तरालं = मध्यकालः, तस्मिन् । संदृष्टाः = विलोकिता । अश्रुपाताऽऽविर्भावयोर्नेत्रपिधानाद्दर्शनाऽभावः, अतस्तन्मध्यकाले प्रतिबन्धाऽभावात् त्वद्विरहाऽनुभूतावपि तादृशा रमणीयाः पम्पासरप्रदेशा मया विलोकिताः, एतेन विरहदुःखवृद्धिर्गम्यते । प्रहर्षिणी वृत्तम् ॥ ३१ ॥

राम—देवि ! यह पम्पा सरोवर बहुत सुन्दर है ।

यहांपर मदसे मधुरशब्दवाले मल्लिकाक्ष नामक हंसविशेषोंके पंखोंसे कम्पित और शोभित बडे नालदण्डोंवाले श्वेतकमलोंसे युक्त पम्पासरोवरके प्रदेशोंको मैंने आँसुओंके गिरने और निकलनेके मध्य समयमें देखा ॥ ३१ ॥

* 'भुवः' इति पाठान्तरम् ।

स्तीर्थभूतस्य साधोः संभवः ?

लक्ष्मणः—अयमसौ जनस्थानस्य पश्चिमतः कुञ्जवान्नाम पर्वतो दनुकबन्धाधिष्ठितो दण्डकारण्यभागः। तदिदममुष्य परिसरे* मतङ्गाश्रमपदम्। तत्र श्रमणा नाम सिद्धा शबरतापसी। तदेतत्पम्पाभिधानं पद्मसरः।

सीता—जत्थ किल अज्जउत्तेण विच्छिण्णामरिसधीरत्तणं पमुक्ककण्ठं परुण्णं आसि। (यत्र किलार्यपुत्रेण विच्छिन्नामर्षधीरत्व प्रमुक्तकण्ठं प्ररुदितमासीत्।)

---

तीर्थभूतस्य = सत्पात्रभूतस्य, साधो =साध्नोति परकार्याणि इति साधुस्तस्य=परोपकारशीलस्येत्यर्थः। सम्भव =उत्पत्तिः, न क्वाऽपीत्यर्थः। नाऽन्यः कोऽपि स्वप्राणव्ययेनाऽपि परार्थं प्रति यतेतेति भाव ।

लक्ष्मण इति। जनस्थानस्य = एतन्नामकदण्डकारण्यैकदेशस्य, पश्चिमतः = प्रत्यक्तः, कुञ्जवान् नाम पर्वतः = 'कुञ्जवान्' इति नाम्ना प्रसिद्धः शैलः, 'चित्रकुञ्जवान्' इति पुस्तकान्तरस्थः पाठः। दनुकबन्धाऽधिष्ठित =दनुकबन्धेन= दनुनामकेन शिरोरहितेन केनचिद्राक्षसेन, अधिष्ठित = अध्युषितः, 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्' इत्यमरः। दण्डकारण्यभाग =दण्डकारण्यस्य, भाग = अंशः, एकदेश इत्यर्थः, अमुष्य = कुञ्जवतः पर्वतस्य, परिसरे = पर्यन्तभुवि, 'पर्यन्तभूः परिसर' इत्यमरः, 'ऋष्यमूकपर्वते' इति पाठे ऋष्यमूकाख्ये शैल इत्यर्थः। मतङ्गाश्रमपदं = मतङ्गस्य=मतङ्गनाम्नः कस्यचिन्मुनेः, आश्रमपदं = तप स्थानम्। सिद्धा = तपःसिद्धा, शबरतापसी = शबरजातीया काचन तपस्विनी, पम्पाऽभिधानं = पम्पा अभिधानं यस्य तत् = पम्पाख्यम्, पद्मसरः = पद्मप्रचुरं सर = कासारः, अस्तीति शेष ।

सीतेति। यत्र = पम्पासरसि, विच्छिन्नाऽमर्षधीरत्वम् = अमर्षश्च धीरत्वं च अमर्षधीरत्वे, तत्र अमर्षो रावणविषयः क्रोधः, धीरत्वं धैर्यम्, विच्छिन्ने अमर्षधीरत्वे यस्मिन्कर्मणि तद्यथा तथेति क्रियाविशेषणम् = नष्टक्रोधधैर्यं यथा तथेत्यर्थः,

---

पकारोकी फिर कहाँ उत्पत्ति सम्भव है ?

**लक्ष्मण**—जनस्थानके पश्चिममें दनुनामक कबन्धसे निवास किया गया दण्डकारण्यका एक भाग यह कुञ्जवान् नामका पर्वत है। इसकी पर्यन्तभूमिमें मतङ्ग ऋषिका आश्रमस्थान है। वहाँपर श्रमणा नामकी सिद्ध शबरतपस्विनी है और यह वही पम्पा नामका कमलोंसे भरा हुआ तालाब है।

**सीता**—जहाँपर आर्यपुत्र क्रोध और धैर्यको छोडकर पुक्का फाडकर रोये थे।

---

* 'ऋष्यमूकपर्वते' इति पुस्तकान्तरपाठ ।

रामः—देवि ! परं रमणीयमेतत्सरः ।

एतस्मिन्मदकलमल्लिकाक्षपक्ष-
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।
बाष्पाम्भःपरिपतनोद्गमान्तराले
संदृष्टाः कुवलयिनो मया*विभागाः ॥ ३१ ॥

---

'विसज्जिदामरिसधीरत्तणम्' इति पाठे 'विसृष्टाऽमर्षधीरत्वम्' इति संस्कृतच्छाया. तत्र त्यक्तक्रोधधैर्यमित्यर्थः, विच्छड्डिदामरिसाधीणम्' इति पाठे विच्छर्दिताऽमर्षाऽधीनम्' इति संस्कृतच्छाया, अस्य प्रदीप्ताऽसहिष्णुताऽधोनम्' इत्यर्थः । प्रमुक्तकण्ठं-प्रमुक्तः = प्रकर्षेण त्यक्तः, कण्ठः = कण्ठस्वरः, लक्षणयाऽयमर्थः, यस्मिन् कर्मणि तद्यथा तथा ।

राम इति । एतत्=इदं, परम् = अत्यन्तम् , रमणीयम् = मनोहरम् ,=सरः= पम्पाख्यमित्यर्थः ।

एतस्मिन्निति । एतस्मिन् मदकलमल्लिकाक्षपक्षव्याधूतस्फुरदुरुदण्डपुण्डरीकाः कुवलयिनो विभागाः मया वाष्पाम्भःपरिपतनोद्गमान्तराले संदृष्टा इत्यन्वयः । एतस्मिन् = पम्पासरसि, मदकलमल्लिकाक्षपक्षव्याधूतस्फुरदुरुदण्डपुण्डरीकाः=मदेन कलः = अस्फुटमधुरशब्दः, येषां ते मदकलास्तादृशा ये मल्लिकाक्षाः = मलिनैश्चञ्चुचरणैर्युक्ता हंसविशेषाः, तेषां पक्षैः = पतत्रैः, व्याधूतानि = कम्पितानि, स्फुरन्ति = शोभमानानि, उरुदण्डानि = बृहन्नालानि, पुण्डरीकाणि = श्वेतकमलानि, येषु ते; तथैव कुवलयिनः = उत्पलयुक्ताः, विभागाः = पम्पासरःप्रदेशाः, मया = रामचन्द्रेण, 'भुवः' इति पाठे 'भुवो विभागाः' इत्यन्वयः कार्यः । वाष्पाम्भःपरिपतनोद्गमाऽन्तराले = बाष्पाऽम्भसाम् = अश्रुजलानाम् , परिपतनं = क्षरणम् , उद्गमश्च= नेत्रयोर्मध्ये प्रादुर्भावश्च, तयोरन्तरालं = मध्यकालः, तस्मिन् । संदृष्टाः = विलोकिताः । अश्रुपाताऽऽविर्भावयोर्नेत्रपिधानाद्दर्शनाऽभावः, अतस्तन्मध्यकाले प्रतिबन्धाऽभावात् त्वद्विरहाऽनुभूतावपि तादृशा रमणीयाः पम्पासरःप्रदेशा मया विलोकिताः, एतेन विरहदुःखवृद्धिर्गम्यते । प्रहर्षिणी वृत्तम् ॥ ३१ ॥

---

राम—देवि ! यह पम्पा सरोवर बहुत सुन्दर है ।

यहाँपर मदसे मधुरशब्दवाले मल्लिकाक्ष नामक हंसविशेषोंके पंखोंसे कम्पित और शोभित बड़े नालदण्डोंवाले श्वेतकमलोंसे युक्त पम्पासरोवरके प्रदेशोंको मैंने आँसुओंके गिरने और निकलनेके मध्य समयमें देखा ॥ ३१ ॥

---

* 'भुवः' इति पाठान्तरम् ।

लक्ष्मणः—अयमार्यो हनूमान्।

सीता—एसो सो चिरणिव्वूढजीवलोअपच्चुद्धरणगुरुओवआ महाणुभावो मारुदी। (एष स चिरनिर्व्यूढजीवलोकप्रत्युद्धरणगुरूपकारी महानुभावो मारुतिः।)

रामः—

दिष्ट्या सोऽयं महाबाहुरञ्जनानन्दवर्धनः।
यस्य वीर्येण कृतिनो वयं च भुवनानि च॥ ३२॥

---

लक्ष्मण इति। अयं = पुरो दृश्यमानः, आर्यः = पूज्यः, हनूमान् = प्रशस्तहनुः अस्य स्त इति, प्रशंसाया मतुप्, प्राशस्त्यं च दृढत्वेन बोध्यम्, 'शरादीनां च' इति संज्ञाया दीर्घत्वम्, 'हनुमान्' इति ह्रस्वपाठे विशेषणत्वेनाऽसंज्ञाया दीर्घाभावः।

सीतेति। चिरनिर्व्यूढजीवलोकप्रत्युद्धरणगुरूपकारी = चिरात् निर्व्यूढं निष्पादितम्, यत् जीवलोकस्य = मनुष्यलोकस्य, प्रत्युद्धरणं = दुःखाऽपनयनम्, गुरुः = गौरवविशिष्टः श्रेष्ठो वा, स चाऽसौ उपकारी = उपकारशीलः। 'चिरणिव्विण्ण०' इति पाठे 'चिरनिर्विण्ण०' इति संस्कृतच्छाया, तस्य चिरनिर्विण्णस्य बहुकालदुःखितस्य, जीवलोकस्य इति अन्वययोजना कार्या। महाऽनुभावः महाप्रभावः।

दिष्ट्येति। दिष्ट्या अयं स महाबाहुः अञ्जनाऽऽनन्दवर्द्धनः (अस्ति) यस्य वीर्येण भुवनानि च वयं च कृतिनः इत्यन्वयः। दिष्ट्या = पदमिदमानन्दद्योतकमव्ययम्, 'दिष्ट्या समुपजोषं चेत्यानन्दे' इत्यमरः; अयं = सन्निकृष्टस्थः, महाबाहुः = दीर्घभुजः, आजानुबाहुरित्यर्थः, अञ्जनानन्दवर्द्धनः = अञ्जनाऽऽख्यायाः स्वमातुर्हर्षोत्पादको हनूमदभिख्य इत्यर्थः, अस्तीति शेषः। यस्य = हनूमतः वीर्येण = पराक्रमेण, भुवनानि च = लोकाश्च, लक्षणया अन्ये जनाश्चेत्यर्थः, वयं च = रामादयश्च, कृतिनः = कृतार्थाः स्म इति शेषः, सीतोद्धरणेन लोककण्टकरावणवधेन चेति भावः॥ ३२॥

---

लक्ष्मण—ये पूजनीय हनूमान्‌जी हैं।

सीता—ये बहुत कालसे किये गये जीवलोकके प्रत्युद्धारसे गौरवयुक्त उपकारी महान् प्रभाववाले वायुपुत्र हनुमान्‌जी हैं।

राम—भाग्यसे ये वे महाबाहु अञ्जनाके आनन्दको बढानेवाले हनुमान्‌जी हैं, जिनके पराक्रमसे लोक और हमलोग कृतार्थ हो गये हैं॥ ३२॥

सीता—वच्छ ! एसो सो कुसुमिदकदम्बताण्डविअबहिणो किंणामहेओ गिरी ? जत्थ अणुभावसोहग्गमेत्तपरिसेससुन्दरसिरी मुच्छन्दो तुए परुण्णेण ओलम्बिओ तरुअले अज्जउत्तो आलिहिदो ।· ( वत्स ! एष स कुसुमितकदम्बताण्डवितबर्हिणः किन्नामधेयो गिरिः ? यत्रानुभावसौभाग्यमात्रपरिशेषसुन्दरश्रीर्मूर्च्छंस्त्वया प्ररुदितेनावलम्बितस्तरुतल आर्यपुत्र आलिखितः । )

लक्ष्मणः—

सोऽयं शैलः ककुभसुरभिर्माल्यवान्नाम यस्मि-
न्नीलः स्निग्धः श्रयति शिखरं नूतनस्तोयवाहः ।

सीतेति । कुसुमितकदम्बताण्डवितबर्हिणः = कुसुमानि सञ्जातानि येषां ते कुसुमिताः = संजातपुष्पा इत्यर्थः, 'तदस्य सजातं तारकादिभ्य इतच्' इतीतच् प्रत्ययः, ताण्डवानि संजातानि येषां ते ताण्डविताः = ताण्डवनृत्ययुक्ता इत्यर्थः, पूर्ववत् इतच्प्रत्ययः, कुसुमिता ये कदम्बाः = तन्नामधेयास्तरवस्तेषु ताण्डविताः बर्हिणाः = मयूराः यस्मिन् सः, 'मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्' । इत्यमरः । अनुभावसौभाग्यमात्रपरिशेषसुन्दरश्रीः = अनुभावस्य = प्रभावस्य, यत्सौभाग्यम् = सुभगत्वम् , तन्मात्रेण परिशेषा = अवशिष्टा, सुन्दरी = मनोहरा, श्रीः = शोभा, यस्य सः, 'सुन्दरश्री' इति स्थाने 'धूसरश्रीः' इति पुस्तकान्तरपाठस्तत्र धूसरा = ईषत्पाण्डुरेत्यर्थः । मूर्च्छन् = कश्चित्कालं मूर्च्छां प्राप्नुवन्नित्यर्थः । प्ररुदितेन = रोदनं रुदितं 'नपुंसके भावे क्तः' इति क्तप्रत्ययः, प्रकृष्टं रुदितं यस्य तेन = अश्रु विमुञ्चतेत्यर्थः त्वया भवता लक्ष्मणेनेत्यन्वयः । अवलम्बितः=धृतः, आर्यपुत्रः=रामचन्द्रः, तरुतले=वृक्षस्याधोभागे, आलिखितः=चित्रितः ।

सोऽयमिति । अयं स ककुभसुरभिः माल्यवान्नाम शैलः ( अस्ति ) यस्मिन् नीलः स्निग्धः नूतनः तोयवाहः शिखरं श्रयति । आर्येण अस्मिन्—इत्यन्वयः । अयं = पुरो दृश्यमानः, सः=प्रसिद्धः, ककुभसुरभिः=ककुभानां विकाराः ककुभानि= अर्जुनपुष्पाणि, 'तस्य विकारः' इत्यण् 'पुष्पमूलेषु बहुलम्' इति तस्य लुप् च, 'इन्द्रद्रुः ककुभोऽर्जुनः ।' इत्यमरः, तैः ककुभैः सुरभिः=घ्राणतर्पणगन्धयुक्तः,

सीता—वत्स ! फूले हुए कदम्ब वृक्षोंमें ताण्डव नृत्य करनेवाले मयूरोंसे युक्त इस पर्वतका क्या नाम है ? जहाँपर पेड़के नीचे बहुत रोते हुए आपसे सँभाले गये, प्रभावके सौभाग्यमात्रसे अवशिष्ट सुन्दर शोभासे युक्त और मूर्च्छित होते हुए आर्यपुत्र चित्रित हुए हैं ।

लक्ष्मण—यह वही अर्जुन पुष्पोंसे खुशबूदार माल्यवान् नामका पर्वत है, जहांपर

आर्येणास्मिन्*** .... . ... . .. ......

राम:—

.........—विरम विरमातः परं न क्षमोऽस्मि
प्रत्यावृत्तः स पुनरिव मे जानकीविप्रयोगः ।

लक्ष्मणः—अतः परमार्यस्य तत्र भवता* राक्षसानां चापरिसङ्ख्यान्यु-

---

नील = श्याम, स्निग्धः = चिक्कण, नूतन = नवीन, तोयवाहः = मेघः, शिखरं = शृङ्गं, श्रयति = आश्रयति । आर्येण = पूज्येन, अस्मिन्=पर्वते । लक्ष्मणेन इत्युक्ते रामस्तमाक्षिप्य कथयति—विरमेति ।

**विरमेति** । विरम विरम । अत परं क्षम· न अस्मि । मे स जानकीविप्रयोगः पुन· प्रत्यावृत्त इव इत्यन्वय· । विरम विरम = विरामं कुरु विरामं कुरु, वाग्व्यापारादिति शेष·, तूष्णीं भवेत्यर्थ, 'वत्सैतस्मात्' इति पाठे–हे वत्स = हे तात ! एतस्मात् = माल्यवच्चित्रदर्शनात् 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इति पञ्चमी, विरमेत्यन्वयः । किमर्थमित्याकाङ्क्षायामाह—अत इति । अत परम् = अस्मादधिकं, द्रष्टुमिति शेषः, क्षम = समर्थ·, न अस्मि=न भवामि, स· = पूर्वोऽनुभूतः, मे = मम, जानकीविप्रयोग =सीतावियोग, पुन=भूय·, प्रत्यावृत्त· = आगत इव । इद रामवाक्यं भाव्यर्थसूचकम् । अत्र 'प्रत्यावृत्त इव' इति कथनात् क्रियोत्प्रेक्षाऽलङ्कारः । मन्दाक्रान्ता वृत्तम् । 'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्' इति तल्लक्षणम् ॥ ३३ ॥

**लक्ष्मण इति** । अत· परम् = अस्मादनन्तरम् । आर्यस्य = भवतः, तत्र = लङ्कादौ, भवता = विद्यमानानाम् । अपरिसंख्यानि = अविद्यमाना परिसंख्या = परिमिता संख्या येषा तानि = अपरिमितसंख्यानीत्यर्थ·, 'असंख्यातानि' इति पाठे अगणितानीत्यर्थ· । उत्तरोत्तराणि = उत्तरेभ्य उत्तराणि = उत्तरतराणि, परंपरं

---

नीला चिकना और नया मेघ चोटीपर आश्रय लेता है । आर्यने यहाँ—

**राम**—चुप रहो, चुप रहो । इसके बाद देखनेको समर्थ नहीं हूँ, सीताजीका वही विरह फिर लौट गया-सा मुझे लग रहा है ॥ ३३ ॥

**लक्ष्मण**—इसके अनन्तर आर्यके और लङ्कामें रहते हुए राक्षसोंके अनगिनत और अत्यु-

---

* 'तत्र' ...

त्तरोत्तराणि कर्माश्चर्याणि । परिश्रान्ता चेयमार्या । तद्विज्ञापयामि 'विश्राम्यताम्' इति ।

सीता—अज्जउत्त ! एदिणा चित्तदंसणेण पच्चुप्पण्णदोहलाए मए विण्णावणिज्जं अत्थि । ( आर्यपुत्र ! एतेन चित्रदर्शनेन प्रत्युत्पन्नदोहदाया मम विज्ञापनीयमस्ति । )

रामः—नन्वाज्ञापय ।

सीता—जाणे पुणोवि पसण्णगम्भीरासु वणराईसु विहरिअ पवित्तणिम्मलसिसिरसलिलं भअवदिं भाईरहिं ओगाहिस्सं ति । (जाने पुनरपि प्रसन्नगम्भीरासु वनराजिषु विहृत्य पवित्रनिर्मलशिशिरसलिलां भगवतीं भागीरथीमवगाहिष्य इति । )

---

प्रकृष्टानीत्यर्थः । कर्माश्चर्याणि = कर्मभिः = क्रियाभिः, आश्चर्याणि = आश्चर्योत्पादकानि, वृत्तानीति विशेष्यमध्याहार्यम् । परिश्रान्ता = जातपरिश्रमा, विश्राम्यतां = विश्रामः क्रियताम्, आर्ययेति शेषः ।

सीतेति । आर्यपुत्र = प्राणनाथ । एतेन = पुरो दृश्यमानेनानेन, चित्रदर्शनेन= आलेख्यावलोकनेन, प्रत्युत्पन्नदोहदायाः = प्रत्युत्पन्नः = संजातः, दोहदः=गर्भिणीमनोरथः, यस्यास्तस्याः । विज्ञापनीयं = विज्ञाप्यं, निवेदनीयमित्यर्थः ।

राम इति । ननु = अनुनयार्थकमव्ययमिदम्, आज्ञापय = आदिश, सहधर्मिण्याः सत्यास्तत्राऽपि गर्भवत्याः सीताया दोहदपूरणं रामस्य कर्तव्यं तदुपरि अरुन्धत्या, मातृणा शान्तायाश्च 'यः कश्चिद्गर्भदौहृददोदयः' ( पृ० २० ) इति वाक्याच्च साऽतिशयं सीतावाक्यस्य प्रभुसम्मितत्वेन 'आज्ञापयेति' कथनं सङ्गच्छते ।

सीतेति । जाने = विचारयामि । प्रसन्नगम्भीरासु = प्रसन्नाः = प्रसादयुक्ताः, श्वापदराहित्येनेति भावः, गम्भीराः = लतापादपादिभिर्गहनाः, अधर्षणीया इत्यर्थः, तासु, एतादृशीषु वनराजिषु = अरण्यपङ्क्तिषु = विहृत्य = विहारं कृत्वा,

---

त्कृष्ट कार्मोसे आश्चर्योत्पादक चरित्र हैं । यह आर्या भी थक गई हैं, इसलिए निवेदन करता हूं कि—'विश्राम करें' ।

सीता—आर्यपुत्र ! इस चित्रदर्शनसे मुझे लालसा उत्पन्न हुई है, अतः कुछ निवेदन करना है ।

राम—देवि ! आज्ञा दो ।

सीता—फिर भी प्रसन्न और गम्भीर वनपङ्क्तियोंमें विहार करके पवित्र, निर्मल और ठण्ढे जलसे युक्त गङ्गाजीमें स्नान करनेका विचार करती हूं ।

रामः—वत्स लक्ष्मण !

लक्ष्मणः—एषोऽस्मि ।

रामः—वत्स ! अचिरादेव संपादनीयो दौर्हृद इति संप्रत्येव गुरुभिः संदिष्टम् । तदस्खलितसंपातं रथमुपस्थापय ।

सीता—अज्जउत्त ! तुह्मेहिं वि आअन्दव्वम् । ( आर्यपुत्र ! युष्माभिरप्यागन्तव्यम् ।

रामः—अतिकठिनहृदये ! एतदपि वक्तव्यम् ?

---

'विहरिष्यामि' इति पाठे विहार करिष्यामीत्यर्थः । पवित्रनिर्मलशिशिरसलिला = पवित्रं = पूतं, स्नानादियोग्यमित्यर्थः, निर्मलं = स्वच्छम्, 'सौम्यम्' इति पाठे प्रवेशयोग्यमित्यर्थ, शिशिरं = शीतलम्, सलिलं = जलम्, यस्यास्ताम्, 'अवगाह्याम्' इति पाठे पूर्वोक्तानि सर्वाणि विशेषणानि पुंल्लिङ्गानि, अवगाहः = स्नानं यस्यां ताम् इति विग्रहोऽर्थश्च, भागीरथीं = गङ्गाम्, अवगाहिष्ये = अवगाहन करिष्यामि, स्नास्यामीत्यर्थ, निकटभविष्यत्काल एवेति शेष । वाक्यमेतत्सीताया भाविनिर्वासनव्यञ्जकमित्यवधेयम् ।

लक्ष्मण इति । एषोऽस्मि = अयमस्मि, भवदाज्ञापालनाऽर्थं समीपतरमेव विद्यमानोऽस्मीति वाक्याऽर्थः ।

राम इति । वत्स = प्रिय लक्ष्मण ! अचिरादेव = शीघ्रमेव, सम्पादनीय = पूरणीयः, दौर्हृद = सीताया अभिलाष, इति = अनेन प्रकारेण, सम्प्रत्येव = इदानीमेव, गुरुभि = गुरुजनैः, अरुन्धतीप्रभृतिभिः पूज्यजनैरित्यर्थः । सन्दिष्टं=सन्देशः प्रहित । तत् = तस्माद्धेतोः, अस्खलितसम्पातम्=अस्खलित = भ्रंशरहितः, अव्याहत इत्यर्थ, संपात = गमनं यस्य तम्, उपस्थापय = आनय ।

सीतेति । युष्माभिरपि = भवद्भिरपि, आगन्तव्यम् = आयातव्यम् ।

राम इति । अतिकठिनहृदये = अति=अत्यन्तं, कठिनं = कठोरम्, हृदयं =

---

राम—वत्स लक्ष्मण !

लक्ष्मण—मैं उपस्थित हूं ।

राम—वत्स ! 'गर्भिणीका अभिलाष जल्दी ही पूर्ण करना चाहिए' ऐसा अभी गुरुजनोंने सन्देश दिया है । इस कारणसे विना रुकावटके चलनेवाला रथ तैयार करो ।

सीता—आर्यपुत्र ! आपको भी आना चाहिए ।

राम—हे अतिशय कठोर हृदयवाली ! यह भी कहना चाहिए ?

सीता—तेण हि पिअं मे । ( तेन हि प्रियं मे । )

लक्ष्मणः—यदाज्ञापयत्यार्यः । ( इति निष्क्रान्तः । )

राम—प्रिये ! वातायनोपकण्ठे संविष्टा भव ।

सीता—एव्वं होदु । ओहरिदह्मि परिस्समणिद्दाए । ( एवं भवतु । अपहृतास्मि परिश्रमनिद्रया । )

रामः—तेन हि निरन्तरमवलम्बस्व मामत्र शयनाय ।

जीवयन्निव ससाध्वसश्रमस्वेदविन्दुरधिकण्ठमर्प्यताम् ।

---

चित्तम् , यस्यास्तत्सम्बुद्धौ, एतदपि = मम तत्र गमनमपि, वक्तव्यं = न वक्तव्यमित्यर्थः । त्वयाऽकथितेऽपि एतद्भविष्यत्येवेति भावः ।

राम इति । वातायनोपकण्ठे = गवाक्षनिकटे, 'वातायनावर्तके' इति पुस्तकान्तरपाठे—वातायनस्य आवर्तकः = अपवारकः, यत्रस्थो जनोऽन्यैर्न दृश्यत इति भावः, संविष्टा = कृतसंवेशा, शयानेत्यर्थः ।

सीतेति । एवं भवतु = वातायनसमीपे शये इति भावः । परिश्रमनिद्रया=परिश्रमेण = वहुकालं यावत् चित्रदर्शनोत्पन्नायासेन, निद्रया = स्वापेन, अपहृतास्मि = आकृष्टाऽस्मि ।

राम इति । तेन = निद्राऽपहरणेन हेतुना, अत्र = वातायनसमीपे, निरन्तरं = निरवकाशं, गाढमित्यर्थः, क्रियाविशेषणमेतत् । अवलम्बस्व = धारय, मा = रामचन्द्रम् , शयनाय = स्वापाय ।

जीवयन्निति । ससाध्वसश्रमस्वेदविन्दुः ( अत एव ) ऐन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः जीवयन्निव वाहुः अधिकण्ठम् अर्प्यताम् इत्यन्वयः । ससाध्वसश्रमस्वेदविन्दुः = साध्वसं = चित्रे परशुरामादिदर्शनजनितं भयम् , श्रमः = वहुकालपर्यन्तं चित्रदर्शनेनोत्पन्नः आयासः, ताभ्यां ये स्वेदविन्दवः = घर्मपृषन्ति,

---

सीता—तव मुझे प्रीतिकर है ।

लक्ष्मण—आर्यकी जैसी आज्ञा ( यह कहकर जाते हैं ) ।

राम—प्रिये ! खिड़कीके पास सो जाओ ।

सीता—ऐसा ही हो । थकावटकी नींदसे आकृष्ट हो गई हूं ।

राम—इस कारणसे यहां सोनेके लिए गाढभावसे मेरा सहारा ले लो ।

भय और परिश्रमके कारण पसीनेकी बूंदोंसे युक्त, चन्द्रमाकी किरणोंके स्पर्शसे पिघलने

वाहुरैन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः ॥ ३४ ॥
( तथा कारयन्सानन्दम् ) प्रिये ! किमेतत् ?
विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा

---

तैः सहितः । अत एव ऐन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः = इन्दोरिमा ऐन्दवाः=चन्द्रसम्बन्धिनः, ये मयूखाः = किरणाः तैश्चुम्बितः = स्पृष्टः, अत एव स्यन्दी=जलस्रवयुक्तः, चन्द्रकिरणसम्पर्केण चन्द्रकान्तमणिः स्रवतीति लोकप्रसिद्धिः, स चासौ चन्द्रमणिहारः = चन्द्रकान्तमणिमाला तस्य इव विभ्रमः = विलासः, यस्य सः । जीवयन्निव = जीवनं वितरन्निव, स्थित इति शेषः । एतादृशो वाहुः = स्वभुजः, अधिकण्ठ = कण्ठे, मदीयकण्ठ इत्यर्थः, कण्ठे इति अधिकण्ठ, विभक्त्यर्थेऽव्ययीभावः, अर्प्यतां = निधीयताम्, त्वयेति शेषः । अत्र लुप्तोपमायाः 'जीवयन्निवे' त्यत्र क्रियोत्प्रेक्षायाश्च सङ्करः । रथोद्धतावृत्तम्—'रान्नराविह रथोद्धता लगौ' इति-तल्लक्षणम् ॥ ३४ ॥

तथेति । तथा कारयन् = सीताभुजं स्वकण्ठे स्थापयन् । किमेतदिति प्रश्नेन अनिश्चयः सूच्यते ।

विनिश्चेतुमिति । ( हे सीते ! ) तव स्पर्शे स्पर्शे परिमूढेन्द्रियगणः विकारः मम चैतन्यं भ्रमयति समीलयति च; ( अत एवायम् ) सुखम् इति वा, दुःखम् इति वा, प्रमोहः, निद्रा वा विषविसर्पः किमु मदः किमु ( इति ) विनिश्चेतुं न शक्यः हि इत्यन्वयः । ( हे सीते ! ) तव = भवत्याः, स्पर्शे स्पर्शे = प्रतिस्पर्शं, परिमूढेन्द्रियगणः = परिमूढः = परिमोहं प्राप्तः स्वस्वव्यापाराऽसमर्थ इत्यर्थः, इन्द्रियगणः = चक्षुरादीन्द्रियसमूहः, येन सः, एतादृशो विकारः = अन्तःस्थिताऽवस्थाविशेषः, मम = रामस्य, चैतन्यं = ज्ञानं भ्रमयति = तिरोदधाति, भ्रान्तं करोतीत्यर्थः, संमीलयति च = प्रकाशयति च, त्वत्स्पर्शजन्यो विकारः कदाचिन्मदीयं ज्ञानमपहरति कदाचित्तु प्रकाशयति इति भावः । तदेवोपपादयति—( अतः = अस्मात्कारणात् ) अयं = विकारः, सुखम् इति वा = अनुकूलवेदनीयं वा, दुःखम् इति

---

वाली चन्द्रकान्तमणिमालाकी तरह विलासवाला और मुझे जीवित करते हुएकी तरह अपने बाहुको मेरे गलेमें डालो ॥ ३४ ॥

( ऐसा कराते हुए आनन्दके साथ ) प्रिये ! यह क्या है ?

तुम्हारे प्रत्येक स्पर्शमें इन्द्रियसमूहको मूढ करनेवाला विकार मेरे ज्ञानको कभी तिरोहित

प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः ।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो-
विकारश्चैतन्यं भ्रमयति च सम्मीलयति च ॥ ३५ ॥

सीता—धीरप्पसादा तुह्मेत्ति एत्थ दाणिं अच्चरिअम् * । ( धीरप्रसादा यूयमित्यत्रेदानीमाश्चर्यम् । )

राम—

म्लानस्य जीवकुसुमस्य विकासनानि
सन्तर्पणानि सकलेन्द्रियमोहकानि ।

---

वा = प्रतिकूलवेदनीयं वा, प्रमोहः = प्रकृष्टमूर्च्छा वा, 'प्रबोधः' इति पाठे जागर इत्यर्थः । निद्रा वा = स्वापो वा, विषविसर्पः किमु=विषस्य गरलस्य, विसर्पः = प्रसरणम् , किं ? मद किमु = मादकद्रव्योपयोगजन्यो विकारः किम् ? ( इति ) विनिश्चेतुं = विनिर्णेतुं, न शक्यः = न शक्यत इत्यर्थः, 'न शक्ये' इति पाठे अहं समर्थो नाऽस्मीत्यर्थः, हीति निश्चये । मद्विकारोऽयं त्वयापि ज्ञायत इति व्यज्यते । अत्र संशय एव पर्यवसानात् शुद्धसन्देहाऽलङ्कारः, तल्लक्षणं यथा—'सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः । शुद्धो निश्चयगर्भोऽसौ निश्चयान्त इति त्रिधा' इति । शिखरिणी वृत्तम् ॥ ३५ ॥

सीतेति । यूयमिति आदरार्थकं बहुवचनम् , धीरप्रसादाः = स्थिराऽनुग्रहाः, धीरपदस्य विद्वद्वाचकत्वेऽपि अचेतनेन प्रसादेन सह अन्वयाऽनुपपत्तेः लक्षणया स्थिराऽर्थपरकत्वम् । अत्र = एतत्कथने, आश्चर्यं ? काक्वा प्रश्नो व्यज्यते नाऽऽश्चर्यं, प्रियस्य प्रियंवदत्वे न किमप्याश्चर्यमिति भावः ।

म्लानस्येति । हे सरोरुहाक्षि ! एतानि ते सुवचनानि म्लानस्य जीवकुसुमस्य विकासनानि, संतर्पणानि सकलेन्द्रियमोहनानि, कर्णाऽमृतानि मनसश्च रसाय-

---

करता है और कभी प्रकाशित करता है । यह ( विकार ) सुख है वा दुःख है, मूर्च्छा है वा निद्रा है, विषका प्रसरण है वा मादकद्रव्यके सेवनसे उत्पन्न मद है ? यह निश्चय नहीं किया जा सकता है ॥ ३५ ॥

सीता—आप ( मेरे ऊपर ) स्थिर अनुग्रह करनेवाले हैं, इस कारण ऐसा कहनेमें क्या आश्चर्य है ?

राम—हे पद्मलोचने ! तुम्हारे ये कोमल वचन मुरझाये हुए जीवनपुष्पको विकसित करने

---

* 'इदो दाणींति किमवरम्' इति पाठान्तरम्, तस्य 'इत इदानीं किमपरम्' इतिच्छाया ।

एतानि ते सुवचनानि सरोरुहाक्षि !
कर्णामृतानि मनसश्च रसायनानि ॥ ३६ ॥

सीता—पिअवद ! एहि । संविसह्य । ( प्रियवद ! एहि । संविशाव । )
( इति शयनाय समन्ततोऽपि निरूपयति । )

रामः—अयि ! किमन्वेष्टव्यम् ?

---

नानि ( सन्ति ) इत्यन्वय । हे सरोरुहाक्षि = सरोरुहे इव अक्षिणी यस्याः सा सरोरुहाक्षी, तत्सम्बुद्धौ = हे कमललोचने ! 'बहुव्रीहौ सक्थ्यक्ष्णो स्वाङ्गात्षच्' इति समासाऽन्ते षचि 'षिद्गौरादिभ्यश्च' इति ङीष् । एतानि = अनन्तरोदीरितानि, ते = तव, सुवचनानि = मृदुभाषितानि, म्लानस्य = ग्लानस्य, सांसारिकतापपरम्परया शुष्कस्येति भाव , जीवकुसुमस्य = जीव एव कुसुम तस्य = जीवनपुष्पस्येत्यर्थ , विकासनानि = विकासजनकानि, संतर्पणानि = संतृप्तिजनकानि, सकलेन्द्रियमोहनानि = सर्वेन्द्रियव्यापाररोधकानि, कर्णाऽमृतानि = श्रोत्रपीयूषाणि, पीयूषवत् कर्णयोस्तृप्तिजनकानीति भाव , मनसश्च = चित्तस्य च, रसायनानि = रसायनतुल्यानि, रसायनौषधवत् शक्तिवर्द्धकानीत्यर्थ । यद्वा—रसः शृङ्गाररसस्तस्य अयनानि = आश्रयभूतानि, सन्तीति शेष । अत्र रूपकाऽलङ्कारः । वसन्ततिलका वृत्तम् ॥ ३६ ॥

सीतेति । प्रियवद—प्रियं वदतीति प्रियंवदस्तत्सबुद्धौ = प्रियभाषणशील ! । 'प्रियवशे वद खच्' इति खच् , 'अरुर्द्विषदजन्तस्य मुम्' इति मुम् । संविशावः = स्वपिव । शयनाय = शयितुं, 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । समन्ततः = सर्वत , निरूपयति = अन्विष्यति, उपधानमिति शेष ।

राम इति । किम् अन्वेष्टव्य = किं गवेषणीय, न किमपीत्यर्थ , अन्विष्यपदार्थस्य इहैव सान्निध्यादिति भाव । 'अपि सन्देष्टव्यम्' इति पाठे—अपि· प्रश्नाऽर्थक·, कः सन्देश· कर्तव्य ? 'एहि संविशाव ' इति कथनाऽभावेऽपि त्व-

---

वाले, उत्तम प्रकारसे तृप्त करनेवाले, सम्पूर्ण इन्द्रियोंके मोहजनक कर्णोंमें अमृतस्वरूप और रसायनकी तरह मनकी शक्तिको बढ़ानेवाले हैं ॥ ३६ ॥

**सीता**—हे प्रिय भाषण करनेवाले ! आइए, शयन करें (ऐसा कहकर सोनेके लिए चारों तरफ देखती हैं ) ।

**राम**—सीते क्या ढूँढना पड़ता है ?

आ विवाहसमयाद् गृहे वने शैशवे तदनु यौवने पुनः ।
स्वापहेतुरनुपाश्रितोऽन्यया रामबाहुरुपधानमेष ते ॥ ३७ ॥

सीता—( निद्रा नाटयन्ती ) अत्थि एदम् । अज्जउत्त ! अत्थि एदम् । ( अस्त्येतत् । आर्यपुत्र ! अस्त्येतत् । ) ( इति स्वपिति । )

रामः—कथ प्रियवचनैव मे वक्षसि प्रसुप्ता ? । ( निर्वर्ण्य । सस्नेहम् ) ।

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो–

---

दभिप्रायज्ञानेनैव त्वदभीष्टं संपादयामि, किमर्थमुक्तिप्रयास इति भावः ।

आविवाहेति । आ विवाहसमयात् शैशवे गृहे तदनु पुनर्यौवने वने स्वापहेतु· अन्यया अनुपाश्रित· एष रामबाहु· ते उपधानम् ( अस्ति ) इत्यन्वयः । आ विवाहसमयात् = उद्वाहकालादारभ्य, 'आङ् मर्यादावचन' इति आङ· कर्मप्रवचनीयसंज्ञा, 'पञ्चम्यपाङ्परिभि' इति पञ्चमी । शैशवे = बाल्यावस्थाया, गृहे = भवने, तदनु = तदनन्तरं, पुन· = भूय·, यौवने = तारुण्ये, वने = अरण्ये । स्वापहेतु = शयनकारण, शयनोपकरणमित्यर्थ·, अन्यया = त्वदितरया स्त्रिया, अनुपाश्रित = असेवित·, एष = अयम् , रामबाहु· = रामभुजः, ते = तव, उपधानम् = उपबर्ह·, अस्तीति शेष·, 'उपधानं तूपबर्ह' इत्यमर· । रथोद्धता वृत्तम् ॥ ३७ ॥

सीतेति । एतत् = भवत्कथनं 'मदीयो बाहुस्त्वदुपधान' मित्येवंरूपमित्यर्थ·, अस्ति = वर्तते, सत्यमिति शेष· । स्वपिति = शेते, रामबाहुमुपधानीकृत्येति शेषः ।

राम इति । प्रियवचनैव = अभीष्टभाषणैव, प्रियं भाषमाणा सत्येवेत्यर्थः ।

इयमिति । इयं गेहे लक्ष्मी , इयं नयनयो अमृतवर्ति , असौ अस्या· स्पर्शः वपुषि बहुल· चन्दनरस·, अयं बाहु· कण्ठे शिशिरमसृण मौक्तिकसरः, अस्याः किं न प्रेय ? तु विरह यदि परम् असह्य· इत्यन्वय· । इयं = सीता,

---

विवाहके समयसे ले कर बचपनमें, घरमें, उसके अनन्तर जवानीमें, वनमें शयनका कारण, दूसरी स्त्रीसे अनाश्रित यह रामकी बाहु तुम्हारा तकिया है ॥ ३७ ॥

सीता—( निद्राका अभिनय करती हुई ) ऐसा ही है, आर्यपुत्र ! ऐसा ही है ।
( ऐसा कह कर सोती है ) ।

राम—प्रिय वचन बोलते बोलते ही कैसे मेरी छातीपर सो गई ।
( देख कर, प्रेमके साथ ) ।

यह सीता घरमें लक्ष्मी है, यह नेत्रोंमें अमृतशलाका है, इसका यह स्पर्श शरीरमें प्रचुर

रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥ ३८ ॥

( प्रविश्य )

प्रतीहारी—देव ! उवट्ठिहो । ( देव ! उपस्थितः । )

रामः—अयि ! कः ?

---

गेहे=भवने, लक्ष्मी =श्रीः, इय = सीता, नयनयोः = नेत्रयोः, अमृतवर्तिः = अमृत शलाका, असौ = अनुभूत , अस्याः = सीतायाः , स्पर्शः = आमर्शनं, वपुषि=शरीरे बहुलः = प्रचुर , चन्दनरसः=श्रीखण्डद्रव, चन्दनवत्सन्तापहारक इत्यर्थः । अयम्= समीपस्थ एषः, बाहुः = भुज , कण्ठे = गले, अर्पित इति शेषः, शिशिरमसृणः = शीतलमृदुलः, मौक्तिकसरः=मुक्ताहारः, सर्वत्र 'अस्ती'ति सम्बन्धः कार्यः । अस्याः= सीतायाः, किं न प्रेयः = किं न प्रियतरम् ? अपि तु सीतासम्बद्धं सर्वमपि प्रियतर मित्यर्थः । 'तु' शब्देन उक्तार्थस्यैकदेशमाक्षिपति—तु = परन्तु, विरहो यदि = वियोगश्चेत् , परम् = अत्यर्थम् , असह्य = असहनीयः, वियोगं विना सीतासम्बद्ध सर्वमपि वस्तु अभीष्टत्वेन प्रियतरं, केवलं वियोगः सोढुमशक्य इति भावः अत्र प्रथमचरण एकस्या सीताया अनेकधोल्लेखादुल्लेखाऽलङ्कारः । द्वितीय तृतीयचरणयोश्च व्यस्तरूपकद्वयं, तथा च त्रयाणामलङ्काराणा मिथोऽनपेक्षया स्थितेः संसृष्टिः । शिखरिणी वृत्तम् ॥ ३८ ॥

प्रतीहारीति । ( प्रविश्य = प्रवेशं कृत्वा ) । प्रतीहारी = अन्तःपुरदौवारिकी । उपस्थितः = समायातः । अत्र 'दुर्मुख उपस्थित' इति प्रतीहार्यास्तात्पर्यविषयेऽपि रामोक्तस्य पूर्वश्लोकस्य 'यदि परमसह्यस्तु विरहः' इत्येकदेशस्य सान्निध्यात् समनन्तरभावी सीताविरहो गम्यते ।

---

चन्दनका रस है और यह बाहु गलेपर शीतल और कोमल मुक्ताहार है । इसकी क्या वस्तु प्रियतर नहीं है ? परन्तु इसका वियोग तो बहुत ही असहनीय है ॥ ३८ ॥

( प्रवेश कर )

प्रतीहारी—महाराज ! उपस्थित है ।

राम—अरी ! कौन उपस्थित है ?

प्रतीहारी—आसण्णपरिआरओ देवस्स दुम्मुहो। ( आसन्नपरिचारको देवस्य दुर्मुखः। )

रामः—( स्वगतम्। ) शुद्धान्तचारी दुर्मुखः। स मया पौरजानपदे-ष्वपसर्पः प्रहितः। ( प्रकाशम् ) आगच्छतु।

( प्रतीहारी निष्क्रान्ता। )

( प्रविश्य। )

दुर्मुखः—( स्वगतम्। ) हा कहं दाणिं देवीमन्तरेण*ईरिसं अचिन्त-णिज्जं जणाववादं देव्वस्स कहइस्सं ? अहवा णिओओ क्खु मह मन्दभा-अहेअस्स एसो। ( हा कथमिदानीं देवीमन्तरेणेदृशमचिन्तनीयं जनापवादं देवस्य कथयिष्यामि ? अथवा नियोगः खलु मम मन्दभागधेयस्यैष। )

---

प्रतीहारीति। देवस्य = महाराजस्य 'राजा भट्टारको देवः' इत्यमरः, आसन्नपरिचारकः = परिचरतीति परिचारकः, कर्तरि ण्वुल्, आसन्न =निकटवर्ती, परिचारकः = सेवकः, दुर्मुखः = दुर्मुखनामकः, अनभीप्सितभाषणात् दुष्टं मुखं यस्य स दुर्मुख इति तन्निरुक्तिः।

राम इति। शुद्धान्तचारी = अन्तःपुरसंचरणशीलः, अपसर्पः = गूढचरः, पौरजानपदेषु = पुरि भवाः पौराः, जनपदेषु भवाः जानपदाः, पौराश्च ते जानपदाश्चेति तेषु, अयोध्यापुरीवासिषु अयोध्याप्रदेशवासिषु चेत्यर्थः, 'तत्र भवः' इत्यण्। प्रहितः = प्रेरितः, पुर्यां प्रदेशेषु च क्रियमाणां मम स्तुतिं निन्दां वा ज्ञातुं प्रेषितोऽयमित्यर्थः, 'अपसर्पितुम्' इति पाठे गुप्तरूपेण परीक्षितुमित्यर्थः।

दुर्मुख इति। इदानीम् = अधुना, देवीं = सीताम्, 'अन्तरेण' इति पदेन योगे 'अन्तरान्तरेण युक्ते' इति द्वितीया। अन्तरेण = मध्ये, सीताविषय इति भावः, 'अथाऽन्तरेऽन्तरा। अन्तरेण च मध्ये स्युः' इत्यमरः। अचि-

---

प्रतीहारी—महाराजका समीपवर्ती सेवक दुर्मुख।

राम—( मन ही मन ) दुर्मुख अन्तःपुरमें भी आनेवाला है। उसको मैंने नगरवासी और देशवासी लोगोंका गुप्तचर बनाकर भेजा था। ( प्रकाश मात्रसे ) आजाय।

( प्रतीहारी जाती है )

( प्रवेश कर )

दुर्मुख—( मन ही मन ) हा ! कैसे अभी सीतादेवीके विषयमें ऐसे अचिन्तनीय लोकापवादको महाराजके सामने निवेदन करूँ ? अथवा मुझ हतभाग्यका काम ही ऐसा है।

---

* 'सीदादेइए' इति पाठान्तरम्। सीता देव्याः इति छाया।

सीता—( उत्स्वप्नायते । ) अज्जउत्त ! कहिंसि ? ( आर्यपुत्र ! कुत्रासि ? )

राम.—सेयमेव रणरणकदायिनी चित्रदर्शनाद्विरहभावना देव्याः स्वप्नोद्योग करोति । ( सस्नेहमङ्गमस्याः परामृशन । )

अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु य-
द्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रस ।

---

न्तनीयं = चिन्तयितुमपि अशक्यं, किमुत कथनीयमिति भावः, जनाऽपवादं=लोकाऽपवादम् । मन्दभागधेयस्य-भाग एव भागधेय, 'वा भागरूपनामभ्यो धेयः' इति स्वाऽर्थे धेयप्रत्यय., तस्य = अल्पभाग्यस्य, नियोग' = नियुक्तिरधिकार इत्यर्थ. ।

सीतेति । उत्स्वप्नायते = उत्थित' स्वप्नो यस्या सा उत्स्वप्ना, सा इव आचरतीति, स्वप्नदर्शनेन प्रलपतीत्यर्थः । 'कर्तु' क्यङ् सलोपश्च' इति क्यङ् । आर्यपुत्र = स्वामिन् ! कुत्राऽसि = क्व वर्तसे ? ।

राम इति । रणरणकदायिनी = उत्कण्ठादायिनी विरहभावना = मम वियोगचिन्ता, स्वप्नोद्योगं = स्वप्ने = निद्रायाम्, उद्योगम्=वचनादिप्रयत्नम् , जाग्रदवस्थाया कृता चिन्ता स्वप्नेऽपि जनमनुसरत्येवेत्यर्थ. । सस्नेह=प्रेमपूर्वकम् , अस्या'=सीतायाः अङ्गम् = शरीरम् , परामृशन् ।

अद्वैतमिति । यत् सुखदुःखयोः अद्वैतं, सर्वासु अवस्थासु अनुगतं, यत्र हृदयस्य विश्राम , यस्मिन् रसः जरसा अहार्य , यत् कालेन आवरणाऽत्ययात् परिणते प्रेमसारे स्थितं, तस्य सुमानुषस्य तत् एक भद्रं कथमपि हि प्राप्यते इत्यन्वय' । यत् = दाम्पत्यं, सुखदुःखयो , अद्वैतम् = द्वाभ्याम् भेदाभ्याम् इतं प्राप्तम् द्वीतं, तदेव द्वैत, स्वार्थेऽण् , अविद्यमान द्वैत यस्मिंस्तत् , एकरूपं, दम्पत्योरन्यतरस्य सुखे अन्यतरस्य सुखं तदभावे दुःखमपि तथेति भावः । सर्वासु=सकलासु, अवस्थासु = दशासु, अनुगतम् = अनुयात, सर्वास्ववस्थासु सम्पद्विपद्रूपासु दाम्पत्यस्य मिथोऽनुसरण भवतीत्यर्थः । 'अनुगुणम्' इति पाठे अनुकूलमित्यर्थः । यत्र = यस्मिन् हृदयस्य = मनस , विश्राम = विश्रान्ति., बहुविधसासारिकव्यवहारभारपरिश्रान्तस्याऽपि चेतसो दाम्पत्य एव श्रमापनोदन भवतीत्यर्थः ।

---

सीता—( स्वप्नमें बड़बड़ाती है । ) हे आर्यपुत्र ! आप कहा हैं ?

राम—चित्रदर्शनसे उत्कण्ठा करनेवाली यह वही वियोगचिन्ता सीताके स्वप्नमें भी उद्योग करती है । ) ( स्नेहपूर्वक सीताका अङ्गस्पर्श करते हुए ) जो ( दाम्पत्य ) सुख और

कालेनावरणात्ययात्परिणते यत्प्रेमसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येक हि तत्प्रार्थ्यते ॥ ३९ ॥

दुर्मुखः—( उपसृत्य । ) जेदु देव्वो । ( जयतु देवः । )

---

'विश्राम' इत्यत्र 'भावे' इति सूत्रेण घञ्, 'नोदात्तोपदेशस्य मान्तस्याऽनाचमेः' इति उपधावृद्धिनिषेधेन 'विश्राम' इति अपाणिनीयमिति बहवः । श्रम एव श्रामः 'प्रज्ञादिभ्यश्च' इति सूत्रेण अण् इति केचित् । यस्मिन् = दाम्पत्ये, स्थित इति शेषः, रसः = प्रीतिः, जरसा = वृद्धत्वेनाऽपि, अहार्य = हर्तुमशक्यः, किमुत यौवन इत्यर्थः, 'ऋहलोर्ण्यत्' इति ण्यत् । यत् = दाम्पत्यं, कालेन = समयेन, आ वरणाऽत्ययात् = विवाहमरणमभिव्याप्य, विवाहादारभ्य मरणपर्यन्तमित्यर्थः, वरणं = स्वीकरणं, विवाह इति यावत्, च अत्ययश्च = मरणं चेति वरणाऽत्ययं समाहारद्वन्द्वः, तदारभ्य तस्मात्, यद्वा आवरणाऽत्ययात् = लज्जाभयाद्यपगमादित्यर्थः; परिणते = परिपक्वे, प्रेमसारे = उत्कृष्टप्रेम्णि, स्थितम् = अवस्थितं, तस्य = पूर्वोक्तस्य, सुमानुषस्य = दाम्पत्यस्य, 'सुमानुषं तु दाम्पत्यम्' इति कोषः, शोभनं मानुषं = मनुष्यत्वम् यस्मिंस्तत् इति विग्रहेण योगरूढोऽयं शब्दः, केचित्तु प्रकरणाऽनुसारेण दाम्पत्ये लभ्ये शोभनो मानुषो येन इति विग्रहेण विशेषणतया योजनीयोऽयं शब्द इति, अपरे तु सुमानुषस्य सौजन्यस्य इत्याहुः, सर्वं चैतत्प्रपञ्चितं वीरराघवव्याख्यायाम् । तत् = प्रसिद्धम्, एकं = मुख्यम् 'एके मुख्याऽन्यकेवलाः ।' इत्यमरः, भद्रं = कल्याणमविच्छेदरूपमित्यर्थः, कथमपि = सर्वप्रकारेण, प्रार्थ्यते = प्रकर्षेण याच्यते, अभिलष्यते वा, 'प्राप्यते' इति पाठे कथमपि = केनाऽपि प्रकारेण; प्राप्यते = आसाद्यते, महता पुण्यप्रकर्षेण दाम्पत्यस्य अविच्छिन्नरूपं कल्याणं प्राप्यते इति भावः । शार्दूलविक्रीडितं वृत्तं—'सूर्याऽश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति तल्लक्षणम् ॥ ३९ ॥

---

दुःखमें एकरूप है और सभी अवस्थाओंमें अनुगत है, जिसमें हृदयका विश्राम है, जिसमें प्रीति बुढ़ापेसे भी नहीं हट सकती है । जो कि समयसे—विवाहसे लेकर मरणपर्यन्त, परिपक्व और उत्कृष्ट प्रेममें अवस्थित है, उस दाम्पत्यका वह एक कल्याण बड़े पुण्यसे पाया जाता है ॥ ३९ ॥

दुर्मुख—( समीप जाकर ) महाराजकी जय हो ।

रामः—ब्रूहि यदुपलब्धम् ।

दुर्मुखः—उवट्ठुवन्ति देवं पौरजाणपदा जहा विसुमरिदा अह्ले महाराअदसरहस्स रामदेव्वेणेत्ति । ( उपस्तुवन्ति देवं पौरजानपदा, यथा विस्मारिता वयं महाराजदशरथस्य रामदेवेनेति ।

रामः—अर्थवाद एवैपः । दोप तु मे कथचित्कथय, येन प्रतिविधीयते ।

दुर्मुख—( सास्रम् । ) सुणादु महाराओ । ( कर्णे । ) एव्वं विअ । इति । ( श्रृणोतु महाराज । एवमिव । )

रामः—अहह, अतितीव्रोऽयं वाग्वज्रः । ( इति मूर्च्छति । )

---

राम इति । उपलब्धम् = अनुभूतं, ज्ञातमित्यर्थः ; वृत्तमिति शेष., 'उपलम्भस्त्वनुभव' इत्यमरः ।

दुर्मुख इति । उपस्तुवन्ति = प्रशंसन्ति, विस्मारिता = विस्मरणं प्रापिता, महाराजदशरथस्येत्यत्र 'अधीगर्थदयेशा कर्मणि' इति षष्ठी ।

राम इति । अर्थवादः = प्रशंसा, स्तुतिनिन्दाऽन्यतरफलकं वाक्यमर्थवादः, तत्र क्वचित् स्तुतौ कुत्रचिच्च निन्दाया तात्पर्यं कल्प्यते, न तु वास्तवाऽर्थकथने । अत्र च मत्कर्तृकपितृविस्मारणकथने च मदीयस्तुतावेव तात्पर्यम् , न यथार्थकथन इति भाव । प्रतिविधीयते = प्रतिविधानं क्रियते, दोषप्रतिकारः करिष्यत इति भावः ।

दुर्मुख इति । श्रृणोतु = श्रवणं करोतु, देवः = महाराज । कर्णे एवमिवेति । 'रामो रावणेन बलादपहृता यौवनस्था बहुकालपर्यन्तं लङ्कायामवस्थितामपि सीता पत्नीत्वेन गृह्णाति, अनुचितमेतत्' इत्याकारकं रामकर्णे कथितं दुर्मुखवचनमनुसन्धेयम् ।

: राम इति । अहह = इदं खेदद्योतकमद्भुताऽर्थद्योतकं वाऽव्ययम् , 'अहहे-

---

राम—जो जाना है, वह कहो ।

दुर्मुख—पुरवासी और देशवासीलोग महाराजकी प्रशसा करते हैं कि—'महाराज रामचन्द्रजीने हमलोगोंके चित्तसे महाराज दशरथको भुलवा दिया' ।

राम—यह तो प्रशसा ही हुई । किसी तरहसे हुए मेरे दोषको भी कहो, जिससे कि उसका निवारण किया जाय ।

दुर्मुख—( आँखोंमें आँसू भरकर ) महाराज ! सुनिए । ( कानमें कहता है । )

राम—यह वचनवज्र अत्यन्त दुःसह है ( ऐसा कहकर मूर्च्छित होते हैं । )

दुर्मुखः—अस्ससदु देव्वो । ( आश्वसितु देवः । )

रामः—( आश्वस्य । )

हा हा धिक् ! परगृहवासदूषणं यद्वैदेह्याः प्रशमितमद्भुतैरुपायैः ।
एतत्तत्पुनरपि दैवदुर्विपाकादालर्कं विषमिव सर्वतः प्रसक्तम् ॥ ४० ॥

तत्किमद्य मन्दभाग्यः करोमि । (विमृश्य सकरुणम् ।) अथवा किमेतत् ।

---

स्यद्भुते खेदे' इत्यमरः, अतितीव्रः = अतिदुःसहः, 'तीव्रसंवेग' इति पाठे—तीव्रः = दुःसहः, संवेगः=संभ्रमो यस्य स इत्यर्थः । वाग्वज्रः=वागेव वज्रः, 'मयूरव्यंसकादयश्च' इति रूपकसमासः, उपमेये उपमानारोपाद्रूपकालङ्कारश्च, 'ह्रादिनी वज्रमस्त्री स्यात्' इत्यमरः ।

हा हेति । हा ! हा !! धिक् !!! वैदेह्या यत् परगृहवासदूषणम् अद्भुतैः उपायैः प्रशमितम्, दैवदुर्विपाकात् तत् एतत् पुनरपि आलर्कं विषमिव सर्वतः प्रसक्तमित्यन्वयः । हा हा, लोकमिति शेषः, लोकस्य अत्यर्थं शोच्यते, सीतासमायाः पतिव्रताया परिवादादिति भावः । धिक् = आवयोः ( सीतारामयोः ) भाग्यमिति शेषः । वैदेह्या = मैथिल्या, सीताया इत्यर्थः, यत्, परगृहवासदूषणं = परपुरुषभवननिवासदोषः, अद्भुतैः = आश्चर्यजनकैः, उपायैः = अग्निप्रवेशादिभिः, प्रशमितं = परिहृतं, दैवदुर्विपाकात् = भाग्यस्य दुष्परिणामात्, तत्=पूर्वाऽनुभूतम्, एतत् = परगृहवासदूषणं, पुनरपि = भूयोऽपि, आलर्कम् = अलर्कसम्बन्धि, विक्षिप्तकुक्कुरस्येत्यर्थः, 'अलर्कस्तु स योगितः" इत्यमरः, विषमिव = गरलमिव, सर्वतः = सर्वत्र, प्रसक्तं = संसक्तम्, 'प्रसृप्तम्' इति पाठे व्याप्तमित्यर्थः । यथा विक्षिप्तकुक्कुरस्य विषमौषधादिभिरुपायैर्निराकृतमपि दुर्भाग्येन कालान्तरे सर्वाङ्गे प्रसरति तथैवेदं सीतायाः परगृहवासदूषणमपि अग्निशुद्ध्यादिभिरुपायैः परिहृतमपि सर्वत्र देशे प्रसरतीति भावः । उपमाऽलङ्कारः । प्रहर्षिणी वृत्तम् ॥ ४० ॥

तदिति । तत् = तस्माद्धेतोः, सीतादोषप्रचरणादिति भावः, मन्दभाग्यः =

---

दुर्मुख—महाराज आश्वस्त हों ।

राम—( आश्वस्त होकर )

हाय ! हाय !! धिक्कार है !!! सीताका दूसरेके घरमें रहनेका जो दोष अनूठे उपायोंसे हटाया गया था, भाग्यके दुष्परिणामसे वही दोष पागल कुत्तेके विषकी तरह फिर सब जगह फैल गया ॥ ४० ॥

इस कारणसे मैं अभागा आज क्या करूँ ? ( विचार कर करुणाके साथ ) अथवा यह क्या विचार करना है ?

सतां केनापि कार्येण लोकस्याराधनं परम् ।
तत्प्रतीतं हि तातेन मां च प्राणांश्च मुञ्चता ॥ ४१ ॥

संप्रत्येव च भगवता वसिष्टेन संदिष्टम् । अपि च ।

यत्साविन्नैर्दीपितं भूमिपालैर्लोकश्रेष्ठैः साधु चित्रं चरित्रम् ।

---

हीनभाग्य', करोमि = सम्पादयामि । विमृश्य = भावयित्वा, विचार्येत्यर्थः । सकरुणम् = सदयम् , एतत् = दूषणं, किं—किं विचार्यम् , एतद्दूषणमुद्दिश्य किं कर्तव्यमिति कार्यसरणिरविचारणीया, तस्या॰ प्रागेव उपपादितत्वादिति भावः ।

तदेव निदर्शयति—सतामित्यादिना । केनाऽपि कार्येण लोकस्य आराधनं सता परम् , मा च प्राणांश्च मुञ्चता तातेन तत् प्रतीतमित्यन्वयः । केनाऽपि = लोकोत्तरेणाऽपि, कार्येण=कर्मणा, लोकस्य = जनस्य 'लोकस्तु भुवने जने ।' इत्यमरः 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' इति जनानां वा, आराधनम् = अनुरञ्जनं, सता = सज्जनाना, परम्=उत्कृष्टं, कार्यमिति शेष , मा च= रामं च, प्राणांश्च=असूंश्च, मुञ्चता=त्यजता, तातेन = पित्रा दशरथेन, तत् = लोकाराधनं, प्रतीतं = प्रथित, प्रख्यापितमित्यर्थ , 'परम्' इत्यस्य स्थाने 'व्रतम्' इति क्वाचित्कः पाठस्तस्य कर्तव्यो नियम इत्यर्थ॰ । 'तत् प्रतीतम्' इत्यत्र 'यत् पूरितम्' इति पाठान्तरं तत्र 'पूरितम्' इत्यस्य पूर्णीकृतमित्यर्थः । यथा पूजनीयेन पितृचरणेन लोकाऽनुरञ्जनार्थं ज्येष्ठपुत्रस्य मम, 'प्राणाना च परित्यागः कृतस्तथैवाऽहमपि सीतां परित्यजामीति भाव' । अत्र विशेषेण सामान्यस्य समर्थनरूपोऽर्थान्तरन्यासस्तथा च प्रस्तुतयो' 'मा च प्राणाश्चे'त्यनयोर्मुञ्चतेत्येकक्रिययाऽभिसम्बन्धात्तुल्ययोगिता चेत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ४१ ॥

पूर्वोक्तिसमर्थनाय स्वोक्तिं स्मरति भगवतेति । भगवता—'उत्पत्तिं च स्थितिं चैव लोकानामगतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥' इति लक्षणलक्षितेनेति भावः । सन्दिष्टं = सन्देशः प्रेषितोऽष्टावक्रमुनिद्वारा—'युक्तः प्रजानामनुरञ्जने स्याः" ( पृ० २२ ) इत्यादिनेति भावः ।

यदिति । लोकश्रेष्ठैः साविन्नैः भूमिपालै॰ यत् चित्रं चरित्रं साधु दीपितम् ,

---

किसी भी कामसे लोकका अनुरञ्जन करना सज्जनोंका श्रेष्ठ कार्य है, मुझे और प्राणोंको छोडते हुए पिताजीने उस कर्मको प्रख्यात किया ॥ ४१ ॥

अभी भगवान् वसिष्ठने सन्देश किया है । और भी—

लोकमें श्रेष्ठ सूर्यवंश में उत्पन्न राजाओंने जिस विचित्र चरित्रको भली भाँति प्रकाशित

मत्संबन्धात्कश्मला किंवदन्ती स्याच्चेदस्मिन्हन्त धिङ्मामधन्यम् ॥ ४२ ॥

हा देवि देवयजनसंभवे ! हा स्वजन्मानुग्रहपवित्रितवसुन्धरे ! हा मुनिजनकनन्दिनि ! हा पावकवसिष्ठारुन्धतीप्रशस्तशीलशालिनि ! हा राम-

अस्मिन् मत्सम्बन्धात् कश्मला किंवदन्ती स्यात् चेत् हन्त ! अधन्यं मा धिक् इत्यन्वयः । लोकश्रेष्ठैः = भुवनप्रशस्यतमैः, सावित्रैः = सवितृसम्बन्धिभिः, सूर्यकुलोत्पन्नैरित्यर्थः, भूमिपालैः = राजभिः, यत्, चित्रम् = अद्भुतं, 'शुद्धम्' इति पाठे पवित्रमित्यर्थः, चरित्रं = वृत्तम्, साधु = समीचीनं यथा तथा, दीपितं = प्रकाशितम्, अस्मिन् = एतादृशे चरित्रे, मत्सम्बन्धात् = मत्सम्पर्कात्, कश्मला=मलिना, किंवदन्ती = जनश्रुतिः, स्यात् = भवेत्, चेत्=यदि, हन्त=खेदद्योतकमव्ययमिदम्, अधन्यं = पुण्यरहितं, मा = रामं, धिक् । मम यशसा चरित्रोद्भासनस्य कथा तु दूरे आस्ताम्, एष लोकाऽपवाद आपतितो येन निरपराधायाः सीतायाः परित्याग आवश्यकः संवृत्तोऽतोऽहं पापकारिणमात्मानमेव निन्दामीति भावः । शालिनी वृत्तम्—'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति ॥ ४२ ॥

हा देवीति । स्वतो निर्दोषेत्याह—हा देवि !, उत्पत्तिवंशदोषोऽपि नास्तीत्याह—देवयजनसम्भवे = देवा इज्यन्ते = पूज्यन्ते, अस्मिन्निति देवयजनं = यज्ञभूमिः, 'करणाऽधिकरणयोश्च' इति अधिकरणे ल्युट्, देवयजनं संभवः = उत्पत्तिस्थानम्, यस्यास्तत्सम्बुद्धौ । स्वोत्पत्तिभूमेरपि शुद्धिकारिणीत्याह—स्वजन्माऽनुग्रहपवित्रितवसुन्धरे=स्वजन्म=आत्मजनुः, एव अनुग्रहः=प्रसादः, तेन पवित्रिता = पवित्रीकृता, वसुन्धरा = पृथ्वी, यया तत्सम्बुद्धौ, 'पवित्रिते'त्यत्र 'तत्करोति तदाचष्टे' इति णिजन्तात् क्तः । संपर्कदोषोऽपि नाऽस्तीत्याह—मुनिजनकनन्दिनि=मननशीलजनकानन्दकारिणि !, गुरुदेवताऽभिमतेत्याह—पावकवसिष्ठारुन्धतीप्रशस्तशीलशालिनि = पावकवसिष्ठारुन्धतीभिः प्रशस्तं = स्तुतम्, यत् शीलं पवित्रचरित्रं स्वभावो वा, तेन शालते शोभते, तत्सम्बुद्धौ । अग्निना लङ्कायां विशुद्धिकाले, अरुन्धतीवसिष्ठाभ्यां च सर्वदैव प्रशस्ता सीतेति भावः । राममयजीविते = राम एव राममयं, स्वार्थे मयट्, राममयं जीवितं यस्यास्तत्सम्बुद्धौ = हे रामाऽभिन्नजीवने ! इत्यर्थः,

किया, उस चरित्रमें मेरे सम्बन्धसे मलिन जनश्रुति हो तो हाय ! पुण्यरहित मुझको धिक्कार है ॥ ४२ ॥

हा देवि ! यज्ञभूमिसे उत्पन्न होनेवाली ! हा अपने जन्मरूप अनुग्रहसे पृथ्वीको पवित्र करनेवाली ! हा मुनि जनकको आनन्दित करनेवाली ! हा अग्नि, वसिष्ठ और अरुन्धतीसे प्रशंसित

मयजीविते ! हा महारण्यवासप्रियसखि ! हा तातप्रिये ! हा स्तोकवादिनि! कथमेवंविधायास्तवायमीदृशः परिणामः ?

त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः ।
नाथवन्तस्त्वया लोकास्त्वमनाथा विपत्स्यसे ॥ ४३ ॥

( दुर्मुखं प्रति । ) दुर्मुख ! ब्रूहि लक्ष्मणम् । एष नूतनो राजा रामः समाज्ञापयति । ( कर्णे । ) एवमेवम् । इति ।

---

अनेन रावणस्मरणमपि दूरोत्सारितमिति गम्यते । पातिव्रत्यं निदर्शयति—महारण्यवासप्रियसखि = अरण्यानीवासेऽपि दयितसहचरि ! तातप्रिये = पितृवल्लभे । श्वशुरदशरथप्रियस्नुषे ! इत्यर्थः । स्तोकवादिनि=अल्पभाषिणि ! कथं = केन प्रकारेण, एवंविधाया = ईदृश्याः, गुणगणभूषिताया इत्यर्थः । ईदृश = एतादृशो लोकापवादरूप इत्यर्थः, परिणामः = परिपाकः ।

त्वयेति । त्वया जगन्ति पुण्यानि ( सन्ति, परन्तु ), त्वयि अपुण्या जनोक्तयः ( सन्ति ), त्वया लोका नाथवन्तः ( सन्ति, परन्तु ) त्वम् अनाथा विपत्स्यसे इत्यन्वयः । त्वया = सीतया, जगन्ति = लोकाः, पुण्यानि=पवित्राणि, (सन्ति) त्वदीयपावनलीलाऽऽधारत्वादित्यर्थः । परन्तु त्वयि = त्वद्विषये, अपुण्याः=अपवित्रा, जनोक्तयः = लोकवचनानि, सन्तीति शेषः । त्वया=सीतया, लोका =जना , नाथवन्त = स्वामिसम्पन्ना , तव श्रीरूपत्वात् , लोकनाथस्य मम पत्नीत्वाद्वा इति भावः । परन्तु त्व = सीता, अनाथा=स्वामिरहिता सती, विपत्स्यसे = विपत्प्राप्ता भविष्यसि, स्वामिना मया परित्यक्ष्यमाणत्वादिति भावः । अत्र विरोधाभासोऽलङ्कारः ॥ ४३ ॥

दुर्मुखमिति । नूतनः = नवीन , नूतनपदेन प्रजाऽनुरञ्जनमात्र आग्रही कर्तव्याऽकर्तव्यविचारहीन इति व्यज्यते । समाज्ञापयति = समादिशति ।

एवमेवमिति । 'पञ्चवटीवने सीता नेतव्या, तत्रैव परित्याज्या चे' ति दुर्मुखकर्णे कथितं लक्ष्मणं प्रति रामवचनमनुसन्धेयम् ।

---

चरित्रसे शोभित होनेवाली ! हा रामसे अभिन्न जीवनवाली ! हा बड़े जङ्गलोंके वासमें प्रिय सहचरि ! हा पिताजीकी प्रीतिकारिणि ! हा अल्पभाषिणि ! ऐसी ( इन गुणोंवाली ) तुम्हारा इस तरहका परिणाम कैसे हुआ ?

तुमसे जगत् पवित्र है, परन्तु तुम्हारे विषयमें लोगोंकी उक्तियाँ अपवित्र हो रही हैं । तुमसे लोक नाथवाले हैं, परन्तु तुम अनाथ होकर आपत्ति पाओगी ॥ ४३ ॥

( दुर्मुखको ) दुर्मुख ! लक्ष्मणको कहो । यह नया राजा राम आज्ञा करता है । ( कानमें —ऐसा ऐसा )

दुर्मुखः—हा, कहं अग्गिपरिसुद्धाए गब्भट्ठिदपवित्तसंताणाए देवीए दुज्जणवअणादो एदं ववसिदं देव्वेण ? ( हा, कथमग्निपरिशुद्धाया गर्भस्थितपवित्रसंतानाया देव्या दुर्जनवचनादिदं व्यवसितं देवेन ? )

रामः—शान्तं पापम्, शान्तं पापम् । दुर्जना नाम पौरजानपदाः ?

इक्ष्वाकुवंशोऽभिमतः प्रजानां जातं च दैवाद्वचनीयबीजम् ।
यच्चाद्भुतं कर्म विशुद्धिकाले प्रत्येतु कस्तद्यदि दूरवृत्तम् ॥ ४४ ॥

---

'दुर्मुख इति । अग्निपरिशुद्धायाः=वह्निपवित्राया', गर्भस्थितपवित्रसन्तानायाः= गर्भस्थित' = भ्रूणस्थ', पवित्रसन्तानं = पूतसन्ततिः, यस्यास्तस्याः । देव्या =महाराश्या', दुर्जनवचनात् = दुष्टवाक्यात्, इदं=त्यागरूपं कर्म, व्यवसितं = निश्चितम् । 'अध्यवसितम्' इति पाठेऽपि अयमेवाऽऽर्थः, देवेन = महाराजेन भवतेत्यर्थ' ।

रामं इति । पापं = कल्मषं, पौरजानपदेषु दुर्जनत्वारोपरूपमित्यर्थः, शान्तं = निवारितमस्त्विति शेष', पौरजानपदाः = नागरिका देशस्थिताश्च जना', दुर्जना नाम=किम् अनार्याः ? इति काकाक्षिप्तः प्रश्न उन्नेय., पौरजानपदा न दुर्जना इति भावः ।

इक्ष्वाकुवंश इति । इक्ष्वाकुवंशः प्रजानाम् अभिमत', दैवात् वचनीयबीजं च जातम्, विशुद्धिकाले यच्च अद्भुतं कर्म, तत् यदि, दूरवृत्तं क' प्रत्येतु ? इत्यन्वय. । इक्ष्वाकुवंशः = इक्ष्वाकुकुलं, प्रजाना = जनानाम्, 'अभिमत' इति पदेन योगे 'क्तस्य च वर्तमाने' इति षष्ठी । अभिमतः = अभीष्टः, दैवात् = भाग्यात् दुर्भाग्यादिति भावः, वचनीयबीजं च = निन्दाकारणं च, सीताया रक्षोगृहस्थितिरूपमित्यर्थ', जातम् = उत्पन्नम्, वचनीयबीजोत्पत्त्यभावे कथं प्रजा अभिमतस्येक्ष्वाकुवंशस्य परिवादं कुर्युरिति भावः । विशुद्धिकाले = परीक्षासमये, यच्च, अद्भुतम् = आश्चर्ययुक्तं, कर्म=कार्यमग्निप्रवेशरूपमित्यर्थ', तत् यदि = तत् अस्ति चेत्; दूरवृत्तं = दूरदेशे जातं चरितं, कः = पुरुषः, प्रत्येतु = विश्वसितु ? इक्ष्वाकुवंशस्य अभिमतत्वे प्रजा मच्चरित्रसंशोधनायैव मदीयमपवादं ख्यापयन्ति, न दौर्जन्येन,

---

दुर्मुख—हा ! दुर्जनोंके वचनसे अग्निमें शुद्ध तथा गर्भमें पवित्र सन्तानको धारण करनेवाली महारानीका महाराजने यह ( त्याग करनेका ) कैसे निश्चय किया ?

राम—पाप शान्त हो, पाप शान्त हो । नगरमें और देशमें रहनेवाले लोग दुर्जन हैं क्या ?
इक्ष्वाकुकुल प्रजाओंको अभीष्ट है, परन्तु भाग्ययोगसे उसमें निन्दाका कारण हो गया है। विशुद्धिके समयमें जो अनूठा काम हुआ, वो भी दूरमें हुए उसका कौन विश्वास करे ? ॥४४॥

तद्गच्छ ।

दुर्मुखः—हा देवि ! । ( इति निष्क्रान्तः । )

रामः—हा कष्टम् ! अतिबीभत्सकर्मा नृशंसोऽस्मि संवृत्तः ।

शैशवात्प्रभृति पोषितां प्रियां सौहृदादपृथगाश्रयामिमाम् ।
छद्मना परिददामि मृत्यवे सौनिके गृहशकुन्तिकामिव ॥ ४५ ॥

---

या नाम सीताया पातिव्रत्यपरीक्षा सजाता सा दूरवृत्तत्वादलौकिकत्वाच्च न केनाऽपि प्रतीतेति भाव । अत्रेन्द्रवज्रा वृत्तं—'स्यादिन्द्रवज्रा यदि तौ जगौ गः' । इति तल्लक्षणम् ॥ ४४ ॥

राम इति । अतिबीभत्सकर्मा = अतिबीभत्सम्=अतिनिन्द्यम् , कर्म=क्रिया, यस्य सः, 'नृशंसो घातुक' क्रूर' इत्यमर' ।

स्वस्यातिबीभत्सकर्मत्वं च नृशंसत्वं च प्रतिपादयति—शैशवादिति । शैशवात् प्रभृति पोषिता सौहृदात् अपृथगाश्रयाम् इमां प्रिया शौनिके गृहशकुन्तिकाम् इव छद्मना मृत्यवे परिददामि इत्यन्वय । शैशवात् प्रभृति = बाल्यात् आरभ्य, पोषिता = वर्द्धिता, सौहृदात् = सौहार्दात् , प्रेम्ण इत्यर्थः, अपृथगाश्रया = पृथगाश्रयरहिताम् , इमा = पुरोवर्तिनीं, प्रियां = दयिता सीतामित्यर्थ', सौनिके = प्राणिहिंसाजीविनि, चतुर्थ्यर्थे सप्तमी । सूना वधस्थान, तेन दीव्यति व्यवहरतीति सौनिकस्तस्मिन् , 'तेन दीव्यति खनति जयति जितम्' इति ठक् , कित्वात् 'किति च' इति आदिवृद्धि' । 'सौनिक' इति प्रथमान्तपाठोऽप्यस्ति । गृहशकुन्तिकामिव = गेहपालितामनुकम्पितपक्षिणीमिव, गृहपदेन बाल्यात्प्रभृति पालनं व्यज्यते, अनुकम्पिता शकुन्ती शकुन्तिका, 'अनुकम्पायाम्' इति कन् , अनुकम्पाबीजं त्वेकत' स्त्रीत्वं तदुपरि गृहपालितत्वं चेति विज्ञेयम् । गृहे शकुन्तिका गृहशकुन्तिका, ताम् । छद्मना = छलेन, सीताऽभीष्टवनप्रस्थानरूपेणेत्यर्थ । मृत्यवे = कालाय, परिददामि = वितरामि । गृहपालितायाः पक्षिण्या घातुकाय समर्पणं यथा

---

सो ( इस कारण ) जाओ ।

दुर्मुख—हा ! देवि ! ( ऐसा कहकर जाता है ) ।

राम—हा ! कष्ट है । अतिशय निन्दनीय कर्म करनेवाला मैं हत्यारा हो गया हूं ।

बचपनसे पोषण की गई, प्रेमसे, मुझसे बिछुड़कर न रहनेवाली प्रिया सीताको—जैसे कोई कसाईके लिये घरमें पली हुई चिड़ियाको देता है, उसी तरह मैं छलसे मौतके लिये दे रहा हूं ॥ ४५ ॥

तत्किमस्पृश्यः पातकी देवीं दूषयामि ? ( इति सीतायाः शिरः समुन्नमय्य बाहुमाकृष्य । )

अपूर्वकर्मचण्डालमयि मुग्धे ! विमुञ्च माम् ।
श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम् ॥ ४६ ॥

(उत्थाय) हन्त हन्त, संप्रति विपर्यस्तो जीवलोकः । अद्यावसितं जीवि-

---

तयैव मत्कर्तृकं सीतानिर्वासनमपि अतिबीभत्सकर्मत्वं नृशंसत्वं च ख्यापयतीति भावः । अत्र पूर्णोपमाऽलङ्कारः । रथोद्धता वृत्तम्, 'रान्नराविह रथोद्धता लगौ' इति लक्षणात् ॥ ४५ ॥

तदिति । अस्पृश्यः = स्प्रष्टुमयोग्यः । तत्र हेतुमाह—पातकीति । पातकित्वं च निर्दोषपत्नीत्यागेन बोध्यम् । दूषयामि = स्पर्शेन दूषितां करोमि । समुन्नमय्य = समुन्नतं कृत्वा ।

अपूर्वेति । अयि मुग्धे ! अपूर्वकर्मचण्डालं मा विमुञ्च, चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमं श्रिता असि इत्यन्वयः । अयि = अयीति कोमलामन्त्रणे, मुग्धे = मूढे ! 'प्राणवल्लभोऽयं मदीयः कान्तोऽल्पमपि मदहिताचरणं न करिष्यती'त्याकारकमोहयुक्ते ! इत्यर्थः । अपूर्वकर्मचण्डालं = विलक्षणकृत्यचण्डालम्, साध्व्याः पत्न्याः परित्यागरूपेण, कर्मणा = चण्डालः कर्मचण्डालः । जन्मचण्डालोऽपि क्रूरो भवति, कर्मचण्डालस्तु ततोऽपि क्रूरतरो भवति । अपूर्वश्चाऽसौ कर्मचण्डालोऽपूर्वकर्मचण्डालस्तं, चण्डालोऽपि स्वपत्न्यास्तत्राऽपि पतिव्रतायास्तत्राऽपि गर्भिण्याः परित्यागं न करोति, अतोऽत्र जन्मचण्डालाऽपेक्षया वैशिष्ट्यम् । मा = रामं, विमुञ्च = परित्यज, चन्दनभ्रान्त्या=श्रीखण्डभ्रमेण, दुर्विपाकं=दुष्टो विपाको यस्य तम्=दुष्परिणामं=विषद्रुमं = विषवृक्षं, श्रिता=आश्रिता, असि=वर्तसे । अत्र चन्दनभ्रान्त्या विषद्रुमाश्रयणस्याऽसम्भवात् असम्भवद्वस्तुसम्बन्धरूपा निदर्शना, मोचनक्रियायामुत्तरार्द्धवाक्यस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गं चेति द्वयोरङ्गाङ्गिभावेन सङ्करः ॥ ४६ ॥

उत्थायेति । हन्त = दुःखद्योतकमिदमव्ययम् । सम्प्रति = अधुना, सीता-

---

तब क्यों अस्पृश्य पातकी होकर ( मैं ) देवीको स्पर्शसे दूषित करूँ । ( ऐसा कहकर, सीताका शिर ऊँचा कर और बाहु खींचते हुए )

अरी भोली सीते ! अपूर्व कर्म करनेसे चण्डाल मुझको छोडो, तुम चन्दनकी भ्रान्तिसे विषवृक्षका आश्रय कर रही हो ॥ ४६ ॥

( उठ कर ) हाय ! हाय !! अब जीवलोक उलट गया । आज रामके जीवनका प्रयोजन

तत्प्रयोजनं रामस्य। शून्यमधुना जीर्णारण्य जगत्। असारः संसारः। काष्ठप्रायं शरीरम्। अशरणोऽस्मि। किं करोमि ? का गतिः ? अथवा।

दुःखसंवेदनायैव रामे चैतन्यमागतम्।
मर्मोपघातिभिः प्राणैर्वज्रकीलायितं हृदि ॥ ४७ ॥

---

विरह इत्यर्थः, जीवलोकः = प्राणिलोकः, विपर्यस्त = अन्यथा भूत, रामस्य सीतासाहित्ये 'यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना' इति रामायणोक्तरीत्या जीवलोकस्य प्राक् स्वर्गत्वमासीत्, सीतावियोगे तु नरकत्वमेवेति, अत उक्त 'विपर्यस्त' इति। जीवितप्रयोजनं = जीवनफलम्, अवसित = समाप्तम्, अधुना = सीतावियोगे, जगत्=लोक, जीर्णारण्यं = पुष्पफलरहितं वनम्, तस्माद्धेतो -शून्य= निर्जन, जातमिति शेष । असारः = साररहितः, शरीरं = देहः, काष्ठप्रायम्=इन्धनप्राय, 'ज्योत्स्नेव हिमदीधिते' इत्युक्त्या यथा चन्द्रस्य चन्द्रिकाऽभावे काष्ठप्रायता तथा सीताभावे रामस्य सुखसंवेदनाऽभावेन शरीरस्य काष्ठप्रायत्वम्। कष्टप्रायम्' इति पाठे दुःखप्रचुरमित्यर्थः । अशरण = रक्षकरहित, यद्वा 'शरण गृहरक्षित्रोः' इति कोषात् 'न गृहं गृहमित्याहु' इति वचनात् गृहिणीराहित्याद् गृहविहीनोऽस्मीत्यर्थ, गति = गमनस्थान, कुत्र गच्छामीत्यर्थ ।

मत्कृते किमपि दुःखनिवारणस्थान नाऽस्तीति प्रतिपादयति-दुःखेति। दुःखसंवेदनाय एव रामे चैतन्यम् आगतम्। मर्मोपघातिभि प्राणै हृदि वज्रकीलायितम् इत्यन्वय । दुःखसंवेदनाय एव = पीडानुभवाय एव, रामे = मयि, चैतन्यं = चेतनभावः, आगतम् = आयातम्, 'अर्पितम्' इति पाठे आहितमित्यर्थः, विधिनेति शेषः। मर्मोपघातिभि = मर्मस्थलप्रहारिभिः, मर्माणि = हृदयादिप्रदेशान्, उपघ्नन्तीति तच्छीला मर्मोपघातिनस्तै, 'सुप्यजातौ णिनिस्ताच्छील्ये' इतिणिनि । प्राणैः = असुभि, हृदि = हृदये, 'स्थिरैः' इति पाठे अचलैरित्यर्थः, पदमिदं च प्राणविशेषण ज्ञेयम्। वज्रकीलायित = वज्रशङ्कुवत् आचरित, क्यङन्ताद्भावे क्त। एतादृश्या दुर्दशाया समुपस्थितायामपि प्राणा स्थिरीभूय मा न मुञ्चन्तीत्यर्थस्तथा च दुःखाऽनुभवपारवश्येन मत्कृते मरणमपि दुर्लभं सजातमिति भावः। 'वज्रकीलायितम्' इत्यत्रोपमाऽलङ्कारः ॥ ४७ ॥

---

समाप्त हुआ। अब जगत् जीर्ण जङ्गलकी तरह शून्य हो गया। संसार सारसे रहित हो गया। शरीर काष्ठकी तरह हो गया। मैं शरणहीन हूं। क्या करूँ ? कहा जाऊँ ? अथवा—

दुःख भोगनेके लिए ही राममें चैतन्य आ गया है। मर्मस्थलमें प्रहार करनेवाले प्राणोंने हृदयमें वज्रकी कीलके सदृश आचरण किया है ॥ ४७ ॥

हा अम्ब अरुन्धति ! भगवन्तौ वसिष्ठविश्वामित्रौ ! भगवन् पावक ! हा देवि भूतधात्रि ! हा तातजनक ! हा मातः ! हा प्रियसख महाराज सुग्रीव ? सौम्य हनूमन् ! महोपकारिन् लङ्काधिपते विभीषण ! हा सखि त्रिजटे ! परिमुषिताः स्थ, परिभूताः स्थ रामहतकेन । अथवा को नाम तेषामहमिदानीमाह्वाने ?

ते हि मन्ये महात्मानः कृतघ्नेन दुरात्मना ।

---

हा अम्बेति । अम्ब अरुन्धति=हे मात अरुन्धति । अरुन्धत्या गुरुपत्नीत्वेन मातृवत्पूजनीयत्वादम्बेति पदेनाऽभिधानं संगच्छते, अरुन्धतीकृतसीतापातिव्रत्याऽनुमोदन लोकैर्न प्रमाणीकृतमिति भावः । पावक=अग्ने । भूतधात्रि = पृथिवि । भूतानां ( प्राणिनाम् ) धारणात्पोषणाच्च पृथिव्या भूतधात्रीत्वं संगच्छते, तथा च योगरूढोऽयं शब्दः । प्रियसख = अभीष्टमित्र । सीतोद्धारे त्वत्कृतं साहाय्यमपि निष्फलं जातमिति भाव । सौम्य = सदाशय, हनूमन् = अञ्जनानन्दन । त्वदीयं समुद्रतरणादिविक्रमप्रदर्शनं दौत्यं च अफलं समजनीति भाव । सखि = सहचरि । सीतायाः सख्याऽनुष्ठानात् रामस्यापि त्रिजटा सखी सञ्जाताऽतस्तत्सम्बोधन संगच्छते । त्रिजटा नाम काचिद्राक्षसी या सीतासंतर्जिका राक्षसीर्निवार्य सीतां प्रियवचनैरसान्त्वयत् । तथा च यूयं सर्वे, रामहतकेन = हतप्रायेण रामेण-हत इव हतकः, राम एव हतको रामहतकस्तेन, सीतापरित्यागरूपेण स्वकीयेनैवं दुष्कर्मणा हतप्रायेण रामेणेति भाव । परिमुषिताः स्थ = अपहृतसीतारूपद्रव्याः स्थ, 'दूषिताः स्थ' इति पाठे 'सीतेयं निर्दोषा अनुग्राह्या च' इति युष्मदीयं वचनमवमान्य यूयमनृतभाषिण इति दत्तदोषाः स्थ इति भाव । परिभूताः स्थ = तिरस्कृताः स्थ, युष्मद्वचनाऽनभ्युपगमेनेति भावः । अथवा=पक्षान्तरे—इदानीं=सीतापरित्यागरूपपापाचरणकाले, आह्वाने=आकारणे, को नाम = न कोऽपीत्यर्थः, पुण्यात्मनां तेषां नामोच्चारणे सर्वथैवाऽहमयोग्य इत्यर्थः ।

अयोग्यत्वं प्रतिपादयति—ते हीति । कृतघ्नेन दुरात्मना मया गृहीतनामानः

---

हा माता अरुन्धति ! भगवान् वसिष्ठ और विश्वामित्रजी ! भगवन् अग्निदेव ! हा देवि पृथिवि ! हा पिताजी ! हा जनकजी ! हा माता ! हा प्रियमित्र महाराज सुग्रीव ! सदाशय हनुमान्जी ! महान् उपकार करनेवाले लङ्काधीश विभीषण ! हा सखि त्रिजटे ! तुम सबलोग हतप्राय रामसे परिहृत और तिरस्कृत हो गये हो । अथवा अब उन लोगोंको बुलानेमें मेरा क्या अधिकार है ?

कृतघ्न और दुष्ट स्वभाववाले मुझसे नाम लिये जानेपर भी वे महानुभाव पापसे सम्बद्ध

मया गृहीतनामानः स्पृश्यन्त इव पाप्मना ॥ ४८ ॥

योऽहम्—

विस्रम्भादुरसि निपत्य जातनिद्रामुन्मुच्य प्रियगृहिणीं गृहस्य लक्ष्मीम् ।
आतङ्कस्फुरितकठोरगर्भगुर्वीं क्रव्याद्भ्यो बलिमिव दारुणः क्षिपामि ॥४९॥

ते महात्मानः पाप्मना स्पृश्यन्त इव ( इति ) मन्ये हि इत्यन्वयः । कृतघ्नेन = उपकारविस्मरणशीलेन । कृतं हन्तीति कृतघ्नः तेन, अरुन्धत्यादिकृतसीतासतीत्वप्रतिपादनरूपोपकारविस्मरणशीलेनेति भावः, दुरात्मना = दुष्टस्वभावेन, दुष्टः=दोषयुक्तः, आत्मा = स्वभावो यस्य स दुरात्मा तेन, मया=रामेण, गृहीतनामानः = उच्चारितनामधेयाः सन्त, ते = पूर्वोक्ताः, अरुन्धत्यादय इत्यर्थः, महात्मानः = महानुभावाः, पाप्मना = पातकेन, स्पृश्यन्त इव = आमृश्यन्त इव, मत्कर्तृकतन्नामोच्चारणात्तेऽपि पापेन स्पृष्टा भवन्ति इवेत्यर्थः ( इति = इत्थम् ) मन्ये = उत्प्रेक्षे । अत्रोत्प्रेक्षाऽलङ्कारः ॥ ४८ ॥

विस्रम्भादिति । विस्रम्भात् उरसि निपत्य जातनिद्राम् आतङ्कस्फुरितकठोरगर्भगुर्वीं गृहस्य लक्ष्मीं प्रियगृहिणीं दारुणः ( सन् ) उन्मुच्य क्रव्याद्भ्यः बलिम् इव क्षिपामि इत्यन्वयः । विस्रम्भात् = विश्वासात् 'अयं मम हिताचरणशीलोऽतीवाऽनुरक्तः पतिः' इति विश्वासं कृत्वेत्यर्थः, उरसि = वक्षसि, निपत्य=निपतनं कृत्वा, जातनिद्राम्=सुप्ताम्, आतङ्कस्फुरितकठोरगर्भगुर्वीम् = आतङ्केन = तापशङ्कया, चित्रदर्शनजन्याया भीतेः स्वप्नेऽप्यनुवृत्तेरिति भावः, स्फुरितः=कम्पितः, कठोरः = पूर्णः, यो गर्भः = भ्रूणः तेन गुर्वीम् = गौरववतीम्, 'गुर्वीम्' इत्यनेन यमलगर्भत्वं सीताया वनपलायनाऽक्षमत्वं च व्यज्यते । गृहस्य = गेहस्य, लक्ष्मीं = शोभारूपां, प्रियगृहिणीं = हृदयदयिता पत्नीं, सीतामित्यर्थः, दारुणः = कठोरः ( सन् ), 'निर्घृणः' इति पाठे निर्दय इत्यर्थः, उन्मुच्य = त्यक्त्वा, क्रव्याद्भ्यः = राक्षसादिभ्यः, आममांसभक्षकेभ्य इत्यर्थः । क्रव्यम् = आममांसम्, अदन्तीति क्रव्यादस्तेभ्यः 'क्रव्ये च' इति विट्, बलिमिव = भक्ष्यपदार्थमिव, क्षिपामि = क्षिप्त्वा ददामी-

-होते हैं, ऐसा मुझे लगता है ॥ ४८ ॥

जो मैं—

विश्वाससे छातीपर लेटकर सोई हुई, तापशङ्कासे कम्पित कठोर गर्भसे बोझवाली और गृहलक्ष्मी, ऐसी प्रिय गृहिणी सीताको कठोर होता हुआ परित्याग कर राक्षसोंको भक्ष्य पदार्थकी तरह दे रहा हूं ॥ ४९ ॥

( सीतायाः पादौ शिरसि कृत्वा । ) अयं पश्चिमस्ते रामशिरसि पादपङ्कजस्पर्शः । ( इति रोदिति । )

( नेपथ्ये । )

अब्रह्मण्यम् , अब्रह्मण्यम् ।

रामः—ज्ञायतां भोः ! किमेतत् ?

( पुनर्नेपथ्ये । )

ऋषीणामुग्रतपसां यमुनातीरवासिनाम् ।
लवणत्रासितः स्तोमस्त्रातारं त्वामुपस्थितः ॥ ५० ॥

---

त्यर्थः, 'वर्तमानसामीप्ये वर्तमानवद्वा' इति वर्तमानवत्त्वम् । मदधिको विश्वासघातकः पापश्च कोऽन्यो भवेदिति भावः । उपमाऽलङ्कारः । प्रहर्षिणी वृत्तम् ॥४९॥

सीताया इति । पश्चिमः = अन्त्यः, 'अन्त्यपाश्चात्त्यपश्चिमाः' इत्यमरः, पश्चाद्भवः पश्चिमः 'अग्रादिपश्चाड्डिमच्' इति डिमच्प्रत्ययः ।

नेपथ्य इति । अब्रह्मण्यं = ब्राह्मणानामत्याहितम् , आपतितमिति शेषः, ब्रह्मणि = ब्राह्मणे साधु ब्रह्मण्यं, 'तत्र साधुः' इति यत् , न ब्रह्मण्यमब्रह्मण्यम् , 'अब्रह्मण्यमवध्योक्तौ' इत्यमरः ।

ऋषीणामिति । यमुनातीरवासिनाम् उग्रतपसाम् ऋषीणां स्तोमः लवणत्रासितः ( सन् ) त्रातारं त्वाम् उपस्थितः इत्यन्वयः । यमुनातीरवासिनां = कालिन्दीतटाऽधिष्ठितानाम् , उग्रतपसां = कठिनतपश्चारिणाम् , ऋषीणां = मुनीनां, स्तोमः = समूहः, लवणत्रासितः = लवणराक्षसेन त्रासं प्रापितः ( सन् ), त्रातारं = रक्षकं त्वां = भवन्तम् , उपस्थितः = समायातः, अस्तीति शेषः । उग्रतपश्चरणेन लवणनिग्रहसामर्थ्ये सत्यपि निग्रहकार्यस्य राजाऽधीनत्वेन ऋषयः शरणार्थं भवन्तमुपस्थिता इति भावः ॥ ५० ॥

---

( सीताके चरणोंको शिरमें रखकर ) रामके शिरमें तुम्हारे चरणकमलोंका यह अन्तिम स्पर्श है । ( ऐसा कहकर रोते हैं ) ।

( नेपथ्यमें । )

ब्राह्मणोंको महाभय ! ब्राह्मणोंको महाभय !!

राम—अरे ! पता लगाओ, यह क्या बात है ?

( फिर नेपथ्यमें । )

यमुनाके तटमें रहनेवाले और कठोर तपस्या करनेवाले ऋषियोंका समूह, लवणनामक राक्षससे भयत्रस्त होकर रक्षा करनेवाले आपके पास आया है ॥ ५० ॥

दुर्मुखः—इदो इदो देवी। ( इत इतो देवी। )

सीता—णमो रहुउलदेवदाणं। ( नमो रघुकुलदेवतानाम्। )

( इति निष्क्रान्ताः सर्वे। )

इति महाकविश्रीभवभूतिविरचिते उत्तररामचरिते
चित्रदर्शनो नाम प्रथमोऽङ्कः ॥ १ ॥



---

दुर्मुख इति। देवी=राजमहिषी, इत=अस्मात्स्थानात्, इतः=अस्मिन्स्थाने, सप्तम्यर्थे सार्वविभक्तिकस्तसिः। आगच्छत्विति शेषः।

सीतेति। रघुकुलदेवतानाम्=रघुकुलदेवताभ्यः, प्राकृते चतुर्थीस्थाने षष्ठी प्रयुज्यते।

इतीति। सर्वे=सीतादुर्मुखादयः। अङ्कः=नाटकस्यांशः। अङ्कलक्षणं यथा साहित्यदर्पणे—'प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः। अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तितः।' इति।

इति श्रीशेषराजशर्म्मप्रणीतायामुत्तररामचरित—व्याख्याया चन्द्रकलाऽऽख्याया चित्रदर्शनो नाम प्रथमोऽङ्कः ॥ १ ॥



---

दुर्मुख—महारानी इधरसे पधारें, इधरसे।

सीता—रघुकुलके देवताओंको नमस्कार।

( सब जाते हैं )

यह प्रथम 'चित्रदर्शन' नामक अङ्क समाप्त हुआ ॥ १ ॥



# द्वितीयोऽङ्कः

( नेपथ्ये । )

स्वागतं तपोधनायाः ।

( ततः प्रविशत्यध्वगवेषा तापसी । )

तापसी—अये, वनदेवता फलकुसुमगर्भेण पल्लवार्घ्येण दूरान्मामुपतिष्ठते ।

( प्रविश्य । )

---

नेपथ्य इति । 'कुशीलवकुटुम्बस्य स्थली नेपथ्यमिष्यते ।' इत्युक्तत्वात् । जवनिकातिरोहितं नटवेशभूषापरिग्रहस्थानं नेपथ्यमुच्यते । तपोधनाया = तप एव धनं यस्यास्तस्याः, स्वागतम् = शोभनमागमनम्, आगमनमागतमित्यत्र 'नपुंसके भावे क्त' इति क्तप्रत्यय ।

तत इति । ततः = अनन्तरं, स्वागतकरणाऽनन्तरमित्यर्थ । अध्वगवेशा = पथिकवेशधारिणी, अध्वानं गच्छतीति अध्वग, तस्य इव वेशो यस्याः सा, 'सप्तमीविशेषणे बहुव्रीहौ' इत्यत्र सप्तमीपदज्ञापितो व्यधिकरणबहुव्रीहिः । 'अध्वनीनोऽध्वगोऽध्वन्य पान्थः पथिक इत्यपि ।' इत्यमरः ।

तापसीति । फलकुसुमगर्भेण = फलपुष्पयुक्तेनेत्यर्थः, पल्लवार्घ्येण = सपल्लवपूजाजलेन, अर्घार्थमुदकमर्घ्यं 'पादार्घाभ्यां च' इति यत्, 'मूल्ये पूजाविधावर्घः' इत्यमरः । पल्लवयुक्तमर्घ्यं, पल्लवाऽर्घ्यं, तेन, 'शाकपार्थिवादीनां सिद्धय उत्तरपदलोपस्योपसंख्यानम् इति मध्यमपदलोपी समासः । उपतिष्ठते = पूजयति, अतिथौ गुरुत्वेन देवतात्वारोपात् 'उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम्' इत्यात्मनेपदम् ।

---

( नेपथ्यमें )

तपस्विनीजीका स्वागत है ।

( तब पथिकवेषमें तपस्विनी प्रवेश करती हैं । )

तापसी—अरे ! वनदेवता फल और फूलोंसे भरे पल्लवसहित अर्घ्यके द्वारा दूरसे ही मेरा सत्कार करती हैं ।

( प्रवेश करके )

वनदेवता—( अर्घ्यं विकीर्य । )

यथेच्छाभोग्यं वो वनमिदमयं मे सुदिवसः
सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति ।
तरुच्छाया तोयं यदपि तपसां योग्यमशनं
फलं वा मूलं वा तदपि न पराधीनमिह वः ॥ १ ॥

तापसी—किमत्रोच्यते ?

---

वनदेवतेति । विकीर्य = दत्त्वेत्यर्थ ।

यथेच्छेति । इदं वनं व यथेच्छाभोग्यम्, अयं मे सुदिवस ( अस्ति ); हि सता सद्भि सङ्ग कथमपि पुण्येन भवति । तरुच्छाया, तोयं, यदपि तपसा योग्यम् अशन = फलं वा मूल वा, तदपि इह व पराऽधीन न इत्यन्वय । इदं = पुरोवर्ति, वनं = विपिन, व = युष्माकम्, आदराऽर्थकं वहुवचन वोध्यम् । यथेच्छाभोग्यम्=इच्छानुसारं समन्तात् उपभोगाऽर्हम् । इच्छामनतिक्रम्य यथेच्छं, यथाऽर्थे अव्ययीभाव, भोक्तु योग्यं भोग्यम्, 'ऋहलोर्ण्यत्' इति ण्यत् 'चजो कु घिण्यतो' इति कुत्वम्, समन्ताद्भोग्यम् आभोग्यं, यथेच्छम् आभोग्यं, 'सुप्सुपा' समास । अयं = वर्तमान, मे = मम, सुदिवस = शोभन दिन, सज्जनसंपर्कादिति भाव । उक्तमर्थमर्थान्तरन्यासेन द्रढयति-हीति । हि = यत, 'हि हेताववधारणे ।' इत्यमर, सता = सज्जनाना, सद्भि = सज्जनै, सङ्ग = संपर्क, कथमपि = कष्टेन, पुण्येन = धर्मेण, भवति । तरुच्छाया = वृक्षच्छाया, तोयं = जलं, यदपि तपसा = नियमाना, योग्यम् = उचितम्, अशन = भक्षणीयं, फल वा=प्रसवो वा, मूलं वा = कन्दं वा, तदपि = फलं मूलं च, इह = अस्मिन्वने, व = युष्माक, पराऽधीनम् = अन्याऽऽयत्तं, न = नाऽस्तीत्यर्थ । इदं वनं त्वदीयमेवाऽतोऽत्रत्याना फलमूलानामुपभोगेनाऽनुग्राह्या वयमिति भाव । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कार । शिखरिणी वृत्त—'रसै रुद्रैश्छिन्ना यमनसभला ग शिखरिणी ।' इति तल्लक्षणात् ॥ १ ॥

तापसीति । अत्र=अस्मिन् विषये, किमुच्यते=न किमपि वक्तव्यमिति भाव ।

---

वनदेवता—(अर्घ्य देकर) यह वन आपकी इच्छाके अनुसार उपभोगयोग्य है क्योंकि सज्जनोंका सज्जनोंके साथ सपर्क कष्टमय पुण्यसे होता है । वृक्षकी छाया, जल और जो कुछ तपस्याके योग्य भक्ष्य पदार्थ—फल अथवा मूल है, वह भी यहा आपका पराधीन नहीं है ॥१॥

तापसी—इसपर क्या कहा जाय ?

प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ २ ॥

( उपविशतः )

वनदेवता—कां पुनरत्रभवतीमवगच्छामि ?

---

प्रियेति । वृत्तिः प्रियप्राया, वाचि नियमः विनयमधुरः, मतिः प्रकृत्या कल्याणी, परिचयः अनवगीतः, तत् इदं पुरो वा पश्चाद्वा अविपर्यासितरसम् अनुपधि विशुद्धं साधूनां रहस्यं विजयते इत्यन्वयः । वृत्तिः = व्यवहारः, प्रियप्राया= प्रियप्रचुरो, अतिशयप्रीतिकरो व्यापार इत्यर्थः । वाचि=वचने, नियमः = प्रकारः, विनयमधुरः = नम्रतामनोहरः । मतिः = बुद्धिः, प्रकृत्या = स्वभावेन, 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया, कल्याणी = मङ्गलरूपा । परिचयः = संस्तवः, 'संस्तवः स्यात्परिचयः' इत्यमरः, अनवगीतः = अनिन्दितः, दोषशून्यत्वादिति भावः । तत् = प्रसिद्धम् , इदम् = अभिधीयमानं, पुरो वा=संगमात्पूर्वं वा, पश्चाद्वा= संगमाऽनन्तरं वा, अविपर्यासितरसम् = अनुल्लङ्घिताऽनुरागं, विपर्यासः सञ्जातोऽस्येति विपर्यासितः 'तदस्य संजातं तारकादिभ्य इतच्' इतीतच्प्रत्ययः, तारकादिराकृतिगणः, 'स्याद्व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये' इत्यमरः । अविपर्यासितो रसो यस्य तत् । अनुपधि = छलशून्यम् , ( अत एव ) विशुद्धं=पवित्रं, साधूनां = सज्जनानां, रहस्यं=चरितं, रहसि भवं रहस्यं, दिगादित्वाद्यत् , विजयते= सर्वोत्कर्षेण वर्तते इत्यर्थः, 'विपराभ्यां जेः' इत्यात्मनेपदम् । अत्राऽप्रस्तुतात्साधुरहस्यसामान्यात्प्रस्तुतवनदेवतारहस्यरूपविशेषस्य गम्यमानत्वादप्रस्तुतप्रशंसाऽलङ्कारः । शिखरिणी वृत्तम् ॥ २ ॥

वनदेवतेति । अवगच्छामि=जानामि, का नाम भवतीति प्रश्नरूपो वाक्यार्थः ।

---

व्यवहार अतिशय प्रीतिकारक, वचनमें नियम नम्रतासे मनोहर, बुद्धि स्वभावसे ही मङ्गलरूपा और परिचय अनिन्दित तथा संगमसे पहले या पीछे प्रेमका उल्लङ्घन नहीं करनेवाला, निश्छल और विशुद्ध, ऐसा सज्जनोंका चरित्र सबसे उत्कृष्ट होता है ॥ २ ॥

( दोनों बैठती हैं । )

वनदेवता—आपको मैं क्या समझूँ ।

तापसी—आत्रेय्यस्मि ।

वनदेवता—आर्ये आत्रेयि ! कुतः पुनरिहागम्यते ? किंप्रयोजनो दण्डकारण्योपवनप्रचारः ?

आत्रेयी—

अस्मिन्नगस्त्यप्रमुखाः प्रदेशे भूयांस उद्गीथविदो वसन्ति ।
तेभ्योऽधिगन्तुं निगमान्तविद्यां वाल्मीकिपार्श्वादिह पर्यटामि ॥ ३ ॥

वनदेवता—यदा तावदन्येऽपि मुनयस्तमेव हि पुराणब्रह्मवादिन प्राचे-

---

तापसीति । आत्रेयी = अत्रेरपत्यं स्त्री आत्रेयी, 'इतश्चाऽनिञः' इति ढक्, तदन्तात् 'टिड्ढाणञि' त्यादिना ङीप्, स्त्रीनाम्नस्तद्धिताऽन्तत्वे 'अयुजाक्षरमाकारान्तं स्त्रियै तद्धितम्' इति पारस्करगृह्यसूत्रोक्ति प्रमाणम् ।

वनदेवतेति । कुतः = कस्मात् स्थानात्, प्रचार = सञ्चार ।

अस्मिन्निति । अस्मिन् प्रदेशे अगस्त्यप्रमुखा भूयास उद्गीथविदो वसन्ति, तेभ्यो निगमान्तविद्याम् अधिगन्तुम् इह वाल्मीकिपार्श्वात् पर्यटामि इत्यन्वय । अस्मिन् प्रदेशे = दण्डकारण्याऽऽख्ये स्थाने, अगस्त्यप्रमुखा = अगस्त्यादय । भूयासः = बहव, उद्गीथविद = ब्रह्मवेत्तार, 'ओमित्येकाक्षरमुद्गीथमुपासीत' इति छान्दोग्योपनिषत्प्रमाणेन ब्रह्मणि उद्गीथदृष्टिं कुर्वन्त इत्यर्थः, वसन्ति = निवसन्ति । तेभ्यः = अगस्त्यादिमुनिभ्य, 'आख्यातोपयोगे' इति पञ्चमी, निगमान्तविद्या= वेदान्तविद्याम्, अधिगन्तुं = ज्ञातुम्, इह = दण्डकारण्ये, वाल्मीकिपार्श्वात् = वाल्मीकिसमीपात्, पर्यटामि = भ्रमामि । 'पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते । अध्यापनं च वेदाना सावित्रीवाचनं तथा ॥' इति यमोक्तेरत्र आत्रेय्या वेदाऽध्ययन संगच्छते । इन्द्रवज्रा वृत्तम् ॥ ३ ॥

वनदेवतेति । पुराणब्रह्मवादिनं = पुरातनवेदाऽध्यापकं, प्राचीनं ब्रह्मप्रतिपादकं वा । ब्रह्म वेदं शुद्धचैतन्यं वा वदतीति तच्छीलो ब्रह्मवादी, ताच्छील्ये णिनिः, 'वेदस्तत्त्वं तपो ब्रह्म, ब्रह्मा विप्रः प्रजापति ।' इत्यमर, पुराणश्चासौ ब्रह्मवादी

---

तापसी—मैं आत्रेयी हूँ ।

वनदेवता—आर्ये आत्रेयि ! आप कहाँसे आ रही हैं, ? और दण्डकारण्यमें घूमनेका क्या प्रयोजन है ?

आत्रेयी—इस स्थानमें उद्गीथको जाननेवाले अगस्त्य आदि बहुतेरे ऋषि रहते हैं, उनसे वेदान्तविद्या पढनेके लिए यहाँ वाल्मीकि ऋषिके पाससे आ रही हूँ ॥ ३ ॥

वनदेवता—जब कि और भी मुनिलोग पुराने ब्रह्मवादी उन्हीं वाल्मीकि ऋषिकी,

तसमृषिं ब्रह्मपारायणायोपासते, तत्कोऽयमार्यायाः प्रवासः ?

आत्रेयी—तस्मिन् हि महानध्ययनप्रत्यूह इत्येष दीर्घप्रवासोऽङ्गीकृतः।

वनदेवता—कीदृशः ?

आत्रेयी—तत्र भगवतः केनापि देवताविशेषेण सर्वप्रकाराद्भुतं स्तन्यत्यागमात्रके वयसि वर्तमानं दारकद्वयमुपनीतम्। तत्खलु न केवलं तस्य, अपि तु तिरश्चामप्यन्तःकरणानि तत्त्वान्युपस्नेहयति।

---

पुराणब्रह्मवादी तम्, प्राचेतसं = वाल्मीकिं, प्रचेतसोऽपत्यं पुमान्प्राचेतसस्तं वरुणपुत्रम्, ब्रह्मपारायणाय = वेदपारगमनाय, वेदान्ताऽध्ययनायेत्यर्थः। पारस्याऽयनं पारायणं 'पूर्वपदात्संज्ञायामगः' इति णत्वम्, ब्रह्मणः पारायणं ब्रह्मपारायणं तस्मै, उपासते = गुरुत्वेन सेवन्त इत्यर्थः, 'गुरुशुश्रूषया विद्या पुष्कलेन धनेन च। अथवा विद्यया विद्या' इति स्मरणादिति भावः। प्रवासः = देशान्तरगमनम्।

आत्रेयीति। तस्मिन् = वाल्मीकेराश्रमे। अध्ययनप्रत्यूहः = पठनविघ्नः, 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः।

आत्रेयीति। भगवतः = वाल्मीकेः, समीप इति शेषः, केनाऽपि = अविज्ञातनामधेयेन, स्तन्यत्यागमात्रके = स्तन्यत्यागाऽनन्तरोद्भूते, शैशवे इत्यर्थः। त्यजनं त्यागः भावे घञ्, स्तनयोर्भवं स्तन्यं, 'शरीरावयवाच्च' इति यत्, स्तन्यत्यागः मात्रा (परिमाणम्) यस्य तत् स्तन्यत्यागमात्रकं तस्मिन्, समासान्तः कप्, स्तन्यत्यागपदेन स्यन्यत्यागकालो लक्ष्यते। दारकद्वयं = शिशुद्वितयम् उपनीतं = समर्पितम्, तत् = दारकद्वयम्, तस्य = भगवतो वाल्मीकेरित्यर्थः, तिरश्चामपि = पशुपक्ष्यादीनामपि, अन्तःकरणानि = मनोबुद्ध्यादीनि, तत्त्वानि = पदार्थान्। 'न केवलम्' इत्यतोऽनन्तरम्—'ऋषीणामपि तु सचराऽचराणां भूतानामान्तराणि' इति पुस्तकान्तरस्थः पाठस्तत्र—सचराऽचराणा = स्थावरजङ्गमसहितानां,

---

संपूर्ण वेदका अध्ययन करनेके लिए सेवा करते हैं, तब क्यों आर्याका यह प्रवास है ?

आत्रेयी—वहा पढ़नेमें बड़ा विघ्न आ पड़ा, इस कारण मैंने इस दीर्घ प्रवासको स्वीकृत किया है।

वनदेवता—कैसा (विघ्न) ?

आत्रेयी—वहापर भगवान् वाल्मीकिके समीपमें किसी देवताने सब तरहसे अनूठे और दूध छोड़नेकी बाल्यावस्थामें विद्यमान दो लड़कोंको छोड़ा है वे लड़के केवल उन्हीके नहीं, बल्कि पशुपक्षियोंके भी अन्तःकरणरूप तत्त्वोंको स्नेहयुक्त करते हैं।

वनदेवता—अपि तयोर्नामसंज्ञानमस्ति ?

आत्रेयी—तयैव किल देवतया तयोः कुशलवाविति नामनी च प्रभावश्चाख्यातः।

वनदेवता—कीदृशः प्रभावः ?

आत्रेयी—तयोः किल सरहस्यानि जृम्भकास्त्राणि जन्मसिद्धानीति।

वनदेवता—अहो नु भोश्चित्रमेतत्।

आत्रेयी— तौ च भगवता वाल्मीकिना धात्रीकर्मतः परिगृह्य पोषितौ

---

भूताना = प्राणिनाम्, आन्तराणि = मनोबुद्ध्यादीनि इत्यर्थः, उपस्नेहयति = स्नेहवन्ति करोति, स्नेहवच्छब्दात् तत्करोतीति णिच् मतुब्लोपश्च।

वनदेवतेति। नामसंज्ञानं = नाम्न = अभिलापकशब्दस्याभिधानस्येत्यर्थः, संज्ञानम् = सङ्केतसम्बन्धकरणं, यद्वा बोधः, अपिशब्दः प्रश्नार्थकः।

आत्रेयीति। तयैव किल देवतया = वाल्मीकिसमीपे दारकद्वयमानेत्र्येत्यर्थः, गङ्गयेति यावत्। नामनी = अभिधाने, अत्र वक्ष्यमाणस्य 'आख्यात' इति पदस्य लिङ्गविभक्त्योर्विपरिणामेन 'आख्याते' = कथिते इत्यर्थो बोध्य। प्रभावश्च = सामर्थ्यं च, आख्यात = कथित।

आत्रेयीति। तयो = कुशलवयोः, सरहस्यानि = प्रयोगसंहारमन्त्रसहितानि, जन्मसिद्धानि = जन्मना सिद्धानि, नतूपदेशेनेति भावाऽर्थः, आजन्मसिद्धानी'-ति पाठे जन्मन आरभ्य सिद्धानीत्यर्थः।

वनदेवतेति। चित्रमेतत् = दुरधिगमानामेषा जृम्भकास्त्राणा गुरूपदेशमन्तरेण स्वत सिद्धिराश्चर्यमेतदिति भावः।

आत्रेयीति। धात्रीकर्मतः = उपमातृक्रियया, 'धात्रीकर्मवत्सलताम्' इति पाठे उपमातृक्रियया स्निग्धत्वमित्यर्थ, परिगृह्य=स्वीकृत्य, पोषितौ=क्षीरादिना

---

वनदेवता—क्या आप उन दोनोंका नाम जानती हैं ?

आत्रेयी—उन्हीं देवताने उन दोनोंका 'कुश और लव' यह नाम और प्रभाव भी बतलाया है।

वनदेवता—कैसा प्रभाव ?

आत्रेयी—उन दोनोंको मन्त्रसहित जृम्भकास्त्र जन्मसिद्ध हैं।

वनदेवता—ओह ! यह आश्चर्य है।

आत्रेयी—भगवान् वाल्मीकिने उन दोनोंको लेकर धात्रीकर्मसे पोषण और रक्षण किया,

वनदेवता—अपि तयोर्नामसंज्ञानमस्ति ?

आत्रेयी—तयैव किल देवतया तयोः कुशलवाविति नामनी च प्रभा आख्यातः ।

वनदेवता—कीदृशः प्रभावः ?

आत्रेयी—तयोः किल सरहस्यानि जृम्भकास्त्राणि जन्मसिद्धानीति

वनदेवता—अहो नु भोश्चित्रमेतत् ।

आत्रेयी— तौ च भगवता वाल्मीकिना धात्रीकर्मतः परिगृह्य पोषि

---

भूताना = प्राणिनाम्, आन्तराणि = मनोबुद्ध्यादीनि इत्यर्थः, उपस्नेहयति स्नेहवन्ति करोति, स्नेहवच्छब्दात् तत्करोतीति णिच् मतुब्लोपश्च ।

वनदेवतेति । नामसंज्ञानं = नाम्न = अभिलापकशब्दस्याभिधानस्येत्य संज्ञानम् = सङ्केतसम्बन्धकरणं, यद्वा बोध, अपिशब्द प्रश्नार्थकः ।

आत्रेयीति । तयैव किल देवतया = वाल्मीकिसमीपे दारकद्वयमानेत्र्येत्य गङ्गयेति यावत् । नामनी = अभिधाने, अत्र वक्ष्यमाणस्य 'आख्यात' इति प लिङ्गविभक्त्योर्विपरिणामेन 'आख्याते' = कथिते इत्यर्थो बोध्य । प्रभावश्च = साम च, आख्यात = कथित ।

आत्रेयीति । तयो = कुशलवयोः, सरहस्यानि = प्रयोगसंहारमन्त्रसहित जन्मसिद्धानि = जन्मना सिद्धानि, नतूपदेशेनेति भावाऽर्थ, आजन्मसिद्धा ति पाठे जन्मन आरभ्य सिद्धानीत्यर्थः ।

वनदेवतेति । चित्रमेतत् = दुरधिगमानामेषा जृम्भकास्त्राणा गुरूपदेशम रेण स्वत सिद्धिराश्चर्यमेतदिति भाव ।

आत्रेयीति । धात्रीकर्मत = उपमातृक्रियया, 'धात्रीकर्मवत्सलत इति पाठे उपमातृक्रियया स्निग्धत्वमित्यर्थ, परिगृह्य=स्वीकृत्य, पोषितौ=क्षीरा

---

वनदेवता—क्या आप उन दोनोंका नाम जानती हैं ?

आत्रेयी—उन्हीं देवताने उन दोनोंका 'कुश और लव' यह नाम और प्रभाव बतलाया है ।

वनदेवता—कैसा प्रभाव ?

आत्रेयी—उन दोनोंको मन्त्रसहित जृम्भकास्त्र जन्मसिद्ध हैं ।

वनदेवता—ओह ! यह आश्चर्य है ।

आत्रेयी—भगवान् वाल्मीकिने उन दोनोंको लेकर धात्रीकर्मसे पोषण और रक्षण कि

आत्रेयी—अन्यश्च ।

वनदेवता—अथापरः कः ?

आत्रेयी—अथ स ब्रह्मर्षिरेकदा माध्यन्दिनसवनाय नदीं तमसामनुप्रपन्नः । तत्र युग्मचारिणोः क्रौञ्चयोरेकं व्याधेन वध्यमानं ददर्श । आकस्मिकप्रत्यवभासां देवीं वाचमानुष्टुभेन छन्दसा परिणतामभ्युदैरयत् ।

मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।

---

आत्रेयीति । अन्यश्च = अपरश्च, प्रत्यूहोऽस्तीति शेषः ।

आत्रेयीति । सः = पूर्वोक्तः, ब्रह्मर्षिः = वाल्मीकिः, माध्यन्दिनसवनाय=मध्याह्नस्नानाय, तमसा = तमसानामधेयाम् , अनुप्रपन्नः = प्राप्तः, युग्मचारिणोः = मिथुनचारिणोः, क्रौञ्चयोः = कुञ्चोः, एकम्=एकतरं, पुरुषक्रौञ्चमित्यर्थः, वध्यमानं = हन्यमानं 'विध्यमानञ्च' इति पाठे शरेण क्रियमाणवेधनमित्यर्थः । आकस्मिकप्रत्यवभासाम् = निर्हेतुकाविर्भावाम् , अचिन्तितोपनतामित्यर्थः, स्वतः सिद्धामिति यावत् । आनुष्टुभेन = अनुष्टुभा; अनुष्टुबेव आनुष्टुभं, तेन, स्वार्थिकोऽण्प्रत्ययः, 'क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति वचनात् क्लीवत्वम् , परिणता = जातपरिणामाम् , अभ्युदैरयत्=उच्चारयामास । अनुष्टुप्छन्दोलक्षणं यथा—'पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः । गुरु षष्ठं तु पादानां शेषेष्वनियमो मतः ॥' इति छन्दोमञ्जरी ।

मा निषादेति । हे निषाद ! त्वं शाश्वती समाः प्रतिष्ठा मा अगमः, यत् क्रौञ्चमिथुनात् काममोहितम् एकम् अवधी इत्यन्वयः । हे निषाद = हे व्याध, निषीदन्ति अस्मिन्पापानीति निषाद इत्ययं योगार्थे प्रयुक्तः । त्वं, शाश्वतीः = सनातनी, समाः = वर्षाणि, 'कालाऽध्वनोरत्यन्तसंयोगे' इति द्वितीया । प्रतिष्ठा = स्थितिं, मा अगमः = न प्राप्नुहि, चिरकालपर्यन्तं त्वं सुखं न लभस्वेत्यर्थः, 'माङि

---

आत्रेयी—और भी ।

वनदेवता—और दूसरा क्या विघ्न है ?

आत्रेयी—अनन्तर एक दिन वे ब्रह्मर्षि (वाल्मीकि) मध्याह्नस्नानके लिए तमसा नदीमें पहुँचे । वहाँपर साथ साथ चलते हुए ( नर और मादा ) दो क्रौञ्च पक्षियोंमेंसे एक (नर) को उन्होंने व्याधसे मारे जाते हुए देखा । तब उन्होंने अकस्मात् आविर्भूत अनुष्टुप् छन्दसे परिणत वाग्देवीका उच्चारण किया—

हे व्याध ! जो कि तुमने क्रौञ्ची और क्रौञ्चपक्षीके जोडेमेंसे काममोहित एक (नर) को मार

यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ ५ ॥

वनदेवता—चित्रम् । आम्नायादन्यत्र नूतनश्छन्दसामवतारः ।

आत्रेयी—तेन हि पुनः समयेन तं भगवन्तमाविर्भूतशब्दप्रकाशमृषिमुपसंगम्य भगवान् भूतभावनः पद्मयोनिरवोचत्— ऋषे ! प्रबुद्धोऽसि

---

लुङ्' इत्यनेन माङि उपपदे लुङ्, 'न माङ्योगे' इत्यडागमनिषेधस्याऽभावस्त्वार्षः ! अत्र 'न माङ्योगे' इत्यडागमनिषेधस्य परिपालनार्थं नवभूतिनाटतत्स्पर्शिन्या 'त्वमगम' इत्यत्र 'तु अम गम' इति पदत्रैविध्यं स्वीकृत्य हे अम = लक्ष्मीरहित ! । अविद्यमाना मा लक्ष्मीर्यस्य तत्सम्बुद्धौ, त्वं प्रतिष्ठां मा गम इति व्याख्यातं, तत्तु क्लिष्टत्वादुपेक्षितम् । एवं च भवभूतार्थबोधिन्या पूर्वोक्तनिषेधशास्त्रस्य मर्यादारक्षणार्थं 'नाऽयं माङ् किन्तु माशब्दः, अतो 'न माङ्योगे' इति अडागमनिषेधो न' इति यदुक्तं, तन्न सम्यक्, एवं चेत्तर्हि कुतो लुङः प्रसङ्गः ? 'माङि लुङ्' इत्यस्याऽप्रसक्तेः, क्रियमाणशापस्योत्तरकालसम्बन्धाल्लुङोऽनवकाशाच्च, ततोऽस्मद्व्याख्यानमेव समीचीनमिति दिक् । शापकरणस्य हेतुमाह—यदित्यादिना । यत् = यस्मात्, क्रौञ्चमिथुनात् = क्रौञ्चपक्षिद्वन्द्वात्, क्रौञ्ची च क्रौञ्चश्च क्रौञ्चौ, 'पुमान्स्त्रिया' इत्येकशेषः, 'क्रुङ् क्रौञ्चः' इत्यमरः, क्रौञ्चयोर्मिथुनं, तस्मात्, 'स्त्रीपुंसौ मिथुनं द्वन्द्वम्' इत्यमरः, काममोहितं = कामेन = मदनेन, मोहितम् = सजातमोहम्, एकं = पुमांसम्, अवधीः = हतवानसि ॥ ५ ॥

वनदेवतेति । आम्नायात् = वेदात्, 'श्रुतिः स्त्री वेद आम्नायस्त्रयी' इत्यमरः, अन्यत्र = अन्यस्मिन्, लोक इत्यर्थः, 'अन्य' इति पाठे भिन्न इत्यर्थः, नूतनः = नवीनः, अश्रुतपूर्व इत्यर्थः । छन्दसां = छन्दसः, बहुवचनं तु तत्कालादारभ्य भाविनीं क्रियामाश्रित्येत्यवधेयम्, अवतारः = आविर्भावः ।

आत्रेयीति । समयेन = कालेन, 'समयाः शपथाचारकालसिद्धान्तसंविदः' । इत्यमरः, भूतभावनः = लोकोत्पादकः । भूतपदेन भूताधारो लोको लक्ष्यते, तथा च भूतं भावयतीति भूतभावनः, णिजन्ताद् भूधातोर्बाहुल्येन कर्तरि ल्युट्, पद्मयोनि-

---

दिया, इस कारण तू बहुत काल तक स्थिति मत प्राप्त कर ॥ ५ ॥

वनदेवता—आश्चर्य है । वेदसे अन्यत्र (लोकमें) भी छन्दका नया आविर्भाव हो गया ।

आत्रेयी—ऐसी बुद्धिसे जिनको शब्दप्रकाश आविर्भूत हो गया है—ऐसे भगवान् वाल्मीकि ऋषिके पास आकर लोककी उत्पत्ति करनेवाले भगवान् ब्रह्माने कहा—'ऋषि जी !

वागात्मनि ब्रह्मणि । तद् ब्रूहि रामचरितम् । अव्याहतज्योतिरार्षं ते चक्षुः प्रतिभातु । आद्यः कविरसि' इत्युक्त्वान्तर्हितः । अथ स भगवान् प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्तमितिहासं रामायणं प्रणिनाय ।

---

कमलोद्भवः, ब्रह्मेत्यर्थः । पद्मं=विष्णुनाभिकमलम्, योनिः=कारणं यस्य स पद्मयोनिः । आविर्भूतशब्दप्रकाशम्=प्रादुर्भूतशब्दज्योतिष्कम् । आविर्भूतः शब्दप्रकाशो यस्मात्तम्, वागात्मनि=शब्दस्वरूपे, ब्रह्मणि=शब्दब्रह्मणीत्यर्थः, प्रबुद्धोऽसि=प्रकृष्टज्ञानोऽसि, तत् = तस्माद्धेतोः, शब्दब्रह्मणि तव प्रकृष्टं ज्ञानं सम्पन्नमत, रामचरितं = रामस्य चरितं = रामकथां, ब्रूहि = कथय । तत्प्रतिपादने योग्यतावैशिष्ट्योत्पादनार्थं वरमपि वितरति तावत्पद्मयोनिरव्याहतेत्यादिना । अव्याहतज्योतिः = अकुण्ठितप्रकाशम् । अव्याहतं ज्योतिर्यस्य तत्, आर्षम् = ऋषिसम्बन्धि, योगजन्यमित्यर्थः । ते = तव, 'प्रातिभम्' इत्यधिकः क्वचित्कः पाठस्तत्र प्रतिभोत्पन्नमित्यर्थः, प्रतिभालक्षणं च 'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता ।' इत्युक्तप्रकारं बोध्यम्, चक्षुः = नेत्रं, ज्ञानमित्यर्थः । प्रतिभातु = प्रकाशितं भवतु, चक्षुरादीन्द्रियजन्यं ज्ञानं तु प्रत्यक्षमेव, अत्र रामचरितप्रतिपादने त्रैकाल्यज्ञानमपेक्षितमतो लक्षणया एषोऽर्थः । आद्यः=प्रथमः, कविः=कवयिता, तत्कालात्प्राक् परमेश्वर एव 'कविः क्रान्तदर्शी'त्युक्तनयात् कविशब्दः प्रयुक्तः, अतो लोके त्वमेव आद्यः कविरसीत्यभिप्रायः, अन्तर्हितः = परोक्षतां गतः । अथ = पद्मयोनेरन्तर्धानानन्तरमित्यर्थः, प्राचेतसः = वाल्मीकिः, शब्दब्रह्मणः=शब्दरूपस्य ब्रह्मणः, विवर्तं=परिणामविशेषम्, इतिहासं = पुरावृत्तं, रामायणं = रामायणनामकं महाकाव्यम्, रामस्याऽयनं = गमनं, 'ये गत्यर्थास्ते ज्ञानार्थाः' इति न्यायेन ज्ञानमित्यर्थः, यस्मिंस्तत् रामायणम् । प्रणिनाय = निर्मितवान् । अत्र विवर्तपदेन 'अतत्त्वतोऽन्यथाप्रथा विवर्त इत्युदीरितः' इत्युक्तेर्वस्तुनः स्वस्वरूपाऽपरित्यागेन स्वरूपान्तरेण मिथ्याप्रतीतिकारकस्य परिणामविशेषस्य बोधो भवति, तथा च शब्दब्रह्मणः स्वस्वरूपपरित्यागं विनैवाऽत्राऽपि रामायणरूपस्वरूपाऽन्तरेण मिथ्याप्रतीतिर्भवति ।

---

तुम शब्दरूप ब्रह्ममें ज्ञानसम्पन्न हो गये हो । इस कारण रामचरित्रका वर्णन करो । अकुण्ठित प्रकाशवाला आर्ष ( ऋषिसम्बन्धी ) ज्ञान तुम्हें प्रकाशित हो । तुम आदि कवि हो ।' ऐसा कहकर वे अन्तर्हित हो गये । तब भगवान् वाल्मीकिने मनुष्योंमें सबसे पहले 'शब्दब्रह्मका' वैसा रूपान्तर रामायणनामक इतिहास बनाया ।

वनदेवता—हन्त ! पण्डितः संसारः ।

आत्रेयी—तस्मादेव हि ब्रवीमि 'तत्र महानध्ययनप्रत्यूह' इति ।

वनदेवता—युज्यते ।

आत्रेयी—विश्रान्तास्मि भद्रे ! संप्रत्यगस्त्याश्रमस्य पन्थानं ब्रूहि ।

वनदेवता—इतः पञ्चवटीमनुप्रविश्य गम्यतामनेन गोदावरीतीरेण ।

आत्रेयी—( सास्रम् । ) अप्येतत्तपोवनम् ? अप्येषा पञ्चवटी ? अपि सरिदियं गोदावरी ? अप्ययं गिरिः प्रस्रवणः ? अपि जनस्थानवनदेवता त्वं वासन्ती ?

वनदेवता—तथैव तत्सर्वम् ।

आत्रेयी—हा वत्से जानकि !

---

वनदेवतेति । हन्त=हर्षद्योतकमव्ययमिदम् । संसारः=सांसारिको जनः, लक्षणया एषोऽर्थः । पण्डित = विद्वान्, सरलया शैल्या रचितत्वाद्रामायणस्य पाठादेव सर्वेऽपि विद्वांसो भविष्यन्तीति भाव ।

वनदेवतेति । युज्यते = सम्बद्ध्यते, 'तत्र महानध्ययनप्रत्यूह' इति तव कथनं हेतुना सम्बध्यत इति भाव. ।

आत्रेयीति । विश्रान्ता = कृतविश्रामा ।

वनदेवतेति । पञ्चवटीं=पञ्चाना वटाना समाहारः पञ्चवटी ताम् 'तद्धितार्थोत्तरपदसमाहारे च' इति समासस्तस्य "संख्यापूर्वो द्विगु इति द्विगुसंज्ञा, 'अकारान्तोत्तरपदो द्विगु स्त्रियामिष्ट' इति वचनात् 'द्विगो'' इति ङीप् ।

आत्रेयीति । सास्रम्=अश्रूणि विमुच्येत्यर्थः, अश्रुमोचनं तु रामपरित्यक्तायाः सीतायाः स्मरणाद्बोध्यम् । अपि = इदं प्रश्नार्थकमव्ययम् ।

---

वनदेवता—हन्त ! तब तो सांसारिक जन भी पण्डित हो जायेंगे ।

आत्रेयी—इसी कारणसे कहती हूँ कि—'वहाँ पढनेमें बडा विघ्न है' ।

वनदेवता—ठीक है ।

आत्रेयी—कल्याणि ! मैं विश्राम कर चुकी । अब अगस्त्यजीके आश्रमका रास्ता बतलाइये ।

वनदेवता—यहाँसे पञ्चवटीमें प्रवेश कर गोदावरीके इस किनारेसे जाइए ।

आत्रेयी—( आँसू भर कर ) क्या यह तपोवन है ? क्या यह पञ्चवटी है ? क्या यह गोदावरी नदी है । क्या यह प्रस्रवण पर्वत है ? और क्या आप जनस्थानकी वनदेवता वासन्ती हैं ?

वनदेवता—जैसा आप कहती हैं, सब वैसा ही है ।

आत्रेयी—हा बेटी सीते !

स एष ते वल्लभबन्धुवर्गः प्रासङ्गिकीनां विषयः कथानाम् ।
त्वां नामशेषामपि दृश्यमानः प्रत्यक्षदृष्टामिव नः करोति ॥ ६ ॥

वासन्ती—( सभयम् । स्वागतम् । ) कथं नामशेषेत्याह ? ( प्रकाशम् । ) किमत्याहितं सीतादेव्याः ?

आत्रेयी—न केवलमत्याहितम् , सापवादमपि । ( कर्णे । ) एवमिति ।

---

स इति । प्रासङ्गिकीना कथाना विषय· दृश्यमान स एष ते वल्लभवन्धुवर्गः नामशेषामपि त्वा न· प्रत्यक्षदृष्टामिव करोति इत्यन्वय । प्रासङ्गिकीनाम्=अवसराऽऽगताना, 'प्रसङ्गः स्यादवसरः' इत्यमर· । कथाना = वाक्याना, विषय = प्रतिपाद्य·, दृश्यमान· = अवलोक्यमान·, सः = पूर्वाऽनुभूत , एष· = पुरोवर्ती, ते = तव वल्लभवधुवर्ग· = प्रियवन्धुसमूह , तपोवनपञ्चवटीगोदावरीप्रस्रवणा अपि सीताया प्रियाः वन्धुतुल्याश्च, वासन्ती तु सख्याद्वन्धुरेव; अतो वर्गपदोपादानेन समेषा समुच्चय·, 'वन्धु' स्थाने 'शाखी'ति पुस्तकान्तरस्थः पाठस्तस्य वृक्ष इत्यर्थ· कार्य·, सीतया जलसेचनात्परिवर्द्धनात्तेषा वृक्षाणामपि प्रियवन्धुत्वमवधेयम् । नामशेषामपि = अभिधानमात्राऽवशिष्टामपि, श्वापदवहुलेऽरण्ये त्यक्तत्वात् 'सीतोपरते'ति सम्भावनयेयमुक्ति·, त्वा = सीता, न· = अस्माकं, प्रत्यक्षदृष्टामिव=साक्षादवलोकितामिव, 'प्रत्यक्षदृश्याम्' इति पाठे 'चक्षुर्ग्राह्याम्' इत्यर्थ·, करोति = विदधाति, 'एकसम्वन्धिज्ञानमपरसम्वन्धिस्मारकं भवती'ति न्यायादिति भावः । अत्र क्रियोत्प्रेक्षाभूतस्य सीतारूपपदार्थस्य प्रत्यक्षायमाणत्वेन वर्णनाद्भाविकालङ्कारश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः । इन्द्रवज्रोपेन्द्रवज्रयोः संमिश्रणादुपजातिर्वृत्तम् । 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति तल्लक्षणम् ॥ ६ ॥

वासन्तीति । अत्याहित = जीवनाऽपेक्षारहितं कर्म, जीवनेऽपि सन्देहात्मकं किं कर्म सीताया· संवृत्तमिति भावः, 'अत्याहित महाभीति कर्म जीवाऽनपेक्षि च' । इत्यमरः ।

आत्रेयीति । साऽपवादमपि = लोकाऽपवादसहितमपि, अत्याहितं जातमिति

---

प्रसङ्गसे आई हुई कथाओंके विषयमें और दिखाइ देते हुए वे ही तुम्हारे प्रियवन्धुलोग नाममात्रसे अवशिष्ट भी तुमको हमें प्रत्यक्ष देखी जाती हुई की तरह कर रहे हैं ॥ ६ ॥

वासन्ती—( डरके साथ मन ही मन ) क्यों 'नाममात्रसे अवशिष्ट' कहती हैं ? ( प्रकाश भावसे ) सीतादेवीकी कैसी महाभीति ( अनर्थ ) हुई है ?

आत्रेयी—केवल महाभीति ही नहीं, साथ साथ लोकाऽपवाद भी (कानमें) · ऐसा र ··।

वासन्ती—हा दारुणो दैवनिर्घातः । ( इति मूर्च्छति । )

आत्रेयी—भद्रे ! समाश्वसिहि समाश्वसिहि ।

वासन्ती—हा प्रियसखि ! ईदृशस्ते निर्माणभागः हा रामभद्र ! अथवा अलं त्वया । आत्रेयि ! अथ तस्मादरण्यात्परित्यज्य निवृत्ते लक्ष्मणे सीतायाः किं वृत्तमिति काचिदस्ति प्रवृत्तिः ?

आत्रेयी—नहि नहि ।

वासन्ती—कष्टम् । आर्यारुन्धतीवसिष्ठाधिष्ठितेषु नः कुलेषु* जीवन्तीषु च वृद्धासु राज्ञीषु कथमिदं जातम् ?

---

सम्बन्ध , अत्याहितस्यैव का कथा ? लोकनिन्दाऽपि सजातेति भाव । कर्णे इति । 'लोकाऽपवादप्रयुक्तया रामाज्ञया लक्ष्मणेन श्वापदबहुलेऽरण्ये एकाकिनी सीता परित्यक्ते'त्ययमर्थः, एवमितीति वाक्यगर्भस्थो वोद्धव्यः ।

वासन्तीति । हा = खेदद्योतकमव्ययम् । 'अहहे'ति पाठे खेद आश्चर्यं वा द्योत्यते, 'अहहेत्यद्भुते खेदे' इत्यमरः । दारुण = तीव्र , दैवनिर्घात = दुर्भाग्यप्रहार ।

वासन्तीति । ते = तव, निर्माणभाग = सृष्टिफलम् , ईदृश॰ = एतादृश , यत्त्वमेतादृशे विजने महारण्य एकाकिनी परित्यक्तेति भाव । अथवा = पक्षान्तरे, त्वया अलं = तवोपालम्भेन कोऽपि लाभो नाऽस्तीत्यर्थ , किं वृत्त = किं निष्पन्न ? प्रवृत्ति = वार्ता ।

आत्रेयीति । नहि नहि = नैव काऽपि प्रवृत्तिरिति भावः, द्विरुक्तिरवधारणार्था ।

वासन्तीति । आर्याऽरुन्धती वसिष्ठाऽधिष्ठितेषु=पूज्याऽरुन्धतीवसिष्ठाभ्या कृत-

---

वासन्ती—हाय ! दुर्भाग्यका कठोर प्रहार है । ( ऐसा कहकर मूर्च्छित होती है । )

आत्रेयी—कल्याणि ! आप आश्वस्त हों, आश्वस्त हों ।

वासन्ती—हा प्रिय सखि ! तुम्हारे जीवनका ऐसा परिणाम हुआ । हा रामभद्र ! अथवा तुम्हें उलहना देनेकी कोई आवश्यकता नहीं । आर्ये आत्रेयि ! पीछे सीताजीको छोडकर लक्ष्मणजीके लौटनेपर सीताका क्या हुआ, कुछ ज्ञान है ?

आत्रेयी—नहीं, नहीं ।

वासन्ती—कष्ट है । आर्या अरुन्धती और वसिष्ठसे अधिष्ठित रघुवशमें बूढी महारानियोंके जीते हुए यह कैसे हुआ ?

---

*'—धिष्ठिते रघुकुलगृहे' इति पाठान्तरम् ।

आत्रेयी—ऋष्यशृङ्गसत्रे गुरुजनस्तदाऽऽसीत्। संप्रति परिसमाप्तं सत्रम्। ऋष्यशृङ्गेण च संपूज्य विसर्जिता गुरवः। ततो भगवत्यरुन्धती 'नाहं वधूविरहितामयोध्यां गच्छामी'त्याह। तदेव राममातृभिरनुमोदितम्। तदनुरोधाद्भगवतो वसिष्ठस्यापि श्रद्धा 'वाल्मीकितपोवनं गत्वा वत्स्याम' इति।

वासन्ती—अथ स रामभद्रः किमाचारः?

आत्रेयी—तेन राज्ञा राजक्रतुरश्वमेधः प्रक्रान्तः।

---

स्थितिषु, नः = अस्माकम्, आत्मीयानामिति शेषः, वृद्धासु = जरतीषु, राज्ञीषु = देवीषु, कौसल्यादिष्विति भावः, इदं = गर्भिणीवधूपरित्यागात्मकं कर्म, कथं = केन प्रकारेण, जातं = सम्पन्नम्, ईदृशाऽकार्यकरणप्रवृत्तौ रामः कथमरुन्धतीवसिष्ठादिभिर्न निवारित इति भावः।

आत्रेयीति। तदा=तस्मिन् समये, सीतानिर्वासनकाल इति भावः, गुरुजनः= पूज्यजनः, अरुन्धतीवसिष्ठादिरित्यर्थः, ऋष्यशृङ्गसत्रे = ऋष्यशृङ्गयज्ञे, संपूज्य = समर्च्य, गुरवः = अरुन्धतीवसिष्ठादयः, विसर्जिताः = स्वस्वस्थानगमनार्थमनुमताः, वधूविरहिता = स्नुषावियुक्ता, सीताविमुक्तामिति भावः। अनुमोदितम् = अनुमोदनं कृतम्, तदनुरोधात् = तासामनुसरणाद्धेतोः, श्रद्धा = स्पृहा, स्पृहास्थाने 'परिशुद्धा वाचः' इति पुस्तकान्तरस्थः पाठः।

वासन्तीति। अथ = सीतानिर्वासनाऽनन्तरं, सः = पूर्वोक्तः, किमाचारः = क आचारो यस्य सः, किंकर्मेत्यर्थः, अस्तीति शेषः, साम्प्रतं स किमनुतिष्ठतीति वाक्यार्थः, 'किमारम्भः' इति पुस्तकान्तरपाठः, तस्य किमारभते इति भावाऽर्थः।

आत्रेयीति। तेन = पूर्वोक्तेन, राज्ञा = भूपेन, 'रामभद्रेण' इति नामग्राहव्यतिरेकेण ईदृङ्निर्देशः प्रणयाऽभावद्योतकः। राजक्रतुः = राजसाधारणो यज्ञः, यद्वा—क्रतूनां राजा राजक्रतुः, 'राजदन्तादिषु परम्' इति राजपदस्य पूर्वनिपातः, यज्ञश्रेष्ठ इत्यर्थः, अश्वमेध इति भावः। प्रक्रान्तः = आरब्धः।

---

आत्रेयी—उस समय गुरुजन ऋष्यशृङ्गके यज्ञमें थे। अभी बारह वर्षमें सम्पन्न होने वाला यज्ञ समाप्त हो गया। ऋष्यशृङ्गने पूजा करके गुरुजनोंको विदा कर दिया। तब भगवती अरुन्धतीने—'मैं वधू सीतासे रहित अयोध्यामें नहीं जाऊंगी' ऐसा कहा। रामकी माताओंने उसी वचनका अनुमोदन किया। उनके अनुरोधसे भगवान् वसिष्ठ की भी इच्छा 'वाल्मीकिके वनमें जाकर रहें' ऐसी हुई।

वासन्ती—अब वे रामचन्द्र क्या कर रहे हैं?

आत्रेयी—अब राजाने राजयज्ञ अश्वमेधका आरम्भ किया है।

वासन्ती—अहह धिक्। परिणीतमपि ?

आत्रेयी—शान्तम्। नहि नहि।

वासन्ती—का तर्हि यज्ञे सहधर्मचारिणी ?

आत्रेयी—हिरण्मयी सीताप्रतिकृतिर्गृहिणीकृता।

वासन्ती—हन्त भोः !

वज्रादपि कठोराणि मृदूनि कुसुमादपि।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ? ॥ ७ ॥

---

वासन्तीति। धिक् = राममिति शेषः। परिणीतमपि = किं विवाहोऽपि कृतः, ऋते पत्न्या यज्ञाऽनुष्ठानासंभवादियमाशङ्का।

आत्रेयीति। शान्तं = निवृत्तं, भवेदिति शेषः, ईदृक्क्रूरताऽऽरोपणमिति अध्याहार्यम्।

वासन्तीति। तर्हि = यदि न परिणीतं तदा, सहधर्मचारिणी = सहधर्मिणी, पत्नीत्यर्थः।

आत्रेयीति। हिरण्मयी = सुवर्णमयी, हिरण्यस्य विकारो हिरण्मयी 'तस्य विकार' इति मयट्प्रत्ययः, 'दाण्डिनायने'त्यादिना यलोपनिपातः, टित्वात् ङीप्। सीताप्रतिकृतिः = सीताप्रतिमा, गृहिणीकृता = सहधर्मिणीकृता।

वासन्तीति। हन्त = हर्षद्योतकमव्ययम्, भोः = सम्बोधनाऽर्थकमव्ययम्।

वज्रादपीत्यादि। वज्रादपि कठोराणि कुसुमादपि मृदूनि लोकोत्तराणां चेतांसि को विज्ञातुम् अर्हति हि इत्यन्वयः। वज्रादपि = कुलिशादपि, कठोराणि = कठिनतराणि, कुसुमादपि = पुष्पादपि, मृदूनि = कोमलतराणि, लोकोत्तराणां = भुवनश्रेष्ठानां, व्यवस्थाऽभावादुत्तरशब्दस्य न सर्वनामता, अतः सुडपि न। चेतांसि = हृदयानि, कः = जनः, विज्ञातुं = विशेषेण बोद्धुम्, अर्हति = योग्यो भवति, हि = निश्चयेन। अयं भावः—आत्मसमक्षमेव वह्निपरिशुद्धायाः सहधर्मचारिण्या

---

**वासन्ती**—हाय ! धिक्कार है। विवाह भी कर लिया ?

**आत्रेयी**—शान्त नहीं नहीं।

**वासन्ती**—तब यज्ञमें सहधर्मचारिणी ( पत्नी ) कौन है ?

**आत्रेयी**—सोनेकी सीताकी मूर्ति गृहिणी बनाई गई है।

**वासन्ती**—ओह !

वज्रसे भी कठिन और फूलसे भी कोमल लोकश्रेष्ठ लोगोंका चित्त कौन जान सकता है ? ॥७॥

आत्रेयी—विसृष्टश्च वामदेवानुमन्त्रितो मेध्याश्वः । प्रक्लृप्ताश्च तस्य यथाशास्त्रं रक्षितारः । तेषामधिष्ठाता लक्ष्मणात्मजश्चन्द्रकेतुर्दत्तदिव्यास्त्र-संप्रदायश्चतुरङ्गसाधनान्वितोऽनुप्रहितः ।

वासन्ती—( सहर्षकौतुकास्रम् । ) कुमारलक्ष्मणस्यापि पुत्र इति मातः ! जीवामि ।

---

अन्तर्वत्न्याः सीतायाः प्राकृतलोकापवादमात्रेण रामहृदयस्य कठोरत्वमेवं यज्ञाऽनुष्ठाने पत्न्या आवश्यकत्वेऽपि तदा परित्यक्तायां सीतायामनितरसाधारणया प्रणय-प्रवणया करुणया सीताप्रतिकृत्या एव कार्यनिर्वहणेन अतिशयमार्दवं च द्योत्यते । अतः तादृशस्य हृदयस्य ज्ञानमपि दुर्लभं विज्ञानस्य तु किमुतेत्यभिप्रायः । अत्र कठोरत्वद्वोर्विरूपयोः सङ्घटनाद्विषमाऽलङ्कारोऽप्रस्तुतप्रशंसा चेत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ७ ॥

आत्रेयीति । वामदेवानुमन्त्रितः = वामदेवेन = तन्नामकेन केनचिदृषिणा, अनुमन्त्रितः = मन्त्रेण संस्कृतः, मेध्याश्वः = यज्ञियहयः, मेधितुं योग्यो मेध्यः, 'ऋहलोर्ण्यत्' इति ण्यत्, विसृष्टः = मुक्तः । यथाशास्त्रं = शास्त्रवचनपूर्वकम्, शास्त्रमनतिक्रम्य यथाशास्त्रं, पदार्थाऽनतिवृत्तिरूपे यथाऽर्थे अव्ययीभावः, तस्य = मेध्याश्वस्य, रक्षितारः = रक्षकाः, प्रक्लृप्ताः = कल्पिताः, तेषां = रक्षकाणाम्, अधिष्ठाता = नियामकः, दत्तदिव्याऽस्त्रसम्प्रदायः = वितीर्णाऽलौकिकायुधसमूहः, दत्तो दिव्याऽस्त्रसम्प्रदायो यस्मै स इति चतुर्थीबहुव्रीहिः, चतुरङ्गसाधनाऽन्वितः = चतुरङ्गबलयुक्तः, हस्त्यश्वरथपदातिरूपयुद्धोपकरणयुक्त इत्यर्थः, चतुर्णामङ्गानां समाहारश्चतुरङ्गं, द्विगुसमासः, चतुरङ्गं च तत्साधनं, तेन अन्वितः, अनुप्रहितः = यज्ञियाऽश्वस्य पृष्ठतः प्रेषितः ।

वासन्तीति । सहर्षकौतुकास्रम्=लक्ष्मणनामश्रवणाद्धर्षः, तस्य पुत्रोऽपि जातः सोऽपि सेनापतिरिति कौतुकम्, 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्' इति नयेन पतिपरित्यक्तायाः सीतायाः स्मरणादस्रमिति यथायथं ज्ञेयम्, हर्षकौतुका-

---

आत्रेयी—वामदेव ऋषिद्वारा मन्त्रसे संस्कार किया गया पवित्र घोड़ा छोड़ा गया है । शास्त्रानुसार उसके रक्षक भी नियुक्त किये गये हैं । उनके अध्यक्ष लक्ष्मणपुत्र चन्द्रकेतु, दिये गये दिव्य अस्त्रों तथा हाथी, घोड़ा, रथ और पैदल चतुरङ्गिणी सेनाओंसे युक्त होकर भेजे गये हैं ।

वासन्ती—( हर्ष, कौतुक और अश्रुपातके साथ ) कुमार लक्ष्मणके भी पुत्र हैं ? इस कारण मातः ! मैं जीवित हूँ ।

आत्रेयी—अत्रान्तरे ब्राह्मणेन मृतं पुत्रमुत्क्षिप्य राजद्वारे सोरस्ताडमब्रह्मण्यमुद्घोषितम् । ततो 'न राजापचारमन्तरेण प्रजानामकालमृत्युः सचरती'त्यात्मदोषं निरूपयति करुणामये रामभद्रे सहसैवाशरीरिणी वागुदचरत्—

शम्बूको नाम वृषलः पृथिव्यां तप्यते तपः ।
शीर्षच्छेद्यः स ते राम ! तं हत्वा जीवय द्विजम् ॥ ८ ॥

---

क्लैस्सहितं यथा तथा । मात = जननि ! आत्रेय्यया ब्राह्मणजातित्वेन इदं सम्बोधनं सङ्गच्छते, जीवामि = जीवनं धारयामि, 'जीवन्नरो भद्रशतानि पश्येत्' इति न्यायेन मयेयं भद्रपरम्पराऽवलोकितेति भावः ।

आत्रेयीति । अत्र = अस्मिन्, अन्तरे = अवकाशे, उत्क्षिप्य = उत्क्षेपणं कृत्वा, सोरस्ताडम् = वक्ष स्थलताडनपूर्वकम् । ताडनं ताड', भावे घञ्, उरसस्ताडनेन सहितं यथा तथेति क्रियाविशेषणम् । अब्रह्मण्यम्=ब्राह्मणानामत्याहितम्, उद्घोषितम्=उच्चैरुच्चारितम् । राजाऽपचार = राजदोषम्, 'अन्तरेणे'तिपदयोगे 'अन्तराऽन्तरेण युक्ते' इति द्वितीया, अन्तरेण = विना, करुणामये = प्रचुरकरुणायुक्ते, निरूपयति = निरूपण कुर्वति, मीमासमाने इत्यर्थ' । तत प्राक् पितरि जीवति पुत्रस्य मरणाऽभावादिति भाव', 'यस्य च भावेन भावलक्षणम्' इति सप्तमी, अशरीरिणी वाक् = आकाशवाणी । उदचरत् = उद्गता ।

शम्बूक इति । शम्बूको नाम वृषल पृथिव्या तप तप्यते । हे राम ! स ते शीर्षच्छेद्य, तं हत्वा द्विजं जीवय इत्यन्वय । शम्बूको नाम = 'शम्बूक' इति नाम्ना प्रसिद्ध', वृषल' = शूद्र, वृष = धर्मम्, लुनाति = छिनत्ति, शूद्रस्य द्विजशुश्रूषाया एव विहितत्वात्तद्व्यतिरेकेण तपश्चरणादिति भाव', 'अन्येभ्योऽपि दृश्यते' इति ड, पृथिव्या = भूलोके, तप = तपस्या, तप्यते = चरति, दिवादित्वात् श्यन् । हे राम = भो राघव ! स = शम्बूक, ते = तव, शीर्षच्छेद्य = शिरश्छेदाऽर्हः, शीर्षच्छेदमर्हतीति शीर्षच्छेद्य, पक्षान्तरे ठकि शैर्षच्छेदिक इति च, 'शीर्षच्छे-

---

आत्रेयी—इस बीचमें कोई ब्राह्मण मरे हुए पुत्रको राजद्वारपर फेंककर और छाती पीटकर 'ब्राह्मणोंको महाभय है' ऐसा ऊंचे स्वरसे चिल्लाने लगा । तब 'राजाके दोषके विना प्रजाओंकी अकालमृत्यु नहीं होती है ।' ऐसा कहकर करुणापूर्ण रामभद्रके अपने दोषका निरूपण करते रहनेपर अतर्कितरूपसे आकाशवाणी हुई—

शम्बूक नामका शूद्र पृथिवीपर तपस्या कर रहा है । हे राम ! आपको उसका शिर काटना चाहिए, उसे मारकर ब्राह्मणको जिलाइए ॥ ८ ॥

इत्युपश्रुत्य कृपाणपाणिः पुष्पकमधिरुह्य सर्वा दिशो विदिशश्च शूद्रतापसान्वेषणाय जगत्पतिः सञ्चारं समारब्धवान् ।

वासन्ती—शम्बूको नामाधोमुखो धूमपः शूद्रोऽस्मिन्नेव जनस्थाने तपश्चरति । अपि नाम रामभद्रः पुनरिदं वनमलङ्कुर्यात् ?

आत्रेयी—भद्रे ! गम्यतेऽधुना ।

वासन्ती—आर्ये आत्रेयि ! एवमस्तु । कठोरश्च दिवसः । तथाहि—

कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन संपातिभि—

---

दायश्च' इति यत् चकारात् ठक् च, शिरश्छेदेन स त्वया दण्डनीय इति भाव । तं = शम्बूकं, हत्वा = विनाश्य, द्विजं = ब्राह्मणपुत्रं, जीवय = जीवितं कुरु, द्विजातिसेवनरूपं स्वकीयं वर्णधर्मं हित्वा तपश्चरणरूपमनाचारं कुर्वतः शूद्रस्य शम्बूकस्य हननेनैव ब्राह्मणपुत्रो जीविष्यतीति भावः ॥ ८ ॥

इत्युपेति । जगत्पति = लोकनाथ, राम इत्यर्थ, कृपाणपाणिः = खड्गहस्तः सन्, शूद्रदण्डार्थमिति भावः, कृपाण पाणौ यस्य स, 'सप्तमी विशेषणे बहुव्रीहौ' इत्यत्र 'सप्तमी' तिपदज्ञापितो व्यधिकरणबहुव्रीहि, 'प्रहरणाऽर्थेभ्यः परे निष्ठासप्तम्यौ' इति वचनात्सप्तम्यन्तस्य पाणिपदस्य परनिपातः, पुष्पकं = पुष्पकनामकं विमानम्, दिश = आशा, प्राच्यादिका इत्यर्थः, विदिश = कोणदिशः आग्नेय्यादिका इत्यर्थ, लक्ष्यीकृत्य इति शेष, संचारं = संचरणम् ।

वासन्तीति । धूमप = धूमपानकर्त्ता, धूमं पिबतीति 'आतोऽनुपसर्गे क' इति क, अलङ्कुर्यात् = भूषयेत्, अपिशब्दः सम्भावनायाम् ।

वासन्तीति । कठोर = कठिन, प्रखररविकरेण दु सह इत्यर्थः ।

कण्डूलेति । कूले छायाऽपस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः कूजत्क्लान्तकपोतकुक्कुटकुला कुञ्जायद्रुमा कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन संपा-

---

ऐसा सुनकर जगत्पति रामचन्द्रने हाथमें तलवार लेकर और पुष्पक विमानमें चढकर शूद्र तपस्वीके अन्वेषणके लिये सब दिशाओं और विदिशाओंमें भ्रमण करना आरम्भ किया है ।

वासन्ती—अधोमुख होकर धूवा पीनेवाला शम्बूक नामका शूद्र इसी जनस्थानमें तपस्या कर रहा है । तो रामभद्र फिर इस वनको सुशोभित करेंगे ?

आत्रेयी—कल्याणि ! अब जाती हूँ ।

वासन्ती—आर्ये आत्रेयि ! अच्छी बात है । दिन कठोर हो गया है । जैसा कि—

किनारेपर छायामें चोंचसे जमीनपर आघात करनेवाले कौवा आदि पक्षियोंके मुखसे जिन

घर्मस्रसितबन्धनैश्च कुसुमैरर्चन्ति गोदावरीम् ।
छायापस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः
कूजत्क्लान्तकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः ॥ ९ ॥

( इति परिक्रम्य निष्क्रान्ते । )

इति शुद्धविष्कम्भकः ।

---

तिभिः घर्मस्रसितबन्धनैः कुसुमैः गोदावरीम् अर्चन्ति इत्यन्वयः । कूले = तीरे, गोदावर्या इति शेषः, छायाऽपस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः = छायायाम् =अनातपे, अपस्किरमाणाः = भक्षणाऽर्थं चञ्च्वा भूमिं लिखन्तः, 'किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम्' इत्यात्मनेपदम् 'अपाच्चतुष्पाच्छकुनिष्वालेखने' इति सुट्, स च सुट् 'सुडपि हर्षादिष्वेव वक्तव्यः' इत्यतः हर्षादिष्वर्थेषु बोद्धव्यः । छायाऽपस्किरमाणाश्च ते विष्किराः = पक्षिणो वायसादय इत्यर्थः, तेषां मुखैः=आननैः, व्याकृष्टाः = विशेषेणाऽऽकृष्टाः, कीटत्वचः = कीटाश्चर्माणि च येषां ते, कूजत्क्लान्तकपोतकुक्कुटकुलाः = कूजन्ति = अव्यक्तशब्दं कुर्वन्ति, क्लान्तानि = ग्लानानि, आतपादिति शेषः, कपोतकुक्कुटानां = पारावतकृकवाकूनाम्, कुलानि = समूहाः, येषु ते, एतादृशाः कुलायद्रुमाः = पक्षिभिः कृतनीडा वृक्षाः, कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन = कण्डूलानां = कण्डूयुक्तानाम्, द्विपगण्डपिण्डानां=पिण्डाकारगजकपोलानाम्, कषणं = सङ्घट्टनम्, तेन यः आकम्पः = अत्यर्थचलनम्, तेन संपातिभिः = संपतनशीलैः, घर्मस्रसितबन्धनैः=घर्मेण=आतपेन, स्रसितानि = शिथिलितानि, बन्धनानि = वृन्तानि येषां तैः, तथाभूतैः, कुसुमैः = पुष्पैः, गोदावरीं = गोदावरीनामधेयां नदीम्, अर्चन्ति = पूजयन्ति । अत्र इवशब्दाऽभावात्प्रतीयमानोत्प्रेक्षा । शार्दूलविक्रीडितं वृत्तम् ॥ ९ ॥

इतीति । इति = अनन्तरं, परिक्रम्य = पादविक्षेपं कृत्वा, निष्क्रान्ते=निर्गते, आत्रेयीवासन्त्या इति शेषः ।

इतीति । शुद्धविष्कम्भकः = विष्कम्भकश्च भूतानां भाविनां च कथांशानां

---

वृक्षोंके कीडे और छाल निकाले गये हैं और जहांपर धूपसे ग्लानियुक्त कबूतर और मुर्गीका झुण्ड शब्द कर रहा है, ऐसे चिडियोंके घोंसलेवाले पेड, हाथियोंके खुजलीवाले गालोंकी रगडके कम्पसे गिरनेवाले और घामके कारण शिथिल वृन्तोंसे युक्त फूलोंसे गोदावरीकी पूजा करते हैं ॥ ९ ॥

( दोनों घूमकर जाती हैं । )

शुद्ध विष्कम्भक समाप्त ।

( तत प्रविशति सदयोद्यतखड्गो रामभद्रः । )

**रामः**—

हे हस्त दक्षिण ! मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य बाहुरसि निर्भरगर्भखिन्न-

---

निदर्शक', तल्लक्षणं यथा 'वृत्तवर्तिष्यमाणानां कथांशाना निदर्शकः । संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शित• ॥' इति । तत्र चाऽस्मिन् प्रबन्धे शुद्धविष्कम्भक', तस्याऽपि लक्षणं यथा साहित्यदर्पणे—'मध्येन मध्यमाभ्या वा पात्राभ्या संप्रयोजित' । शुद्ध• स्यात् , स तु सङ्कीर्णो नीचमध्यमकल्पितः ॥' इति । तथा चाऽत्र मध्यमाभ्यामात्रेयीवासन्तीरूपाभ्या पात्राभ्या संप्रयोजितत्वात् शुद्धविष्कम्भक इति ज्ञेय• ।

तत इति । सदयोद्यतखड्गः = सदयम् = सकरुणं यथा तथेति क्रियाविशेषणम् , तथा च उत्तरपदेन सह सुप्सुपेति समासः, उद्यत• = उद्‌गूर्ण•, खड्ग' = कृपाणो येन सः ।

हे हस्तेति । हे दक्षिणहस्त ! द्विजस्य मृतस्य शिशो' जीवातवे शूद्रमुनौ कृपाणं विसृज । निर्भरगर्भखिन्नसीताविवासनपटो' रामस्य बाहुरसि । ते करुणा कुतः ? इत्यन्वय• । हे = सम्बोधनाऽर्थकमव्ययम् , 'अथ सम्बोधनाऽर्थकाः, स्युः पाट् प्याडङ्ग हैहेभोः' इत्यमर•, 'रे' इति पुस्तकान्तरपाठे अनादरद्योतकमव्ययमिदमिति बोध्यम् , हे दक्षिण हस्त = हे वामेतर कर ! द्विजस्य = ब्राह्मणस्य, द्विजपदस्य ब्राह्मणक्षत्रियवैश्यरूपद्विजातिबोधकत्वेऽपि अत्र प्रकरणेन अयमेवाऽर्थो बोध्य', मृतस्य = पञ्चत्वं गतस्य, शिशोः = बालकस्य, जीवातवे = जीवनाय, तादर्थ्ये चतुर्थी, 'जीवातुरस्त्रिया भक्ते जीविते जीवनौषधे' इति मेदिनी, शूद्रमुनौ = शूद्रतापसे, शूद्र एव मुनि• शूद्रमुनिस्तस्मिन् , रूपकसमासः, कृपाणं = खड्गं, विसृज = विमुञ्च, शूद्रमुनौ कृपाणविसर्गे हस्तसामर्थ्यमाह—रामस्येति ।

---

( तदनन्तर दयाके साथ तलवार उठाये हुए रामभद्र प्रवेश करते हैं । )

**राम**—हे दक्षिण हस्त ! ब्राह्मणके मरे हुए बालकको जिलानेके लिए शूद्र तपस्वीपर तलवार छोड़, क्यों कि तू पूर्ण गर्भके भारसे आलस्ययुक्त सीताके निर्वासनमें समर्थ

घर्मस्रंसितबन्धनैश्च कुसुमैरर्चन्ति गोदावरीम् ।
छायापस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः
कूजत्क्लान्तकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः ॥ ९ ॥

( इति परिक्रम्य निष्क्रान्ते । )

इति शुद्धविष्कम्भकः ।

---

तिभिः घर्मस्रंसितबन्धनैः कुसुमैः गोदावरीम् अर्चन्ति इत्यन्वयः । कूले = तीरे, गोदावर्या इति शेषः, छायाऽपस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः = छायायाम् =अनातपे, अपस्किरमाणाः = भक्षणाऽर्थं चञ्च्वा भूमिं लिखन्तः, 'किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम्' इत्यात्मनेपदम् 'अपाच्चतुष्पाच्छकुनिष्वालेखने' इति सुट्, स च सुट् 'सुडपि हर्षादिष्वेव वक्तव्यः' इत्यतः हर्षादिष्वर्थेषु बोद्धव्यः । छायाऽपस्किरमाणाश्च ते विष्किराः = पक्षिणो वायसादय इत्यर्थः, तेषां मुखैः=आननैः, व्याकृष्टाः = विशेषेणाऽऽकृष्टाः, कीटत्वचः = कीटाश्चर्माणि च येषां ते, कूजत्क्लान्तकपोतकुक्कुटकुलाः = कूजन्ति = अव्यक्तशब्दं कुर्वन्ति, क्लान्तानि = ग्लानानि, आतपादिति शेषः, कपोतकुक्कुटानां = पारावतकृकवाकूनाम्, कुलानि = समूहाः, येषु ते, एतादृशाः कुलायद्रुमाः = पक्षिभिः कृतनीडा वृक्षाः, कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन = कण्डूलानां = कण्डूयुक्तानाम्, द्विपगण्डपिण्डानां=पिण्डाकारगजकपोलानाम्, कषणं = सङ्घट्टनम्, तेन यः आकम्पः = अत्यर्थचलनम्, तेन संपातिभिः = संपतनशीलैः, घर्मस्रंसितबन्धनैः=घर्मेण=आतपेन, स्रंसितानि = शिथिलितानि, बन्धनानि = वृन्तानि येषां तैः, तथाभूतैः, कुसुमैः = पुष्पैः, गोदावरीं = गोदावरीनामधेयां नदीम्, अर्चन्ति = पूजयन्ति । अत्र इवशब्दाऽभावात्प्रतीयमानोत्प्रेक्षा । शार्दूलविक्रीडितं वृत्तम् ॥ ९ ॥

इतीति । इति = अनन्तरं, परिक्रम्य = पादविक्षेपं कृत्वा, निष्क्रान्ते=निर्गते, आत्रेयीवासन्त्या इति शेषः ।

इतीति । शुद्धविष्कम्भकः = विष्कम्भकश्च भूतानां भाविनां च कथांशानां

---

वृक्षोंके कीडे और छाल निकाले गये हैं और जहांपर धूपसे ग्लानियुक्त कबूतर और मुर्गोंका झुण्ड शब्द कर रहा है, ऐसे चिडियोंके घोंसलेवाले पेड, हाथियोंके खुजलीवाले गालोंकी रगड़के कम्पसे गिरनेवाले और घामके कारण शिथिल वृन्तोंसे युक्त फूलोंसे गोदावरीकी पूजा करते हैं ॥ ९ ॥

( दोनों घूमकर जाती हैं । )

शुद्ध विष्कम्भक समाप्त ।

( ततः प्रविशति सदयोद्यतखड्गो रामभद्रः । )

**रामः**—

हे हस्त दक्षिण ! मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य बाहुरसि निर्भरगर्भखिन्न-

---

निदर्शकः, तल्लक्षणं यथा 'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥' इति । तत्र चाऽस्मिन् प्रबन्धे शुद्धविष्कम्भकः, तस्याऽपि लक्षणं यथा साहित्यदर्पणे—'मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः । शुद्धः स्यात्, स तु सङ्कीर्णो नीचमध्यमकल्पितः ॥' इति । तथा चाऽत्र मध्यमाभ्यामात्रेयीवासन्तीरूपाभ्यां पात्राभ्यां संप्रयोजितत्वात् शुद्धविष्कम्भक इति ज्ञेयः ।

**तत इति ।** सदयोद्यतखड्गः = सदयम् = सकरुणं यथा तथेति क्रियाविशेषणम्, तथा च उत्तरपदेन सह सुप्सुपेति समासः, उद्यतः = उद्गूर्णः, खड्गः = कृपाणो येन सः ।

**हे हस्तेति ।** हे दक्षिणहस्त ! द्विजस्य मृतस्य शिशोः जीवातवे शूद्रमुनौ कृपाणं विसृज । निर्भरगर्भखिन्नसीताविवासनपटोः रामस्य बाहुरसि । ते करुणा कुतः ? इत्यन्वयः । हे = सम्बोधनाऽर्थकमव्ययम्, 'अथ सम्बोधनाऽर्थकाः, स्युः पाट् प्याडङ्ग हेहेभोः' इत्यमरः, 'रे' इति पुस्तकान्तरपाठे अनादरद्योतकमव्ययमिदमिति बोध्यम्, हे दक्षिण हस्त = हे वामेतर कर ! द्विजस्य = ब्राह्मणस्य, द्विजपदस्य ब्राह्मणक्षत्रियवैश्यरूपद्विजातिबोधकत्वेऽपि अत्र प्रकरणेन अयमेवाऽर्थो बोध्यः, मृतस्य = पञ्चत्वं गतस्य, शिशोः = बालकस्य, जीवातवे = जीवनाय, तादर्थ्ये चतुर्थी, 'जीवातुरस्त्रिया भक्ते जीविते जीवनौषधे' इति मेदिनी, शूद्रमुनौ = शूद्रतापसे, शूद्र एव मुनिः शूद्रमुनिस्तस्मिन्, रूपकसमासः, कृपाणं = खड्गं, विसृज = विमुञ्च, शूद्रमुनौ कृपाणविसर्गे हस्तसामर्थ्यमाह—**रामस्येति ।**

---

( तदनन्तर दयाके साथ तलवार उठाये हुए रामभद्र प्रवेश करते हैं । )

**राम**—हे दक्षिण हस्त ! ब्राह्मणके मरे हुए बालकको जिलानेके लिए शूद्र तपस्वीपर तलवार छोड, क्यों कि तू पूर्ण गर्भके भारसे आलस्ययुक्त सीताके निर्वासनमें समर्थ

सीताविवासनपटोः करुणा कुतस्ते ? ॥ १० ॥

( कथंचित्प्रहृत्य । ) कृतं रामसदृशं कर्म । अपि जीवेत्स ब्राह्मणपुत्रः ?

( प्रविश्य । )

दिव्यपुरुषः—जयतु देव ।

दत्ताभये त्वयि यमादपि दण्डधारे

संजीवितः शिशुरसौ मम चेयमृद्धिः ।

---

निर्भरगर्भखिन्नसीताविवासनपटोः = पूर्णगर्भालससीताप्रवासनकुशलस्य, निर्भरश्चाऽसौ गर्भस्तेन खिन्ना, सा चाऽसौ सीता, तस्या विवासनं, तस्मिन् पटुस्तस्येति विग्रहः कार्यः । निर्भरस्थाने 'दुर्वह' इति क्वचित्कः पाठस्तस्य गुरुर्दुःखेन वोढुं शक्यो वेत्यर्थः कार्यः, रामस्य = रामचन्द्रस्य, बाहुः=भुजः, असि= वर्तसे, ते = तव, करुणा = दया, कुतः = कस्माद्धेतोः, सम्भवतीति शेषः, यो नाम रामो गर्भभराऽलसां स्वपरिणीतां निरपराधां सीतामपि विवासितवान् तस्यैव रामस्य दक्षिणो हस्तः त्वमसि, अतस्ते कुतो दयेति भावः । अत्र पदाऽर्थहेतुकं काव्यलिङ्गमलङ्कारः, तल्लक्षणं यथा—'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति । वसन्ततिलकावृत्तम् ॥ १० ॥

कथञ्चिदिति । कथञ्चित् = केनाऽपि प्रकारेण, कष्टेनेति भावः । रामसदृशं = रामतुल्यं न तु दशरथसदृशमित्यर्थः, निरपराधदण्डनमिति भावः । अपिशब्दः प्रश्नाऽर्थकः ।

प्रविश्येति । दिव्यपुरुषः = देवाकारपुरुषः, शम्बूकशरीरं विहाय देवत्वेनेति भावः ।

दत्ताभय इति । यमादपि दत्ताऽभये त्वयि दण्डधारे ( सति ) असौ शिशुः संजीवितः, मम च इयम् ऋद्धिः । एष शम्बूकः शिरसा ते चरणौ नतः, सत्सङ्गजानि निधनान्यपि तारयन्ति इत्यन्वयः । यमादपि = यमराजादपि, दत्ताऽभये = वितीर्णाऽभीतौ, दत्तमभयं येन तस्मिन्, त्वयि = भवति, दण्डधारे = दण्डधारके

---

रामका हाथ है, इस लिए तुझको दया कहाँसे होगी ? ॥ १० ॥

(किसी तरह प्रहार कर) रामके योग्य काम किया । क्या वह ब्राह्मणकुमार जीवित होगा ?

( प्रवेश कर )

**दिव्यपुरुष**—महाराजकी जय हो ।

यमराजसे भी अभयदान देकर आपके दण्डधारण करनेपर वह ब्राह्मणकुमार जो उठा-

शम्बूक एष शिरसा चरणौ नतस्ते
सत्सङ्गजानि निधनान्यपि तारयन्ति ॥ ११ ॥

रामः—द्वयमपि प्रियं नः, तदनुभूयतामुग्रस्य तपसः परिपाकः।

यत्रानन्दाश्च मोदाश्च यत्र पुण्याश्च संपदः।

---

सति, असौ = विप्रकृष्टस्थः, शिशुः = ब्राह्मणकुमारः, संजीवितः = संजीवनं प्रापितः, न केवलमेतावदेव अपि तु मम च = प्राक् शम्बूकनामधेयस्य च, इयं = पुरःस्था, ऋद्धिः = समुन्नतिः, दिव्यरूपप्राप्तिस्वरूपेति भावः। एषः = समीपतरवर्त्ती, शम्बूकः = प्राक् शम्बूकाऽभिधानः, अहमित्यर्थः, शिरसा = मूर्ध्ना करणेन, ते = तव, चरणौ = पादौ, नतः = प्रणतः, अस्मीति शेषः। अर्थान्तरन्यासेनेममर्थं द्रढयति—सत्सङ्गजानीति। सत्सङ्गजानि। सज्जनसंसर्गोत्पन्नानि = सतां सङ्गस्तस्माज्जातानि, निधनान्यपि = मरणान्यपि, तारयन्ति = तरणं कारयन्ति, संसाराब्धेरिति शेषः। अत्र कारणविरुद्धकार्योत्पत्तिकथनाद्विषमाऽलङ्कारः, चरमचरणस्थसामान्याऽर्थेन शम्बूकसमृद्धिरूपस्य विशेषाऽर्थस्य समर्थनादर्थान्तरन्यासश्च, तथा च विषमाऽर्थान्तरन्यासयोर्मिथोऽनपेक्षया स्थितेः संसृष्टिः, 'मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते' इति साहित्यदर्पणः। वसन्ततिलकावृत्तम् ॥ ११ ॥

राम इति। द्वयमपि = द्वितयमपि, ब्राह्मणशिशोः सञ्जीवनं त्वदीया ऋद्धिश्चेति द्वयमपीति भावः, 'संख्याया अवयवे तयप्' इति तयप् तस्य स्थाने 'द्वित्रिभ्यां तयस्याऽयज्वा' इति अयजादेशश्च। ततः = तस्माद्धेतोः, उग्रस्य = दुष्करस्य, परिपाकः = परिणामः, फलमित्यर्थः।

यत्रेति। यत्र आनन्दाश्च मोदाश्च, यत्र पुण्याः सम्पदश्च, वैराजा नाम तैजसाः शिवास्ते लोकास्ते सन्तु इत्यन्वयः। यत्र=येषु लोकेषु, आनन्दाः=आत्माऽनुभवजन्या हर्षाः मोदाः = दिव्यविषयाऽनुभवजन्या हर्षाः, यत्र = येषु लोकेषु, पुण्याः = पवित्राः, सम्पदश्च = विभूतयश्च, सन्तीति शेषः, 'पुण्याश्च सम्पदः'

---

और मेरी भी यह समृद्धि हुई। यह शम्बूक शिरसे आपके चरणोंको नमस्कार करता है। सत्सङ्गसे उत्पन्न मरण भी लोगोंका उद्धार करते हैं ॥ ११ ॥

राम—दोनों ही बातें हमें प्रिय हैं, इस कारण दुष्कर तपका फल भोगो।

जहां पर आनन्द ( आत्माके अनुभवसे उत्पन्न हर्ष ) और मोद (दिव्य विषयोंके अनुभवसे

वैराजा नाम ते लोकास्तैजसाः सन्तु ते शिवाः ॥ १२ ॥

शम्बूक—स्वामिन्! युष्मत्प्रसादादेवैष महिमा। किमत्र तपसा? अथवा महदुपकृतं तपसा।

अन्वेष्टव्यो यदसि भुवने लोकनाथः शरण्यो

---

इत्यत्र 'पुण्याऽभिसम्भवा' इति पाठान्तरं, यस्य पुण्योत्पन्ना इत्यर्थः। वैराजा नाम=वैराजा इति प्रसिद्धाः 'नामे'ति प्रसिद्धिद्योतकमव्ययम्। विशेषेण राजते= शोभते इति विराट्=ब्रह्मा, कर्तरि क्विप्। विराज इमे वैराजा =ब्रह्मसम्बन्धिन इत्यर्थ, 'तस्येदम्' इत्यण्। तैजसाः=तेजोमया। तेजस इमे तैजसाः, पूर्ववदण्, शिवाः=कल्याणकारकाः, 'ध्रुवा' इति पाठे सनातना इत्यर्थः, ते=प्रसिद्धाः, लोकाः=भुवनानि, ते=तव, सन्तु=भवन्तु। त्वदीयतपःफलरूपवैराजलोकप्राप्तिस्ते भवेदिति भाव ॥ १२ ॥

शम्बूक इति। स्वामिन्=हे प्रभो! स्वमस्याऽस्तीति स्वामी, तत्सम्बुद्धौ, 'स्वामिन्नैश्वर्ये' इति आमिनच्प्रत्ययान्तो निपातः। युष्मत्प्रसादात्=भवदनुग्रहात्, 'युष्मत्पादप्रसादोपाय' इति पाठे–युष्माकं=भवताम्, पादस्य=चरणस्य, प्रसाद= अनुग्रह, एव उपाय =हेतु यस्य स इत्यर्थो बोध्यः। एष =अयं, महिमा=महत्त्वं, दिव्यशरीरप्राप्तिरूपमित्यर्थ। अत्र=अस्मिन्महत्त्वे, तपसा=तपश्चर्यया, किम्=किं कृतम्? भवदनुग्रहेणेयं मम दिव्यशरीरप्राप्तिर्न तपसेति भावः। अथवा=यद्वा, पक्षान्तरेण तपोमाहात्म्यं वर्णयति—

अन्वेष्टव्य इति। (हे प्रभो!) भुवने अन्वेष्टव्यः लोकनाथः शरण्यः (त्वम्) यत् मा वृषलकम् अन्विष्यन् योजनानां शतानि क्रान्त्वा इह प्राप्तः असि, इह स तपसा सप्रसादः, अन्यथा तु व अयोध्यायाः दण्डकायां वने क्व पुनः उपगम इत्यन्वयः। (हे प्रभो!=हे स्वामिन्!) भुवने=लोके, अन्वेष्टव्यः=अन्वेष्टुं योग्य, श्रुतिस्मृत्युक्तोपायैर्गवेषणीय इति भाव, लोकनाथः=भुवनेश्वरः, अथ वा भूतनाथः,

---

उत्पन्न हर्ष) तथा पवित्र विभूतियाँ हैं, वैराज नामक तेजोमय कल्याणकारक वे प्रसिद्ध लोक तुमको मिलें॥ १२॥

**शम्बूक**—प्रभो! आपके अनुग्रहसे ही मेरी यह महिमा है। इसमें तपस्याने क्या किया? अथवा तपस्याने बड़ा उपकार किया—

लोकमें ढूंढनेके योग्य, लोकपति और शरण देनेवाले आप जो मुझ कुत्सित शूद्रको

मामन्विष्यन्निह वृषलकं योजनानां शतानि ।
क्रान्त्वा प्राप्तः स इह तपसां संप्रसादोऽन्यथा तु
क्वायोध्यायाः पुनरुपगमो दण्डकायां वने वः ? ॥१३॥

रामः—किं नाम दण्डकेयम् ? ( सर्वतोऽवलोक्य । ) हा, कथम्—
स्निग्धश्यामाः क्वचिदपरतो भीषणाभोगरूक्षाः

---

शरण्यः = रक्षणसाधु, 'तत्र साधु' इति यत्, एतादृशस्त्वम्, यत्, मां वृषलकं= मा कुत्सितशूद्रं, यद्वा अज्ञातशूद्रं, कुत्सितो वृषलो वृषलकस्तं, 'कुत्सिते' इति कुत्साया कप्रत्ययः, यद्वा अज्ञातो वृषलो वृषलकस्तम्, 'अज्ञाते' इति कप्रत्ययः। शम्बूकस्य द्विजातिशुश्रूषणरूपधर्मविरुद्धाचरणात् धर्मच्छेदकत्वेन वृषलपदेन व्यपदेश' संगच्छते, वृषं = धर्मं लुनातीति वृषलस्तदुक्तं मनुस्मृतौ प्रकारान्तरेण— 'वृषो हि भगवान् धर्मस्तस्य य' कुरुते ह्यलम् । वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत् ।' इति, कामान्वर्षतीति व्युत्पत्त्या वृषशब्दो धर्मवाचकस्तस्य यो ह्यलं= वारणं कुरुते स वृषल इति भावः। अन्विष्यन् = विचिन्वन्, न तु चारादिना अन्वेषयन्निति भाव । योजनाना शतानि = अत्र 'शत' शब्दो बहुत्ववाचकः, अतो बहूनि योजनानि इति भाव', क्रान्त्वा = लङ्घयित्वा, इह = अस्मिन् वने, प्राप्त' = आगत', असि = वर्तसे। इह अस्मिन्विषये, स' = भवदागम', तपसा = मन्नियमाचरणाना, सम्प्रसाद' = समनुग्रहः। अन्यथा तु = एतद्वैपरीत्ये तु, तपश्चरणेन न भवदागमनम् इति स्वीकारे तु इति भाव' । व = युष्माकम्, अयोध्यायाः अयोध्यानगर्या, दण्डकाया वने = दण्डकारण्ये, क्व = कुत्र, हेताविति शेष' । पुन = भूय, उपगम = आगमनं, भवेदिति शेष' । इत्थ दुर्घटस्याऽपि भवदागमनस्य हेतुस्तप एवेति भाव । अन्वेषणकर्मभूते रामे अन्वेषणकर्तृत्वस्याऽपि सत्त्वात् विषमालङ्कारः । मन्दाक्रान्ता वृत्तम् ॥ १२ ॥

स्निग्धेति । क्वचित् स्निग्धश्यामा अपरत' भीषणाभोगरूक्षा' स्थाने स्थाने निर्झराणां झाङ्कृतै' मुखरककुभ' तीर्थाश्रमगिरिसरिद्गर्तकान्तारमिश्राः परिचितभुवः एते दण्डकारण्यभागा' संदृश्यन्ते इत्यन्वय । क्वचित् = कुत्रचिद्देशे, स्निग्धश्यामा'=

---

ढूंढते हुए सैकड़ों योजनोंको लाघकर यहा आये, यह तपस्याका ही अनुग्रह है। नहीं तो आपका अयोध्यासे दण्डकारण्यमें फिर आना कैसे होता ? ॥ १३ ॥

**राम**—क्या यह दण्डकारण्य है ? ( सब तरफ देखकर ) हाय, कैसे—

कहीं स्निग्ध और श्यामवर्ण वाले और दूसरी तरफ भयानक विस्तीर्णतासे रूखे, जगह २-

स्थाने स्थाने मुखरककुभो झाङ्कृतैर्निर्झराणाम् ।
एते तीर्थाश्रमगिरिसरिद्गर्तकान्तारमिश्राः
संदृश्यन्ते परिचितभुवो दण्डकारण्यभागाः ॥ १४ ॥

शम्बूकः—दण्डकैवैषा । अत्र किल पूर्वं निवसता देवेन—

चतुर्दश सहस्राणि चतुर्दश च राक्षसाः ।

---

जलेन स्निग्धा, तृणादिभिर्नीलाश्च, एतानि सर्वाण्यपि 'दण्डकारण्यभागा' इत्यस्य विशेषणानि । अपरत = अन्यस्मिन् प्रदेशे, सार्वविभक्तिकस्तसिः, भीषणाऽऽभोगरूक्षाः = भीषणो = भयङ्कर, य आभोग = परिपूर्णता, 'आभोगः परिपूर्णता' । इत्यमरः, भीषणाभोगेन रूक्षाः = कठोरा, स्थाने स्थाने = तत्तत्प्रदेशे, निर्झराणां = झराणां, झाङ्कृतैः = 'झाम्' इति शब्दैः, मुखरककुभः = मुखरा = शब्दायमानाः, ककुभः = दिशो येषु ते, 'दिशस्तु ककुभः काष्ठा' इत्यमरः । तीर्थाश्रमगिरिसरिद्गर्तकान्तारमिश्राः = तीर्थानि = ऋषिसेवितजलानि, 'निपानाऽऽगमयोस्तीर्थमृषिजुष्टजले गुरौ ।' इत्यमरः, आश्रमाः = ऋषिनिवासस्थानानि, गिरयः = पर्वताः, सरितः = नद्यः, गर्ताः=अवटाः, कान्ताराणि=दुर्गममार्गाः, 'कान्तारं वर्त्मदुर्गमम्' इत्यमरः, तैर्मिश्रा = युक्ताः, परिचितभुवः = परिचिता =संस्तुताः, भुवः = प्रदेशाः येषु ते, एते = समीपस्थाः, दण्डकारण्यभागाः, संदृश्यन्ते = विलोक्यन्ते । इक्ष्वाकुराजपुत्रो दण्ड शुक्राचार्यकुमार्या अरजायाः कौमारमपजहार, ततः शुक्राचार्य —'दिनसप्तकाऽभ्यन्तरे सभृत्यबलवाहनो राजा दण्डको वधं प्राप्स्यति, तद्राज्यं च पांसुवर्षेण विनङ्क्ष्यती'ति शशाप, तत एव दण्डराज्यं दण्डकारण्यत्वेन परिणतमिति पौराणिकी कथा स्मर्तव्या । स्वभावोक्तिरलङ्कारः । मन्दाक्रान्ता वृत्तम् ॥ १४ ॥

शम्बूक इति । देवेन = महाराजेन, भवतेत्यर्थः ।

चतुर्दशेति । चतुर्दश सहस्राणि चतुर्दश राक्षसाः त्रयः दूषणखरत्रिमूर्धानश्च रणे नो हताः ? इत्यन्वयः । चतुर्दश सहस्राणि चतुर्दश च = चतुर्दशाधिकचतुर्दश-

---

पर झरनोंके कलकल शब्दोंसे शब्दायमान दिशाओंसे युक्त, तीर्थ, आश्रम, पर्वत, नदी, गड्ढे और दुर्गम मार्गसे मिश्रित और परिचित भूमिवाले ये दण्डकारण्यके भाग दिखाई दे रहे हैं ॥ १४ ॥

**शम्बूक**—यह दण्डकारण्य ही है । यहांपर पहले रहते हुए आपने—

चौदह हजार चौदह राक्षस और तीन—दूषण, खर और त्रिमूर्द्धाको भी संग्राममें

त्रयश्च दूषणखरत्रिमूर्धा नो रणे हताः ? ॥ १५ ॥

येन सिद्धक्षेत्रेऽस्मिन्मादृशामपि जानपदानामकुतोभयःसंचारःसंवृत्तः।

राम:—न केवलं दण्डकैव, जनस्थानमपि ?

शम्बूकः—बाढम् । एतानि खलु सर्वभूतरोमहर्षणान्युन्मत्तचण्डश्वापदकुलाक्रान्तविकटगिरिगह्वराणि जनस्थानपर्यन्तदीर्घारण्यानि दक्षिणां दिशमभिवर्तन्ते । तथाहि ।

---

सहस्रसंख्यकाः, राक्षसा = निशाचरा, 'चतुर्दश च राक्षसा' इत्यत्र 'रक्षसां भीमकर्मणाम्' इति पुस्तकान्तरस्थ· पाठस्तत्र भीमकर्मणा=भीमं=भयङ्करम् , कर्म=क्रिया, येषा तेषा, रक्षसां = राक्षसाना, चदुर्दश सहस्राणि इत्यर्थोऽन्वयश्च कर्त्तव्यः । त्रय = त्रिसंख्यका', दूषणखरत्रिमूर्धश्च=त्रयो मूर्धानो यस्य स त्रिमूर्धः, 'द्वित्रिभ्या ष मूर्ध्न' इति समासाऽन्त षप्रत्यय· । दूषणश्च खरश्च त्रिमूर्धश्चेति 'चाऽर्थे द्वन्द्वः' इति इतरेतरद्वन्द्व । केचित्तु समासाऽन्तविधेरनित्यत्वात् 'दूषणखरत्रिमूर्धान' इति पठन्ति, इत्थं चोभयथाऽपि 'त्रिमूर्धाः समरे हताः' इति कपोलकल्पितः पाठोऽनावश्यक· । रणे = संग्रामे, नो हता· = न मारिता इति काकु, अपि तु मारिता एवेति भाव । अनुष्टुब् वृत्तम् ॥ १५ ॥

येनेति । येन = दूषणादिराक्षसहननेन, सिद्धक्षेत्रे = सिद्धानाम् = अणिमादिसिद्धियुतानाम् , क्षेत्रे=स्थाने, मादृशामपि = मत्सदृशानामपि, जानपदाना = जनपदभवाना, नागरिकाणामिति भाव', अकुतोभयः=नाऽस्तिकुतोऽपि भयं यस्मिन् स· 'मयूरव्यंसकादयश्च' इति समास । सञ्चारः = सञ्चरण, गमनमित्यर्थ', संवृत्तः=जात· ।

शम्बूक इति । बाढं = दृढम् , सर्वभूतरोमहर्षणानि = सर्वेषा भूताना = प्राणिनाम् , रोमहर्षणानि = रोमाञ्चजनकानि, भयहेतोरिति भाव· । उन्मत्तचण्डश्वापदकुलाक्रान्तविकटगिरिगह्वराणि = उन्मत्ता· = उद्गतमदाः, चण्डा' = अतिशयक्रुद्धाः ए तादृशा ये श्वापदा व्याघ्रादयो हिंस्रजन्तव', तेषा कुलानि = सजातीयसमूहाः, तैः आक्रान्तानि = कृताक्रमणानि, विकटानि = विकृतानि, गिरिगह्वराणि=पर्वतगुहाः,

---

नहीं मारा ? ( अर्थात् अवश्य मारा ) ॥ १५ ॥

जिससे इस सिद्धक्षेत्रमें मेरे-जैसे नगरवासियोंका भी निर्भयरूपसे भ्रमण सपन्न हुआ।

**राम**—यह केवल दण्डकारण्य ही नहीं, जनस्थान भी है क्या ?

**शम्बूक**—जी हां । ये सब प्राणियोंके रोंगटे खड़े करनेवाले उन्मत्त और अत्यन्त क्रोधी हिंस्र जन्तुओंके समूहोंसे विकृत पर्वतकी गुफाओंसे युक्त जनस्थानतक फैले हुए लम्बे जङ्गल दक्षिण दिशाके अभिमुख वर्तमान हैं जैसाकि—

निष्कूजस्तिमिताः क्वचित्क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः
स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः।
सीमानः प्रदरोदरेषु विरलस्वल्पाम्भसो यास्वयं
तृष्यद्भिः प्रतिसूर्यकैरजगरस्वेदद्रवः पीयते ॥ १६ ॥

---

येषु तानि, 'आक्रान्तविकट' स्थाने 'सकुले'ति पदं पुस्तकान्तरस्थम्, तत्र संकुलानि व्याप्तानीत्यर्थः। जनस्थानपर्यन्तदीर्घाऽरण्यानि = जनस्थानस्य पर्यन्तेषु = सीमसु, स्थितानि यानि दीर्घारण्यानि = विस्तृतवनानि, तानि, दक्षिणाम् = अवाचीं, दिशं = काष्ठाम्, अभिवर्तन्ते = लक्ष्यीकृत्य विद्यन्ते।

निष्कूजेति। क्वचित् निष्कूजस्तिमिताः, क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताऽग्नयः प्रदरोदरेषु विरलस्वल्पाम्भसः सीमानः सन्ति, यासु तृष्यद्भिः प्रतिसूर्यकैः अयम् अजगरस्वेदद्रवः पीयते इत्यन्वयः। क्वचित् = कुत्रचित्स्थले, निष्कूजस्तिमिताः = निष्कूजाः = पक्ष्यादिशब्दशून्याः, अत एव स्तिमिताः = निश्चलाः; क्वचिदपि = कुत्रचिदपि स्थले, प्रोच्चण्डसत्त्वस्वनाः = प्रोच्चण्डानाम् = अतिशयक्रुद्धानां, व्याघ्रादीनामित्यर्थः, सत्त्वानां = जन्तूनाम्, स्वनाः शब्दाः यासु ताः तथा च क्वचित्तु स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताऽग्नयः = स्वेच्छया = आत्मवाञ्छया, न तु परप्रेरणयेति भावः, सुप्ताः = निद्राणाः, गभीरभोगाः = गमनशीलशरीराः, गभीरपदस्य निम्नार्थे रूढत्वेऽपि अवयवाऽर्थमाश्रित्याऽयमर्थः, अतो लक्षणायाः पाठान्तरकल्पनायाश्च गौरवं परिहृतं भवतीति बोध्यम्, 'अहे शरीरं भोगः स्यात्' इत्यमरः, कुत्रचित्तु भोगस्थाने 'घोष' पदस्य पाठः, तत्र गम्भीरशब्दा इत्यर्थः, एतादृशा ये भुजगाः = सर्पाः, तेषां श्वासैः = निश्वासवायुभिः, प्रदीप्ताः = प्रज्वलिताः, अग्नयः = अनलाः, यासु ताः। प्रदरोदरेषु- प्रदराणां = गर्तानाम् 'प्रदरं स्त्रीरुजो भेदे प्रदरः श्वभ्रभीतयोः। इति विश्वः, उदरेषु = मध्येषु, लक्षणयाऽयमर्थो बोध्यः, विरलस्वल्पाम्भसः = विरलस्वल्पम्=अतिशयन्यूनम्, अम्भः=जलं, यासु ताः, क्वचित्तु 'विरल' स्थाने 'विलसत्' पाठस्तत्र विलसत् = प्रकाशमानमित्यर्थः, एतादृश्यः सीमानः=पर्यन्तभूमयः, सन्तीति शेषः।

---

कहींपर शब्दशून्य अतएव निश्चल और कहींपर व्याघ्र आदि क्रोधी जन्तुओंके शब्दोंवाले, अपनी इच्छासे सोये हुए तथा गमनशील शरीरवाले सर्पोंके श्वासोंसे प्रज्वलित अग्नियोंसे युक्त और गड्ढोंके बीचमें बहुत कम जलवाले सीमाभाग हैं, जहाँपर प्यासे हुए गिरगिट अजगरोंके पसीनोंकी बूँदें पी रहे हैं ॥ १६ ॥

रामः—

पश्यामि च जनस्थानं भूतपूर्वखरालयम् ।
प्रत्यक्षानिव वृत्तान्तान्पूर्वाननुभवामि च ॥ १७ ॥

( सर्वतोऽवलोक्य । ) प्रियारामा हि वैदेह्यासीत् । एतानि नाम कान्ताराणि । किमतः परं भयानकं स्यात् ? ( सास्रम् । )

त्वया सह निवत्स्यामि वनेषु मधुगन्धिषु ।

---

यासु = सीमसु, तृष्यद्भिः = पिपासितैः, प्रतिसूर्यकैः = कृकलासैः, 'सरटः कृकलासः स्यात्प्रतिसूर्यशयानकौ ।' इति हलायुधः, अयं = सन्निकृष्टवर्ती, अजगरस्वेदद्रवः=बृहत्सर्पघर्मजलं, पीयते=आचम्यते, वनमिदं सर्वतोऽपि रोमहर्षणमस्तीति भावः । स्वभावोक्तिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम्, 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति तल्लक्षणम् ॥ १६ ॥

पश्यामीति । भूतपूर्वखरालयं जनस्थानं पश्यामि । पूर्वान् वृत्तान्तान् प्रत्यक्षानिव अनुभवामि च इत्यन्वयः । भूतपूर्वखरालयं = भूतपूर्वः = पूर्वं भूतः, 'सुप्सुपा' इति समासः, खरालयः = खरनामकराक्षसनिवासो यस्मिंस्तत्, जनस्थानं, पश्यामि = प्रेक्षे, पूर्वान् = पुरातनान्, वृत्तान्तान् = उदन्तान्, शूर्पणखाऽऽगमनादिरूपानिति भावः, प्रत्यक्षानिव = पुरोवर्तमानानिव, अनुभवामि च—अनुभवं करोमि च । अत्र शूर्पणखाऽऽगमनादिभूतवृत्तान्तानां प्रत्यक्षायमाणत्वेन वर्णनात् भाविकाऽलङ्कारः- तल्लक्षणं यथा साहित्यदर्पणे—'अद्भुतस्य पदार्थस्य भूतस्याऽथ भविष्यतः । यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ॥' इति ॥ १७ ॥

प्रियारामेति । वैदेही = सीता, प्रियारामा = प्रियः = अभीष्टः, आरामः = उपवनं यस्याः सा, यद्वा प्रियः आरामः = आरमणं यस्याः सा । एतानि=अतिसमीपतो दृश्यमानानि, कान्ताराणि = दुर्गममार्गाः । साऽस्रं = सवाष्पम् ।

त्वयेति । त्वया सह मधुगन्धिषु वनेषु निवत्स्यामि इतीव असौ इह अरमत । तादृशः तस्याः स स्नेहः ( आसीत् ) इत्यन्वयः । त्वया = रामेण, सह =

---

राम—मैं खर राक्षसके प्राचीन निवास जनस्थानको देख रहा हूँ, और पहलेके वृत्तान्तोंका प्रत्यक्षकी तरह अनुभव भी कर रहा हूँ ॥ १७ ॥

( सब तरफ देखकर ) सीताको वन प्रिय था । ये महावन हैं । इनसे अधिक भयानक क्या होगा ? ( आँखोंमें आँसू भरकर )

'आपके साथ पुष्परसोंके गन्धोंसे युक्त वनोंमें मैं रहूँगी' इस तरहसे ही सीता यहाँपर

इतीवारमतेहासौ स्नेहस्तस्याः स तादृशः ॥ १८ ॥
न किञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ १९ ॥

शम्बूकः—तदलमेभिर्दुरासदैः। अथैतानि मदकलमयूरकण्ठकोमलच्छ-

सार्धं, मधुगन्धिषु—मधुगन्ध एषु अस्तीति मधुगन्धीनि तेषु = पुष्परसगन्धयुक्तेषु, वनेषु = अरण्येषु, निवत्स्यामि = निवासं करिष्यामि, इति = इत्थम्, इव = एव, असौ = सीता, इह = कान्तारेऽपि अरमत = प्रीतिं प्राप्तवती, मया सह वनवासेऽपि सीता प्रीता सञ्जाता, मद्विना अयोध्यायामपि स्थातुं नैच्छदिति भावः। हा = खेदद्योतकोऽयं निपातः, तादृशः = तथाविधः, अनिर्वाच्य इति भावः, तस्याः = सीतायाः, सः = पूर्वाऽनुभूतः, स्नेहः = प्रेमा, आसीदिति शेषः ॥ १८ ॥

नेति। यो जनो यस्य प्रियो हि, ( सः ) किञ्चित् न कुर्वाणोऽपि सौख्यैः दुःखानि अपोहति, तत् तस्य किमपि द्रव्यम् ( अस्ति ) इत्यन्वयः। यः, जनः = मनुष्यः, यस्य, प्रियः = प्रीतिमान् प्रीतिविषयो वा, ( सः=जनः ) किञ्चित् = किमपि, न कुर्वाणोऽपि=न विदधदपि, सौख्यैः=सामीप्यमात्रोत्पन्नैः सुखैः ( करणैः ), सुखान्येव सौख्यानि, स्वार्थे ष्यञ्, तैः, दुःखानि=पीडाः, अपोहति=नाशयति, तत्=दुःखनाशहेतुभूतो जनः, विधेय ( द्रव्य ) प्राधान्यात् नपुंसकत्वम्; तस्य = अपोहनीयदुःखस्य, किमपि = अनिर्वचनीयं, विलक्षणमिति भावः; द्रव्यं = भव्यवस्तु, 'द्रव्यं च भव्ये' इति निपातः, एवं चाऽहं सीताविषये किमपि अकुर्वाणोऽपि अकृत्रिमप्रीतिविषयत्वात्सन्निधिमात्रजनितैः सुखैस्तद्दुःखनिवर्तक इत्यतो मदनुसरणार्थं सीताया वनगमनं युक्तमिति भावः। अर्थान्तरन्यासोऽलङ्कारः ॥ १९ ॥

शम्बूक इति। सीतास्मरणेन सञ्जातदुःखं रामं निरीक्ष्य तच्चित्तविनोदार्थं शम्बूकस्येयमुक्तिस्तदलमित्यादि। दुरासदैः = दुःखेन आसत्तुं योग्यानीति दुरासदानि, तैः दुर्गमैरित्यर्थः, 'ईषद्दुःसुषु कृच्छ्राऽकृच्छ्रार्थेषु खल्' इति खल्प्रत्ययः। एभिः = वनैः, अलं=पर्याप्तं, वनैः साध्यं नाऽस्तीत्यर्थः, 'गम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजिका' इत्यतः करणत्वात्तृतीया, महाभाग = महान् भागो = भाग्य

प्रसन्न होती थीं, वैसा उनका वह प्रेम था ॥ १८ ॥

जो मनुष्य जिसका प्यारा है, वह कुछ न करता हुआ भी सामीप्यमात्रसे उत्पन्न सुखोंके द्वारा दुःखोंका नाश करता है, इस कारणसे वह उसका अनिर्वचनीय पदार्थ है ॥ १९ ॥

शम्बूक—तब दुर्गम इन वनोंको रहने दें। महाभाग्यवान् आप मदसे मधुर शब्दवाले

विभिरवकीर्णानि पर्यन्तैरविरलनिविष्टनीलबहुलच्छायातरुषण्डमण्डितान्यसंभ्रान्तविविधमृगयूथानि पश्यतु महाभागः प्रशान्तगम्भीराणि श्वापदकुलशरण्यानि महारण्यानि।

इह समदशकुन्ताक्रान्तवानीरमुक्त-

यस्य स महाभाग्ययुक्त इत्यर्थ, एतादृशो भवानिति शेष, 'पश्यतु' इति क्रियापदाऽनुरोधात् ' 'महाऽनुभाव' इति पुस्तकान्तरपाठ, तत्र महाप्रभाव इत्यर्थः। एतानि = समीपतरवर्तीनि, मदकलमयूरकण्ठकोमलच्छविभिः = मदेन = हर्षेण, कलाना = मधुरं कूजताम्, मयूराणा = नीलकण्ठानाम्, कण्ठानाम् = गलानाम्, इव कोमला = स्निग्धा, छवि = कान्तिर्येषा ते, तै, एतादृशै पर्यन्तै = समीपप्रदेशैः 'पर्वतैः' इति काचित्क पाठ, अवकीर्णानि = व्याप्तानि, अविरलनिविष्टनीलबहुलच्छायातरुषण्डमण्डितानि = अविरलम् = निविडम्, यथा स्यात्तथा निविष्टाः = स्थिता, नीलाः = श्यामला, बहुलाः = सान्द्रा, एतादृशा ये छायातरवः = छायाप्रधाना वृक्षा, 'शाकपार्थिवादीना सिद्धय उत्तरपदलोपस्योपसंख्यानम्' इति मध्यमपदलोपी समास, बहुलच्छायापदस्थाने कचित् 'बहलच्छाये' ति पाठस्तत्र बहला = गाढा छाया येषा त इति विग्रह, तेषा षण्डा =समूहा, 'कदम्बे षण्डमस्त्रियाम्' इत्यमर, तैर्मण्डितानि = अलङ्कृतानि, एवम् असंभ्रान्तविविधमृगयूथानि-असंभ्रान्तानि = अत्रस्तानि, विविधमृगाणाम् = अनेकप्रकारहरिणानाम्, यूथानि = समूहा, येषु तानि, एवं प्रशान्तगम्भीराणि=प्रशान्तानि=निरुपद्रवाणि, गम्भीराणि=गभीराणि, दुष्प्रवेश्यानीति यावत्। श्वापदकुलशरण्यानि = श्वापदकुलाना = हिंस्रजन्तुसजातीयानाम्, शरण्यानि = वासस्थानानि, 'सजातीयै कुलम्' इत्यमर, एतादृशानि महारण्यानि=महावनानि, 'मध्यमारण्यकानि' इति पुस्तकान्तरस्थः पाठस्तस्य जनस्थानमध्यस्थानि वनानीत्यर्थ, पश्यत्विति पूर्वपदेनान्वयः।

इहेति। इह समदशकुन्ताक्रान्तवानीरमुक्तप्रसवसुरभिशीतस्वच्छतोया फलभरपरिणामश्यामजम्बूनिकुञ्जस्खलनमुखरभूरिस्रोतसो निर्झरिण्यो वहन्ति इत्यन्वयः। इह = एषु, महारण्येष्वित्यर्थ, समदशकुन्ताक्रान्तवानीरमुक्तप्रसवसुरभिशीतस्वच्छ-

मयूरोंके कण्ठोंकी तरह स्निग्ध कान्तिसे युक्त निकटके प्रदेशोंसे व्याप्त, घनभावसे अवस्थित श्यामल और सान्द्र छाया-प्रधान वृक्षोंके समूहोंसे अलङ्कृत निर्भय अनेक प्रकारके मृगोंके समूहोंसे युक्त, निरुपद्रव और दुष्प्रवेश्य तथा हिंसक जानवरोंके झुण्डोंके वासस्थान महावनोंको देखिये।

यहांपर मदवाले पक्षियोंसे आश्रित वेतससे गिरे हुए फूलोंसे सुगन्धित, ठण्ढे

प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥ २० ॥

अपि च ।

दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि ।

---

तोयाः=समदैः=मत्तैः, शकुन्तैः=पक्षिभिः, आक्रान्ताः = उत्पत्य आश्रिताः, एतादृशा ये वानीराः = वेतसविशेषाः, तेभ्यः मुक्ताः = पतिताः, 'वीरुत्' इति पाठे वानीरवीरुधाम्=वेतसलतानामित्यर्थः कार्यः, तादृशा ये प्रसवाः=पुष्पाणि, तैः सुरभीणि = संजातसौरभाणि, शीतानि = शीतलानि, स्वच्छानि = अतिशयनिर्मलानि, तोयानि = जलानि यासां ताः; एवं च फलभरपरिणामश्यामजम्बूनिकुञ्जस्खलनमुखरभूरिस्रोतसः = फलभरस्य=फलसमूहस्य, परिणामेन = परिपाकेन, श्यामाः=कृष्णवर्णाः, ये जम्बूनिकुञ्जाः = सान्द्रजम्बूवृक्षाः, तेषु, स्खलनेन = वेगप्रतिघातेन, मुखराणि = शब्दयुक्तानि, भूरीणि = बहूनि, स्रोतांसि = प्रवाहा यासां ताः, एतादृश्यो निर्झरिण्यः = नद्यः, 'कूलङ्कषा निर्झरिणी रोधोवक्रा सरस्वती ।' इति कोषः, वहन्ति = स्यन्दन्ते । अर्थान्तरवृत्तित्वेनाऽत्र वहधातोरकर्मकत्वं, तदुक्तं—'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥' इति । अत्र स्वभावोक्तिरलङ्कारः । मालिनी वृत्तम् ॥ २० ॥

अपि चेति । अपरं च कथनीयमस्तीत्यभिप्रायः ।

दधतीति । अत्र कुहरभाजां भल्लूकयूनाम् अनुरसितगुरूणि अम्बूकृतानि स्त्यानं दधति, सल्लकीनां शिशिरकटुकषायः इभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः स्त्यायत इत्यन्वयः । अत्र = महारण्येषु, कुहरभाजां = कुहरं भजन्तीति कुहरभाजस्तेषां 'भजो ण्विः' इति ण्विप्रत्ययः, गिरिगुहावर्तिनामित्यर्थः, यद्यपि 'अथ कुहरं शुषिरं विवरं बिलम्' इत्यमराऽनुरोधेन कुहरशब्दस्य बिलवाचकत्वं,

---

और निर्मल जलसे युक्त तथा फलसमूहके पकनेसे श्याम वर्णवाले घने जामुन वृक्षोंके गुञ्जोंमें गिरने से शब्दायमान बहुतेरे प्रवाहोंसे युक्त नदियां बहती हैं ॥ २० ॥

और भी—

यहाँपर गुफाओंमें रहनेवाले जवान भालुओंके प्रतिध्वनिसे फैले हुए निष्ठीवन (थुत्कृत) से

शिशिरकटुकषायः स्त्यायते सल्लकीना-
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥ २१ ॥

रामः—( सबाष्पस्तम्भम् । ) भद्र ! शिवास्ते पन्थानो देवयानाः । प्रलीयस्व पुण्येभ्यो लोकेभ्यः ।

---

तथाऽपि लक्षणया गुहावाचकत्वमवसेयम् । भल्लूकयूना = भल्लूकाश्च ते युवानस्तेषा, विशेषणविशेष्यत्वे कामचारादेव प्रयोगः । तरुणानामृक्षाणामित्यर्थः, शब्दगुरुत्वद्योतनाऽर्थो युवशब्दः, अनुरसितगुरूणि = अनुरसितेन = प्रतिध्वनिना, गुरूणि = महान्ति, एतादृशानि अम्बूकृतानि = सनिष्ठीवाश्शब्दाः, थुत्कारात्मका इत्यर्थः, 'अम्बूकृतं सनिष्ठीवम्' इत्यमरः, स्त्यानं = वृद्धिं, दधति = धारयन्ति । तथा च सल्लकीना = गजभक्ष्याणा लताविशेषाणा, क्वचित् 'शल्लकीनाम्' इति पाठान्तरम् , शिशिरकटुकषाय = शिशिरः=शीतलः, कटु = तीक्ष्णः, कषायः=सुरभिः, इभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः=इभैः = हस्तिभिः, दलिता = मर्दिताः, अतएव विकीर्णाः = इतस्ततः पर्यस्ताः, ग्रन्थयः = पर्वाणि, 'ग्रन्थिर्ना पर्वपरुषी' इत्यमरः, तेषां यो निष्यन्दः = रसः, तस्य गन्धः = आमोदः, 'गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः' इति विश्वः, स गन्धः स्त्यायते = वर्द्धते । अत्र पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । मालिनी वृत्तम् ॥ २१ ॥

राम इति । सबाष्पस्तम्भं=साश्रुनिरोधं, सीतासंस्मरणेन समायातानामश्रूणा निरोधपूर्वकमिति भावः । देवयानाः = देवयाननामकाः, 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।' इत्युक्तप्रकाराः । ते = तव पन्थानः = मार्गाः, शिवाः = कल्याणकारकाः, भवन्तु इति शेषः । लोकेभ्यः = लोकाननुभवितुम् 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी, प्रलीयस्व = संयुक्तो भवेत्यर्थः, 'लीङ् श्लेषणे' इति धातोर्लोट् । 'देवयानं प्रतिपद्यस्व' इति पुस्तकान्तरपाठस्तत्र देवयानं = विमानं, प्रतिपद्यस्व = प्राप्नुहि इत्यर्थः ।

---

युक्त शब्द वृद्धिको प्राप्त करते हैं । शल्लकी (हाथीसे खाई जानेवाली) लताओंका ठण्ढा, तीक्ष्ण और सुगन्धित, हाथियोंसे मर्दित और बिखरे हुए पर्वो (गाठों) के रसका गन्ध बढ रहा है ॥२१॥

राम—( आँसू रोककर ) भद्र ! देवयाननामक मार्ग तुम्हें कल्याणकारक हों । पुण्यलोकोंका अनुभव करनेके लिए तत्पर हो जाओ ।

प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥ २० ॥

अपि च ।

दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि ।

---

तोया=समदै =मत्तै., शकुन्तै =पक्षिभि , आक्रान्ता. = उत्पत्य आश्रिता', एतादृशा ये वानीरा' = वेतसविशेषा , तेभ्य. मुक्ता. = पतिता , 'वीरुत्' इति पाठे वानीरवीरुधाम्=वेतसलतानामित्यर्थ. कार्य., तादृशा ये प्रसवा.=पुष्पाणि, तैः सुरभीणि = संजातसौरभाणि, शीतानि = शीतलानि, स्वच्छानि = अतिशयनिर्मलानि, तोयानि = जलानि यासा ता ; एवं च फलभरपरिणामश्यामजम्बूनिकुञ्जस्खलनमुखरभूरिस्रोतस. = फलभरस्य=फलसमूहस्य, परिणामेन = परिपाकेन, श्यामा.=कृष्णवर्णाः, ये जम्बूनिकुञ्जा. = सान्द्रजम्बूवृक्षा , तेषु, स्खलनेन = वेगप्रतिघातेन, मुखराणि = शब्दयुक्तानि, भूरीणि = बहूनि, स्रोतांसि = प्रवाहा यासा ता , एतादृश्यो निर्झरिण्य. = नद्य', 'कूलङ्कषा निर्झरिणी रोधोवक्रा सरस्वती ।' इति कोष , वहन्ति = स्यन्दन्ते । अर्थान्तरवृत्तित्वेनाऽत्र वहधातोरकर्मकत्वं, तदुक्त—'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षात. कर्मणोऽकर्मिका क्रिया ॥' इति । अत्र स्वभावोक्तिरलङ्कारः । मालिनी वृत्तम् ॥ २० ॥

अपि चेति । अपरं च कथनीयमस्तीत्यभिप्राय' ।

दधतीति । अत्र कुहरभाजा भल्लूकयूनाम् अनुरसितगुरूणि अम्बूकृतानि स्त्यान दधति, सल्लकीना शिशिरकटुकषायः इभदलितविकीर्णग्रन्थिनिष्यन्दगन्ध-स्त्यायत इत्यन्वय. । अत्र = महारण्येषु, कुहरभाजा = कुहर भजन्तीति कुहरभाजस्तेषा 'भजो ण्वि.' इति ण्विप्रत्यय , गिरिगुहावर्तिनामित्यर्थ , यद्यपि 'अथ कुहरं शुषिरं विवरं विलम्' इत्यमराऽनुरोधेन कुहरशब्दस्य विलवाचकत्वं,

---

और निर्मल जलसे युक्त तथा फलसमूहके पकनेसे श्याम वर्णवाले घने जामुन वृक्षोंके गुन्जोंमें गिरने से शब्दायमान बहुतेरे प्रवाहोंसे युक्त नदिया वहती हैं ॥ २० ॥

और भी—

यहाँपर गुफाओंमें रहनेवाले जवान भालुओंके प्रतिध्वनिसे फैले हुए निष्ठीवन (थुत्कृत) से

शिशिरकटुकषायः स्त्यायते सल्लकीना-
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥ २१ ॥

रामः—( सबाष्पस्तम्भम् । ) भद्र ! शिवास्ते पन्थानो देवयानाः । प्रलीयस्व पुण्येभ्यो लोकेभ्यः ।

---

तयाऽपि लक्षणया गुहावाचकत्वमवसेयम् । भल्लूकयूना = भल्लूकाश्च ते युवानस्तेषां, विशेषणविशेष्यत्वे कामचारादेव प्रयोगः । तरुणानामृक्षाणामित्यर्थः, शब्दगुरुत्वद्योतनाऽर्थो युवशब्दः, अनुरसितगुरूणि = अनुरसितेन = प्रतिध्वनिना, गुरूणि = महान्ति, एतादृशानि अम्बूकृतानि = सनिष्ठीवाश्शब्दाः, थुत्कारात्मका इत्यर्थः, 'अम्बूकृतं सनिष्ठीवम्' इत्यमरः, स्त्यानं = वृद्धिं, दधति = धारयन्ति । तथा च सल्लकीनां = गजभक्ष्याणां लताविशेषाणां, क्वचित् 'शल्लकीनाम्' इति पाठान्तरम्, शिशिरकटुकषाय = शिशिरः=शीतलः, कटुः = तीक्ष्णः, कषायः=सुरभिः, इभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः=इभैः = हस्तिभिः, दलिताः = मर्दिताः, अतएव विकीर्णाः = इतस्ततः पर्यस्ताः, ग्रन्थयः = पर्वाणि, 'ग्रन्थिर्ना पर्वपरुषी' इत्यमरः, तेषां यो निष्यन्दः = रसः, तस्य गन्धः = आमोदः, 'गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः' इति विश्वः, स गन्धः स्त्यायते = वर्द्धते । अत्र पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । मालिनी वृत्तम् ॥ २१ ॥

राम इति । सबाष्पस्तम्भं=साश्रुनिरोधं, सीतासंस्मरणेन समायातानामश्रूणां निरोधपूर्वकमिति भावः । देवयानाः = देवयाननामकाः, 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।' इत्युक्तप्रकाराः । ते = तव पन्थानः = मार्गाः, शिवाः = कल्याणकारकाः, भवन्तु इति शेषः । लोकेभ्यः = लोकाननुभवितुम् 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी, प्रलीयस्व = संयुक्तो भवेत्यर्थः, 'लीङ् श्लेषणे' इति धातोर्लोट् । 'देवयानं प्रतिपद्यस्व' इति पुस्तकान्तरपाठस्तत्र देवयानं = विमानं, प्रतिपद्यस्व = प्राप्नुहि इत्यर्थः ।

---

युक्त शब्द वृद्धिको प्राप्त करते हैं । शल्लकी (हाथीसे खाई जानेवाली) लताओंका ठण्डा, तीक्ष्ण और सुगन्धित, हाथियोंसे मर्दित और बिखरे हुए पर्वो (गाठों) के रसका गन्ध बढ रहा है॥२१॥

राम—( आँसू रोककर ) भद्र ! देवयाननामक मार्ग तुम्हें कल्याणकारक हों । पुण्यलोकोंका अनुभव करनेके लिए तत्पर हो जाओ ।

शम्बूकः—यावत्पुराणब्रह्मर्षिमगस्त्यमभिवाद्य शाश्वतं पदमनुप्रविशामि । ( इति निष्क्रान्तः । )

रामः—

एतत्पुनः*र्वनमहो कथमद्य† दृष्टं
यस्मिन्नभूम चिरमेव पुरा वसन्तः ।
आरण्यकाश्च गृहिणश्च रताः स्वधर्मे
सांसारिकेषु च सुखेषु वयं रसज्ञाः ॥ २२ ॥

एते त एव गिरयो विरुवन्मयूरा-

---

शम्बूक इति । यावत् = अवधारणार्थकमिदमव्ययम्, पुराणब्रह्मर्षि = प्राचीनं ब्रह्मवादिनमृषिम्, अभिवाद्य = अभिवादनं कृत्वा, प्रणम्येत्यर्थः । शाश्वतं = पदं = स्थानम्, अनुप्रविशामि = अनन्तरं प्रविशामि ।

एतदिति । अहो ! अद्य एतत् वनं पुनः कथं दृष्टं हि । यस्मिन् पुरा चिरमेव वसन्तः आरण्यकाः गृहिणश्च वयं स्वधर्मे रताः, सांसारिकेषु सुखेषु रसज्ञाश्च अभूम इत्यन्वयः । अहो = आश्चर्यम्, अद्य = अस्मिन्दिने, एतत् = समीपतरवर्ति, वनम् = अरण्यम्, पुनः = भूयः, प्राक्तनवनवासादनन्तरं द्वितीयवारमित्यर्थः, कथं = केन प्रकारेण, दृष्टम् = अवलोकितं, हि = निश्चयेन यस्मिन् = वने, पुरा=पूर्वं दण्डकारण्यवाससमय इत्यर्थः, चिरमेव = बहुकालपर्यन्तमेव, वसन्तः =निवसन्तः, आरण्यकाः= वानप्रस्थाः, तथा च गृहिणश्च=गृहस्थाश्च, वयं=रामादयः, अत एव स्वधर्मे=पित्राज्ञापालनरूप इति भावः, सांसारिकेषु=संसारजन्येषु, सुखेषु = आनन्देषु, रसज्ञाश्च आस्वादज्ञाश्च, अभूम = अभवाम । सीतासाहचर्यावसरे विलोकितमेतद्वनं कथं दैववशाल्लोचनगोचरीकृतमिति भावः । वसन्ततिलका वृत्तम् ॥ २२ ॥

एत इति । विरुवन्मयूराः एते त एव गिरयः ( सन्ति ), मत्तहरिणानि तानि एव वनस्थलानि ( सन्ति ), आमञ्जुवञ्जुललतानि नीरन्ध्रनीपनिचुलानि अमूनि

---

शम्बूक—प्राचीन ब्रह्मर्षि अगस्त्यको प्रणाम कर पीछे नित्य लोकमें प्रवेश करूंगा । ( ऐसा कहकर जाता है । )

राम—अहो ! आज इस वनको मैंने फिर कैसे देखा ? जहां पहले बहुत कालतक रहते हुए वानप्रस्थ तथा गृहस्थ भी होते हुए हमलोग अपने धर्ममें तत्पर तथा सांसारिक सुखोंमें अनुभव करनेवाले हुए थे ॥ २२ ॥

शब्द करनेवाले मयूरोंसे युक्त ये वे ही पर्वत हैं, मत्त मृगोंसे युक्त ये वे ही वनस्थल हैं और

---

* 'एतत्तदेव हि' इति पाठान्तरम् । † 'पुनरद्य' इति पाठान्तरम् ।

स्तान्येव मत्तहरिणानि वनस्थलानि ।
आमञ्जुवञ्जुललतानि* च तान्यमूनि
नीरन्ध्रनीपनिचुलानि सरित्तटानि ॥ २३ ॥
मेघमालेव यश्चायमारादिव† विभाव्यते ।
गिरिः प्रस्रवणः सोऽयमत्र गोदावरी नदी ॥ २४ ॥

तानि सरित्तटानि ( सन्ति ) इत्यन्वयः । विरुवन्मयूराः = विरुवन्तः = विशेषेण कूजन्तः, मयूराः=बर्हिणाः, येषु ते, एते = समीपतराः, ते एव=पूर्वाऽवलोकिता एव, गिरयः=पर्वताः, मत्तहरिणानि = मत्ताः=मदयुक्ताः, हरिणाः = मृगाः येषु तानि, एतानीति पदमध्याहार्यम्, एतानि = समीपतरवर्तीनि, तानि एव = पूर्वाऽनुभूतानि एव, वनस्थलानि = अरण्यस्थल्यः, आमञ्जुवञ्जुललतानि = आ=समन्तात्, मञ्जवः = मनोज्ञाः इति आमञ्जवः = अतिशयमनोज्ञाः, आमञ्जुवञ्जुलाः = अशोकाः वेतसास्तिनिशा वा, लताः=वल्ल्यो येषु तानि, 'वञ्जुलः पुंसि तिनिशे वेतसाऽशोकयोरपि ।' इति मेदिनी, नीरन्ध्रनीपनिचुलानि = निर्गत रन्ध्रं येभ्यस्ते नीरन्ध्राः = अविरलाः, नीपाः=कदम्बाः, 'नीला' इति पाठे श्यामा इत्यर्थः, तथा च नीरन्ध्रा नीपा निचुलाः=हिज्जलवृक्षाः येषु तानि, 'निचुलो हिज्जलोऽम्बुजः' इत्यमरः, अमूनि=एतानि, तानि = पूर्वानुभूतानि, सरित्तटानि = नदीतीराणि, सर्वत्राऽपि सन्ति इति शेषः । तथा चाऽत्र तुल्ययोगिताऽलङ्कारः । वसन्ततिलका वृत्तम् ॥ २३ ॥

मेघमालेति । मेघमाला इव यश्चाऽयम् आरादिव विभाव्यते, सोऽयं प्रस्रवणो गिरिः ( अस्ति ), अत्र गोदावरी नदी ( अस्ति ) इत्यन्वयः । मेघमाला इव= मेघपङ्क्तिसदृशः, यश्चाऽयं = दृश्यमानः पदार्थः, आरादिव = समीपस्थ इव, 'आराद्दूरसमीपयोः ।' इत्यमरः, विभाव्यते = ज्ञायते । सोऽयं = स एषः, प्रस्रवणः=प्रस्रवणनामकः, गिरिः = पर्वतः, अस्तीति शेषः । अत्र = अस्मिन्पर्वते, गोदावरी = गोदावरीनाम्नी, नदी = सरित्, अस्तीति शेषः । 'मेघमालेवे' त्यत्रोपमा 'आरादिवे' त्यत्र चोत्प्रेक्षा, द्वयोर्मिथोऽनपेक्षया अत्र स्थितेः संसृष्टिः ॥ २४ ॥

अत्यन्त सुन्दर अशोक और लताओंसे युक्त तथा घने कदम्ब और हिज्जल वृक्षोंसे सम्पन्न ये वे ही नदियोंके किनारे हैं ॥ २३ ॥

मेघमालाके तुल्य जो यह निकटवर्तीकी तरह जान पड़ता है, वह प्रस्रवण नामक पर्वत है और यहापर गोदावरी नदी है ॥ २४ ॥

* 'ललितानि' इति पाठान्तरम् । † 'दपि' इति पाठान्तरम् ।

अस्यैवासीन्महति शिखरे गृध्रराजस्य वास-
स्तस्याधस्ताद्वयमपि रतास्तेषु पर्णोटजेषु ।
गोदावर्याः पयसि विततानोकहश्यामलश्री-
रन्तः कूजन्मुखरशकुनो यत्र रम्यो वनान्तः ॥ २५ ॥

अत्रैव सा पञ्चवटी, यत्र निवासेन विविधविस्रम्भातिप्रसङ्गसाक्षि

अस्यैवेति । अस्य एव महति शिखरे गृध्रराजस्य वास आसीत् , तस्य अधस्तात् वयमपि तेषु पर्णोटजेषु रताः; यत्र गोदावर्याः पयसि विततानोकहश्यामलश्रीः मुखरशकुनः अन्तः कूजन् रम्यः वनान्तः ( अस्ति ) इत्यन्वयः । अस्यैव प्रस्रवणपर्वतस्यैव, महति = उन्नते, शिखरे = शृङ्गे, गृध्रराजस्य = दाक्षाय्याऽधिपते , जटायोः इत्यर्थः, वासः = वसति अस्मिन्निति वासः 'हलश्च' इति अधिकरणे घञ् , निवासस्थानमित्यर्थः, आसीत् = अभूत् । तस्य=शिखरस्य, अधस्तात् अधःप्रदेशे, अस्तातिप्रत्ययान्तमव्ययमेतत् । वयमपि=रामादयोऽपि, तेषु=पूर्वाऽनुभूतेषु, पर्णोटजेषु=पर्णशालासु, रताः = निरताः, उषिता इति भावः । यत्र = यस्मिन् स्थाने, गोदावर्याः = तदाख्याया नद्याः, पयसि = जले, विततानोकहश्यामलश्रीः=अनसः=शकटस्य, अकं=गतिम् , घ्नन्तीति अनोकहाः = वृक्षाः, 'अन्येष्वपि दृश्यते' इति डप्रत्ययः, 'अनोकहः कुटः सालः पलाशी द्रुद्रुमाऽगमाः ।' इत्यमरः विततैः=विस्तृतैः, अनोकहैः, ( हेतुभिः ), श्यामला = नीला, श्री = शोभा, यस्य सः, वृक्षसमूहेन नीलकान्तिरित्यर्थः, 'विनतश्यामलाऽनोकहश्रीः' इति पाठे—विनता = पुष्पफलातिभारेणाऽतिनम्रा , श्यामला = नीलवर्णाः ये अनोकहाः = वृक्षाः तेषां श्रीः = शोभा यस्मिन् सः । एवं च मुखरशकुनः = मुखराः शब्दं कुर्वन्तः, शकुनाः=पक्षिणो यस्मिन् स कूजत्पक्षियुक्त इति भावः, अत एव अन्तः = मध्ये, कूजन् = स्वयं शब्दं कुर्वन्निव स्थितः, रम्यः = सुन्दरः, वनान्तः आरामभागः, अस्तीति शेषः । अत्र 'कूजन्निव' त्यत्र इवादिपदाऽभावात्प्रतीयमानोत्प्रेक्षा । मन्दाक्रान्ता वृत्तम् ॥ २५ ॥

अत्रैवेति । अत्रैव = अस्मिन्नेव देशे, सा = पूर्वाऽनुभूता, यत्र = यस्य

इसकी बड़ी (ऊंची) चोटीपर गृध्रराज (जटायु) का निवासस्थान था, उसके नीचे हमलोग भी उन पर्णशालाओंमें रहते थे, जहांपर गोदावरीके जलमें फैले हुए वृक्षोंसे नीली कान्तिसे सम्पन्न और शब्द करनेवाले पक्षियोंसे युक्त, अत एव भीतर शब्द करते हुए की तरह सुन्दर वनप्रान्त है ॥ २५ ॥

यहींपर वह पञ्चवटी है, जहां रहनेसे अनेकों विश्वस्त विलासोंके अतिशय विस्तारके सा

प्रदेशाः, प्रियायाः प्रियसखी च वासन्ती नाम वनदेवता। किमिदमापतितमद्य रामस्य ? संप्रति हि।

चिराद्वेगारम्भी प्रसृत इव तीव्रो विषरसः
कुतश्चित्संवेगात्प्रचल* इव शल्यस्य शकलः।
व्रणो रूढग्रन्थिः स्फुटित इव हृन्मर्मणि पुनः
पुराभूतः शोको विकलयति मां नूतन इव ॥ २६ ॥

निवासेन = स्थित्या, विविधविस्रम्भाऽतिप्रसङ्गसाक्षिणः = विविधानाम् = अनेकप्रकाराणाम् , विस्रम्भाणाम् = विश्वस्तविलासानाम् , अतिप्रसङ्गस्य = अतिविस्तारस्य, साक्षिणः = साक्षाद्दर्शिनः, प्रदेशाः = स्थानानि, सन्तीति शेषः। प्रियायाः = वल्लभायाः, सीताया इत्यर्थः। आपतितम् = समागतम् , अतिदुःसहत्वेनाऽनिर्वाच्यदशा समायातेति भावः।

चिरादिति। तीव्रः चिरात् वेगारम्भी प्रसृतः विषरस इव, कुतश्चित् संवेगात् प्रचलः शल्यस्य शकल इव, रूढग्रन्थिः स्फुटितः हृन्मर्मणि व्रण इव पुराभूतः शोको नूतन इव पुनः मा विकलयति इत्यन्वयः। तीव्रः = दारुणः, स्पर्शदशायामपि दुःसह इति भावः, चिरात् = भूयांस कालं शमित्वा, वेगारम्भी = वेगम् = वेदनाशीघ्रत्वम् ; आरभते = उत्पादयति इति वेगारम्भी, 'चिरोद्वेगारम्भी' इति पाठे—चिरम् = बहुकालं यावत् , उद्वेगम् = चित्तदाहमारभते इति चिरोद्वेगारम्भी इति विग्रहः कार्यः, प्रसृतः = सर्वत्र जातप्रसरः, विषरस इव=गरलद्रव इव, कुतश्चित् = कस्माच्चित् स्थानात् , संवेगात्=अतिशयवेगात् , प्रचलः = चलितः, शल्यस्य = बाणाग्रस्य, शकल इव = खण्ड इव, रूढग्रन्थिः = रूढाः = प्रादुर्भूताः, ग्रन्थयः = उपव्रणाः, यस्मात् सः, स्फुटितः = दलितः, हृन्मर्मणि = हृदयमर्मस्थले, व्रण इव = ईर्ममिव, पुराभूतः = प्राचीनः, 'घनीभूत' इति क्वाचित्कः पाठस्तस्य

प्रदेश हैं, यहींपर प्यारी सीताकी प्रियसखी वासन्ती नामकी वनदेवता थी। आज रामको यह क्या आ पडा ( हो गया ) ? इस समय—

दारुण, बहुत कालके बाद वेदनाकी शीघ्रताको पैदा करनेवाला और सर्वत्र फैले हुए विषरसकी तरह, कहींसे अत्यन्त वेगसे चले हुए बाणाग्रके टुकडेकी तरह, उपव्रणवाले और हृदयके मर्मस्थलमें फूटे हुए फोडेकी तरह पुराना शोक भी नवीनके सदृश होकर फिर मुझे विकल कर रहा है ॥ २६ ॥

* 'निद्रित' इति पाठान्तरम्।

तथाविधानपि तावत्पूर्वसुहृदो भूमिभागान् पश्यामि। ( निरूप्य। ) अनवस्थितो भूतसन्निवेशः। तथा हि।

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासं यातो घनविरलभावः क्षितिरुहाम्।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं

---

घनत्वमापन्न इत्यर्थः, शोकः = मन्युः, नूतन इव = नवीन इव, पुनः = भूयः, मा= रामं, विकलयति = विकलं करोति, 'मा नूतन इव' इत्यत्र 'संमूर्च्छयति च' इति पाठस्तस्य मोहयति चेत्यर्थः कार्यः। प्राचीनोऽपि सीतावियोगजन्यः शोकः पञ्चवटयाद्युद्दीपकविभाववशान्नूतन इव मा विकलीकरोतीति भावसंक्षेपः। अत्र चतसृणामुत्प्रेक्षाणां मिथोऽनपेक्षया स्थितेः संसृष्टिः। शिखरिणी वृत्तम्॥ २६॥

तथाविधानिति। तथाविधानपि = तादृशानपि, शोकोद्दीपकत्वेन मद्वैकल्योत्पादकानपि, पूर्वसुहृदः = प्राचीनान् सखीन्, भूमिभागेषु सुहृत्त्वं च निवासादिषु अत्यन्तोपकारकत्वगुणयोगाद्बोध्यम्। निरूप्य = निरूपणं कृत्वा, दृष्ट्वेत्यर्थः। भूतसनिवेशः = पदार्थस्थितिः, अनवस्थितः, अनियतः, परिवर्तनं गत इत्यर्थः।

पुरेति। यत्र पुरा सरितां स्रोतः, तत्र अधुना पुलिनम् ( अस्ति ), क्षितिरुहां घनविरलभावो विपर्यासं यातः। बहोः कालात् दृष्टम् इदं वनम् अपरम् इव मन्ये, ( परं ) शैलानां निवेशः इदं तदिति बुद्धिं द्रढयति इत्यन्वयः। यत्र=यस्मिन् स्थाने, पुरा = पूर्वं, वनवाससमय इति भावः, सरिताम् = नदीनां, स्रोतः = प्रवाहः, आसीदिति शेषः, तत्र=तस्मिन् स्थाने, अधुना = साम्प्रतं, पुलिनं=सैकतम्, अस्तीति शेषः। क्षितिरुहां = वृक्षाणाम्, घनविरलभावः = सान्द्रत्वं विरलत्वं च, विपर्यासः= वैपरीत्यं, यातः = प्राप्तः, यत्र प्राक् वृक्षाणां सान्द्रत्वमासीत्तत्राऽधुना विरलत्वं यत्र च विरलत्वं तत्र सान्द्रत्वं वर्तत इति भावः। बहोः = अधिकात्, कालात्=समयात्, अनन्तरमिति शेषः। यद्वा बहोः कालात् = बहुकालमदृष्ट्वा, 'ल्यब्लोपे कर्मण्यधिकरणे च' इति पञ्चमी, दृष्टम् = अवलोकितम्, इदं = पुरतो दृश्यमानं, वनम् = अरण्यम्, अपरम् इव = अन्यदिव, मन्ये = विचारयामि। परं शैलानां= पर्वतानाम्, निवेशः=अवस्थितिः, इदं पुरो दृश्यमानं वनं, तत् = प्राग्विलोकितम्,

---

वैसे होते हुए भी प्राचीन मित्रोंके सदृश भूमिभागोंको देखता हूँ। (देख कर) पदार्थोंकी स्थिति नियत ( एकरूप ) नहीं है जैसे कि—

पहले जहाँ नदियोंका प्रवाह था, अब वहाँ तट है, वृक्षोंका घनभाव और विरलभाव भी बदल गया है। बहुत कालके अनन्तर देखा हुआ यह वन दूसरे वनकी तरह लग रहा है,

निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥ २७ ॥

हन्त हन्त ! परिहरन्तमपि मां पञ्चवटी स्नेहाद्बलादाकर्षतीव । (सकरुणम् ।)

यस्यां ते दिवसास्तया सह मया नीता यथा स्वे गृहे
यत्सम्बन्धकथाभिरेव सततं दीर्घाभिरास्थीयत ।
एकः सम्प्रति नाशितप्रियतमस्तामेव रामः कथं

---

इति = इत्याकारिका, बुद्धिं=प्रत्यभिज्ञाऽऽत्मिका मतिं, द्रढयति = दृढां करोतीत्यर्थः । अत्र वाक्याऽर्थहेतुकं काव्यलिङ्गमलङ्कारः 'परमिवे' त्यत्रोत्प्रेक्षा चेति द्वयोरङ्गाङ्गिभावेन सङ्करः । शिखरिणी वृत्तम् ॥ २७ ॥

हन्तेति । हन्त हन्तेति खेदाऽतिशयद्योतनाऽर्था द्विरुक्तिः । परिहरन्तम् अपि= परित्यजन्तम् अपि, स्नेहात् = प्रेम्णो हेतोः, आकर्षतीव = आकर्षणं करोतीव, सीतया लक्ष्मणेन च सह प्रागनुभूतस्य सुखस्य स्मारणेन पञ्चवटी मां रुणद्धीवेति भावः । ( सकरुणं = सदयम् )।

यस्यामिति । यस्यां मया तया सह ते दिवसाः स्वे गृहे यथा नीताः । सततं दीर्घाभिः यत्सम्बन्धकथाभिरेव आस्थीयत, सम्प्रति नाशितप्रियतम एकः पापो रामः तामेव पञ्चवटीं कथं विलोकयतु, वा असंभाव्य कथं गच्छतु इत्यन्वयः । यस्यां=पञ्चवट्यां, मया = रामेण, तया सह=सीतया समं, ते = पूर्वानुभूताः, दिवसाः = दिनानि, स्वे = आत्मीये, 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने ।' इत्यमरः, गृहे = भवने, यथा = इव, नीताः = अतिवाहिताः, सततं=निरन्तरं, दीर्घाभिः=विस्तृताभिः, यत्सम्बन्धकथाभिरेव=यत्पञ्चवटीविषयकवार्ताभिरेव, आस्थीयत= स्थितं, 'ष्ठा गतिनिवृत्तौ' इति धातोर्भावे लङ्, अयोध्यायामपि सीतया सह पञ्चवटीसम्बद्धमेव वार्तालापमकरवमिति भावः । सम्प्रति = अधुना, नाशितप्रियतमः = नाशिता = लक्ष्मणद्वारा वननिर्वासनेन विनाशं प्रापिता, प्रियतमा = दयिततमा, सीतेत्यर्थः, येन सः । अत एव एकः = एकाकी, अपत्नीक इत्यर्थः, नाशितप्रिय-

---

किन्तु पर्वतोंकी स्थिति 'यह वही वन है' इस बुद्धि ( प्रत्यभिज्ञा ) को दृढ कर रही है ॥२७॥

हाय ! हाय ! ! छोडते हुए भी मुझको पञ्चवटी प्रेमसे मानो बलात्कारपूर्वक खींच रही है । ( दयाके साथ )

जिस पञ्चवटीमें मैंने उन ( सीता ) के साथ अपने घरकी तरह उन दिनोंको बिताया, निरन्तर जिस पञ्चवटीविषयक बड़ी २ कथाओंसे ही हम अयोध्यामें रहते थे । इस समय प्रियतमा ( सीता ) को नष्ट करने वाला, अत एव अकेला पापी राम

पापः पञ्चवटीं विलोकयतु वा गच्छत्वसम्भाव्य वा ॥ २८ ॥

( प्रविश्य । )

शम्बूकः—जयतु देवः । भगवानगस्त्यो मत्तः श्रुतसन्निधानस्त्वामाह—'परिकल्पितावरणमङ्गला प्रतीक्षते वत्सला लोपामुद्रा, सर्वे च महर्षयः । तदेहि । सम्भावयाऽस्मान् । अथ प्रजविना पुष्पकेण स्वदेशमुपगत्याश्वमेधसज्जो भव' इति ।

---

तमत्वादेव—पापः = पापशीलः, एतादृशो रामः, तामेव = सीतया सह पूर्वाऽनुभूतामेव पञ्चवटीं, कथं = केन प्रकारेण, विलोकयतु = पश्यतु, वा = अथ वा, असंभाव्य =अनादृत्य, कथं=केन प्रकारेण, गच्छतु = यातु ? सीतया सह पूर्वोऽनुभूताया पञ्चवट्या गमनं तत्परिवर्जनं चैतद्द्वयमपि मत्कृते साम्प्रतं दुष्करमिति भावः । अत्र उपमाऽलङ्कारः काव्यलिङ्गं च तया च द्वयोर्मिथोऽनपेक्षया संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ॥ २८ ॥

शम्बूक इति । अगस्त्यः = मैत्रावरुणिः, श्रुतसन्निधानः = श्रुतम् = आकर्णितम्, सन्निधानं = भवत्सामीप्यं येन सः, परिकल्पिताऽऽवरणमङ्गला—परिकल्पितम् = सज्जीकृतम्, आवरणमङ्गलं = नीराजनादिकं यया सा, 'परिकल्पितविमानाऽवतरणमङ्गला' इति पाठे—परिकल्पितानि = सज्जीकृतानि, विमानावतरणमङ्गलानि = व्योमयानाऽवरोहणमाङ्गलिकवस्तूनि यया सा इत्यर्थः । वत्सला = स्नेहवती, प्रतीक्षते=प्रतीक्षां करोति, महर्षयः=महामुनयः, प्रतीक्षन्त इति वचनविपरिणामः । तत् = तस्माद्धेतोः, संभावय—सत्कुरु । अथ = अनन्तरं, समीपागमनेनाऽस्मत्सत्काराऽनन्तरमिति भावः, प्रजविना = प्रकृष्टवेगयुक्तेन, अश्वमेधसज्जः=अश्वमेधयज्ञाऽनुष्ठानतत्परः ।

---

उसी पञ्चवटीको कैसे देखे, अथवा उसका अनादर कर कैसे जाय ? ॥ २८ ॥

( प्रवेश कर )

**शम्बूक**—महाराजकी जय हो। भगवान् अगस्त्यने मुझसे आपका आगमन सुनकर कहा है—'वात्सल्यशील लोपामुद्रा नीराजन आदि तैयार कर आपकी बाट जोह रही है और सब महर्षि भी आपकी प्रतीक्षा कर रहे हैं। इस कारण पधारिए और हमलोगोंको प्रतिष्ठित कीजिए। उसके बाद बड़े वेगवाले पुष्पक विमानसे अयोध्यामें पहुँचकर अश्वमेध यज्ञ करनेके लिए तत्पर हो जाइए'।

रामः—यथाज्ञापयति भगवान् ।

शम्बूकः—इत इतो देवः ।

रामः—( पुष्पकं प्रवर्तयन् । ) भगवति पञ्चवटि ! गुरुजनादेशोपरोधात्क्षणं क्षम्यतामतिक्रमो रामस्य ।

शम्बूकः—देव ! पश्य ।

गुञ्जत्कुञ्जकुटीरकौशिकघटाघुत्कारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चाभिधोऽयं गिरिः ।

---

राम इति । भगवान् = अगस्त्यः, आज्ञापयति—आदिशति, तथैवाऽनुतिष्ठामीति शेषः ।

राम इति । प्रवर्तयन् = गमयन् , गुरुजनादेशोपरोधात् = गुरुजनानाम्=अगस्त्यादीनाम् , आदेशस्योपरोधात्=आज्ञाऽनुसरणाद्धेतोः, अतिक्रमः = अतिक्रमणम् , अतिक्रम्य गमनमित्यर्थः, क्षम्यतां = मृष्यताम् ।

गुञ्जदिति । गुञ्जत्कुञ्जकुटीरकौशिकघटाघुत्कारवत्कीचकस्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चाऽभिधोऽयं गिरिः ( अस्ति ), एतस्मिन् प्रचलता प्रचलाकिनां कूजितैः उद्वेजिताः कुम्भीनसाः पुराणरोहिणतरुस्कन्धेषु उद्वेल्लन्ति इत्यन्वयः । गुञ्जत्कुञ्जकुटीरकौशिकघटाघुत्कारवत्कीचकस्तम्बाडम्बरमूकमौकुलिकुलः = कुञ्जाः = लताद्याच्छादितस्थानानि, एव कुटीराः = अल्पाः कुट्यः इति कुञ्जकुटीराः, 'कुटीशमीशुण्डाभ्यो रः' इति रप्रत्ययः, 'अल्पा कुटी कुटीरः स्यात्' इत्यमरः । गुञ्जन्तः= अव्यक्तशब्दवन्तो ये कुञ्जकुटीरास्तेषु कौशिकघटाः=उलूकपङ्क्तयः, तासां यो घुत्कारः = घुत्करणम् , 'घुत्' इत्याकारको योऽव्यक्तशब्द इत्यर्थः । 'तादृशशब्दयुक्ता ये कीचकाः = वंशविशेषाः, 'कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः ।' इत्यमरः, तेषां ये स्तम्बा = काण्डाः, तेषां य आडम्बरः = शब्दः, तेन मूकानि= निःशब्दानि, मौकुलिकुलानि = काकसमूहाः यस्मिन् सः, 'मौकुलिः काक' इति

---

राम—भगवान् जैसी आज्ञा करते हैं ( वही करूंगा )

शम्बूक—महाराज ! इधरसे पधारें, इधरसे ।

राम—( पुष्पकको चलाते हुए ) भगवति पञ्चवटि ! गुरुजनकी आज्ञाके अनुरोधसे रामके इस अतिक्रमको क्षमा करो ।

शम्बूक—महाराज ! देखिए ।

अस्पष्ट शब्दवाले कुञ्ज-कुटीरोंमें उल्लुओंके शब्दोंसे युक्त कीचकों ( फटनेके कारण हुए छिद्रमें हवाके प्रवेश-निर्गमनसे स्वयं शब्द करनेवाले बाँस) के काण्डोंके शब्दसे-शब्दशून्य

एतस्मिन्प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणरोहिणतरुस्कन्धेषु कुम्भीनसाः ॥ २६ ॥

अपि च ।

एते ते कुहरेषु गद्गदनदद्गोदावरीवारयो
मेघालम्बितमौलिनीलशिखराः क्षोणीभृतो दाक्षिणाः ।

---

हेमचन्द्रः, एतादृशः क्रौञ्चाऽभिधः = क्रौञ्चः अभिधा = नाम यस्य स , क्रौञ्चनामक इत्यर्थः । अयं = पुरो दृश्यमानः, गिरिः = पर्वतः , अस्तीति शेषः । एतस्मिन् = क्रौञ्चपर्वते, प्रचलता=प्रचलनं कुर्वता, प्रचलाकिना=प्रचलाकोऽस्ति येषां ते प्रचलाकिनस्तेषाम् = मयूराणामित्यर्थः 'प्रचलाकः शिखण्डश्च' इति, 'केकी शिखी शिखण्डी प्रचलाकी बर्हिण कलापी च ।' इति च हलायुधः, 'अत इनिठनौ' इति नित्ययोगे इनिप्रत्ययः । कूजितैः = शब्दैः , उद्वेजिताः = भीताः, कुम्भीनसाः = सर्पाः, पुराणरोहिणतरुस्कन्धेषु = पुराणाः=प्राचीनाः , ये रोहिणतरवः = चन्दनवृक्षाः, 'रोहिणश्चन्दनद्रुमः' इति हारावली, तेषां स्कन्धाः = प्रकाण्डदेशाः, तेषु उद्वेल्लन्ति=इतस्ततश्चलन्ति, न तु तास्त्यक्त्वा पलायन्त इति भावः, 'वेल्ल् चलने' इति धातोर्लट् । अत्रत्यविषयविशेषाकृष्टा जन्तवो मृत्युभयमपि अगणयित्वा नान्यत्र गच्छन्तीति भावः । अत्र रूपकाऽलङ्कारः, स्वभावोक्तिश्चेति द्वयोरङ्गाङ्गिभावेन सङ्करः । शार्दूलविक्रीडितं वृत्तम् ॥ २९ ॥

एत इति । कुहरेषु गद्गदनदद्गोदावरीवारयो मेघालम्बितमौलिनीलशिखराः त एते दाक्षिणाः क्षोणीभृतः ( सन्ति )। अन्योन्यप्रतिघातसङ्कुलचलत्कल्लोलकोलाहलैः उत्तालाः त इमे गभीरपयसः पुण्याः सरित्सङ्गमाः ( सन्ति ) इत्यन्वयः । कुहरेषु = गुहासु, गद्गदनदद्गोदावरीवारयः = गद्गदम् = अव्यक्तशब्दं यथा तथा, नदन्ति = शब्दायमानानि, गोदावरीवारीणि = गोदावरीजलानि येषु ते । मेघालम्बितमौलिनीलशिखराः = मेघैः = जलदैः, आलम्बिता =अवलम्बिताः , मौलयः = शिखराऽग्राणि येषां ते, अत एव नीलानि = नीलवर्णानि, शिखराणि = कूटानि येषां

---

क्रौञ्चोंके समूहसे युक्त क्रौञ्च नामक यह पर्वत है । यहांपर चलते हुए मोरोंके शब्दोंसे डरे हुए सर्प पुराने चन्दन वृक्षोंके स्कन्धप्रदेशोंमें इधर उधर लटक रहे हैं ॥ २९ ॥

और भी—

गुफाओंमें कल कल शब्द कर चलनेवाले गोदावरीके जलसे युक्त और मेघसे अवलम्बित शिखरके अग्रभागवाले, अत एव नीलवर्णकी चोटियोंसे युक्त ये दक्षिण दिशाके पर्वत हैं ॥

अन्योन्यप्रतिघातसङ्कुलचलत्कल्लोलकोलाहलै-
रुत्तालास्त इमे गभीरपयसः पुण्याः सरित्सङ्गमाः ॥ ३० ॥

( इति निष्क्रान्ताः सर्वे । )

इति महाकविश्रीभवभूतिविरचिते उत्तररामचरिते
पञ्चवटीप्रवेशो नाम द्वितीयोऽङ्कः ॥ २ ॥



ते । ते=प्रसिद्धाः, एते=पुरोऽवलोक्यमानाः, दाक्षिणाः=दक्षिणादिग्भवाः, क्षोणीभृतः=पर्वताः, अन्योन्यप्रतिघातसङ्कुलचलत्कल्लोलकोलाहलैः=अन्योन्येषाम्=परस्परेषाम्, प्रतिघातेन=आघातेन, सङ्कुलाः=निविडाः, चलन्तो ये कल्लोलाः=महातरङ्गाः तेषां कोलाहलाः=कलकलशब्दाः तैः, 'इत्थम्भूतलक्षणे' इति तृतीया, उत्तालाः=त्वरिताः वेगवन्त इत्यर्थः, 'उत्तालस्त्वरितो ज्ञेय' इति हलायुधः, ते=प्रसिद्धाः, इमे=पुरोऽवलोक्यमानाः, गभीरपयसः=गभीराणि पयांसि येषु ते दुष्प्रवेशजला इत्यर्थः, पुण्याः=पवित्राः, सरित्सङ्गमाः=नदीसङ्गमाः, वर्तन्त इति शेषः । अत्र तद्गुणाऽलङ्कारः शार्दूलविक्रीडितं वृत्तम् ॥ ३० ॥

इति श्रीशेषराजशर्म्मप्रणीतायामुत्तररामचरितव्याख्यायां चन्द्रकलाऽऽख्यायां पञ्चवटीप्रवेशो नाम द्वितीयोऽङ्कः ॥ २ ॥



परस्परमें आघातसे अत्यधिक चञ्चल महातरङ्गोंके कोलाहलोंसे वेगवाले ये गहरे जलसे युक्त पवित्र नदियोंके सङ्गम हैं ॥ ३० ॥

( सब निकलते हैं )

यह 'पञ्चवटीप्रवेश' नामक द्वितीय अङ्क समाप्त हुआ ॥ २ ॥



# तृतीयोऽङ्कः

( ततः प्रविशति नदीद्वयम् * )

**एका**—सखि मुरले ! किमसि सम्भ्रान्तेव ?

**मुरला**—सखि तमसे ! प्रेषितास्मि भगवतोऽगस्त्यस्य पत्न्या लोपामुद्रया सरिद्वरां गोदावरीमभिधातुम् । 'जानास्येव यथा वधूपरित्यागात्प्रभृति—

अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः ।
पुटपाकप्रतीकाशो रामस्य करुणो रसः ॥ १ ॥

तेन च तथाविधेष्टजनकष्टविनिपातजन्मना प्रकृष्टगद्गदेन दीर्घशोक-

---

तत इति । नदीद्वय = सरिद्द्वितय, नद्यभिमानिन्यौ तमसामुरलानाम्न्यौ द्वे देवते इत्यर्थ ।

तमसेति । संभ्रान्ता=संभ्रमयुक्ता, त्वरितेति भाव , किमसि = किमर्थं वर्तसे ?

मुरलेति । सरिद्वरा = नदीश्रेष्ठा, वधूत्यागात् प्रभृति = पत्नीनिर्वासनकालमारभ्येत्यर्थ', 'कार्तिक्या प्रभृती'ति भाष्यप्रयोगात्प्रभृत्यर्थयोगे पञ्चमी, 'वधूर्जाया स्नुषा स्त्री च' इत्यमरः ।

अनिर्भिन्न इति । गभीरत्वात् अनिर्भिन्नः अन्तर्गूढघनव्यथो रामस्य करुणो रसः पुटपाकप्रतीकाश ( अस्ति ) इत्यन्वयः । गभीरत्वात् = गंभीरत्वात् , अनिर्भिन्नः = निर्भेदमप्राप्तः, अव्यक्त इत्यर्थ', किन्तु अन्तर्गूढघनव्यथः = अन्तः = अभ्यन्तरे, हृदय इत्यर्थ , गूढा = गुप्ता, घना = निविडा, व्यथा = दु खं यस्य सः, रामस्य = रामचन्द्रस्य, करुणो रस' = सीतावियोगजन्यो मनोविकार', पुटपाकप्रतीकाशः = पुटे=लोहादिमयौषधपाकपात्रे, पाकः=पचनं, यस्य सः पुटपाकः=औषधविशेष', तेन सदृशः=तुल्य', अस्तीति शेषः । गम्भीरत्वाद्बहिरस्फुटः सीतावियोगजन्य' शोकाऽतिशयो रामं भृशं तापयतीति भावः । पूर्णोपमाऽलङ्कारः ॥१॥

तेनेति । तेन=पुटपाकसदृशेन, तथाविधेष्टजनकष्टविनिपातजन्मना=तथा-

---

( तब दो नदिया तमसा और मुरला, प्रवेश करती हैं । )

**एक नदी**—सखि मुरले ! क्यों घबडाई हुई-सी हो ?

**मुरला**—सखि तमसे भगवान् अगस्त्यकी पत्नी लोपामुद्राने नदीश्रेष्ठ गोदावरीको कहनेके लिए मुझे भेजा है । 'तुम जानती ही हो कि सीताको छोडनेके बादसे—

गम्भीरतासे अव्यक्त, भीतर छिपी हुई गाढ वेदनासे युक्त रामका करुण रस (शोक) पुटपाकके सदृश है ॥ १ ॥

इस कारण प्रिया सीताकी कष्टप्राप्तिसे उत्पन्न और अधिक गद्गद शब्द करनेवाली और

---

* 'तमसा मुरला च' इत्यधिक क्वचित्पाठ ।

सन्तानेन सम्प्रति परिक्षीणो रामभद्रः । तमवलोक्य कम्पितमिव कुसुमसमबन्धनं मे हृदयम् । अधुना च रामभद्रेण प्रतिनिवर्तमानेन नियतमेव पञ्चवटीवने वधूसहनिवासविस्रम्भसाक्षिण प्रदेशा द्रष्टव्याः । तत्र च निसर्गधीरस्याप्येवविधायामवस्थायामतिगम्भीराभोगशोकक्षोभसंवेगात्पदे पदे महाप्रमादानि शोकस्थानानि शङ्कनीयानि । तद्भगवति गोदावरि ! त्वया तत्रभवत्या सावधानया भवितव्यम् ।'

---

विधः = तादृशः, अनुपम इत्यर्थः, इष्टजनः = वल्लभजनः, सीतारूप इति भावः, तस्य कष्टविनिपातः = दुःखप्राप्तिः, ततो जन्म = उत्पत्तिः यस्य स तेन, प्रकृष्टगद्गदेन = प्रकृष्टः = अधिकः, गद्गदः = गद्गदशब्दः येन, तेन अधिकाव्यक्तशब्दकारिणेत्यर्थः, 'प्रकर्षगद्गदेन' इति पाठे प्रकर्षेण गद्गदो यस्मिन्निति विग्रहः, 'प्रकर्षगतेन' इति पाठे अतिशयेनेत्यर्थः, दीर्घशोकसन्तानेन = चिरकालव्यापकमन्युपरम्परया, परिक्षीणः = अतिशयदुर्बलः, अस्तीति शेषः । तं = रामभद्रम् , कुसुमसमबन्धनं=पुष्पसदृशबन्धनं, पुष्पवत्सुच्छेद्यमित्यर्थः, मे = मम, लोपामुद्राया इत्यर्थः, कम्पितमिव = संजातकम्पमिव, वर्तत इति शेषः, प्रतिनिवर्तमानेन = प्रत्यागच्छता, अयोध्यामिति शेषः, नियतमेव = निश्चितमेव, वधूसहनिवासविस्रम्भसाक्षिणः = वध्वाः = सीतायाः, सहनिवासे = सहवासे, ये विस्रम्भाः = स्वच्छन्दलीलाः, तत्साक्षिणः = तद्द्रष्टारः, प्रदेशाः = स्थानानि, द्रष्टव्या = दर्शनीयाः, रामः सीतासहवाससाक्षिणः प्रदेशान् पश्येदिति सभावना । तत्र च = तेषु प्रदेशेषु च, निसर्गधीरस्याऽपि=स्वभावेन धैर्ययुक्तस्याऽपि, चञ्चलस्य तु किं वक्तव्यमिति भावः । एवंविधायाम् = ईदृश्या, विरहयुक्तायामिति भावः, अवस्थाया = दशायाम् , अतिगम्भीराभोगशोकक्षोभसंवेगात् = अतिगम्भीरः = अतिशयदुर्ज्ञेयः, आभोगः = परिपूर्णता, तस्य सः, एतादृशो यः शोकः = मन्युः, तेन ( हेतुना ) क्षोभः = चित्तविकारः, तस्य संवेगात् = वेगाऽतिशयाद् हेतोः, पदे पदे = प्रतिपद, प्रतिस्थान-

---

बहुत कालतक रहनेवाली शोकपरम्परासे आजकल रामभद्र बहुत दुर्बल हो गये हैं । उनको देखकर फूलके सदृश बन्धनवाला मेरा हृदय काँप-सा गया है । अभी रामभद्र लौटते हुए पञ्चवटीके वनमें सीताके सहवासमें हुई स्वच्छन्द लीलाओंके साक्षी स्थानोंको अवश्य ही देखेंगे । वहाँपर ऐसी अवस्थामें अत्यन्त बढ़े हुए शोकसे उत्पन्न चित्तविकारके अधिक वेगसे, स्वभावसे ही धीर होते हुए भी रामके पग पगमें अधिक प्रमादोंसे युक्त शोकस्थानों ( मूर्च्छादिकों ) की आशङ्का करनी चाहिए । इस कारण हे भगवति गोदावरि ! पूजनीय आपको सावधान ( होशियार ) होना चाहिए ।'

मुरला—( सविस्मयम् । )

ईदृशानां विपाकोऽपि जायते परमाद्भुतः ।
यत्रोपकरणीभावमायात्येवंविधो जनः ॥ ३ ॥

तमसा—इदानीं तु शम्बूकवृत्तान्तेनानेन सम्भावितजनस्थानं रामभद्रं सरयूमुखादुपश्रुत्य भगवती भागीरथी यदेव लोपामुद्रया स्नेहादभिशङ्कितं

---

ईदृशानामिति । ईदृशाना विपाकोऽपि परमाद्भुतो जायते, यत्र एवंविधो जन उपकरणीभावम् आयाति इत्यन्वयः । ईदृशानाम् = एतादृशाना, सीतारामसदृशाना महानुभावानामित्यर्थ, विपाकोऽपि = परिणामोऽपि, दुरवस्थाऽपीत्यर्थः । परमाऽद्भुतः = अतिशयाश्चर्ययुक्तः, जायते = भवति, निर्वासनदुरवस्थाऽसह्यत्वेन मरणनिश्चयाद्गङ्गापातेऽपि तदभावो गङ्गायामेव पुत्रद्वयप्रसूति, ताभ्या च पुत्राभ्या सार्धं पृथ्वीगङ्गाकर्तृकं सीतायाः पातालनयनं, स्तन्यत्यागाऽनन्तरं च शिशुद्वयस्य वाल्मीकये समर्पणमित्यादिभिर्विपाकस्य परमाद्भुतत्वं ज्ञेयम्, यद्दर्शनमपि महापुण्यमन्तरेण न लभ्यत इति भावः । यत्र = विपाके, एवंविध = एतादृश पृथ्वीगङ्गादिसदृश., जन. = लोकः, उपकरणीभावम् = उपकरणत्वं सहायत्वमित्यर्थः, आयाति = प्राप्नोति । अत्र काव्यलिङ्गमलङ्कारः ॥ ३ ॥

तमसेति । शम्बूकवृत्तान्तेन = शम्बूकतपश्चरणरूपेण उदन्तेन ( हेतुना ) 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्त स्यात्' इत्यमर', सभावितजनस्थानं = सम्भावितं = आगमनेन सत्कृतम्, जनस्थानं = दण्डकारण्यं येन तं, शम्बूकहननाऽर्थमिति शेषः । संभावितजनस्थानाऽऽगमनम्' इति पाठे तु अनुमितदण्डकारण्यागमनमित्यर्थ' एतादृशं रामभद्रं = वत्सरामचन्द्रम्, सरयूमुखात् = सरयूनाम्न्याः कस्याश्चिन्नद्या मुखात्, 'आख्यातोपयोगे' इति पञ्चमी । उपश्रुत्य = आकर्ण्य, 'शम्बूकहननाऽर्थमागत्य रामो जनस्थानं सत्कृतवान्' इति सरयूमुखादाकर्ण्य, यद्वाऽत्र 'श्रु' धातुर्ज्ञानसामान्यवचन., 'अदर्शनं लोप' इत्यत्र दृशिवत्, अतः

---

मुरला—( आश्चर्यके साथ )

ऐसे लोगोंकी दुरवस्था भी बहुत ही अनूठी होती है, जिस दुरवस्थामें ऐसे ( गङ्गा और पृथ्वीके सरीखे ) लोग सहायता करते हैं ॥ ३ ॥

तमसा—अभी 'इस शम्बूकके वृत्तान्तसे जनस्थानको रामभद्रने अनुगृहीत किया है', ऐसा सरयूके मुखसे सुनकर भगवती गङ्गाजी लोपामुद्राने स्नेहसे जिस बातकी शङ्का की थी;

तदेवाभिशङ्क्य सीतासमेता केनचिदिव गृहाचारव्यपदेशेन गोदावरीमुपागता।

मुरला—सुष्ठु चिन्तितं भगवत्या भागीरथ्या। 'राजनीतिस्थितस्यास्य खलु तैश्च तैश्च जगतामाभ्युदयिकैः कार्यैर्व्यापृतस्य रामभद्रस्य नियताश्चित्तविक्षेपाः। अव्यग्रस्य पुनरस्य शोकमात्रद्वितीयस्य पञ्चवटीप्रवेशो महाननर्थ' इति। कथं सीतया रामभद्रोऽयमाश्वासनीयः स्यात्?

तमसा—उक्तमेव भगवत्या भागीरथ्या-'वत्से देवयजनसम्भवे सीते!

---

उपश्रुत्य = ज्ञात्वेत्यर्थः। यदेव = राममोहादि, सीतासमेता = सीतया समेता = मिलिता सती, गृहाचारव्यपदेशेन = गेहकार्यव्याजेन।

मुरलेति। सुष्ठु = शोभनं, चिन्तितं = विचारितम्। राजनीतिस्थितस्य=क्षत्रियोचितराजपालनात्मकधर्मनिष्ठस्येति भावः, 'राजधानीस्थितस्य' इति पाठे अयोध्यायां विद्यमानस्येत्यर्थः। तैस्तैः = अतिशयप्रसिद्धैः, आभ्युदयिकैः = उन्नतिजनकैः, कार्यैः = कर्मभिः ( हेतुभिः ), 'हेतौ' इति तृतीया; व्यापृतस्य = व्यापारयुक्तस्य, चित्तविक्षेपाः = मानसक्षोभाः, सीताविरहजनिता इति शेषः। नियताः = नियन्त्रिताः। अत्र जनस्थानवने तु—अव्यग्रस्य = व्यग्रतारहितस्य, प्रजापालनादिव्यापारान्तरशून्यस्येति भावः, अव्यग्रत्वादेव शोकमात्रद्वितीयस्य = मन्युमात्रसहायस्य, असहायत्वेन शोचिष्यति इति भावः, अनर्थः = अनिष्टम्, 'आयुर्घृतम्' इतिवत् कार्यकारणभावसम्बन्धे लक्षणया अनिष्टकारणमित्यर्थः। आश्वासनीयः = आश्वासयितुमर्हः, स्यात् = भवेत्, द्वयोर्भिन्नदेशत्वात्सीता कथं राममाश्वासयेदिति भावः।

तमसेति। आयुष्मतोः = जैवातृकयोः, 'जैवातृकः स्यादायुष्मान्' इत्यमरः, मतुप्प्रत्ययः। द्वादशस्य = द्वौ च दश च द्वादश, 'द्यष्टनः संख्यायामबहुव्रीह्य-

---

उसी बातकी शङ्का कर सीताको साथमें ले कुछ घरके कामके बहानेसे गोदावरीके पास आई।

**मुरला**—भगवती गङ्गाजीने अच्छा विचार किया। 'राजनीतिमें रहे हुए और जगत्‌के उन २ कल्याणकारक कार्योंसे व्यग्र रामभद्रके चित्तकी चञ्चलता नियन्त्रित रहती थी। परन्तु इस समय व्यग्र न होनेसे और शोकमात्रके साथमें रहनेसे भी रामभद्रका पञ्चवटीमें प्रवेश बड़ा अनिष्टकारक है'। कैसे सीतासे रामभद्रको आश्वासन होगा?

**तमसा**—भगवती गङ्गाजीने सीताको कहा है कि 'हे वत्से यज्ञभूमिमें उत्पन्न सीते! आज

'अद्य खल्वायुष्मतोः कुशलवयोर्द्वादशस्य जन्मवत्सरस्य सङ्ख्यामङ्गलग्रन्थिरभिवर्तते। तदात्मनः पुराणश्वशुरमेतावतो मानवस्य राजर्षिवंशस्य प्रसवितारं सवितारमपहतपाप्मानं देवं स्वहस्तापचितैः पुष्पैरुपतिष्ठस्व। न त्वामवनिपृष्ठवर्तिनीमस्मत्प्रभावाद्वनदेवता अपि द्रक्ष्यन्ति किमुत मर्त्याः' इति। अहमप्याज्ञापिता 'तमसे! त्वयि प्रकृष्टप्रेमैव वधूर्जानकी। अतस्त्वमेवास्याः प्रत्यनन्तरीभव'। इति। साऽहमधुना यथाऽदिष्टमनुतिष्ठामि।

---

शीत्योः' इत्यात्वम्, द्वादशानां पूरणो द्वादशस्तस्य, 'तस्य पूरणे डट्'। सङ्ख्यामङ्गलग्रन्थिः = सङ्ख्यापूर्तिहेतुको मङ्गलग्रन्थिः, लक्षणया तत्कालः। अभिवर्तते = अभिविद्यते, 'अभिवर्त्स्यते' इति क्वाचित्कः पाठः, अभिप्रत्ययत इति तदर्थः। पुराणश्वशुरं = पुरातनश्वशुरम्, एतावतः = एतत्परिमाणस्य, विस्तीर्णस्येत्यर्थः। मानवस्य = मनुसम्बन्धिनः, वैवस्वतमनुजातस्येत्यर्थः। प्रसवितारं = प्रसूत इति प्रसविता तं, जनकमित्यर्थः, 'ण्वुल्तृचौ' इति तृच्प्रत्ययः, अपहतपाप्मानम् = अपहृत = विनाशितः, पाप्मा = पापम्, येन तम्, 'अस्त्री पङ्कं पुमान्पाप्मा पापं किल्बिषकल्मषम्।' इत्यमरः, सवितारं = सूर्यम्, स्वहस्ताऽपचितैः = आत्मकरसंगृहीतैः, उपतिष्ठस्व = पूजय, 'उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्' इत्यात्मनेपदम्। अवनिपृष्ठवर्तिनीं = भूपृष्ठे विद्यमानाम्, अस्मत्प्रभावात् = मत्सामर्थ्यात्, न द्रक्ष्यन्ति=न विलोकयिष्यन्ति, मर्त्याः =मरणधर्माणो मनुष्या इत्यर्थः, द्रक्ष्यन्ति इति, किमुत=किं वक्तव्यम्? वनदेवता अपि त्वां न द्रक्ष्यन्ति, मनुष्याणां का कथेति भावः, इति = इत्थम्, आज्ञापितेति शेषः। अहमपि = तमसाऽपि, आज्ञापिता=आदिष्टा, त्वयि=त्वद्विषये, वधूः=स्नुषा, रामस्य पुत्रस्थानीयत्वात् तत्पत्नी सीता गङ्गायाः स्नुषैव संवृत्तेति भावः। प्रत्यनन्तरीभव = निकटवर्तिनी भव। यथाऽऽदिष्टम् = आदिष्टमनतिक्रम्येति विग्रहे यथार्थेऽव्ययीभावः, आदेशाऽनुसारमिति भावः। अनुतिष्ठामि = करोमि।

---

चिरंजीवि कुश और लवकी माङ्गलिक बारहवीं वर्षगाँठ है। इस कारण अपने पुराने ससुर, इतने बड़े वैवस्वत मनुके वंशकी उत्पत्ति करनेवाले और पापनाशक सूर्यदेवकी अपने हाथसे तोड़े गये फूलोंसे पूजा करो। जमीनपर रहती हुई तुमको मेरे प्रभावसे वनकी देवियाँ भी नहीं देख सकेंगी, मनुष्योंकी तो कोई बात ही क्या?' मुझे भी उन्होंने आज्ञा दी है कि 'हे तमसे! वहू सीता तुममें बहुत प्रेम करती ही हैं। इसलिये तुम ही इनके साथ रहो'। सो मैं अब आज्ञाके अनुसार करती हूं।

मुरला—अहमप्येतं वृत्तान्तं भगवत्यै लोपामुद्रायै निवेदयामि । रामभद्रोऽप्यागत एवेति तर्कयामि ।

तमसा—तदियं गोदावरीह्रदान्निर्गत्य—

परिपाण्डुदुर्बलकपोलसुन्दरं दधती विलोलकबरीकमाननम् ।
करुणस्य मूर्तिरथवा शरीरिणी विरहव्यथेव वनमेति जानकी ॥ ४ ॥

मुरला—इय हि सा—

---

मुरलेति । तर्कयामि = अनुमिनोमि ।

तमसेति । गोदावरीह्रदात् = गोदावर्या अगाधजलात् ।

परिपाण्डिवति । परिपाण्डुदुर्बलकपोलसुन्दरं विलोलकबरीकम् आननं दधती जानकी करुणस्य मूर्ति अथवा शरीरिणी विरहव्यथा इव वनम् एति इत्यन्वय । परिपाण्डुदुर्बलकपोलसुन्दरं = परित पाण्डू परिपाण्डू = अतिशयविरहेण परित· श्वेतौ, 'कुगतिप्रादय' इति समास·, दुर्बलौ = कृशौ, कपोलौ = गण्डौ यस्मिंस्तत् इति त्रिपदबहुव्रीहि, तच्च तत् सुन्दरं = मनोहरम्, तादृशपरिपाण्डुकृशगण्डस्थलाभ्याम् उपलक्षितमपि स्वभावसुन्दरमिति भाव· । विलोलकबरीकं = विलोला = संस्काराऽभावाच्चञ्चला, कबरी = केशवेश यस्मिंस्तत्, 'क्रीडा शरीरसंस्कारं त्यजेत् प्रोषितभर्तृका ।' इति नियमादिति भाव·, 'नद्यृतश्च' इति कप्, 'न कपि' इति ह्रस्वनिषेध, एतादृशमाननं = मुखं, दधती = धारयन्ती, जानकी = सीता, करुणस्य = करुणरसस्य, मूर्ति = शरीरम्, 'मूर्ति काठिन्यकाययो' इत्यमर, शरीरधारी करुणरस इवेत्यर्थ, अथवा = आहोस्वित्, शरीरिणी = शरीरधारिणी, विरहव्यथा इव = रामवियोगवेदना इव, वनं = पञ्चवटीवनम्, एति = प्राप्नोति । अत्र 'करुणस्य मूर्तिरित्यत्र इवशब्दाऽभावात्प्रतीयमानोत्प्रेक्षा 'विरहव्यथेवे'त्यत्रोत्प्रेक्षा चेति द्वयो संसृष्टि । मञ्जुभाषिणी वृत्तं, 'सजसा जगौ भवति मञ्जुभाषिणी' इति तल्लक्षणम् ॥ ४ ॥

---

मुरला—मैं भी इस वृत्तान्तको भगवती लोपामुद्रासे निवेदन करती हूं । रामभद्र भी आ ही गये हैं, ऐसा अनुमान करती हूं ।

तमसा—यह सीता गोदावरीके ह्रदसे निकलकर—

पीले और कृश गालोंसे सुन्दर और चञ्चल केश-समूहवाले मुखको धारण करती हुई करुण रसकी मूर्ति वा देह धारण करनेवाली वियोगकी वेदनाकी सदृश वनमें आ रही है ॥४॥

मुरला—यह सीता—

किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकमलशोषी दारुणो दीर्घशोकः ।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥ ५ ॥

( इति परिक्रम्य निष्क्रान्ते । )

इति शुद्धविष्कम्भकः ।

( नेपथ्ये । ) जात ! जात !!—

---

किसलयमिति । हृदयकमलशोषी दारुणो दीर्घशोको बन्धनात् विप्रलूनं मुग्धं किसलयम् इव परिपाण्डु क्षामम् अस्याः शरीरं शरदिजो घर्मः केतकीगर्भपत्रम् इव ग्लपयति इत्यन्वयः । हृदयकमलशोषी = हृदयम् = उरः, एव कमलं = पद्मम् = हृदयकमलं, 'मयूरव्यंसकादयश्च' इति रूपकसमासः । हृदयकमलं शोषयतीति तच्छीलो हृदयकमलशोषी, दारुणः = कठोरः, दीर्घशोकः = चिरस्थायिमन्युः, बन्धनात् = वृन्तात् , विप्रलूनं = छिन्नं, मुग्धं = सुन्दरं, किसलयम् इव = नवपल्लवम् इव, परिपाण्डु = रामविरहेण अतिशयश्वेतं, क्षामं = कृशं, 'क्षायो मः' इति निष्ठातस्य मः, एतादृशम् अस्याः = सीतायाः, शरीरं = देहं, शरदिजः = शरदि जातः, शरदुत्पन्न इत्यर्थः, 'सप्तम्यां जनेर्डः' इति डप्रत्ययः, 'प्रावृट्शरत्कालदिवां जे' इत्यलुक् , घर्मः = आतपः, केतकीगर्भपत्रम् इव = केतकीपुष्पाऽभ्यन्तरदलम् इव, ग्लपयति = म्लानं करोति, 'ग्लास्नावनुवमां च' इति मित्त्वे 'मितां ह्रस्वः' इति ह्रस्वत्वम् । अत्र रूपकस्योपमाद्वयेन सङ्करः । मालिनी वृत्तम् , एतल्लक्षणं पृ० ४० तमे द्रष्टव्यम् ॥ ५ ॥

शुद्धेति । शुद्धविष्कम्भकः = संस्कृतात्मकविष्कम्भक इत्यर्थः ।

नेपथ्य इति । जात जात = पुत्र पुत्र ! पुस्तकान्तरे वीप्सया 'प्रमाद' इति पाठान्तरम् , तस्य अनवधानतेत्यर्थः ।

---

जैसे शरद् ऋतुका घाम केतकीके फूलके भीतरी पत्तेको मलिन कर देता है, उसी तरह हृदय-कमलको सुखानेवाला, कठोर, बहुत बड़ा शोक, वृन्त ( डठल ) से टूटे हुए सुन्दर पल्लवकी तरह पीली और दुर्बल सीताके शरीरको मलिन करता है ॥ ५ ॥

( बाद दोनों घूमकर निकल जाती हैं । )

शुद्ध विष्कम्भक समाप्त ।

( नेपथ्यमें ) पुत्र ! पुत्र !!

( ततः प्रविशति पुष्पावचयव्यग्रा सकरुणौत्सुक्यमाकर्णयन्ती सीता । )

सीता—अम्हहे, जाणामि-'पिअसही वासन्दी व्याहरदि' त्ति । ( अहो जानामि 'प्रियसखी वासन्ती व्याहरती'ति । )

( पुनर्नेपथ्ये । )

सीतादेव्या स्वकरकलितैः सल्लकीपल्लवाग्रै-
रग्रे लोलः करिकलभको यः पुरा वर्धितोऽभूत् ।

---

तत इति । पुष्पाऽवचयव्यग्रहस्ता=पुष्पाणाम्=कुसुमानाम्, अवचये=संग्रहे, व्यग्रा = आसक्ता, 'अवचय' इत्यत्र 'हस्तादाने चेरस्तेये' इति सूत्रेण घञा भाव्यम्, ततः 'अवचाय' इति रूपेण भवनीयम् । यद्वा हस्तादान इत्यनेन आदेयानां पुष्पाणा प्रत्यासत्तिर्लक्ष्यते, अत्र च प्रत्यासत्त्यभावेन सीता यष्टया पुष्पाऽऽवचयं करोतीति कल्पनीयं, 'स्थितस्य गतिश्चिन्तनीया' इति न्यायात् । सकरुणौत्सुक्यं= करुणया = दयया, औत्सुक्येन = औत्कण्ठयेन, मत्सखी वासन्ती किं कथयतीत्याकारकेणेति भावः, च सहितं यथा तथेति क्रियाविशेषणम् ।

सीतेति । पुरा अग्रे लोलो यः करिकलभकः सीतादेव्या स्वकरकलितैः सल्लकीपल्लवाग्रैः वर्धितोऽभूत्, इति पूर्वार्द्धस्यान्वयो बोध्यः । पुरा = पूर्वकाले, अग्रे = अग्रदेशे, सीतादेव्या इति शेषः, लोलः = चञ्चलः, सल्लकीपल्लवाऽग्रभक्षणाऽर्थमिति भावः, यः करिकलभकः = यो हस्तिशावकः, 'कलभः करिशावक' इत्यमरः । अत्र कलभपदस्यैव हस्तिशावकरूपाऽर्थबोधकत्वेऽपि पुनः करिपदोपादानेन करिवैशिष्ट्यं प्रतीयत इत्यनुसन्धेयम् । सीतादेव्या = राजमहिष्या सीतया, क्वचित् षष्ठयन्तः पाठः । स्वकरकलितैः = आत्महस्तदत्तैः, सल्लकीपल्लवाऽग्रैः = सल्लकीनां गजभक्ष्यलताविशेषाणाम्, पल्लवाऽग्रैः=किसलयाऽग्रैः, वर्धितः=एधितः, क्वचित् 'पोषित' इति पाठान्तरमर्थे तु न भेदः ।

---

( तब फूल इकट्ठा करनेमें आसक्त सीता करुणा और उत्कण्ठाके साथ प्रवेश करती हैं । )

सीता—अहो ! मैं विचार करती हूं कि 'मेरी प्यारी सहेली वासन्ती बोल रही है'।

( फिर नेपथ्यमें )

पहले अपने आगे चञ्चल जिस हाथीके बच्चेको सीता देवीने अपने हाथसे दिये गये सल्लकी लताके अग्र भागोंसे बढाया था—

सीता—किं तस्स ? ( किं तस्य ? )

( पुनर्नेपथ्ये । )

वध्वा सार्धं पयसि विहरन् सोऽयमन्येन दर्पा-
दुद्दामेन द्विरदपतिना सन्निपत्याभियुक्तः ॥ ६ ॥

सीता—(ससंभ्रमं कतिचित्पदानि गत्वा ।) अज्जउत्त ! परित्ताहि परित्ताहि मह पुत्तअम् । (विचिन्त्य) हद्धी हद्धी ! ताइं एव्व चिरपरिइदाइं अक्खराइं पञ्चवटीदंसणेण मं मन्दभाइणिं अनुवन्धन्ति । हा अज्जउत्त ! (इति मूर्च्छति ।) ( आर्यपुत्र ! परित्रायस्व परित्रायस्व मम पुत्रकम् । हा धिक् हा धिक् ! तान्येव चिरपरिचितान्यक्षराणि पञ्चवटीदर्शनेन मां मन्दभागिनीमनुवध्नन्ति । हा आर्यपुत्र ! )

( प्रविश्य । )

तमसा—समाश्वसिहि समाश्वसिहि ।

---

वध्वेति । सोऽयं वध्वा सार्धं पयसि विहरन् अन्येन उद्दामेन द्विरदपतिना दर्पात् सन्निपत्य अभियुक्त इत्युत्तरार्द्धश्लोकस्यान्वयः । सः = करिशावकः, अयं = संनिकृष्टस्थः ( सन् ) वध्वा सार्धं = करेणुकया सह, पयसि = जले, विहरन् = क्रीडन्, अन्येन = अपरेण, उद्दामेन = मदयुक्तेन, द्विरदपतिना = गजश्रेष्ठेन, दर्पात् = अवलेपात्, क्वचित् 'वेगात्' इति पाठस्तस्य जवादित्यर्थः । सन्निपत्य = स्वयमागत्य, अभियुक्तः = आक्रान्तः, अतः सीता देव्याः पुत्रनिर्विशेषस्य हस्तिशावकस्य आपद्ग्रस्ततया दुःखस्थानमेतदिति भावः । मन्दाक्रान्ता वृत्तम् ॥ ६ ॥

सीतेति । ससंभ्रमं = सत्वरं, पुत्राऽभियोगश्रवणात्संभ्रम इत्यवधेयम् । परित्रायस्व = रक्ष, चिरपरिचितानि = वहुकालसंस्तुतानि, अक्षराणि='आर्यपुत्रे' त्याकारकाणि, अनुवध्नन्ति = अनुसरन्ति, मन्मुखात्सहसा निष्क्रामन्तीत्यर्थः ।

---

सीता—उसका क्या हुआ ?

( फिर नेपथ्यमें )

वह अपनी भार्याके साथ जलमें क्रीडा करता हुआ दर्पसे आते हुए दूसरे बडे मतवाले हाथीसे आक्रान्त हुआ है ॥ ६ ॥

सीता—( शीघ्रता के साथ कुछ कदम चलकर ) आर्यपुत्र ! मेरे पुत्रको बचाइये २ । ( विचार कर ) हा धिक् हा धिक् वे ही वहुत कालसे परिचित अक्षर पञ्चवटीको देखनेसे मुझ अभागिनीका अनुसरण करते हैं । हा आर्यपुत्र ! ( ऐसा कहकर मूर्च्छित होती हैं । )

( प्रवेश कर )

तमसा—सीते ! आश्वस्त हो जाओ, आश्वस्त हो जाओ ।

( नेपथ्ये । )

विमानराज ! अत्रैव स्थीयताम् ।

सीता—(ससाध्वसोल्लासम् ।) अम्हहे, जलभरभरिअमेहमन्थरत्थणिअगम्भीरमंसलो कुदो णु भारईणिग्घोसो भरन्तकण्णविवरं मं वि मन्दभाइणिं झत्ति उस्सुआवेइ ? (अहो, जलभरभरितमेघमन्थरस्तनितगम्भीरमांसलः कुतो नु भारतीनिर्घोषो भ्रियमाणकर्णविवरां मामपि मन्दभागिनीं झटित्युत्सुकापयति ? )

तमसा—( सस्मितास्रम् । ) अयि वत्से !

---

नेपथ्य इति । विमानराज = व्योमयानश्रेष्ठ ! रामस्य पुष्पकं प्रत्युक्तिरियम् ।

सीतेति । ससाध्वसोल्लासं = साध्वसेन = भयेन, उल्लासेन=हर्षेण, च सहितं यथा तथेति क्रियाविशेषणमिदम् । तत्र परित्यक्ता मां दृष्ट्वा रामः किं कथयिष्यतीत्याशङ्कया भयं, बहुकालव्यवहितदर्शनस्य प्रियस्य दर्शनेन उल्लासश्चेति द्वयं यथायोग्यं विज्ञेयम् । जलभरभरितमेघमन्थरस्तनितगम्भीरमांसलः = जलस्य= तोयस्य, भरः = भारः, तेन भरितः = सञ्जातभरः, एतादृशो यो मेघः = बलाहकः, तस्य यत् मन्थरं = मन्दम् , स्तनितं = गर्जितम् तद्वत् गम्भीरः = गभीरः, स चाऽसौ मांसलः = पुष्टः, एतादृशो भारतीनिर्घोषः = वर्णोच्चारणध्वनिः, स कुतो नु = कस्मात्प्रदेशात् नु ? आगत्येति शेषः, 'नु' इति वितर्के, भ्रियमाणकर्णविवरां = भ्रियमाणे = पूर्यमाणे, कर्णविवरे = श्रोत्रच्छिद्रे, यस्याः सा, ताम्; मन्दभागिनीमपि = मन्दभागामपि, अल्पभाग्यामपीत्यर्थः । मां = सीतां, झटिति= शीघ्रम् , उत्सुकापयति = उत्कण्ठितां करोति, 'उच्छ्वासयति' इति पाठे उज्जीवयतीत्यर्थः । अत्र पत्युर्जीवनमात्रेण भाग्यं तत्साहचर्याऽलाभेन मन्दत्वं बोधनीयम् ।

तमसेति । सस्मिताऽस्रं = स्मितेन = मन्दहास्येन, अस्रेण = अश्रुणा च

---

( नेपथ्यमें )

विमानराज ! यहींपर रुको ।

सीता—( भय और हर्षके साथ ) अहो ! जलके भारसे भरे हुए मेघके मन्द गर्जनके सदृश गम्भीर और जोरदार वाणीकी ध्वनि कहाँसे आकर मेरे कानके छेदको भरकर मुझ अभागिनीको भी शीघ्र ही उत्कण्ठित कर रही है ?

तमसा—( मुस्कुराकर और आँखोंमें आँसू भरकर ) अरी बेटी !

अपरिस्फुटनिक्काणे कुतस्त्येऽपि त्वमीदृशी ।
स्तनयित्नोर्मयूरीव चकितोत्कण्ठितं स्थिता ॥ ७ ॥

सीता—भअवदि ! किं भणासि अपरिप्फुडेत्ति । सरसंजोएण पच्चहिजाणामि णं अज्जउत्तेण एव्व एदं वाहरिदम् । ( भगवति ! किं भणस्यपरिस्फुटेति । स्वरसंयोगेन प्रत्यभिजानामि नन्वार्यपुत्रेणैवैतद्व्याहृतम् । )

तमसा—श्रूयते—'तपस्यतः किल शूद्रस्य दण्डधारणार्थमैक्ष्वाको राजा दण्डकारण्यमागत' इति ।

---

सहितं यथा तथेति क्रियाविशेषणम् । अत्र त्यागकर्तुरपि पत्युः स्वरश्रवणेन सीताया औत्सुक्यं दृष्ट्वा तमसायाः मन्दहास्यं तस्याः पतिसाहचर्याऽभावमूलकदुःखदर्शनेन अश्रुपात इति अवसेयम् ।

अपरिस्फुटेति । स्तनयित्नोः अपरिस्फुटनिक्वाणे मयूरी इव त्वं कुतस्त्ये अपरिस्फुटनिक्काणे अपि ईदृशी चकितोत्कण्ठितं स्थिता इत्यन्वय । स्तनयित्नोः = मेघस्य, अपरिस्फुटनिक्काणे = अव्यक्तनिनदे, मयूरी इव = मयूरभार्या इव, त्वं = सीता, कुतस्त्ये=कस्माच्चित्प्रदेशादागते, वक्तुः स्वरूपदर्शनाऽभावादित्युक्तिरित्यवधेयम् । अपरिस्फुटनिक्काणे अपि = अव्यक्तनिनदे, 'विमानराज ! अत्रैव स्थीयताम्' इत्याकारकेऽपीति भावः । ईदृशी = एतादृशी, ईदृक्त्वं विवृणोति—चकितोत्कण्ठितं स्थिता = साश्चर्यं सोत्कण्ठं च विद्यमाना सती वर्तसे इति शेषः । अत्रोपमाऽलङ्कारः । अनुष्टुब् वृत्तम् ॥ ७ ॥

सीतेति । अपरिस्फुटा = अव्यक्ता, अत्र गद्यवाक्येऽपि अपरिस्फुटेति पदपाठात् 'अपरिस्फुटनिक्काणे' अयमेव ग्रन्थकृत्संमतः पाठ इति प्रतिभाति । स्वरसंयोगेन = स्वरसम्बन्धेन, श्रोत्रेन्द्रिये इति शेष, व्याहृतं = कथितं, प्रत्यभिजानामि = तदिदमिति वेद्मि । प्रत्यभिज्ञा नाम संस्कारेन्द्रियसंप्रयोगोभयजन्यं ज्ञानं, यथा सोऽयं देवदत्त इति ।

तमसेति । तपस्यतः = तपश्चरतः, शूद्रस्य = शम्बूकस्येत्यर्थः, दण्डधार-

---

मेघके अस्पष्ट शब्दमें मोरनीकी तरह तुम, कहींसे हुए अस्पष्ट शब्दमें इस तरह चकित और उत्कण्ठित हो रही हो ॥ ७ ॥

सीता—भगवति ! 'अस्पष्ट शब्द' यह आप क्या कह रही हैं ? स्वर-सयोगसे मैं पहचानती हूँ कि अवश्य यह आर्यपुत्रने ही कहा है ।

तमसा—सुनते हैं कि 'तपस्या करनेवाले शूद्रको दण्ड देनेके लिए इक्ष्वाकुवंशके राजा ( राम ) दण्डकाऽरण्यमें आये हैं ।'

सीता—दिट्ठिआ अपरिहीणधम्मो सो राआ (दिष्टया अपरिहीनधर्मः स राजा।)

( नेपथ्ये । )

यत्र द्रुमा अपि मृगा अपि बन्धवो मे
　　यानि प्रियासहचरश्चिरमध्यवात्सम् ।
एतानि तानि बहुकन्दरनिर्झराणि *
　　गोदावरीपरिसरस्य गिरेस्तटानि ॥ ८ ॥

सीता—दिट्ठिआ कहं पहादचन्दमण्डलापण्डरपरिक्खामदुब्बलेन

---

णार्थं = निग्रहणाऽर्थम्, अपराधाऽनुकूलशिक्षार्थमिति भावः, ऐक्ष्वाकः = इक्ष्वाकुकुलोत्पन्नः 'दाण्डिनायने'त्यादिसूत्रेण टिलोपः ।

सीतेति । दिष्टया = भाग्येन, सः = पूर्वोक्तः, राजा = नृपः, राम इत्यर्थः, अपरिहीनधर्मः=अन्यूनधर्मः ।

यत्रेति । यत्र द्रुमा अपि मृगा अपि मे बन्धवः, प्रियासहचर ( सन् ) यानि चिरम् अध्यवात्सम्, एतानि बहुकन्दरनिर्झराणि गोदावरीपरिसरस्य गिरेः तानि तटानि ( विद्यन्ते ) इत्यन्वयः । यत्र = येषु, तटेष्वित्यर्थः । द्रुमा अपि = वृक्षा अपि, मृगा अपि = पशवोऽपि, मे = मम, बन्धवः = बान्धवा, बन्धुतुल्या इति भावः, आसन्निति शेषः । प्रियासहचरः = सीतासहचरः ( सन् ), यानि = तटानि, 'अध्यवात्सम्' इत्यधिपूर्वकवसधातोर्योगेन 'उपान्वध्याङ्वस' इति आधारस्य कर्मत्वम् । चिरं = बहुकालपर्यन्तम्, अध्यवात्सम् = उषितवानस्मि । एतानि = आसन्नवर्तीनि, बहुकन्दरनिर्झराणि = बहवः = अदभ्राः, कन्दराः = गुहाः, निर्झराः = जलप्रवाहा येषु तानि, गोदावरीपरिसरस्य=गोदावरी=तदाख्या नदी, परिसरः=पर्यन्तभूः, यस्य तस्य गोदावरीसमीपवर्तिन इत्यर्थः, 'पर्यन्तभूः परिसर' इत्यमरः, गिरेः = पर्वतस्य, तानि = निवासविचरणादिना पूर्वाऽनुभूतानि, तटानि = प्रदेशाः, समीपस्थानानीत्यर्थः, विद्यन्त इति शेषः । वसन्ततिलका वृत्तम् ॥ ८ ॥

सीतेति । प्रभातचन्द्रमण्डलापाण्डरपरिक्षामदुर्बलेन = प्रभातचन्द्रमण्डलम् =

---

सीता—भाग्यसे वे राजा धर्मसे हीन नहीं हुए हैं ।

( नेपथ्यमें )

जहाँ वृक्ष और पशु भी मेरे बान्धव थे, जिन स्थानोंमें सीताके साथ मैं बहुत कालतक रहा, बहुत गुफा और झरनोंसे युक्त गोदावरी नदीके निकटवर्ती पर्वतके ये वे ही समीपवर्ती स्थान हैं॥८॥

सीता—प्रातःकालके चन्द्रमण्डलकी तरह सफेद, क्षीण और दुर्बल आकृतिवाले आर्यपुत्र

---

* 'बहुनिर्झरकन्दराणि' इति पाठान्तरम् ।

आआरेण णिअसोम्हगम्भीराणुभावमेत्तपच्चहिजाज्जो एव्व अज्जउत्तो होदि । भअवदि तमसे ! धारेहि मम् । ( इति तमसामाश्लिष्य मूर्च्छति । ) ( दिष्ट्या कथं प्रभातचन्द्रमण्डलापाण्डरपरिक्षामदुर्बलेनाकारेण निजसौम्यगम्भीरानुभावमात्रप्रत्यभिज्ञेय एवार्यपुत्रो भवति । भगवति तमसे ! धारय माम् । )

तमसा—वत्से ! समाश्वसिहि समाश्वसिहि ।

( नेपथ्ये । )

अनेन पञ्चवटीदर्शनेन ।

अन्तर्लीनस्य दुःखाग्नेरद्योद्दाम ज्वलिष्यतः ।
उत्पीड इव धूमस्य मोहः प्रागावृणोति माम् ॥ ९ ॥

---

विभातेन्दुमण्डलम्, इव आपाण्डरः = ईषच्छ्वेतः, परिक्षामः = कृशः, दुर्बलः = बलहीनः, तेन, आकारेण—आकृत्या, उपलक्षित इति शेषः, 'इत्थंभूतलक्षणे' इति तृतीया । निजसौम्यगम्भीराऽनुभावमात्रप्रत्यभिज्ञेयः = निजः = स्वकीयः, सौम्यः = शान्तः, गम्भीरः = धीरः, एतादृशो योऽनुभावः = प्रभावः, तन्मात्रेण प्रत्यभिज्ञेयः = प्रत्यभिज्ञातुं शक्यः । धारय = गृहाण, येनाऽहं नो पतेयमिति भावः ।

अन्तरिति । अन्तर्लीनस्य अद्य उद्दाम ज्वलिष्यतो दुःखाऽग्नेः धूमस्य उत्पीड इव मोहो मां प्राक् आवृणोति इत्यन्वयः । अन्तर्लीनस्य = अन्तःकरणे गुप्तस्य, कार्यान्तरव्यापृतत्वादिति भावः । अद्य = अस्मिन्दिने, उद्दामम् = अत्यन्तं, ज्वलिष्यतः = दीपिष्यमाणस्य, पञ्चवटीदर्शनेनेति भावः = एतादृशस्य दुःखाऽग्नेः = दुःखम् अग्निरिवेति दुःखाग्निस्तस्य = पीडानलस्येत्यर्थः, 'उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे' इति समासः । धूमस्य = शिखिध्वजस्य, उत्पीड इव = राशिरिव, मोहः = मूर्च्छा, मां = रामं, प्राक् = प्रथमम्, आवृणोति = आच्छादयति । यथाऽग्नेर्ज्वलनात्पूर्वं धूमः समन्तत आच्छादयति तथैव दुःखोत्पन्ना मूर्च्छा दुःख-

---

भाग्यसे किस तरह शान्त और गम्भीर अपने प्रभावमात्रसे पहचाननेके योग्य हो गये हैं । भगवति तमसे ! मुझे सँभालिए । (ऐसा कहकर और तमसाको आलिङ्गन कर मूर्च्छित होती हैं)

तमसा—वत्से ! समाश्वस्त हो, समाश्वस्त हो ।

( नेपथ्यमें )

इस पञ्चवटीके दर्शनसे—

अन्तःकरणमें छिपी हुई और आज भविष्यमें अत्यन्त जलनेवाली दुःखाग्निकी धूर्वेकी राशिकी तरह मूर्च्छा मुझको पहले ( दुःख फैलनेके पहले ) ढाक देती है ॥ ९ ॥

हा प्रिये जानकि !

तमसा—( स्वगतम् । ) इदं तावदाशङ्कितं गुरुजनेन ।

सीता—( समाश्वस्य । ) हा, कहं एदम् ? ( हा कथमेतत् । )

( पुनर्नेपथ्ये । )

हा देवि दण्डकारण्यवासप्रियसखि विदेहराजपुत्रि ! ( इति मूर्च्छति । )

सीता—हद्धी हद्धी ! म मन्दभाइणिं वाहरिअ आमीलिदणेत्तणीलुप्पलो मुच्छिदो एव्व । हा, कहं धरणिपिट्ठे णिरुद्धणिस्सासणीसहं विपल्हत्थो । भअवदि तमसे ! परित्ताएहि परित्ताएहि । जीवावेहि अज्जउत्तम् । ( इति पादयोः पतति । ) ( हा धिक् हा धिक् ! मा मन्दभागिनीं व्याहृत्यामीलितनेत्रनीलोत्पलो मूर्च्छित एव । हा, कथं धरणीपृष्ठे निरुद्धनिश्वासनिःसह विपर्यस्तः । भगवति तमसे ! परित्रायस्व परित्रायस्व । जीवयार्यपुत्रम् । )

---

प्रसरणात्पूर्वं मा संछादयतीति तात्पर्यम् । अत्र पूर्वार्द्धे दुःखाऽग्नेरित्यत्र लुप्तोपमा पश्चार्द्धे च उपमेति द्वयोरङ्गाङ्गिभावेन सङ्करः । अनुष्टुव् वृत्तम् ॥ ९ ॥

तमसेति । गुरुजनेन = पूज्यजनेन, लोपामुद्रादिनेति भाव ।

सीतेति । आमीलितनेत्रनीलोत्पल=आमीलिते=मुद्रिते, नेत्रे=नयने, एव नीलोत्पले=नीलकमले यस्य स॰, धरणीपृष्टे=भूतले, निरुद्धनि श्वासनिःसहम्=निरुद्धः=प्रवृत्तिहीन॰, निःश्वास॰ यस्मिन्कर्मणि तद्यथा तथा, एवं निःसह = दुर्बल यथा तथेति द्वयमपि क्रियाविशेषणं, 'सुप्सुपे ति समास , विपर्यस्त॰ = विपरीत॰ पतित , अधोमुखत्वेन पतित इति भाव॰ । परित्रायस्व = रक्ष, मामिति शेष॰, ननु त्वं स्वतो रक्षिताऽसीत्यत आह जीवयेति । जीवय = जीवितं कुरु, आर्यपुत्रजीवनेनैव मद्रक्षणं भविष्यतीति भाव॰ ।

---

हा प्रिये ! सीते !!

तमसा—( मन ही मन ) गुरुजन (गङ्गा और लोपामुद्रा) ने इसी बातकी शङ्का की थी ।

सीता—( आश्वस्त होकर ) हा ! कैसे यह हुआ ? ( फिर नेपथ्यमें )

हा देवि ! दण्डकारण्य-वासकी प्रियसखि ! जनकपुत्रि ! (ऐसा कहकर मूर्च्छित होते हैं।)

सीता—हा धिक् ! हा धिक् !! मुझ मन्दभाग्यवालीको पुकारकर नीलकमलोंके सदृश नेत्रोंको मूँदकर आर्यपुत्र मूर्च्छित ही हो गये हैं । हाय ! किस तरह रुके हुए श्वासवाले और दुर्बल होकर जमीनपर गिर पडे हैं ? भगवति तमसे ! बचाइये, बचाइये । आर्यपुत्रको जीवित कीजिए । ( ऐसा कहकर चरणोंमें गिरती हैं । )

तमसा—

त्वमेव ननु कल्याणि ! सञ्जीवय जगत्पतिम् ।
प्रियस्पर्शो हि पाणिस्ते तत्रैष निरतो जनः ॥ १० ॥

सीता—जं होदु तं होदु । जह भअवई आणवेई । ( इति ससंभ्रमं निष्क्रान्ता । ) ( यद्भवतु तद्भवतु । यथा भगवत्याज्ञापयति ।

(ततः प्रविशति भूम्या निपतितः सास्रया सीतया स्पृश्यमानः साह्लादोच्छ्वासो रामः।)

---

त्वमेवेति । ननु कल्याणि । त्वमेव जगत्पतिं संजीवय, हि ते पाणिः प्रियस्पर्शः, तत्र एष जनो निरत इत्यन्वयः । ननु=अनुज्ञाद्योतकमव्ययम्, अनुज्ञा दर्शयति—हे कल्याणि = हे भद्रे !, एतादृशे परित्यागेऽपि प्रियप्रबोधस्त्वत्स्पर्शाऽधीनः, अतः कल्याणीति सम्बोधनम् । त्वमेव, जगत्पतिं = लोकनाथं रामचन्द्रमित्यर्थः, संजीवय = सचेतनं कुरु । कथं कुर्यामित्यत आह—हीति । हि = यत, ते = तव, पाणिः = करः, प्रियस्पर्शः = प्रियः = अभीष्टः, रामाऽभीष्ट इति भावः, स्पर्शः= आमर्शनं यस्य सः । अतः—तत्र = तस्मिन् त्वत्स्पर्शे इत्यर्थः, एषः = सन्निकृष्टस्थः, जनः = रामः, निरतः = समनुरक्तः, अस्तीति शेषः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । अत्र चतुर्थपादे 'तत्रैव नियता भव' इति पुस्तकान्तरस्थः पाठस्तत्र तत्रैव=स्वपाणिना रामस्पर्शे एव, नियता=व्यापृता, भव=एधीत्यर्थः, तत्र वाक्याऽर्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ १० ॥

सीतेति । यद्भवतु तद्भवतु = निर्वासिताया मम स्पर्शाद्रामस्य कोपनत्वं भवतु प्रसन्नत्वं भवतु वेति तात्पर्यम्, रामहिताधायकव्यापारे मया न किमपि चिन्तनीयमिति भावः । भगवती = तमसा, आज्ञापयति = आदिशति, तथा करोमीति शेषः, आर्यपुत्रं पाणिना स्पृशामीति भावः । ससम्भ्रमं = सत्वरम् ।

तत इति । सास्रया = अश्रुसहितया, रामस्य भूमिनिपतनेन सास्रत्वं बोध्यम् । साह्लादोच्छ्वासः = आह्लादेन = हर्षेण, उच्छ्वासेन—श्वाससंचारेण च सहितः, 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः ।

---

**तमसा**—हे कल्याणि ! तुमही जगतके स्वामी रामचन्द्रको होशमें लाओ, क्योंकि तुम्हारा हाथ कोमल स्पर्शवाला है, अतः उसीमें ये रामचन्द्र अनुरक्त हैं ॥ १० ॥

**सीता**—चाहे जो हो । भगवती जैसी आज्ञा करती हैं । (ऐसा कहकर फुर्तीसे जाती हैं ।)

( तब जमीनपर गिरे हुए और आँखोंमें आसू-भरी सीतासे स्पर्श किये गये तथा हर्ष और चैतन्यसे युक्त राम प्रवेश करते हैं । )

सीता—( किञ्चित्सहर्षम् । ) जाणे उण पच्चाअदं विअ जीविअं तेल्लोकस्स ( जाने पुनः प्रत्यागतमिव जीवितं त्रैलोक्यस्य । )

रामः—हन्त भोः, किमेतत् ?

आश्च्योतनं * नु हरिचन्दनपल्लवानां
निष्पीडितेन्दुकरकन्दलजो नु सेकः ।
आतप्तजीवितमनःपरितर्पणोऽयं
सञ्जीवनौषधिरसो हृदि नु प्रसक्तः † ॥ ११ ॥

सीतेति । त्रैलोक्यस्य = स्वर्गमर्त्यपातालात्मकस्य लोकत्रयस्येत्यर्थः, जीवितं= जीवनं, प्रत्यागतमिव=पुनरागतमिव, जाने = अवगच्छामि, लोकत्रयस्याऽपि जीवितस्य राममयत्वाद्रामजीवने तज्जीवनमिति भावः ।

राम इति । एतत् = स्पर्शनं, किं = कतमत्, तदेव श्लोकेन प्रतिपादयति—

आश्च्योतनमिति । हृदि हरिचन्दनपल्लवानाम् आश्च्योतनं नु ? निष्पीडितेन्दुकरकन्दलजः सेको नु ? आतप्तजीवितमनःपरितर्पणोऽयं संजीवनौषधिरसः प्रसक्तो नु ? इत्यन्वयः । हृदि = हृदये, हरिचन्दनपल्लवाना = कल्पवृक्षकिसलयानाम्, आश्च्योतनं = रसक्षरणं, नु = वितर्कद्योतकमव्ययमिदम् ? निष्पीडितेन्दुकरकन्दलजः = निष्पीडिताः = निष्पिष्टाः, ये इन्दुकरकन्दलाः = चन्द्ररश्मिनवाङ्कुराः, तेभ्यो जातः, सेको नु = सेचनं नु ? आतप्तजीवितमनःपरितर्पणः = आतप्तयोः = सन्तप्तयोः, जीवितमनसोः = जीवनचित्तयोः, 'आतप्तजीविततरोः' इति क्वाचित्कः पाठस्तस्य—जीवितमेव तरुर्जीविततरुः = जीवनवृक्षः, आतप्तः = संतप्तः, जीविततरुस्तस्येति विग्रहादिकं बोध्यम्, परितर्पणः 'अनुदात्तेतश्च हलादेः' इति युच् = परितृप्तिकारकः, संतापाऽपनयनादिति भावः । अयम् = एषः प्रत्यग्राऽनुभूतः इत्यर्थः, संजीवनौषधिरसः=प्राणप्रदौषधद्रवः, प्रसक्तो-

सीता—( कुछ हर्षके साथ ) मैं विचार करती हूं कि तीनों लोकोंका जीवन फिर लौट आया है ।

राम—हन्त ! यह क्या है ?

हृदयपर हरिचन्दनके पल्लवोंका रसक्षरण हुआ है क्या ? अथवा निचोड़े हुए चन्द्रकिरणरूपी नवाङ्कुरोंसे किया गया सेचन है ? वा सन्तापयुक्त जीवन और मनको तृप्त करनेवाला यह सञ्जीवन ओषधिका रस हृदयपर सींचा गया है ? ॥ ११ ॥

*'प्रश्च्योतनम्' इति पाठान्तरम् । † 'प्रसिक्तः' इति पाठान्तरम् ।

अपि च ।

स्पर्शः पुरा परिचितो नियतं स एव
सञ्जीवनश्च मनसः परितोषणश्च ।
सन्तापजां सपदि यः परिहृत्य मूर्च्छा-
मानन्दनेन जडतां पुनरातनोति ॥ १२ ॥

सीता—( ससाध्वसकरुणमुपसृत्य । ) एत्तिअं एव्व दाणिं मह बहुदरम् । ( एतावदेवेदानीं मम बहुतरम् । )

---

नु = सन्नद्धो नु ? किमिदमिति नाऽहं निश्चिनोमीति भावः । अत्र प्रकृते सीता-स्पर्शे आश्च्योतनादीना वस्तूना संशयस्य संशय एव मर्यवसानात् शुद्धसन्देहा-ऽलङ्कारः, तल्लक्षण यथा साहित्यदर्पणे—'सन्देहः प्रकृतेऽन्यस्य वस्तुनः प्रतिभो-त्थितः । शुद्धो निश्चयगर्भोऽसौ निश्चयाऽन्त इति त्रिधा ॥' इति । वसन्ततिलका वृत्तम् ॥ ११ ॥

स्पर्श इति । पुरा परिचितः संजीवनो मनसः परितोषणश्च नियतं स एव स्पर्शः, यः सन्तापजां मूर्च्छां परिहृत्य सपदि आनन्दनेन पुनर्जडताम् आतनोति इत्यन्वयः । पुरा = पूर्वकाले, परिचितः = संस्तुतः, संजीवनः = सम्यग्जीवनहेतुः, 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणात् ल्युट्, मनसः = चित्तस्य, परितोषणश्च = परितोषजनकश्च, पूर्ववत् ल्युट्, 'परिमोहनश्चे' ति पाठे परिमोहजनकश्चेत्यर्थः । नियतं = निश्चितं, स एव=पूर्वाऽनुभूत एव, स्पर्शः=आमर्शनम्, अस्तीति शेषः । यः = स्पर्शः, सन्तापजा = विरहदुःखोत्पन्ना, मूर्च्छा=प्रज्ञाशून्यता, परिहृत्य = अप-नीय, सपदि = तत्क्षणे, आनन्दनेन = आनन्दोत्पादनेन, 'टुनदि समृद्धौ' इति धातोर्भावे ल्युट्, पुरः = भूयः, जडताम् = आनन्दाऽऽधिक्यप्रयुक्तप्रज्ञाशून्यताम्, आतनोति = समन्ताद्विस्तारयति । वसन्ततिलका वृत्तम् ॥ १२ ॥

सीतेति । ससाध्वसकरुणम्=साध्वसेन = निर्त्रासिताया मम स्पर्शेन राघवः

---

और भी—

पूर्व परिचित, उत्तम जीवनका हेतु और मनको सन्तुष्ट करनेवाला निश्चय ही वही स्पर्श है, जो कि सन्ताप-जन्य मूर्च्छाको हटाकर तत्क्षण आनन्दको उत्पन्नकर फिर जडताको पैदा कर देता है ॥ १२ ॥

सीता—(भय और करुणाके साथ तमसाके पास जाकर) इस समय मेरे लिए इतना ही बहुत अधिक है ।

रामः—( उपविश्य ) न खलु वत्सलया देव्याभ्युपपन्नोऽस्मि ?

सीता—हद्धी हद्धी। किंति अज्जउत्तो म मग्गिस्सदि ? ( हा धिक् हा धिक्। किमित्यार्यपुत्रो मा मार्गिष्यति ? )

रामः—भवतु, पश्यामि।

सीता—भअवदि तमसे ! ओसरह्य दाव। मं पेक्खिअ अणब्भणुण्णादेण संणिहाणेण राआ अहिअं कुपिस्सदि। ( भगवति तमसे ! अपसराव तावत्। मा प्रेक्ष्यानभ्यनुज्ञातेन सन्निधानेन राजाऽधिकं कोपिष्यति। )

---

कोपं करिष्यतीति हेतूत्पन्नेन भयेन, करुणया = स्वविरहव्याकुलं रामं प्रत्युत्पन्नया दयया च सहितं यथा तथेति क्रियाविशेषणम्, 'ससाध्वसोत्कम्पम्' इति पुस्तकान्तरस्थः पाठस्तस्य ऋजुरर्थः। इदानीं = विरहकाले, एतावदेव = एतत्परिमाणमेव, आर्यपुत्रस्पर्शनमात्रमेवेति भावः। मम = सीतायाः, बहुतरम् = अधिकतरम्, निर्वासने दर्शनस्याऽपि दुर्लभत्वात् किमुत स्पर्शनस्य अत एतावदपि बहुतरमेवेति भावः।

राम इति। वत्सलया = स्निग्धया, 'स्निग्धस्तु वत्सल' इत्यमरः, देव्या = महिष्या, सीतयेति भाव। न अभ्युपपन्नोऽस्मि खलु = नाऽनुगृहीतोऽस्मि किम् ? 'अभ्युपपत्तिस्त्वनुग्रहः' इत्यमरः।

सीतेति। हा धिक् हा धिक्, मामिति शेषः। आर्यपुत्रः = रामः, मां = सीता, किमिति मार्गिष्यति = किं विचेष्यति ? रामस्याऽऽकारं दृष्ट्वा सीता तर्कयति—अयं मा विचेष्यति नो वेति भावः।

राम इति। भवतु = अस्तु, पश्यामि = विलोकयामि, मोहे योऽयं स्पर्शो मयाऽनुभूतः स पूर्वमसकृत्परिचितत्वात्सीताया इत्यनुमित परं सीताऽत्र नो वर्तते, आस्तां; समन्ततः सम्यग् विलोकयामीति भावः।

सीतेति। अपसराव = अस्मात् स्थानात् अपसरणं करवाव, स्थानान्तरं गच्छावेति भाव, प्रार्थनाया लोट्। अपसरणहेतुमाह—मामिति। अनभ्यनु-

---

राम—( बठकर ) स्नेह करनेवाली सीतासे क्या मैं अनुगृहीन तो नहीं हुआ हूँ ?

सीता—हा धिक् ! हा धिक् ! क्या आर्यपुत्र मुझे ढूँढेंगे ?

राम—अस्तु। मैं देखता हूँ।

सीता—भगवति तमसे ! हमलोग हट जायँ। मुझे देखकर विना आज्ञाके उपस्थितिके कारण राजा बहुत क्रोध करेंगे।

तमसा—अयि वत्से ! भागीरथीप्रसादाद्वनदेवतानामप्यदृश्याऽसि संवृत्ता ।

सीता—अत्थि क्खु एदम् ? ( अस्ति खल्वेतत् ? )

रामः—हा प्रिये जानकि !

सीता—(समन्युगद्गदम् ।) अज्जउत्त । असरिसं क्खु एदं इमस्स वुत्तन्तस्स । (सास्रम्) भअवदि । किंति वज्जमई जम्मन्तरेसु वि पुणो वि असमाविअदुल्लहदंसणस्स म एव्व मन्दभाइणिं उद्दिसिअ एव्वं वच्छलस्स एव्वंवादिणो अज्जउत्तस्स उवरि णिरणुक्कोसा भविस्सम् । अहं एव्व एदस्स हिअअ जाणामि, मह एसो । ( आर्यपुत्र ! असदृशं खल्वेतदस्य वृत्तान्तस्य । भगवति ! किमिति वज्रमयी जन्मान्तरेष्वपि पुनरप्यसम्भावितदुर्लभदर्शनस्य मामेव

---

ज्ञातेन = अननुमतेन, निर्वासनाद्धेतोरिति भावः, सन्निधानेन = समीपस्थित्या, कोपिष्यति = क्रोत्स्यति, मय्यमिति शेषः, क्रोधं करिष्यतीति भावः, प्रजारञ्जनार्थं मन्निर्वासको राजा मा दृष्ट्वा कोपं करिष्यतीति भावः ।

तमसेति । भागीरथीप्रसादात्=गङ्गाऽनुग्रहात्, वनदेवतानामपि=वासन्त्यादीनामपि, अदृश्या=अदर्शनीया, संवृत्ता=संजाता असि, किमुत रामस्येति भावः ।

सीतेति । स्मृतिमभिनयति—अस्तीति ।

सीतेति । समन्युगद्गदम् = मन्युना = प्रणयकोपेन, गद्गदम् = अस्फुटवाक्, यथा स्यात्तथेति क्रियाविशेषणम्, एतत् = 'हा प्रिये ! जानकि !' इति कथनम्, एतस्य वृत्तान्तस्य = मत्परित्यागरूपस्योदन्तस्येत्यर्थः, असदृशं खलु = अयोग्यं किल, स्वयमेव मां निर्वास्य पुनर्मामुद्दिश्य विलपनमनुचितमिति भावः । पुनः सीता रामं प्रति सकरुणा भूत्वा कथयति—भगवतीति । वज्रमयी = कुलिशमयी, अतिशयकाठिन्ययुक्तेत्यर्थः, एतादृशी अहमिति शेषः, जन्मान्तरेष्वपि = अन्येषु जन्मस्वपि, असंभावितदुर्लभदर्शनस्य=असंभावितम् = संभावनाया अवि-

---

तमसा—हे पुत्रि ! गङ्गाजीके अनुग्रहसे तुम्हें वनदेवियाँ भी नहीं देख सकतीं ।

सीता—हाँ यह बात है ?

राम—हा प्रिये सीते !

सीता—( प्रेममय कोपसे अस्पष्ट उच्चारणके साथ ) आर्यपुत्र ! आपका ऐसा कहना मेरे इस त्यागरूप वृत्तान्तके लायक नहीं है । (आखोंमें आँसू भरकर) भगवति ! दूसरे जन्मोंमें भी मेरे लिए जिनका दर्शन दुर्लभ और असमावित हो गया है और मुझ मन्दभागिनीको ही

मन्दभागिनीमुद्दिश्यैवं वत्सलस्यैवंवादिन आर्यपुत्रस्योपरि निरनुक्रोशा भविष्यामि । अहमेवैतस्य हृदयं जानामि, ममैष' ।

रामः—( सर्वतोऽवलोक्य सनिर्वेदम् । ) हा ! न किंचिदत्र ।

सीता—भअवदि ! णिक्कारणपरिच्चाइणो वि एदस्स दंसणेण एव्वंविधेण कीलिसी मे हिअआवत्था ? त्ति ण आणामि, ण आणामि । ( भगवति ! निष्कारणपरित्यागिनोऽप्येतस्य दर्शनेनैवंविधेन कीदृशी मे हृदयावस्था ? इति न जानामि, न जानामि । )

तमसा—जानामि वत्से ! जानामि ।

तटस्थं नैराश्यादपि च कलुषं विप्रियवशा-

---

पथभूतम् , अत एव-दुर्लभ = दुष्प्राप्यम् , दर्शन = विलोकन यस्य, तस्य; एवम् = इत्थं वत्सलस्य = स्निग्धस्य, अत एव = एवंवादिन = 'हा प्रिये जानकि' इति कथयतः, किमिति = किमर्थं, निरनुक्रोशा = निर्दया, 'आर्यपुत्र ! असदृशं खल्वे- तदस्य वृतान्तस्य' इति कथनेनेति भावः, 'कृपा दयाऽनुकम्पा स्यादनुक्रोशः' इत्यमर । एतस्य = आर्यपुत्रस्य, एष' = आर्यपुत्र· ।

राम इति । सर्वत' = परित', सनिर्वेदं = सखेदं, खेदश्चात्र सीताऽदर्शन मूलको ज्ञेयः । अत्र = अस्मिन् स्थाने ।

सीतेति । निष्कारणपरित्यागिनोऽपि = अकारणं परित्यक्तवतोऽपि, एतस्य = आर्यपुत्रस्य, एवंविधेन = एतादृशेन, शोकाकुलेनेति भाव' । दर्शनेन = विलो- कनेन, कीदृशी = किमाकारा, हृदयाऽवस्था = मनोऽवस्था, इति न जानामि = विवरीतुं न शक्नोमीति भावः ।

तमसेति । जानामि = बोधामि, तव हृदयाऽवस्थामिति शेष ।

तटस्थमिति । तव हृदयम् अस्मिन् क्षणे नैराश्यात् तटस्थम् इव, विप्रि-

---

उद्देश्य करके स्नेह कर ऐसा कहनेवाले आर्यपुत्रके ऊपर क्यों मैं वज्रमयी और निर्दय हो जाऊँगी । मैं ही इनका हृदय जानती हू, और ये मेरा हृदय जानते हैं ।

राम—( चारों तरफ देखकर खेदके साथ ) हाय ! यहा कुछ नहीं है ।

सीता—भगवति ! विना कारणके परित्याग करनेवाले इनके ऐसे दर्शनसे भी मेरे हृदयकी कैसी अवस्था हो रही है ? यह नहीं जानती हू नहीं जानती हू ।

तमसा—जानती हू, बेटी ! जानती हू ।

तुम्हारा हृदय इस अवसरमें निराशाके कारण उदासीनकी तरह, पतिके परित्यागरूप

द्वियोगे दीर्घेऽस्मिञ्झटिति घटनात्स्तम्भितमिव * ।
प्रसन्नं सौजन्याद्दयितकरुणैर्गाढकरुणं-
द्रवीभूतं प्रेम्णा तव हृदयमस्मिन् क्षण इव ॥ १३ ॥

रामः—देवि !

प्रसाद इव मूर्तस्ते स्पर्शः स्नेहार्द्रशीतलः ।
अद्याप्यानन्दयति मां त्वं पुनः कासि नन्दिनि ? ॥ १४ ॥

---

यवशात् कलुषम् इव, दीर्घे अस्मिन् वियोगे झटिति घटनात् स्तम्भितम् इव, सौजन्यात् प्रसन्नम् इव, दयितकरुणैः गाढकरुणम्, प्रेम्णा द्रवीभूतम् इव इत्यन्वयः । हे सीते ! तव = भवत्या, हृदय = चित्तम्, अस्मिन् क्षणे = अस्मिन्नवसरे, नैराश्यात् = पुन समागमाशाया अभावात्, तटस्थम् इव उदासीनम् इव, प्रसादकालुष्यादिरहितमिवेत्यर्थ ; विप्रियवशात् = परित्यागरूपात् अप्रियवशादित्यर्थः, कलुषम् इव = आविलम् इव, क्रोधयुक्तमिवेत्यर्थः । दीर्घे = चिरकालव्यापिनि, अस्मिन् = विद्यमाने, वियोगे = विरहे, झटिति घटनात् = आकस्मिकसङ्घटनात्, स्तम्भितम् इव = विस्मयेन निश्चलमिव; सौजन्यात् = प्रियसम्बोधनरूपात्सुजनत्वात्, प्रसन्नम् इव=प्रीतम् इव, दयितकरुणैः = दयितस्य=प्रियस्य, रामस्येत्यर्थः, करुणैः = शोकाकुलाऽवस्थाविशेषैः, गाढकरुणं = दृढशोकयुक्तम्, अतः—प्रेम्णा = प्रणयेन, द्रवीभूतमिव = प्राप्तद्रवाऽवस्थमिव, विलीनमिवेत्यर्थ ; अस्तीति शेष । इयं भावशवलतोक्ता । अत्र पञ्चानामुत्प्रेक्षाणां मिथोऽनपेक्षया स्थितेः संसृष्टिः । शिखरिणी वृत्तम् ॥ १३ ॥

राम इति । स्नेहार्द्रशीतलः ते स्पर्शः मूर्त प्रसाद इव अद्याऽपि माम् आनन्दयति, हे नन्दिनि ! त्वं पुन क असि इत्यन्वयः । स्नेहार्द्रशीतलः = स्नेहेन आर्द्रः स्नेहार्द्रः, स चाऽसौ शीतल = प्रेमक्लिन्नत्वेन शीतल इत्यर्थ, ते = तव, स्पर्शः = आमर्शनं, मूर्तः = मूर्तिमान्, प्रसाद इव = अनुग्रह इव, अद्याऽपि =

---

अप्रिय आचरणसे क्रोधयुक्तकी तरह, बहुत कालतक रहनेवाले इस विरहमें आकस्मिक सम्मेलनसे निश्चलकी तरह, प्रियकी सम्बोधनरूप सुजनतासे प्रसन्नकी तरह और प्यारे रामके शोकमयी अवस्थाओंसे दृढ शोकसे युक्त, अत प्रेमसे द्रवीभूतकी तरह हो रहा है ॥ १३ ॥

**राम**—हे देवि !

स्नेहसे आर्द्र और शीतल तुम्हारा स्पर्श मूर्तिमान् अनुग्रह की तरह अभीतक मुझे

---

* 'वटनोत्तम्भितमिव' इति पाठान्तरम् ।

सीता—एदे क्खु अगाधमाणसदंसिदसिणेहसंभारा आणन्दणिस्सन्दिणो सुहामआ अज्जउत्तस्स उल्लावा । जाणे पच्चएण णिक्कालणपरिच्चाअसल्लिदोवि बहुमदो मह जम्मलाहो । ( एते खल्वगाधमानसदर्शितस्नेहसम्भारा आनन्दनिष्यन्दिनः सुधामया आर्यपुत्रस्योल्लापाः । जाने, प्रत्ययेन निष्कारणपरित्यागशल्यितोऽपि बहुमतो मम जन्मलाभः । )

रामः—अथवा कुतः प्रियतमा ? नूनं सङ्कल्पाभ्यासपाटवोपादान एष भ्रमो रामभद्रस्य * ।

---

अस्मिन् क्षणेऽपि, स्पर्शोत्तरव्यवहितक्षणेऽपीति भावः, मा = रामम्, आनन्दयति = आनन्दितं करोति, 'आर्द्रीकरोति' इति पाठे आर्द्रं करोतीत्यर्थः । हे नन्दिनि = आनन्दकारिणि !, त्वं = सीता, पुनः=भूयः, क्व = कुत्र, असि = वर्तसे । अत्रोत्प्रेक्षाऽलङ्कारः ॥ १४ ॥

सीतेति । अगाधमानसदर्शितस्नेहसंभाराः=अगाधम् = अतिगम्भीरम्, यत् मानसं = चित्तम्, तेन दर्शितः = प्रदर्शितः, स्नेहसंभारः = प्रेमसमूहो यैस्ते, 'संभारः संभृतौ गणे' इति विश्वः । आनन्दनिष्यन्दिनः = हर्षस्राविणः, सुधामयाः = अमृतमयाः, उल्लापाः = उच्चस्वरा विलापाः । प्रत्ययेन = विश्वासेन, उल्लापानामिति शेषः । निष्कारणपरित्यागशल्यितः = निष्कारणपरित्याग एव शल्यं = शङ्कुः, तत् संजातमस्य सः 'तदस्य संजातं तारकादिभ्य इतच्' इतीतच्प्रत्ययः । मे = मम सीतायाः, जन्मलाभः = जननप्राप्तिः, बहुमतः = अत्यभीष्टः ।

राम इति । सीतामदृष्ट्वा सीताऽरण्ये व्याघ्रादिना भक्षितेति मत्वा समाधत्ते—अथवेति । सङ्कल्पाऽभ्यासपाटवोपादानः = सङ्कल्पस्य = सीताविषयकचिन्तायाः, अभ्यासः = पुनः पुनरावृत्तिः, तस्य पाटवं = पटुत्वम्, तदेव उपादानं = कारणं यस्य सः, तादृशः भ्रमः = भ्रान्तिः, अस्तीति शेषः । अनिशं सीताचिन्तनेनैव सीता मामस्प्राक्षीदित्याकारको भ्रमः संजात इति भावः ।

---

आनन्दित कर रहा है । हे आनन्ददायिनि ! तुम कहा हो ? ॥ १४ ॥

सीता—अत्यन्त गम्भीर चित्तसे प्रेम दिखलानेवाले, आनन्दकी वृष्टि करनेवाले और अमृतमय ये आर्यपुत्रके उच्च विलाप हैं । इनके विश्वाससे मैं विचार करती हू कि अकारण परित्यागरूप शल्य ( कील ) से विद्ध होनेपर भी मेरा जन्मलाभ अत्यन्त अभीष्ट है ।

राम—अथवा यहा कहा प्रियतमा है ? निश्चय ही रामभद्रको सीता-विषयक चिन्तासे अभ्यासकी पटुतासे ही उत्पन्न यह भ्रान्ति है ।

---

* क्वचित् 'रामस्य' इत्येव पाठः ।

( नेपथ्ये । )

अहो, महान् प्रमादः प्रमादः ('सीतादेव्या स्वकरकलितै' इत्यर्धं पठ्यते ।)

रामः—( सकरुणौत्सुक्यम् ) किं तस्य ?

( पुनर्नेपथ्ये । ) ( 'वध्वा सार्धम्' इत्युत्तरार्धं पठ्यते । )

सीता—को दाणिं अभिजुज्जइ ? ( क इदानीमभियुज्यते ? )

रामः—क्वासौ दुरात्मा ? यः प्रियायाः पुत्रं वधूद्वितीयमभिभवति । ( इत्युत्तिष्ठति । )

( प्रविश्य । )

वासन्ती—( सम्भ्रान्ता । ) देव ! त्वर्यताम् ।

सीता—हा कहं मे पिअसही वासन्ती ? ( हा, कथं मे प्रियसखी वासन्ती ? )

रामः—कथं देव्याः प्रियसखी वासन्ती ?

वासन्ती—देव ! त्वर्यतां त्वर्यताम् । इतो जटायुशिखरस्य दक्षिणेन सीतातीर्थेन गोदावरीमवतीर्य सम्भावयतु देव्याः पुत्रकं देवः ।

---

सीतेति । इदानीम्=अधुना, अभियुज्यते=अभियोगं करोति, मत्पोषितकलभरक्षणाय कः प्रतिगजमाक्रामतीति भावः । 'नियोद्यते' इति पाठे प्रेष्यते इत्यर्थः ।

राम इति । वधूद्वितीय = भार्यासहितम् , अभिभवति = आक्रामति ?

वासन्तीति । संभ्रान्ता = सत्वरा, प्रियसख्याः सीतायाः पुत्रकगजस्य रक्षणार्थं त्वरासहितेति भावः ।

वासन्तीति । त्वर्यतां = त्वरा क्रियताम् , 'ञित्वरा सम्भ्रमे' इति धातोः

---

( नेपथ्यमें ) अहो ! बड़ा प्रमाद है, प्रमाद है ( 'सीतादेव्या स्वकरकलितै' इत्यादि पहलेका पूर्वार्द्ध श्लोक पृष्ठ १३३ का पढा जाता है । )

राम—( करुणा और उत्कण्ठाके साथ ) उसका क्या ? ( फिर नेपथ्यमें )

( 'वध्वा सार्धम्' इत्यादि उक्त श्लोकका उत्तरार्द्ध पृष्ठ १३४ का पढा जाता है । )

सीता—अब कौन उससे लड़ता है ?

राम—वह दुरात्मा कहा है ? जो पत्नीयुक्त प्रियाके पुत्रपर आक्रमण कर रहा है । (ऐसा कह कर उठते हैं । ( प्रवेश कर )

वासन्ती—( घबड़ाई हुई ) महाराज ! जल्दी कीजिए ।

सीता—हाय ! कैसे मेरी प्यारी सखी वासन्ती आ गई ?

राम—कैसे सीताकी प्रिय सखी वासन्ती आ गई ?

वासन्ती—महाराज ! शीघ्रता करें, शीघ्रता करें । यहाँ से जटायुके ( द्वारा आश्रित )

सीता—हा ताद जडाओ ? सुण्णं तुए विणा इदं जणट्ठाणम् । ( हा तात जटायो ! शून्यं त्वया विनेदं जनस्थानम् । )

रामः—अहह हृदयमर्मच्छिदः खल्वमी कथोद्घाताः ।

वासन्ती—इत इतो देवः ।

सीता—भअवदि ! सच्चं एव्व वणदेवदावि मं ण पेक्खदि । ( भगवति ! सत्यमेव वनदेवतापि मा न पश्यति । )

तमसा—अयि वत्से ! सर्वदेवताभ्यः प्रकृष्टतममैश्वर्यं मन्दाकिन्याः ।

---

भावे लोट् । इतः = अस्मात् स्थानात् , जटायुशिखरस्य = जटायो॰ = तन्नामकगृध्रराजस्य, शिखरस्य = शृङ्गस्य, जटायुना अध्युषितस्य पर्वतस्य शृङ्गस्येति भावः; दक्षिणेन = दक्षिणदिक्स्थितेन, एनप् प्रत्यय॰, 'एनपा द्वितीया' इत्यत्र 'एनपे'ति योगविभागात् 'जटायुशिखरस्य' इत्यत्र षष्ठी, सीतातीर्थेन = सीताजलाऽवतरणमार्गेण, देव्या = सीताया॰, पुत्रकं = पुत्रसदृशं, गजशावकमित्यर्थः । सम्भावयतु = संमानयतु, परित्राणेनेति भावः ।

सीतेति । तात = हे पितः ! जटायो॰ श्वशुरमित्रत्वेन पितृसमत्वात् तातेति सम्बोधनम् ।

राम इति । अमी = प्रागभिहिता , कथोद्घाताः = पुरावृत्तोपन्यासा॰, हृदयमर्मच्छिदः = हृदयमर्माणि छिन्दन्तीति = हृन्मर्मभेदका इत्यर्थ॰ ।

वासन्तीति । देवः = महाराज॰, 'राजा भट्टारको देव' इत्यमरः; इतः = अस्मात्स्थानात् , इत॰ = अत्र स्थाने, आगच्छत्विति शेष॰ ।

तमसेति । अयि = पदमिदं कोमलामन्त्रणे, भागीरथीदेव्याः = गङ्गा-

---

पर्वतकी चोटीके दक्षिण ओर सीतातीर्थ ( सीताघाट ) से गोदावरीमें उतरकर महाराज सीताके पुत्रकी रक्षा करें ।

सीता—हाय ! पिता जटायो ! आपके विना यह जनस्थान सूना हो गया है ।

राम—हाय ! ये पूर्ववृत्तके कथन हृदयके मर्मस्थलको भेदन करनेवाले हैं ।

वासन्ती—महाराज ! यहा पधारें, यहा ।

सीता—भगवति ! सचमुच ही वनदेवता भी मुझे नहीं देख रही है ।

तमसा—अरी पुत्रि ! गङ्गाजीका सामर्थ्य सब देवताओंसे बढा चढा है, इसलिये क्यों

तत्किमिति विशङ्कसे ?

सीता—तदो अणुसरह्य । ( इति परिक्रामति । ) ( ततोऽनुसरावः । )

रामः—( परिक्रम्य ) भगवति गोदावरि ! नमस्ते ।

वासन्ती—( निरूप्य । ) देव ! मोदस्व विजयिना वधूद्वितीयेन देव्याः पुत्रकेण ।

रामः—विजयतामायुष्मान् ।

सीता—अह्महे, ईदिसो मे पुत्तओ संवुत्तो । ( अहो, ईदृशो मे पुत्रकः संवृत्तः । )

रामः—हा देवि ! दिष्ट्या वर्धसे ।

---

देव्याः, ऐश्वर्यं = प्रभुत्वं, सर्वदेवताभ्यः = सपूर्णदेवेभ्यः, 'पञ्चमी विभक्ते' इति पञ्चमी, प्रकृष्टतमम् = अतिशयेन प्रकृष्टम्, उत्कृष्टतममित्यर्थः, 'अतिशायने तमविष्ठनौ' इति तमप्प्रत्यय । तत् = तस्माद्धेतोः, किमिति = किमर्थं, विशङ्कसे = आर्यपुत्रवासन्त्यादयो मा पश्येयुरिति आशङ्कस इति भावः ।

सीतेति । ततः = तस्मात्, अदृश्यत्वाद्धेतोरित्यर्थः, अनुसराव = आर्यपुत्रवासन्त्योरनुसरणं कुर्व इति भाव. ।

वासन्तीति । निरूप्य = दृष्ट्वा । वधूद्वितीयेन = भार्यान्वितेन, पुत्रकेण = कृतकपुत्रेण, मोदस्व = हृष्टो भव ।

सीतेति । ईदृशः = एतादृशः, बलशालीत्यर्थः ।

राम इत्ति । दिष्ट्या = भाग्येन ।

---

शङ्का करती हो ?

सीता—तब हमलोग इनके पीछे चलें । ( ऐसा कहकर चलती हैं । )

राम—( चलकर ) भगवति गोदावरि ! आपको नमस्कार है ।

वासन्ती—(अच्छी तरह देखकर) महाराज ! भार्यासे युक्त विजयी सीताके अनुकम्पित पुत्रसे आप प्रसन्न हों ।

राम—चिरजीव विजयी प्राप्त करे ।

सीता—अरे ! मेरा पुत्र ऐसा हो गया ?

राम—हा देवि ! भाग्यसे बढ रही हो ।

येनोद्गच्छद्बिसकिसलयस्निग्धदन्ताङ्कुरेण
व्याकृष्टस्ते सुतनु ! लवलीपल्लवः कर्णमूलात्।
सोऽयं पुत्रस्तव मदमुचां वारणानां विजेता
यत्कल्याणं वयसि तरुणे भाजनं तस्य जातः ॥ १५ ॥

सीता—अविउत्तो दाणिं दीहाऊ इमाए सोह्मदंसणाए होदु। ( अवियुक्त इदानीं दीर्घायुरनया सौम्यदर्शनया भवतु। )

---

येनेति। हे सुतनु। उद्गच्छद्बिसकिसलयस्निग्धदन्ताङ्कुरेण येन ते कर्णमूलात् लवलीपल्लवः व्याकृष्टः, सोऽयं तव पुत्रो मदमुचा वारणाना विजेता ( सन् ) तरुणे वयसि यत् कल्याणं तस्य भाजन जात इत्यन्वयः। हे सुतनु = शोभना तनूः शरीरं यस्याः सा तत्सम्बुद्धौ = हे सुन्दरि। 'स्त्रिया मूर्तिस्तनुस्तनूः' इत्यमरः, 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वत्वम्। उद्गच्छद्बिसकिसलयस्निग्धदन्ताङ्कुरेण = बिसकिसलये इव स्निग्धौ बिसकिसलयस्निग्धौ, 'मृणालं बिसम्' इति, 'पल्लवोऽस्त्री किसलयम्' इति चाऽमरः, 'उपमानानि सामान्यवचनैः' इति, समासः। उद्गच्छन्तौ=प्ररोहन्तौ, बिसकिसलयस्निग्धौ=मृणालपल्लवकोमलौ, दन्ताऽङ्कुरौ=दशनाऽङ्कुरौ यस्य तेन, येन = करिशावकेन, ते = तव, सीताया इत्यर्थः। कर्णमूलात्= श्रवणमूलात्, 'कर्णपूरात्' इति पाठे-'श्रोत्राऽऽभरणात्' इत्यर्थः, लवलीपल्लवः = सुगन्धमूलाकिसलयः, 'लवली सुगन्धमूले'ति राजनिघण्टुः। व्याकृष्टः = गृहीतः, सः = तादृशः, अयं = पुरो दृश्यमानः, तव = सीतायाः, पुत्रः = गजशावकः, ( साम्प्रतम् ), मदमुचा = दानजलस्राविणा, वारणाना = हस्तिना, विजेता = विजयकर्ता ( सन् ), तरुणे = नूतने, वयसि = अवस्थाया, तारुण्ये इति भावः। यत् कल्याणं = भद्रं महाबलशालित्वं वध्वाऽनुगम्यमानत्वं च, भवतीति शेषः। तस्य = तादृग्रूपस्य कल्याणस्य, भाजनं=पात्रं, जातः=सम्पन्नः। अत्रोपमाऽलङ्कारः। मन्दाक्रान्ता वृत्तम् ॥ १५ ॥

सीतेति। दीर्घायुः = आयुष्मान्, अनया = दृश्यमानया, सौम्यदर्शनया = प्रियविलोकनया, स्वभार्यया करिण्येत्यर्थः। अवियुक्तः = अविरहितः भवतु—भूयात्।

---

हे सुन्दरि ! उगते हुए मृणालके पल्लवोंकी तरह कोमल दो दन्ताङ्कुरोंसे युक्त जिस हाथीके बच्चेने पहले तुम्हारे कर्णमूलसे लवलीलताका पल्लव खींचा था, वही तुम्हारा पुत्र अब मदजल गिरानेवाले हाथियोंको जीतनेवाला होता हुआ युवावस्था ( जवानी ) में जो कल्याण है, उसका पात्र हो गया है ॥ १५ ॥

सीता—अब यह चिरायु इस प्रियदर्शनवाली भार्याके वियोगसे रहित हो।

रामः—सखि वासन्ति ! पश्य पश्य । कान्तानुवृत्तिचातुर्यमपि शिक्षितं वत्सेन ।

लीलोत्खातमृणालकाण्डकवलच्छेदेषु संपादिताः
पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः ।
सेकः शीकरिणा करेण विहितः कामं विरामे पुन-
र्यत्स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम् ॥ १६ ॥

---

राम इति । वत्सेन=करिणा, कान्ताऽनुवृत्तिचातुर्यम्=कान्तायाः=प्रियायाः, करिण्या इत्यर्थः, अनुवृत्तिः=अनुवर्तनम्, इच्छाऽनुवर्तनमित्यर्थः, तत्र चातुर्यम्=पाटवम् ।

लीलेति । यत् स्नेहात् लीलोत्खातमृणालकाण्डकवलच्छेदेषु पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः सम्पादिताः, शीकरिणा करेण कामं सेको विहितः, पुनः विरामे अनरालनालनलिनीपत्रातपत्रं धृतम् इत्यन्वयः । यत्=यस्मात्, स्नेहात्=प्रेम्णः, लीलोत्खातमृणालकाण्डकवलच्छेदेषु = लीलया = अनायासेन, उत्खाताः = उद्धृताः, ये मृणालकाण्डाः = विसस्तम्बाः, ते एव कवलाः ग्रासाः तेषां छेदेषु = अवसानेषु, पुष्यत्पुष्करवासितस्य = पुष्यन्ति=विकसन्ति यानि पुष्कराणि=कमलानि, तैर्वासितं=सुरभितं तस्य, एतादृशस्य पयसः=जलस्य, गण्डूषसंक्रान्तयः=मुखपूरितजलांऽशसञ्चाराः, सम्पादिताः=निर्व्यूढाः, कृता इत्यर्थः । पूर्वं भक्षणाऽर्थं मृणालग्रासेषु दत्तेषु मध्ये पानार्थं गण्डूषा अपि दत्ता इति भावः । एवं शीकरिणा = जलविन्दुयुक्तेन, 'शीकरोऽम्बुकणाः स्मृताः' इत्यमरः, करेण= शुण्डादण्डेन, कामं = यथेष्टं, 'कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् ।' इत्यमरः, सेकः = सेचनं, विहितः = सम्पादितः । पुनः = भूयः, विरामे = सेचनाऽवसाने, अनरालनालनलिनीपत्रातपत्रम्=अनरालम्=अवक्रम्, सरलमित्यर्थः, नालं = कमलदण्डो यस्य तत्, एतादृशं यत् नलिनीपत्रम्=कमलपत्रम् तदेव आतपत्रम्=छत्रम्, धृतम् = करिणीशरीरे आच्छादितमित्यर्थः, एतेन व्यवहारेण कान्ताऽनुवृत्तिचातुर्यं व्यज्यत इति भावः । अत्र नलिनीपत्रे आतपत्रत्वारोपणेन रूपकाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥

---

राम—सखि वासन्ती ! देखो, देखो । बच्चेने प्रियाको प्रसन्न रखनेकी चतुरता भी सीखी है।

अनायास उखाड़े गये मृणालकाण्डरूप ( कमलदण्डमय ) ग्रासोंके अन्तमें खिले हुए कमलोंसे सुगन्धित अपने मुखके जलको हथिनीके मुखमें सक्रान्त किया ( छोड़ा ), जलकी बूँदें छोड़नेवाली सूँड़से खूब सेचन भी कर दिया और पीछेसे सीधा दण्डवाले कमलपत्ररूप छत्रको भी धूप हटानेके लिए धारण कर लिया है ॥ १६ ॥

सीता—भअवदि तमसे ! अयं दाव ईरिसो जादो । दे उण ण आ-णामि, एत्तिएण कालेण कुसलवा कीरिसा संवुत्तेति ! ( भगवति तमसे ! अयं तावदीदृशो जातः । तौ पुनर्न जानाम्येतावता कालेन कुशलवौ कीदृशौ संवृत्ताविति ? ) ।

तमसा—यादृशोऽयं, तादृशौ तावपि ।

सीता—ईरिसह्मि मन्दभाइणी,जाए ण केवलं अज्जउत्तविरहो पुत्तविरहो वि । ( ईदृश्यस्मि मन्दभागिनी यस्या० न केवलमार्यपुत्रविरह , पुत्रविरहोऽपि । )

तमसा—भवितव्यतेयमीदृशी ।

सीता—किंवा मए पसूदाए ? जे एआरिसं मह पुत्तआणं ईसिविरलधवलदसणकुड्मलुज्जलं अणुबद्धमुद्धकाअलीविहसिदं णिच्चुज्जलं मुहपुण्डरीअजुअलं ण परिचुम्बिअं अज्जउत्तेण । ( किं वा मया प्रसूतया ? येनैतादृशं

---

सीतेति । अय = करिशावक०, ईदृश = तारुण्यबलसम्पन्नः । कीदृशौ = किंविधौ, तारुण्येन बलेन च सम्पन्नौ न वेति भाव० ।

तमसेति । अय = कलभ०, यादृश० = तारुण्येन बलेन च सम्पन्न०, तावपि = कुशलवावपि, तादृशौ = तारुण्येन बलेन च सम्पन्नाविति भाव० ।

सीतेति । आर्यपुत्रविरह० = रामचन्द्रवियोग०, मन्दभागेति वक्तव्ये मन्दभागिनीति कथन स्वमन्दभाग्यस्य नित्ययोगद्योतनाऽर्थमवसेयम् ।

तमसेति । भवितव्यता = भाग्यम् ।

सीतेति । प्रसूतया = प्रसवकर्त्र्या, मम पुत्रोत्पादनं निष्फलमित्यर्थः । नैष्फल्यं प्रतिपादयति—येनेति । येन = कारणेन, पुत्रकयोः = अनुकम्पितपुत्रयोः, कुशलवयोरित्यर्थः, 'अनुकम्पायाम्' इति कन् , ईषद्विरलधवलदशनकुड्मलोज्ज्वलम् = दशनाः कुड्मला इवेति दशनकुड्मलाः 'उपमितं व्याघ्रादिभि० सामान्याऽप्रयोगे' इति समास , 'कुड्मलो मुकुलोऽस्त्रियाम्' इत्यमरः, ईषद्विरला० = नाऽतिनिबिडाः,

---

सीता—भगवति तमसे ! यह ऐसा हो गया है । उन दोनोंको नहीं जानती हूं, कि इतने समयमें कुश और लव कैसे हो गये होंगे ?

तमसा—जैसा यह है, वैसे वे भी हो गये होंगे।

सीता—मैं ऐसी मन्दभाग्यवाली हूं, जिसे केवल आर्यपुत्रका ही विरह नहीं है, बल्कि पुत्रविरह भी है ।

तमसा—भाग्य ही ऐसा है ।

सीता—मेरे पुत्रोंको पैदा करनेसे क्या ? जिससे कि मेरे दोनों पुत्रोंके विरले, सफेद तथा

मम पुत्रकयोरीषद्विरलधवलदशनकुड्मलोज्ज्वलमनुबद्धमुग्धकाकलीविहसितं नित्योज्ज्वलं मुखपुण्डरीकयुगलं न परिचुम्बितमार्यपुत्रेण । )

तमसा—अस्तु देवताप्रसादात् ।

सीता—भअवदि तमसे ! एदिणा अवच्चसंसुमरणेण उस्ससिदपण्हुदत्थणी दाणिं वाणं पिदुणो संणिहाणेन खणमेत्तं ससारिणी संवुत्तह्मि । ( भगवति तमसे ! एतेनापत्यसंस्मरणेनोच्छ्वसितप्रस्नुतस्तनी इदानीं वत्सयोः पितुः सन्निधानेन क्षणमात्रं संसारिणी संवृत्तास्मि । )

---

धवला = शुक्लाः, ये दशनकुड्मला = दन्तमुकुलाः, तैरुज्ज्वल = निर्मलम्, पुस्तकान्तरेषु 'कोमलधवलदशनोज्ज्वलकपोलम्' इति पाठस्तत्र–तयाऽभिहिताः = कोमला धवलाश्च ये दशनास्तैरुज्ज्वलौ कपोलौ = गण्डौ यस्य तत् इत्यर्थः, अनुबद्धमुग्धकाकलीविहसितम् = काकली च विहसितं च काकलीविहसिते, 'काकली तु कले सूक्ष्मे ध्वनौ तु मधुराऽस्फुटे ।' इत्यमरः, अनुबद्धे = निरन्तरं सम्बद्धे, मुग्धे = मनोहरे, काकलीविहसिते = अस्पष्टमधुरशब्दहास्ये यत्र तत्, नित्योज्ज्वलं = सततविशदं, पुस्तकान्तरेषु 'निबद्धकाकशिखण्डकम्' इति पाठस्तत्र = निबद्धाः = धृताः, काकशिखण्डका = काकपक्षा येन तत्, 'काकपक्षः शिखण्डकः' इत्यमरः, एतादृशं मुखपुण्डरीकयुगलम् = वदनपद्मयुग्मम्, आर्यपुत्रेण=पत्या रामेणेत्यर्थः ।

तमसेति । देवताप्रसादात् = देवतानाम् = देवानाम्, प्रसादात् = अनुग्रहात्, अस्तु = स्तात्, रामेण त्वत्पुत्रमुखकमलं चुम्बितं स्यादित्यर्थः, आशिषि लिङ्लोटौ' इति आशिषि लोट् तातङो वैकल्पिकत्वादत्र तदभावः ।

सीतेति । एतेन = कालसन्निकृष्टेन, अपत्यसंस्मरणेन = अपत्ययोः = पुत्रयोः, कुशलवयोरित्यर्थः, संस्मरणेन=ध्यानेन, उच्छ्वसितप्रस्नुतस्तनी=उच्छ्वसितौ=वेपमानौ, प्रस्नुतौ=दुग्धनिष्यन्दिनौ, स्तनौ=पयोधरौ यस्याः सा, वत्सयोः = अपत्ययोः, पितुः = जनकस्य, रामचन्द्रस्येत्यर्थः, सन्निधानेन = सामीप्येन, क्षणमात्रं = कश्चि-

---

पुष्पकी कलियोंके सदृश दाँतोंसे उज्ज्वल, निरन्तर सम्बद्ध मनोहर अस्पष्ट मधुर शब्द और हास्यसे युक्त और नित्य उज्ज्वल श्वेत कमलोंके सदृश मुखोंको आर्यपुत्रने नहीं चूमा ।

तमसा—देवताके अनुग्रहसे ऐसा ही हो ।

सीता—भगवति तमसे ! सन्तानोंकी इस स्मृतिसे कम्पमान मेरे पयोधरोंसे दूध बहने लगा है और उन बच्चोंके पिता ( राम ) की उपस्थितिसे कुछ समय तक मैं ससारिणी ( गार्हस्थ्यसपन्न ) हो गई हूं ।

तमसा—किमत्रोच्यते ? प्रसवः खलु प्रकृष्टपर्यन्तः स्नेहस्य । परं चैतदन्योन्यसंश्लेषणं पित्रोः ।

अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात् ।
आनन्दग्रन्थिरेकोऽयमपत्यमिति पठ्यते ॥ १७ ॥

वासन्ती—इतोऽपि देवः पश्यतु ।

अनुदिवसमवर्धयत्प्रिया ते यमचिरनिर्गतमुग्धलोलबर्हम् ।

---

त्कालं यावत्, संसारिणी = गार्हस्थ्यसम्पन्ना, पत्यु सन्निधावपत्यस्मरणेन गृहान्निर्वासिताऽपि गृहस्थेव संजाताऽस्मीति भावः ।

तमसेति । अत्र=अस्मिन् विषये । प्रसव =अपत्यम्, स्नेहस्य = वात्सल्यस्य, प्रकृष्टपर्यन्तः = सातिशयं परा कोटि, परं च = अपरं च, अन्यच्चेति भावः, एतत् = अपत्यं, पित्रोः = मातापित्रोः माता च पिता चेति पितरौ, तयो, 'पिता मात्रा' इत्येकशेष, 'मातापितरौ पितरौ मातापितरौ प्रसूजनयितारौ ।' इत्यमरः, अन्योन्यसंश्लेषणं=परस्परचित्तानुबन्धनम् ।

अन्तःकरणेति । दम्पत्योः अन्तःकरणतत्त्वस्य स्नेहसंश्रयात् अयमेक आनन्दग्रन्थिः अपत्यमिति पठ्यत इत्यन्वयः । दम्पत्योः = जाया च पतिश्च दम्पती, तयोः = जायापत्यो, अन्तःकरणतत्त्वस्य = हृदयवस्तुनः, स्नेहसंश्रयात् = प्रीतिसंश्रयणात्, अयम्=एष, एकः=अद्वितीय, आनन्दग्रन्थिः=सुखग्रन्थिः, अपत्यमिति= सन्तानस्वरूपः, पठ्यते = परिभाष्यते, 'बध्यते' इति क्वाचित्कः पाठस्तत्र-'अपत्यमिति एक आनन्दग्रन्थिः बद्ध्यते' = इत्यन्वय, बद्ध्यते=ग्रथ्यत इत्यर्थः ॥१७॥

अनुदिवसमिति । अचिरनिर्गतमुग्धलोलबर्हं यं ते प्रिया अनुदिवसम् अवर्धयत्, स एष शिखण्डी वधूसखः सन् कदम्बे उच्छिखो मणिमुकुट इव नदति इत्यन्वयः । अचिरनिर्गतमुग्धलोलबर्हम् = अचिरनिर्गतम् = प्रत्यग्रनिर्गतम्,

---

तमसा—इसमें क्या कहना है ? सन्तान स्नेहकी पराकाष्ठा, और माता-पिताका परस्पर चित्तका अनुबन्ध है ।

पत्नी और पतिकी हृदयरूप वस्तुके प्रेमके आश्रयसे यह एक सुखकी ग्रन्थि ( गाठ ) ही 'सन्तान' कही जाती है ॥ १७ ॥

वासन्ती—इस तरफ भी महाराज देखें ।

नये निकले हुए सुन्दर और चञ्चल पूँछवाले जिसको आपकी प्रिया सीताने प्रतिदिन

मणिमुकुट इवोच्छिखः कदम्बे नदति स एष वधूसखः शिखण्डी १८

सीता—( सकौतुकस्नेहास्रम् । ) एसो सो । ( एष सः । )

रामः—मोदस्व वत्स ! वयमद्य वर्धामहे * ।

सीता—एव्वं होदु । ( एवं भवतु । )

रामः—

भ्रमिषु कृतपुटान्तर्मण्डलावृत्तिचक्षुःप्रचलितचटुलभ्रूताण्डवैर्मण्डयन्त्या ।

---

मुग्धम् = सुन्दरम्, लोलम् = चञ्चलम्, वर्हम् = पिच्छं यस्य तम् 'पिच्छवर्हे नपुंसके' इत्यमरः, यं = मयूरं ते = तव, प्रिया = वल्लभा, सीतेत्यर्थः, अनुदिवसं = प्रतिदिवसं, वीप्सायामव्ययीभावः । अवर्धयत् = अपोषयत्, सः = प्रागवलोकितः, एषः = पुरः स्थितः, शिखण्डी=मयूरः, वधूसखः =वध्वाः सखा = पत्नीसहचरः सन्, 'राजाऽहः सखिभ्यष्टच्' इति समासान्तष्टच्, कदम्बे = कदम्बवृक्षे, उच्छिखः — उद्गताः शिखाः = किरणाः यस्य सः, मणिमुकुट इव = मणिखचितः मुकुटः इति मणिमकुटः इव = रत्नकिरीटः इव, 'शाकपार्थिवादीनां सिद्धय उत्तरपदलोपस्योपसंख्यानम्' इति मध्यमपदलोपी समासः, नदति = कूजति, केकां करोतीति भावाऽर्थः । 'अतरुणमदताण्डवोत्सवान्ते स्वयमचिरोद्गतमुग्धलोलबर्हं' इति पुस्तकान्तरपाठस्तत्र–अतरुणमदताण्डवोत्सवाऽन्ते नदति इत्यन्वयः । अतरुणः = प्रौढः यः मदः, तेन ताण्डवोत्सवस्य = पुरुषकर्तृकनृत्योत्सवस्य, अन्ते = अवसाने नदति इत्यर्थः कार्यः । उपमाऽलङ्कारः । पुष्पिताग्रा वृत्तम्—अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा । इति तल्लक्षणम् ॥ १८ ॥

सीतेति । एषः = पुरः स्थितः, सः = मया वर्द्धितपूर्वः, मयूर इति शेषः ।

राम इति । मोदस्व = हर्षं कुरु, वर्धामहे = एधामहे, पुत्रवत्पालितस्य वधूसनाथस्य तव आनन्दाऽतिशयसम्पादितताण्डवोत्सवदर्शनादिति भावः ।

भ्रमिष्विति । भ्रमिषु कृतपुटान्तर्मण्डलावृत्तिचक्षुः प्रचलितचटुलभ्रू-

---

चढ़ाया था, यह वही मोर भाया ( मोरनी ) को साथमें लेकर कदम्बके पेड़पर ऊँचे किरणों वाले मणियोंसे जड़े हुए किरीटकी तरह होकर शब्द कर रहा है ॥ १८ ॥

सीता—( उत्कण्ठा और स्नेहके आसू के साथ ) यह वही है ।

राम—बेटा ! प्रसन्न रहो । हम आज बढ़ रहे हैं ।

सीता—ऐसा ही हो ।

राम—भ्रमणोंमें नेत्राऽवरणोंके भीतर मण्डलाऽऽकारसे भ्रमण करनेवाले नेत्रको अत्यन्त

---

* वर्त्तामहे' इति पाठान्तरम् ।

करकिसलयतालैर्मुग्धया नर्त्यमानं सुतमिव मनसा त्वां वत्सलेन स्मरामि ।

हन्त, तिर्यञ्चोऽपि परिचयमनुरुन्धन्ते ।

कतिपयकुसुमोद्गमः कदम्बः प्रियतमया परिवर्धितोऽयमासीत् ।

---

ताण्डवैः मण्डयन्त्या मुग्धया करकिसलयतालैः नर्त्यमानं त्वां सुतमिव वत्सलेन मनसा स्मरामि इत्यन्वयः । अभितु = सीता परितो मण्डलतो भ्रमणेषु, कृतपुटाऽन्तर्मण्डलावृत्ति = कृता=विहिता, पुटयोः = नयनाच्छादनचर्मणो , अन्तः = मध्ये मण्डलावृत्तिः = मण्डलाकारेण भ्रमणम् , येन तत् एतादृशं यत् , चक्षुः = नयनं तत् ; प्रचलितचटुलभ्रूताण्डवैः = प्रचलिते = अतिचञ्चले, चटुले = सुन्दरे, 'चतुरे' इति पाठे—लीलानिपुणे, एतादृश्यौ ये भ्रुवौ तयोः ताण्डवैः = नृत्याकारेण चालनैः, मण्डयन्त्या=भूषयन्त्या, मुग्धया = सुन्दर्या, सीतयेत्यर्थः, करकिसलयतालैः=करौ= हस्तौ, किसलये = पल्लवे इवेति करकिसलये, तयोस्तालाः = कालक्रियामानशब्दाः, तैः, नर्त्यमानं = कार्यमाणनृत्यम् , 'नृती गात्रविक्षेपे' इत्यस्माद्धातोः णिजन्तात् कर्मणि शानच् , त्वा = मयूरं, सुतमिव = पुत्रमिव, वत्सलेन = स्निग्धेन, 'स्निग्धस्तु वत्सल' इत्यमरः, मनसा = चित्तेन, स्मरामि = चिन्तयामि । अत्रोपमाऽलङ्कारः । मालिनी वृत्तम् ॥ १९ ॥

हन्तेति । हन्त = हर्षद्योतकमव्ययमिदम् , तिर्यञ्चोऽपि=पशुपक्षिणोऽपि, परिचयं = संस्तवम् , 'संस्तवः स्यात्परिचय' इत्यमरः, अनुरुन्धन्ते = अनुसरन्ति, 'अनुरुध्यन्ते' इति दैवादिकपाठेऽप्ययमेवाऽर्थः ।

कतिपयेति । यः कदम्बः प्रियतमया परिवर्द्धितः ( सन् ) कतिपयकुसुमोद्गम आसीत् इति श्लोकपूर्वार्द्धाऽन्वयः । यः, कदम्बः = नीपः, प्रियतमया = सीतया, परिवर्द्धितः = कृतसंवर्द्धनः ( सन् ) कतिपयकुसुमोद्गमः=कतिपयानां = कियतां, स्वल्पानामित्यर्थः, कुसुमानाम् = पुष्पाणाम् , उद्गमः = उत्पत्तिः यस्मिन् सः, एतादृश आसीत् = अभूत्—

---

चञ्चल और सुन्दर भौंहोंके नृत्योंसे अलङ्कृत करती हुई सुन्दरी सीताके द्वारा पल्लवसदृश हाथोंके तालोंसे नचाये जाते हुए तुझको पुत्रकी तरह स्निग्ध मनसे स्मरण करता हूं ॥ १९ ॥

वाह ! पशुपक्षी भी परिचयका अनुसरण करते हैं ।

जो कदम्ब सीतासे बढाया जाता हुआ कुछ विकसित पुष्पोंसे युक्त हो गया था—

सीता—( सास्रम् । ) सुष्ठु पच्चहिजाणिद अज्जउत्तेण । ( सुष्ठु प्रत्यभिज्ञातमार्यपुत्रेण । )

राम:—

स्मरति गिरिमयूर एष देव्याः स्वजन इवात्र यतः प्रमोदमेति ॥ २० ॥

वासन्ती—अत्र तावदासनपरिग्रहं करोतु देवः । एतत्तु देवस्याश्रमम् ।

( राम उपविशति । )

वासन्ती—

नीरन्ध्रबालकदलीवनमध्यवर्ति

---

सीतेति । प्रत्यभिज्ञातम् = ज्ञातविषयकं ज्ञानं सम्पादितम्, अयं स एवेति ज्ञात इत्यर्थः ।

स्मरतीति । एष गिरिमयूर देव्या स्मरति, यतः अत्र स्वजन इव प्रमोदम् एति इत्युत्तरार्द्धश्लोकाऽन्वयः । एष = पुरोवर्ती, गिरिमयूर = पर्वतीयः शिखण्डी, देव्याः = सीतायाः, सीतामित्यर्थ, 'अधीगर्थदयेशा कर्मणि' इति कर्मणि षष्ठी, स्मरति = स्मरणं करोति, यत = यस्माद्धेतो, अत्र = अस्मिन् पूर्वोक्ते कदम्बवृक्ष इत्यर्थ, स्वजन इव = आत्मबान्धव इव, प्रमोदं = हर्षम्, एति = प्राप्नोति, हर्षाऽनुभवं करोतीत्यर्थ । कदम्बवृक्षो मयूरश्चोभावपि सीतया संवर्द्धितौ, अत भ्रातृसन्निभं कदम्बवृक्षं प्राप्य 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकं भवति' इति नयेन आवयोर्द्वयोरपि सीतैव मातेति सीतास्मरणेन मयूरो हृष्यति, अत 'स्तिर्यञ्चोऽपि परिचयमनुरुन्धन्ते' इति समर्थितं भवतीति भावः । अत्रोपमाऽलङ्कारः । पुष्पिताग्रा वृत्तम् ॥ २० ॥

वासन्तीति । देवः = महाराज ।

नीरन्ध्रेति । कान्तासखस्य ते नीरन्ध्रबालकदलीवनमध्यवर्ति शयनीय-

---

सीता—( आँखोंमें आँसू भर कर ) आर्यपुत्रने खूब पहचाना ।

राम—यह पर्वतका मयूर सीताजीको याद कर रहा है, क्योंकि इस पेड़में बान्धवके समान हर्ष प्राप्त कर रहा है ॥ २० ॥

वासन्ती—महाराज यहांपर आसनग्रहण करें ( विराजमान होवें ) । यह तो महाराज का आश्रम है ।

( राम बैठते हैं । )

वासन्ती—सीताके सहचर आपका घने और सुकुमार केलोंके वनके बीच में स्थित यह

कान्तासखस्य शयनीयशिलातलं ते ।
अत्र स्थिता तृणमदाद्वनगोचरेभ्यः
सीता ततो हरिणकैर्न विमुच्यते स्म ॥ २१ ॥

रामः—इदमशक्यं द्रष्टुम् । ( इत्यन्यतो रुदन्नुपविशति । )

सीता—सहि वासन्ति ! किं तुए किदं अज्जउत्तस्स मह अ एदं दंसअन्तीए ! हद्धी हद्धी ! सो एव्व अज्जउत्तो । तं एव्व पञ्चवडीवणम् । सा एव्व पिअसही वासन्दी, दे एव्व विविहविस्सम्भसक्खिणो गोदावरीकाणणुद्देसा, दे एव्व जादणिव्विसेसा मिअपक्खिणो पाअवा अ । मह उण मन्दभाइणीए दीसन्तं वि सव्वं एव्व एदं णत्थि । ईरिसो जीवलोअस्स परिणामो संवुत्तो । ( सखि वासन्ति ! किं त्वया कृतमार्यपुत्रस्य मम चैतद्दर्शय-

---

शिलातलम् ( अस्ति ), अत्र स्थिता सीता वनगोचरेभ्यः तृणम् अदात् , ततो हरिणकैः न विमुच्यते स्म इत्यन्वयः । कान्तासखस्य=सीतासहचरस्य, ते=तव, रामस्येत्यर्थः, नीरन्ध्रबालकदलीवनमध्यवर्ति=निर्गतं रन्ध्रम्=छिद्रम् , याभ्यस्ता नीरन्ध्राः= छिद्रस्याऽप्यवकाशाऽभावादतीव निबिडा इति भावः, ताश्च ता बालकदल्यः = सुकुमाररम्भाः, तासां वनं = विपिनं, तस्य मध्ये = अन्तरे, वर्तते तच्छीलम् , 'नीरन्ध्रबाले'ति पदद्वयस्य स्थाने 'एतत्तदेवे'ति पुस्तकान्तरपाठः, शयनीयशिलातलं = शयनप्रस्तरतलमस्तीति शेषः । अत्र=अस्मिन् , शयनीयशिलातल इत्यर्थः, स्थिता = विद्यमाना, सीता = जानकी, वनगोचरेभ्यः = आरण्यकेभ्यः, मृगेभ्य इति भावः । तृणं = घासम् , अदात्=दत्तवती, ततः=तस्मात् तृणदानाद्धेतोः, हरिणकैः= अनुकम्पिता हरिणा हरिणकास्तैः = मृगकैः, 'अनुकम्पायाम्' इति कन्प्रत्ययः, न विमुच्यते स्म = न त्यज्यते स्म, एतदिति शेषः । एतेन तिरश्चामपि परिचयाऽनुरोधित्वं समर्थ्यते । 'वनगोचरेभ्य' इत्यत्र 'बहुशो यदेभ्यः' इति पाठान्तरन्तत्र— बहुशः = अनेकश इत्यर्थः । अत्र वसन्ततिलका वृत्तम् ॥ २१ ॥

राम इति । इदं = शयनीयशिलातलम् । अन्यतः = अन्यस्मिन् स्थाने ।

सीतेति । एतत् = शयनीयशिलातलम् । विविधविस्रम्भसाक्षिणः = अनेक-

---

शयन करने योग्य शिलातल है । यहाँपर बैठी हुई सीता वनमें रहनेवाले मृगोंको घास देती थीं, इसीसे इसको मृगलोग नहीं छोडते थे ॥ २१ ॥

राम—यह नहीं देखा जा सकता है । ( ऐसा कह कर दूसरी ओर बैठते हैं । )

सीता—सखि वासन्ति ! आर्यपुत्रको और मुझको यह स्थान दिखाकर तुमने क्या

न्त्या । हा धिक् हा धिक् । स एवार्यपुत्रः, तदेव पञ्चवटीवनम्, सैव प्रियसखी वासन्ती, त एव विविधविस्रम्भसाक्षिणो गोदावरीकाननोद्देशाः, त एव जातनिर्विशेषा मृगपक्षिणः पादपाश्च । मम पुनर्मन्दभाग्याया दृश्यमानमपि सर्वमेवैतन्नास्ति । ईदृशो जीवलोकस्य परिणामः संवृत्तः । )

वासन्ती—सखि सीते ! कथं न पश्यसि रामभद्रस्यावस्थाम् ।

नवकुवलयस्निग्धैरङ्गैर्ददन्नयनोत्सव
सततमपि नः स्वेच्छादृश्यो नवो नव एव सः ।
विकलकरणः पाण्डुच्छायः शुचा परिदुर्बलः
कथमपि स इत्युन्नेतव्यस्तथापि दृशोः प्रियः ॥ २२ ॥

---

विश्वस्तव्यापाराणां साक्षात्कर्तारः, गोदावरीकाननोद्देशाः=गोदावर्याख्यनदीवनप्रदेशाः, जातनिर्विशेषाः = जातेभ्यः = उत्पन्नेभ्यः, पुत्रेभ्य इत्यर्थः, निर्विशेषाः = भेदरहिताः, पुत्रवल्लालिता इति भावः । दृश्यमानमपि=विलोक्यमानमपि, सर्वं=सकलम्, एतत्= पञ्चवटीवनादिकम्, नास्ति=न वर्तते, अविद्यमानमिव भवतीति भावः । ईदृशः=एतादृशः, जीवलोकस्य=मनुष्यलोकस्य, परिणामः=परिणतिः, संवृत्तः=संजातः, ममेति शेषः ।

नवेति । नवकुवलयस्निग्धैः अङ्गैः नयनोत्सवं ददत् सततमपि नः स्वेच्छादृश्यः सः नवो नव एव ( आसीत्, साम्प्रतं तु ) शुचा विकलकरणः पाण्डुच्छायः परिदुर्बलः स इति कथमपि उन्नेतव्यः, तथाऽपि दृशोः प्रिय इत्यन्वयः । नवकुवलयस्निग्धैः = नूतननीलकमलचिक्कणैः, 'कुवलयदलस्निग्धैः' इति पाठे नीलकमलपत्रचिक्कणैरित्यर्थः, अङ्गैः = पाणिपादादिभिरवयवैः, नयनोत्सवं = नेत्रानन्दम्, ददत् = वितरन्, 'ददौ' इति पाठे दत्तवानित्यर्थः । सततमपि = सर्वदैव, नः = अस्माकं, स्वेच्छादृश्यः = आत्माकाङ्क्षोत्तरमेवदर्शनीयः, सुलभदर्शनः इति भावः, तथा च सः = पूर्वोऽवलोकितो रामः, सुलभदर्शनोऽपि, नवो नव एव = नूतनो नूतन एव, प्रतिक्षणं भिन्नरूप एवेत्यर्थः, 'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं

---

किया ? हाय ! धिक्, हाय ! धिक्, वही आर्यपुत्र हैं, वही पञ्चवटी वन है, वही प्रियसखी वासन्ती हैं, वे ही अनेक विश्वस्त कार्योंके साक्षी गोदवरीके वनप्रदेश हैं और वे ही पुत्रके सदृश पशु, पक्षी और वृक्ष भी हैं । परन्तु मुझ मन्दभागिनीके लिए यह सब देखा जाता हुआ भी नहींके बराबर है । मनुष्यलोकका ऐसा परिणाम हो गया ।

वासन्ती—सखि सीते ! रामभद्रकी अवस्था क्यों नहीं देखती हो ?

नवीन नीलकमलोंके समान चिकने अङ्गोंसे नेत्रोंको उत्सव देते हुए निरन्तर हमलोगोंके इच्छानुसार दर्शनके योग्य होकर राम जो नये नये ही प्रतीत होते थे, परन्तु अब शोकसे

सीता—सहि ! पेक्खामि । ( सखि ! पश्यामि । )

तमसा—पश्य प्रियं भूयः ।

सीता—हा ! देव्व एसो ! मए विणा अहंवि एदेण विणेत्ति केण संभाविदं आसि ? ता मुहुत्तमेत्तं जन्मन्तरादोवि दुल्लहलद्धदंसणं बाहसलिलन्तरेषु पेक्खामि दाव वच्छलं अज्जउत्तम् । ( इति पश्यन्ती स्थिता । ) ( हा दैव ! एष मया विना अहमप्येतेन विनेति केन सम्भावितमासीत् ? तन्मुहूर्तमात्रं जन्मान्तरादपि दुर्लभलब्धदर्शनं बाष्पसलिलान्तरेषु पश्यामि तावद्वत्सलमार्यपुत्रम् । )

---

रमणीयतायाः' इत्युक्त्यनुसारादिति भावः । साम्प्रतं तु स एव रामः, शुचा = शोकेन, त्वदीयेनेति शेषः । विकलकरणः = क्षीणेन्द्रियः, पाण्डुच्छायः = धूसरकान्तिः, परिदुर्बलः = अतिशयकृशः, अतः—स इति = अयं पूर्वदृष्टो राम एवेति, कथमपि = केनाऽपि प्रकारेण, उन्नेतव्यः = अनुमेयः, तथाऽपि = एवंविधावस्थोऽपि, दृशोः = नयनयोः, प्रियः = प्रीतिजनकः, अनुपहतसौन्दर्यविशिष्टत्वाच्छोकाक्रान्त्या परिदुर्बलोऽपि रामः प्रागिव नेत्रानन्दसम्पादक एवेति भावः । अत्र लुप्तोपमाऽलङ्कारः । हरिणी वृत्तम् ॥ २२ ॥

सीतेति । पश्यामि = अवलोकयामि, अवलोकनमात्रेण कथं नाम रामस्य दुरवस्था निवारणीयेति भावः ।

तमसेति । भूयः = पुनः । अत्र 'पुत्रि !' पश्यन्ती प्रियं भूया' इति पाठान्तरम्, तत्र—भूया इति आशीर्लिङ् ।

सीतेति । एषः = आर्यपुत्र, केन = हेतुना, संभावितम् = उत्पादितम्, यद्वा केन = जनेन, संभावितम् = चिन्तितम्, जन्मान्तरादपि = अन्यस्माज्जन्मनोऽपि, दुर्लभलब्धदर्शनम् = दुर्लभं यथा स्यात्तथा लब्धं दर्शनं यस्य तम्, 'जन्मान्तरादिव अनुपलब्धदर्शना' इति पुस्तकान्तरपाठः । बाष्पसलिलान्तरेषु=बाष्पसलिलानाम् = अश्रुजलानाम्, अन्तरेषु = अवकाशेषु, अश्रुनिर्गमाऽनन्तरकालेष्वित्यर्थः ।

---

क्षीण इन्द्रियवाले, धूसर वर्णसे युक्त और बहुत ही दुर्बल होकर 'ये वे ही राम हैं' ऐसा किसी तरह पहिचाने जाते हैं, ऐसे होते हुए भी नेत्रोंको प्यारे हैं ॥ २२ ॥

सीता—सखि ! देख रही हूं ।

तमसा—प्यारेको फिर देखो ।

सीता—हा दैव ! 'ये मेरे विना और मैं भी इनके बिना रहूंगी' किसने यह सम्भावना की थी ? इस कारणसे मुहूर्तमात्र दूसरे जन्ममें भी दुःखसे पाये जाने योग्य दर्शनवाले प्रेमी आर्य-

तमसा—( परिष्वज्य सास्रम् । )

विलुलितमतिपूरैर्बाष्पमानन्दशोक-
प्रभवमवसृजन्ती पक्ष्मलोत्तानदीर्घा ।
स्नपयति हृदयेश स्नेहनिष्यन्दिनी ते
धवलमधुरमुग्धा दुग्धकुल्येव दृष्टिः ॥ २३ ॥

---

विलुलितमिति । अतिपूरैः विलुलितम् आनन्दशोकप्रभवं बाष्पम् अवसृजन्ती पक्ष्मलोत्तानदीर्घा धवलमधुरमुग्धा दुग्धकुल्या इव ते दृष्टिः स्नेहनिष्यन्दिनी ( सती ) हृदयेशं स्नपयति इत्यन्वयः । अतिपूरैः = अतिशयप्रवाहैः, विलुलितम् = विकीर्णम्, आनन्दशोकप्रभवम्=आनन्दशोकौ=हर्षमन्यू, प्रभवौ=कारणे यस्य तं, तत्र पतिदर्शनेन आनन्दस्तदीयदशाऽवलोकनेन च शोको ज्ञेयः । तादृशं बाष्पम् = अश्रु, अवसृजन्ती=उत्पादयन्ती, पक्ष्मलोत्तानदीर्घा = पक्ष्मला = प्रशस्ताऽक्षिलोमयुक्ता, उत्ताना = विस्फारिता; दीर्घा = आयता, विशेषणसमासः, विशेषणपदाना मिथः समासे विशेष्यविशेषणभावः ऐच्छिकः, 'तृष्णयोत्तानदीर्घा' इति पाठे-तृष्णया=पतिदर्शनस्य अत्युत्कण्ठयेत्यर्थः, एवं च धवलमधुरमुग्धा धवला=प्रोषितभर्तृकाणां शरीरसंस्कारस्य निषेधेन कज्जलाऽभावात् शुक्ला, मधुरा = प्रिया, 'स्वादुप्रियौ च मधुरौ' इत्यमरः, मुग्धा = सौन्दर्योपेता, पूर्ववत्, विशेषणसमासः, 'धवलबहलमुग्धा' इति पाठे बहलम् = अत्यर्थम् यथा स्यात्तथा मुग्धा = मनोहरा इत्यर्थः, । तथा दुग्धकुल्या इव = पयसः कृत्रिमनदी इव, 'कुल्याऽल्पा कृत्रिमा सरित्' इत्यमरः, ते = तव, सीतायाः इत्यर्थः, दृष्टिः = नेत्रं, स्नेहनिष्यन्दिनी = प्रेमवर्षिणी ( सती ), हृदयेशं = सर्वदैव हृदये वर्तमानं राममित्यर्थः, स्नपयति = सिञ्चति, आदन्तत्वात्पुगागमे 'ग्लास्नावनुवमां च' इति वैकल्पिको ह्रस्वः, निरन्तरविलोकनेन ते दृष्टिः स्नेहरूपजलधारया रामं स्नपयतीति भावः । अत्र उपमाप्रतीयमानोत्प्रेक्षयोः संसृष्टिः । मालिनी वृत्तम् ॥ २३ ॥

---

पुत्रको आँसू निकलनेके अनन्तर समर्थोंमें देखूँ । ( ऐसा कहकर देखती रहती है )

तमसा—( आलिङ्गन कर और आँखोंमें आँसू भरकर )

अधिक प्रवाहोंसे फैले हुए तथा आनन्द और शोकसे उत्पन्न आँसूको छोडती हुई, सुन्दर नेत्र-लोमों (पलकोंके बालों) से युक्त विस्फारित और दीर्घ, एवम् सफेद, प्रिय और सुन्दर दूधकी नहर की तरह तुम्हारी दृष्टि प्रेमकी वृष्टि करती हुई हृदयेश्वर (राम) को स्नान कराती है ॥२३॥

वासन्ती—

ददतु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्च्युतः
स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः ।
कलमविरलं रज्यत्कण्ठाः क्वणन्तु शकुन्तयः
पुनरिदमयं देवो रामः स्वयं वनमागतः ॥ २४ ॥

रामः—एहि सखि वासन्ति ! नन्वितः स्थीयताम् ।

---

ददत्विति । मधुश्च्युत तरव पुष्पै फलैश्च अर्घ्यं ददतु । स्फुटितकमलामोदप्रायाः वनाऽनिला• प्रवान्तु । रज्यत्कण्ठाः शकुन्तय• अविरलं कलं क्वणन्तु । अयं देवो रामः स्वयं पुन• इदं वनम् आगत इत्यन्वय• । मधुश्च्युतः=मधूनि=मकरन्दान्; पुष्परसानित्यर्थ•, श्च्योतन्ति=क्षरन्ति इति मधुश्च्युत• 'श्च्युतिर् क्षरणे' इत्यस्मादन्तर्भावितण्यर्थाद्धातो• कर्तरि क्विप्प्रत्यय•, एतादृशास्तरव• = वृक्षाः, पुष्पै• = कुसुमै•, फलैश्च, अर्घ्यं = पूजोपहारं, ददतु = वितरन्तु । स्फुटितकमलामोदप्राया•=स्फुटितानि=विकसितानि, यानि कमलानि=पद्मानि, तेषामामोदः=सौरभम्, प्रायः=बहुलो येषु ते तादृशा•, वनाऽनिलाः=काननवाता•, प्रवान्तु=प्रवहन्तु, रामतापाऽपनयनाऽर्थमिति भावः । रज्यत्कण्ठा• = रज्यन्तः = रागयुक्ता•, कण्ठाः= गलाः येषा ते, 'रत्युत्कण्ठाः' इति पाठे रत्या=रामप्रेम्णा, उत्कण्ठाः=उत्कण्ठिताः, उत्कण्ठाशब्दात् 'अर्श आदिभ्योऽच्' इत्यच्प्रत्ययः, अर्शआदिराकृतिगणः, एतादृशा ये शकुन्तयः=पक्षिण•, 'शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजा ।' इत्यमरः, अविरलं = निरन्तरं, कलं = मधुरं यथा स्यात्तथा, क्वणन्तु = शब्दं कुर्वन्तु, विधित्रयेऽपि वाक्यार्थहेतुत्वेनोपन्यस्यति पुनरिति । अयं = सन्निकृष्टस्थ•, देवः = महाराज•, राम• = रामचन्द्रः, स्वयम् = आत्मनैव, पुनः = भूयः, इदम् = एतत् वनम् = विपिनम् , आगतः = आयात , अस्तीति शेषः । अतो रामाऽभिनन्दनाय सर्वैरेतैर्भाव्यमिति भावः । अत्र चरणत्रयस्थान् विधीन् प्रति चतुर्थचरणवाक्यस्य रामागमनरूपस्य हेतुत्वाद्वाक्याऽर्थहेतुकं काव्यलिङ्गमलङ्कारः । हरिणी वृत्तम् ॥२४॥

राम इति । ननु = अनुनयार्थोऽयम् । इतः = अस्मिन् स्थाने ।

---

वासन्ती—मकरन्द बरसाने वाले वृक्ष फूल और फलों से अर्घ्य दें, खिले हुए कमलोंके सुगन्धवाले वनके वायु बहें, रागयुक्त कण्ठवाले पक्षी लगातार मीठी आवाज करें क्योंकि ये महाराज राम फिर स्वय वनमें आये हुए हैं ॥ २४ ॥

राम—आओ सखि वासन्ति ! यहा बैठो ।

वासन्ती—(उपविश्य सास्रम्।) महाराज ! अपि कुशलं कुमारलक्ष्मणस्य ?

राम —( अनाकर्णनमभिनीय । )

करकमलवितीर्णैरम्बुनीवारशष्पै-
स्तरुशकुनिकुरङ्गान्मैथिली यानपुष्यत् ।
भवति मम विकारस्तेषु दृष्टेषु कोऽपि
द्रव इव हृदयस्य प्रस्रवोद्भेदयोग्यः ॥ २५ ॥

वासन्ती—महाराज ! ननु पृच्छामि कुशलं कुमारलक्ष्मणस्येति ?

---

वासन्तीति । अपि = प्रश्नार्थकोऽयम् ।

राम इति । अनाकर्णनम् = अश्रवणम् । अभिनीय = अभिनयं कृत्वा, सीता स्मरणव्यग्रत्वादिति भावः ।

करेति । मैथिली करकमलवितीर्णैः अम्बुनीवारशष्पैः यान् तरुशकुनिकुरङ्गान् अपुष्यत्, तेषु दृष्टेषु प्रस्रवोद्भेदयोग्य मम हृदयस्य द्रव इव कोऽपि विकारो भवति इत्यन्वयः । मैथिली = सीता, करकमलवितीर्णैः = करौ कमले इव इति करकमले, 'उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे' इति समासः, ताभ्यां वितीर्णानि तैः करकमलवितीर्णैः = हस्तकमलदत्तैः, अम्बुनीवारशष्पैः = जलमुन्यन्नबालतृणैः, यान्, तरुशकुनिकुरङ्गान् = वृक्षपक्षिमृगान्, अत्र अम्बुना तरून्, नीवारैः पक्षिण, शष्पैः कुरङ्गानिति यथासंख्यम्, अपुष्यत् = अवर्द्धयत्; तेषु = पूर्वोक्तेषु; तरुशकुनिकुरङ्गेष्वित्यर्थः दृष्टेषु = विलोकितेषु सत्सु, प्रस्रवोद्भेदयोग्य = प्रसरणोत्पत्तियोग्य, 'प्रस्तरोद्भेदयोग्यः' इति पाठे = प्रस्तरस्य = पाषाणस्य, उद्भेदः = विदारणम्, तस्मिन् योग्य = समर्थ कार्य । मम = रामस्य, हृदयस्य = चित्तस्य, द्रव इव = आर्द्रत्वमिव, कोऽपि = अनिर्वचनीय, विकारः = विकृतिः, सीताविरहजनितेति शेष., भवति = उत्पद्यते । अत्र यथासंख्योपमयोरङ्गाङ्गिभावेन सङ्करः । मालिनी वृत्तम् ॥२५॥

वासन्तीति । लक्ष्मणविषयककुशलं पुनः पृच्छति महाराजेति ।

---

वासन्ती—(बैठकर आखोंमें आसू भरकर) महाराज ! कुमार लक्ष्मणका कुशल तो है ?

राम—( न सुननेका अभिनय करके )

कमलतुल्य कोमल हाथोंसे दिये गये जल, नीवार धान्य और घाससे सीताने जिन वृक्ष, पक्षी और मृगोंका पोषण किया था, उनको देखनेपर प्रसरणकी उत्पत्तिके योग्य मेरे हृदयकी आर्द्रताकी तरह कोई विकार उत्पन्न होता है ॥ २५ ॥

वासन्ती—महाराज ! मैं कुमार लक्ष्मणका कुशल पूछ रही हूँ ।

रामः—( आत्मगतम् । ) अये ! महाराजेति निष्प्रणयमामन्त्रणपदम् । सौमित्रिमात्रके बाष्पस्खलिताक्षरः कुशलप्रश्नः । तथा मन्ये विदितसीतावृत्तान्तेयमिति । ( प्रकाशम् । ) आः, कुशलं कुमारलक्ष्मणस्य * ।

वासन्ती—( रोदिति । ) अयि देव ! किं परं दारुणः खल्वसि ।

सीता—सहि वासन्ति ! किं तुमं एव्वंवादिणी होसि ? पूआरुहो सव्वस्स अज्जउत्तो, विसेसदो मह पिअसहीए । ( सखि वासन्ति ! किं त्वमेवंवादिनी भवसि ? पूजार्हः सर्वस्यार्यपुत्रः, विशेषतो मम प्रियसख्याः । )

---

राम इति । निष्प्रणयम् = प्रेमशून्यम् , आमन्त्रणपदम् = सम्बोधनशब्दः । 'सखे' इत्यादिकं सौहार्दद्योतकं शब्दमप्रयुज्य महाराजपदस्याऽभिधानेन प्रणयशून्यत्वं द्योत्यत इति भावः । सौमित्रिमात्रके=सुमित्राया अपत्यं पुमान् सौमित्रिः, 'बाह्वादिभ्यश्चे'ति इञ् प्रत्ययः, सौमित्रिरेव सौमित्रिमात्रकं, तस्मिन् = केवले लक्ष्मण इत्यर्थः । बाष्पस्खलिताऽक्षरः = बाष्पेण = अश्रुणा, स्खलितानि=अस्पष्टानि, अक्षराणि = वर्णाः यस्मिन् सः, एतादृशः कुशलप्रश्नः = क्षेमाऽनुयोगः । तथा=तेन कारणेन, इयं = वासन्ती, विदितसीतावृत्तान्ता=विदितः=ज्ञातः, सीतावृत्तान्तः = सीतोदन्तः, निर्वासनरूप इति भावः यया सा । आः=पदमिदं सोपालम्भाङ्गीकारद्योतकम् , 'आम्' इति पाठे स्मृतिद्योतकोऽयमव्ययशब्दः ।

वासन्तीति । परम् = सातिशयं यथा तथा, दारुणः = भयङ्करः कठोरो वा, गर्भिण्याः प्राणप्रियायाः सीताया निर्वासनादिति भावः ।

सीतेति । एवंवादिनी = आर्यपुत्रं प्रति कठोरभाषिणी । पूजार्हः = पूजायोग्यः, मर्यादास्थापकत्वादिति भावः । 'प्रियार्ह' इति पाठे प्रेमभाषणयोग्य इत्यर्थः ।

---

राम—( अपने मनमें ) अरे ! 'महाराज' यह सम्बोधनका शब्द प्रेमशून्य है । केवल लक्ष्मणमें आँसूसे अस्पष्ट अक्षरोंसे युक्त कुशलप्रश्न है । इस तरहसे मैं विचार करता हूँ कि "ये सीताका वृत्तान्त जान गई हैं" ( प्रकाश रूपसे ) हा ! कुमार लक्ष्मणका कुशल है ।

वासन्ती—( रोती हैं ) महाराज ! क्यों आप बहुत ही कठोर हो गये हैं ?

सीता—सखि वासन्ति ! क्यों तुम इस तरह कहती हो ? आर्यपुत्र सबके पूजनीय हैं, विशेष करके मेरी प्रिय सखीके ।

---

* '( इति रोदिति )' इत्यधिकः पाठः पुस्तकान्तरेषु ।

वासन्ती—

त्वं जीवितं त्वमसि मे हृदय द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किमतः परेण ॥ २६ ॥

---

वासन्ती रामस्य दारुणत्वं प्रतिपादयति—त्वमिति। त्वं जीवितम्, त्वं मे द्वितीयं हृदयम्, त्वं नयनयो कौमुदी, त्वम् अङ्गे अमृतम् असि, इत्यादिभि प्रियशतै मुग्धाम् अनुरुध्य ताम् एव—अथवा शान्तम्, अत परेण किम्? इत्यन्वय। त्वं = सीता, जीवितं = जीवनम्, असीति शेष, त्वं मे जीवनसमा प्रियतमाऽसि, अतस्त्वां विना नो जीवामीति भाव। त्वं, मे = मम, रामस्येत्यर्थ, द्वितीयम् = अपरम्, हृदयम् = चित्तम्, असि=भवसि, त्वं हृदयवन्मदीयं सर्वं भावं जानासीति भाव। त्वं, नयनयो=नेत्रयो, कौमुदी=चन्द्रिका, चन्द्रिकावन्नेत्रानन्दमादधस इत्यर्थ। 'कौ मोदन्ते जना यस्मात्तेनेयं कौमुदी मता।' इति कौमुदीपदनिरुक्ति। त्वं=सीता, अङ्गे=कण्ठाद्यवयवे, अमृतं=पीयूषम्, अमृतवज्जरामपनीय नित्यं यौवनमावहसीत्यर्थ। इत्यादिभिः=इत्याकारकै, प्रियशतैः=प्रियाणा=प्रियवचनानाम्, शतैः=अनन्तसंख्याभि 'शत सहस्रमयुतं सर्वमानन्त्यवाचकम्' इत्युक्ते, असंख्यचाटूक्तिभिरिति भाव। मुग्धाम् = उदयौवनाम्, त्वत्क्रौर्यमजानन्तीं मूढामिति वा, अनुरुध्य = अनुनीय, ताम् एव = तथोक्ता सीतामेव, 'कथं त्यक्तवानसि नाशितवानसीति वा' इति शेष। अथ वा = आहोस्वित्, शान्तम् = अलम्, त्वामुपालभ्येति शेष। अत = अस्मात्, परेण = अनन्तरेण 'तामेव' इत्यनन्तरं कथितेनेति भाव, किं = किं फलम्, अलं दुःखद्योतकशब्देनेति तात्पर्यम्। अत्र रूपकस्यातिशयोक्तेराक्षेपस्य च परस्परमङ्गाङ्गिभावेन सङ्करः। वसन्ततिलका वृत्तम् ॥ २६ ॥

---

**वासन्ती**—'तुम मेरा जीवन हो, तुम मेरा दूसरा हृदय हो, तुम मेरी आँखोंमें चादनी हो, तुम शरीरपर अमृत हो' इत्यादि सैकड़ों प्रिय वचनोंसे भोली सीताको अनुनय करके उन्हींको—अथवा बस, इसके आगे कहनेसे क्या फल है? ॥ २६ ॥

( इति मुह्यति * । )

तमसा—स्थाने वाक्यनिवृत्तिर्मोहश्च ।

रामः—सखि ! समाश्वसिहि समाश्वसिहि ।

वासन्ती—( समाश्वस्य । ) तत्किमिदमकार्यमनुष्ठितं देवेन ?

सीता—सहि वासन्दि ! विरम विरम । (सखि वासन्ति ! विरम विरम )

रामः—लोको न मृष्यतीति ।

वासन्ती—कस्य हेतोः ?

रामः— स एव जानाति किमपि ।

---

तमसेति । वाक्यनिवृत्तिः = वाग्व्यापारनिरोध , मोहश्च = मूर्च्छा च, स्थाने= युक्तम् , ग्रन्थान्तरेषु रामोक्तमेव वाक्यमिदम् , अतः परं—'सखि ! समाश्वसिहि समाश्वसिहि' इत्यधिक. पाठश्च ।

वासन्तीति । तत् = तदा, अकार्यम् = अप्रशस्तं कार्यं सीतानिर्वासनात्मकमिति भावः । अत्र अप्राशस्त्याऽर्थद्योतको नञ् , अनुष्ठितं = कृतम् ।

सीतेति । विरम = तूष्णीं भव, आर्यपुत्रं मा उपालभस्वेति भावः ।

राम इति । लोकः = जनः, न मृष्यति = सीताया गृहस्थितिं न सहत इति भाव', इति = अस्माद्धेतो., सीता निर्वासितेति भावः ।

वासन्तीति । कस्य हेतो. = कस्मात्कारणात् , लोकः सीताया गृहस्थितिं न मृष्यतीति शेष', 'षष्ठी हेतुप्रयोगे' इति षष्ठी ।

राम इति । स एव = लोक एव, किमपि = किञ्चिदपि, कारणमपीति भावः ।

---

( ऐसा कहकर मूर्च्छित होती है । )

तमसा—वाक्य रोकना और मूर्च्छा होना उचित ही है ।

राम—सखि ! समाश्वस्त हो, समाश्वस्त हो ।

वासन्ती—( समाश्वस्त होकर ) तब क्यों महाराजने ऐसा दुष्कार्य किया ?

सीता—सखि वासन्ति ! चुप रहो, चुप रहो ।

राम—लोक नहीं सहता है, इसलिये ।

वासन्ती—किस कारणसे ?

राम—कुछ भी कारण हो, उसे लोक ही जानता है ।

---

* 'मूर्च्छति' इति पाठान्तरम् ।

तमसा—चिरादुपालम्भः ।

वासन्ती—

अयि कठोर ! यशः किल ते प्रिय किमयशो ननु घोरमतः परम् ।
किमभवद्विपिने हरिणीदृश' कथय नाथ ! कथ बत मन्यसे ॥ २७ ॥

---

तमसेति । चिरात् = बहुकालात्, बहुकालमारभ्येति भाव, उपालम्भ = तिरस्कार, रामस्य लोकं प्रति सीतानिर्वासनकालादारभ्योपालम्भोऽस्तीति भाव. । ग्रन्थान्तरेषु 'चिरादुपालम्भ' इति स्थाने 'उचितस्तदुपालम्भ' इति पाठस्तत्र— तस्य = लोकस्य, उपालम्भ. = तिरस्कारः, उचित' = योग्य आसीत्, न तु सीतानिर्वासनमिति भावः ।

अयीति । अयि कठोर ! यश ते प्रियं किल, ननु अत परं घोरम् अयश' किम् ? हरिणीदृश विपिने किम् अभवत् ? नाथ ! कथय, कथं मन्यसे ? बत इत्यन्वय । अयि कठोर = हे कठिनहृदय !, अयीतिपदस्य कोमलामन्त्रणद्योतकत्वेऽपि कठोरपदेन सह तस्याऽन्वयानुपपत्त' विपरीतलक्षणया उपालम्भद्योतकार्थे पर्यवसानम् । यश = कीर्ति., ते = तव रामस्येत्यर्थ, प्रियम् = अभीष्टम्, किलेति प्रसिद्धौ, हे राम ! यश एव तवाऽभीष्टं, सहधर्मचारिणीरक्षणं तु नेति भाव । नन्विति = आक्षेपद्योतकं पदम्, अत' परम् = अस्मादधिकम्, अयश' = अकीर्तिकरं, किं = किमस्ति, न किमपीति भाव. । तदेव प्रतिपादयति—हरिणीदृश'—हरिण्याः=मृग्याः दृशाविव दृशौ=दृष्टी यस्या' सा हरिणीदृक्, तस्या =चञ्चलनयनाया. सीताया इत्यर्थ' । किम् अभवत् = कीदृशी अवस्था अभूत् ? नाथ = हे स्वामिन् ! स्वपत्नीं प्रति निरर्गलव्यापारसमर्थेति भाव' । कथय = ब्रूहि, अत्र विषये कथं मन्यसे = किं विचारयसि, श्वापदसङ्कुले विपिने परित्यक्ता नि सहाया सीता जीवति मृता वेति किं विचारयसीति भाव. ? बत = खेदद्योतकमव्ययमिदम् । अत्र विरूपयोर्यशोऽयशसो सङ्घटनया विषमाऽलङ्कारः । हरिणीदृश इत्यत्र लुप्तोपमा चेति द्वयोर्मिथोऽनपेक्षया स्थिते संसृष्टिः । द्रुतविलम्बितं वृत्तम् । 'द्रुतविलम्बितमाहनभौ भरौ' इति तल्लक्षणम् ॥ २७ ॥

---

तमसा—बहुत कालसे यह तिरस्कार है ।

वासन्ती—हे निष्ठुर ! यश तुम्हें प्यारा है, लेकिन इससे अधिक भयङ्कर अकीर्तिकर कर्म क्या है ? मृगनयनी सीताका जङ्गलमें क्या हुआ ? हे नाथ ! कहिए, आप क्या विचार करते हैं ? हाय ! ॥ २७ ॥

सीता—सहि वासन्दि ! तुमं एव्व दारुणा कठोरा अ । जा एव्वं पलवन्तं पलावेसि । ( सखि वासन्ति ! त्वमेव दारुणा कठोरा च । यैवं प्रलपन्तं प्रलापयसि । )

तमसा—प्रणय एवं व्याहरति शोकश्च ।

रामः—सखि ! किमत्र मन्तव्यम् ।

त्रस्तैकहायनकुरङ्गविलोलदृष्टे-स्तस्याः परिस्फुरितगर्भभरालसायाः ।

---

सीतेति । दारुणा = भीषणा, कठोरा = कठिना, विशेषणद्वये हेतुमाह—येति । एवम् = इत्थं, प्रलपन्तं = अनर्थकं वचः कुर्वन्तं, शोकपारवश्यादिति भावः । प्रलापयसि = प्रलापं कारयसि, एतादृशो वियोगिनः शोकनिवारणमकृत्वा प्रत्युत शोकमेवाऽनेकैर्वचोभिरुद्दीपयसीति भावः, अतस्त्वमेव दारुणा कठोरा चेति भावः । पुस्तकान्तरेषु 'प्रलपन्तं प्रलापयसी'ति स्थाने 'विलपन्ती प्रदीपयसी'ति पाठान्तरम्, तत्र-विलपन्ती = परिदेवनं कुर्वती, प्रदीपयसि = सन्तापयसीत्यर्थः ।

तमसेति । प्रणयः = वासन्त्यास्त्वद्विषयकः प्रेम, एवम् = इत्थम्, शोकश्च = त्वद्दशाजनितो मन्युश्च, इदं = रामोपालम्भकं वचनं, व्याहरति = कथयति ।

राम इति । अत्र = सीतादशाविषये, किं मन्तव्यम् = अतः परं किं विचारणीयम्—इदमेव सीताया वृत्तमिति प्रतिपादयत्यग्रिमपद्ये ।

त्रस्तैकेति । त्रस्तैकहायनकुरङ्गविलोलदृष्टेः परिस्फुरितगर्भभराऽलसायाः तस्याः मृदुबालमृणालकल्पा ज्योत्स्नामयी इव अङ्गलतिका क्रव्याद्भिः नियतं विलुप्ता इत्यन्वयः । त्रस्तैकहायनकुरङ्गविलोलदृष्टेः = त्रस्तः = भीतः, एकहायनः—एकं हायनं यस्य सः = एकवर्ष इत्यर्थः, एतादृशो यः कुरङ्गः = मृगः, तस्यैव विलोले = अतिचञ्चले, दृष्टी = नेत्रे, यस्यास्तस्याः; परिस्फुरितगर्भभराऽलसायाः—परिस्फुरितः = प्रसवकालतया प्रकम्पितः, यो गर्भः = भ्रूणः तस्य भरः = भारः, तेन अलसायाः =

---

सीता—सखि वासन्ति ! तुम ही भयङ्कर और कठोर हो । जो इस तरह प्रलाप करते हुए आर्यपुत्रसे प्रलाप करवाती हो ।

तमसा—प्रेम और शोक ऐसा कहता है ।

राम—सखि ! इसमें क्या विचार करना है ?

डरे हुए एक सालके मृगके सदृश चञ्चल नेत्रोंवाली और कम्पित गर्भके भारसे आलस्य-

ज्योत्स्नामयीव मृदुबालमृणालकल्पा क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता ॥

सीता—अज्जउत्त ! धरामि एसा धरामि । (आर्यपुत्र ! ध्रिये एषा ध्रिये ।)

रामः—हा प्रिये जानकि ! क्वासि ?

सीता—हद्धी हद्धी ! अण्णो विअ अज्जउत्तो पमुक्ककण्ठं परुण्णो होदि । ( हा धिक् हा धिक् ! अन्य इवार्यपुत्रः प्रमुक्तकण्ठं प्ररुदितो भवति । )

---

आलस्ययुक्तायाः=अन्यत्र अपसर्पितुमशक्नुवत्या इत्यर्थः, तस्याः=सीतायाः, मृदुबालमृणालकल्पा=मृदु=कोमलम्, यत् बालमृणालम्=नवीनबिसम्, तस्मादीषन्न्यूना बालमृणालकल्पा, नूतनमृणालसममृदुला इति भावः, 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति कल्पप्प्रत्ययः 'कल्पबादयः प्रत्ययास्तुल्यार्थे प्रत्ययसन्ना' इति काव्यादर्शे दण्डी । ज्योत्स्नामयी इव = चन्द्रिकानिर्मितेव, अतिशयशुभ्रेति भावः, विकारार्थे मयट् टित्वान्ङीप्, एतादृशी अङ्गलतिका = अङ्गं लतिकेव, अङ्गलतिका = देहलता, कृशेति भावः । नियतं = निश्चितं यथा तथा, क्रव्याद्भिः = हिंस्रजन्तुभिः, विलुप्ता = नाशिता, इदमेव सीतायाः वृत्तं किमत्र मन्तव्यमत्र इति पूर्वेण सम्बन्धः' अत्र चतसृणा लुप्तोपमानामङ्गाङ्गिभावेन सङ्करालङ्कारः । वसन्ततिलका वृत्तम् ॥ २८ ॥

सीतेति । धरामि = धारयामि, या मदीयामङ्गलतिकां क्रव्याद्भिर्विलुप्तां मन्यसे तां धारयामीति भावः, अन्तर्भावितण्यर्थत्वेनायमर्थः । पुस्तकान्तरेषु 'ध्रिये' इति पाठस्तस्य अवतिष्ठे इत्यर्थः, 'धृङ् अवस्थाने' इति दैवादिकधातोर्लटि उत्तमपुरुषैकवचने रूपम् ।

राम इति । क्व = कुत्र ?

सीतेति । हा धिक् = मामिति शेषः, यतो मत्कारणादेव, आर्यपुत्रोऽपि, अन्य इव = साधारणजन इव, प्रमुक्तकण्ठम् = कण्ठपदस्य कण्ठस्वररूपार्थे लक्षणा, अत्युच्चैः स्वरं यथा तथेति क्रियाविशेषणम् । प्ररुदितः = प्ररोदिता, रुद-धातोरकर्मकत्वात् 'गत्यर्थाऽकर्मके'त्यादिना कर्तरि क्तः ।

---

युक्त उन सीताका कोमल छोटे मृणालके सदृश, चन्द्रिकासे बने हुए की तरह और लतातुल्य कृश शरीर हिंस्र जन्तुओंसे निश्चय ही नष्ट हुआ होगा ॥ २८ ॥

सीता—आर्यपुत्र ! मैं अपने शरीरको धारण कर रही हूँ, धारण कर रही हूं ।

राम—हा प्रिये जानकि ! तुम कहां हो ?

सीता—हा धिक् ! हा धिक् ! साधारण पुरुषकी तरह आर्यपुत्र पुक्का फाडकर रो रहे हैं ।

तमसा—वत्से! साम्प्रतिकमेवैतत्। कर्तव्यानि खलु दुःखितैर्दुःख-निर्धारणानि।

पूरोत्पीडे तटाकस्य परीवाहः प्रतिक्रिया।
शोकक्षोभे च हृदयं प्रलापैरेव धार्यते* ॥ २९ ॥

विशेषतो रामभद्रस्य बहुप्रकारकष्टो जीवलोकः।
इदं विश्वं पाल्यं विधिवदभियुक्तेन मनसा

---

तमसेति। एतत् = प्रमुक्तकण्ठ रोदनम्, साम्प्रतिकमेव = युक्तमेव, कथमिति प्रतिपादयति-दुःखितैः = संजातदुःखैर्जनैः, दुःखनिर्धारणानि = दुःखाऽसह्यत्वनिश्चयाः, कर्तव्यानि = विधेयानि, उत्तरमेव रोदनादिना किमपि सान्त्वनं भविष्यतीति भावः। 'दुःखनिर्वापणानि' इति पाठे दुःखोपशमनानीत्यर्थः।

पूरोत्पीड इति। तटाकस्य पूरोत्पीडे परीवाहः प्रतिक्रिया (अस्ति), हृदयं च शोकक्षोभे प्रलापैरेव धार्यत इत्यन्वयः। तटाकस्य = जलाशयस्य, 'तडागस्य' इति पाठेऽपि अयमेवाऽर्थः, 'पद्माकरस्तडागोऽस्त्री' इत्यमरः, पूरोत्पीडे = पूरस्य = प्रवाहस्य, उत्पीडे = आधिक्ये सति, 'पूरो जलप्रवाहे स्याद् व्रणसंशुद्धिखाद्ययोः।' इति मेदिनी, परीवाह = जलनिःसारणम्, 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इत्युपसर्गस्य दीर्घत्वम्, प्रतिक्रिया = प्रतीकारः तटभेदनिवारणोपाय इति भावः, अस्ति इति शेषः। एवं हृदयं च = चित्तमपि, शोकक्षोभे = शोकेन=मन्युना यः क्षोभः = चाञ्चल्यम्, तस्मिन्, प्रलापैरेव = रोदनहेतुभिरनर्थकैर्वचोभिरेव, परिदेवनैरेवेत्यर्थः। धार्यते=रक्ष्यते, हृदयभङ्गप्रसङ्गादिति शेषः। अत्र दृष्टान्तालङ्कारः ॥२९॥

विशेषत इति। बहुप्रकारकष्ट = बहवः = अनेके, प्रकाराः भेदाः, यस्मिंस्तत् बहुप्रकारं, तादृशं कष्टं = दुःखं यस्मिन् सः जीवलोकः = मनुष्यलोकः।

इदमिति। अभियुक्तेन मनसा इदं विश्वं विधिवत् पाल्यम्, धर्मः कुसु-

---

तमसा—बेटी! यह उचित ही है। दुःखितोंको दुःखका (असह्यत्वका) निश्चय करना चाहिये।

तालावमें प्रवाहका आधिक्य होनेपर परिवाह अर्थात् बाहर जल निकलनेके लिये बना हुआ छोटा-सा मार्ग ही प्रतिकार होता है। इसी तरह हृदय भी शोकसे चञ्चलता होनेपर विलापोंसे ही रक्षित किया जाता है ॥ २९ ॥

विशेष कर रामचन्द्रके लिए तो मनुष्यलोक अनेक प्रकारके कष्टोंसे युक्त है।

सावधान मनसे इस संसारका विधिपूर्वक पालन करना कर्तव्य है, परन्तु जैसे धूप फूलको

---

* 'रवधार्यते' इति पाठान्तरम्।

प्रियाशोको जीवं कुसुममिव घर्मो ग्लपयति ।
स्वयं कृत्वा त्यागं विलपनविनोदोऽप्यसुलभ-
स्तदद्याप्युच्छ्वासो भवति ननु लाभो हि रुदितम् ॥ ३० ॥

रामः—कष्टं भोः ! कष्टम् ।

दलति हृदयं शोकोद्वेगाद् द्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।

---

ममिव प्रियाशोको जीवं ग्लपयति, स्वयं त्यागं कृत्वा विलपनविनोदोऽपि असुलभः, तत् अद्याऽपि उच्छ्वासो भवति, ननु रुदितं लाभो हि इत्यन्वयः । अभियुक्तेन=सावधानेन, मनसा=चित्तेन, नो चेन्मर्यादाऽपगता स्यादिति भावः, इदम्=अदः, विश्वं=संसारः, विधिवत्=विधिपूर्वकम्, पाल्यम्=पालनीयम् 'क्षत्रियाणामयं धर्मो यत्प्रजापरिपालनम् ।' इत्युक्तेः, घर्मः = आतपः, कुसुममिव = पुष्पमिव, प्रियाशोकः = सीतावियोगमन्युः, जीवं = जीवनं, ग्लपयति = ग्लानं करोति, 'क्लमयति' इति पाठेऽप्ययमेवाऽर्थः, स्वयम् = आत्मना, त्यागम् = निर्वासनं, कृत्वा, विलपनविनोदोऽपि=विलपनेन = परिदेवनेन, विनोदः = शोकाऽपनयनमपि, असुलभः = दुर्लभः, प्राक् स्वयमेव सीतायास्त्यागं कृत्वा पश्चात्तदर्थं परिदेवनेन लोको किं वक्ष्यतीति मत्वा विलापोऽपि दुर्लभ इति भावः । यद्येवं तर्हि मृत्वा शोकोऽपनीयतामित्यत आह—तदिति । तत्=तथापि विलपनविनोदस्याऽसौलभ्येऽपीत्यर्थः, अद्याऽपि=एतत्कालपर्यन्तमपि, उच्छ्वासः=प्राणधारणं, भवति, मरणमपि दुर्लभमेव, आत्महत्याया महापापरूपत्वादिति भावः, अत एतादृश्या दशायां, साम्प्रतं, ननु = निश्चयेन, रुदितं = रोदनं, लाभो हि=जीवनधारणाऽर्थं लाभस्थानीयो हि, एतेन 'शोकक्षोभे च हृदयं प्रलापैरेव धार्यते ।' इत्युक्तिर्दृढीक्रियते, शोकाऽपनयनाऽसामर्थ्येऽपि रोदनस्य जीवनधारणहेतुत्वान्न नैष्फल्यमिति भावः । अत्रोपमापरिणामयोरङ्गाङ्गिभावेन सङ्करः । शिखरिणी वृत्तम् ॥ ३० ॥

दलतीति । हृदयं शोकोद्वेगात् दलति, द्विधा तु न भिद्यते । विकलः कायः

---

मलिन कर देता है उसी तरह प्रियाका शोक जीवनको ग्लानियुक्त कर देता है, स्वयं त्याग करके विलाप कर जी बहलाना भी दुर्लभ है, तो भी अभी तक प्राणधारण हो रहा है । इस लिये रोना भी जीवन-धारणके लिये लाभस्थानीय ही है ॥ ३० ॥

**राम—**कष्ट है, अहो ! कष्ट है ।

हृदय शोकसे विचलित होनेके कारण विदीर्ण होता है, लेकिन दो टुकड़ोंमें विभक्त नहीं

ज्वलयति तनूमन्तर्दाहः करोति न भस्मसा-
त्प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ ३१ ॥

हे भगवन्तः * पौरजानपदाः !

मोहं वहति, चेतनां न मुञ्चति । अन्तर्दाहः तनूं ज्वलयति, भस्मसात् न करोति । मर्मच्छेदी विधिः प्रहरति, जीवितं न कृन्तति इत्यन्वयः । हृदयं = वक्षःस्थलं, शोकोद्वेगात्=शोकेन = इष्टवियोगजनितेन मन्युना य उद्वेगः = व्याकुलत्वम्, तस्माद्धेतोः, दलति = स्फुटति विदीर्णं भवतीत्यर्थः, पुस्तकान्तरेषु 'गाढोद्वेगम्' इति पाठस्तस्य—गाढः = अतिशयः, उद्वेगः = व्याकुलत्वम् यस्य तदिति हृदयस्य विशेषणम् । क्वचित्तु 'गाढोद्वेग' इति प्रथमान्तः पाठस्तत्र तस्य दलतीति क्रियायाः कर्तृत्वं बोध्यम्, क्रियापदस्याऽपि विदारयतीत्यर्थः । द्विधा तु = द्वाभ्यां प्रकाराभ्यां तु, न भिद्यते = न भिन्नं भवति, पृथक्कारेण खण्डद्वयं न भवतीत्यर्थः, शोकोद्वेगात् विदीर्णत्वेऽपि हृदयस्य शकलद्वयं न भवति, भवेच्चेत् एतादृग्दुःखं न भवेदित्यर्थः । विकलः = विह्वलः, शोकेन इति शेषः, कायः = शरीरं, मोहं = मूर्च्छां, वहति = धारयति, चेतनां = चैतन्यं, न मुञ्चति = न त्यजति, चैतन्यत्यागरूपे मरणे सति ईदृग्दुःखं नाऽनुभवेयमिति भावः । अन्तर्दाहः = अन्तःकरणतापः, तनूं = शरीरं, ज्वलयति = सन्तापयति, परं भस्मसात् न करोति = भस्मीभूतां न विदधाति; 'विभाषा साति कार्त्स्न्ये' इति सातिप्रत्ययः, मनस्तापो यदि शरीरं भस्मसादकरिष्यत्तर्हि एतादृशो विरहसन्तापो नाऽभविष्यदिति भावः । मर्मच्छेदी = मर्माणि = जीवितस्थानानि, छिनत्ति विदारयति इति, एतादृशो विधिः = भाग्यं, प्रहरति = प्रहारं करोति, परं जीवितं = जीवनं, न कृन्तति = न छिनत्ति, विधिना जीवनच्छेदे कृते त्वसकृदेवं सीतावियोगदुःखाऽनुभवी न भवेयमिति भावः । अत्र दलनादौ कारणे सत्यपि द्विधाभेदनादिरूपफलाऽभावात् चतुर्ष्वपि चरणेषु विशेषोक्त्यलङ्काराणां मियोऽनपेक्षया स्थितेः संसृष्टिः । हरिणी वृत्तम् ॥ ३१ ॥

होता, शोकसे विह्वल शरीर मोहधारण करता है, लेकिन चैतन्यको नहीं छोड़ता, अन्तःकरण का सताप शरीरको जलाता है, लेकिन भस्म नहीं करता, इसी तरह मर्मस्थलको विदारण करनेवाला भाग्य प्रहार करता है, लेकिन जीवनको नष्ट नहीं करता ॥ ३१ ॥

नगर और देश में रहनेवाले हे महात्माओं !

* 'भवन्तः' इति पाठान्तरम् ।

न किल भवतां देव्याः स्थानं गृहेऽभिमतं तत-
स्तृणमिव वने शून्ये त्यक्ता न चाप्यनुशोचिता ।
चिरपरिचितास्ते ते भावास्तथा द्रवयन्ति मा-
मिदमशरणैरद्यास्माभिः प्रसीदत रुद्यते ॥ ३२ ॥

---

न किलेति । देव्याः गृहे स्थानं भवतां न अभिमतम्, ततः तृणम् इव शून्ये वने त्यक्ता, न च अनुशोचिता अपि । चिरपरिचिताः ते ते भावाः मा तथा द्रवयन्ति अद्य अशरणैः अस्माभिः इदं रुद्यते प्रसीदत इत्यन्वयः । देव्याः = सीतायाः, गृहे = भवने, स्थानं = स्थितिः, भवतां = युष्माकं, न अभिमतम् = नेष्टम्, ततः = तस्माद्धेतोः, सीतायाः गृहस्थितेर्भवतामनभिमतत्वादिति भावः, तृणम् इव = व्यर्थप्रायो घास इव, शून्ये = निर्जने, वने = अरण्ये, त्यक्ता, सीतेति शेषः, न च अनुशोचिता = सीतार्थमनुशोकोऽपि न कृतः इत्यर्थः । पौरलोकाऽऽराधनाऽर्थमेव निरपराधा प्राणवल्लभा सीता परित्यज्यापि तदर्थं शोकोऽपि मया न कृत इति भावः । परं साम्प्रतं तु—चिरपरिचिताः = बहुकालाऽभ्यस्ताः पुरा सीतया संस्तुता इत्यर्थः, ते ते = पूर्वानुभूताः, भावाः = पदार्थाः, मा = रामं, तथा = तेन प्रकारेण, द्रवयन्ति=द्रववन्तं कुर्वन्ति, विलापयन्तीति भावः, द्रववच्छब्दात् 'तत्करोति तदाचष्टे' इति णिच्, मतुब्लोपे टिलोपे च रूपम्, 'परिद्रवयन्ति' इत्यपि पाठः । अद्य = अस्मिन्दिने, अशरणैः = रक्षकरहितैः, 'शरणं गृहरक्षित्रोः' इत्यमरः । अस्माभिः इदम् = एतत्, रुद्यते = रोदनं क्रियते प्रसीदत=प्रसन्ना भवत, प्रार्थनायां लोट् । पौरजानपदाः । प्राक् युष्माकमाराधनार्थं योगक्षेमयोर्व्यग्रचित्ततया च सीतामुद्दिश्य शोकमपि कर्तुं न पारितं साम्प्रतं निर्जने वने कार्यान्तराऽव्यग्रतया सीतां संस्मृत्य रुद्यते तत्राऽपि प्रतिबन्धं मा कुरुतेति तात्पर्यम् । अत्र सीतात्यागरूपस्य हेतोः सत्त्वेऽपि अनुशोचनरूपस्य फलस्याभावाद्विशेषोक्तिरलङ्कारस्तथा च 'तृणमिवे'त्यत्रोपमा चेत्यमुभयोः सङ्करः । हरिणी वृत्तम् ॥ ३१ ॥

---

सीताका घरमें रहना आप लोगोंको अभीष्ट न हुआ, इसलिये उसको तृणकी तरह शून्य वनमें छोड़ दिया और शोक भी नहीं किया । बहुत कालसे परिचित वे वे पदार्थ मेरे द्वारा अनिर्वचनीय रूपसे विलाप करवाते हैं, इसलिए अशरण होकर मैं रो रहा हूं, आप लोग प्रसन्न हों ॥ ३२ ॥

वासन्ती—(स्वगतम् ।) अतिगभीरमापूरणं मन्युभारस्य । (प्रकाशम् ।) देव ! अतिक्रान्ते धैर्यमवलम्ब्यताम् ।

रामः—किमुच्यते धैर्यमिति ?

देव्याः शून्यस्य जगतो द्वादशः परिवत्सरः ।
प्रणष्टमिव नामापि न च रामो न जीवति ॥ ३३ ॥

---

वासन्तीति । मन्युभारस्य = शोकभारस्य, क्वचित् 'शोकसागरस्ये'ति पाठः, अतिगम्भीरम् = अतिशयगूढम् 'अवगूरणम्' इति पुस्तकान्तरपाठस्तस्य मर्यादामुलङ्घ्य गमनमित्यर्थः, अतिवृद्धिरिति तात्पर्यम् । पुस्तकान्तरपाठे उक्तिरियं तमसायाः । अतिक्रान्ते = सीतानिर्वासनादिरूपेऽतीते विषये, अतीतविषये शोचनेन न कोऽपि लाभ इति भावः ।

राम इति । धैर्यमिति = धीरत्वमवलम्ब्यतामिति वचनं, किमुच्यते = किमभिधीयते, मया धैर्यावलम्बनस्य पराकाष्ठा कृतेति भाव । तदेव द्रढयति—

देव्या इति । देव्या शून्यस्य जगतो द्वादश परिवत्सर ( वर्तते ), नामाऽपि प्रणष्टमिव ( जातम् ), रामश्च न जीवति ( इति ) न इत्यन्वय । देव्याः = सीताया, शून्यस्य = रहितस्य, जगतः = लोकस्य, द्वादशः = द्वादशाना पूरणः, 'तस्य पूरणे डट्' इति डट् , परिवत्सरः = संवत्सर', वर्तत इति शेष' । नामाऽपि = सीतायाः सीतेत्यभिधानमपि, प्रणष्टमिव, जातमिति शेष', सीताया दयादाक्षिण्यसहाऽनुवर्तनाऽऽदिगुणगणस्य तु का कथेति भाव । एतादृशे व्यतिकरेऽपि—रामश्च, न जीवति ( इति ) न = प्राणान् नो धारयति इति न, अपि तु धारयत्येवेति भाव' । सहधर्मिण्या नाम्नोऽपि विनष्टप्रायत्वे योऽहं जीवामि, तन्मदीयं जीवनं धैर्यस्य पराकाष्ठेति भाव । अत्र प्रणष्टमिवेत्यत्र क्रियोत्प्रेक्षाऽलङ्कारः ॥ ३३ ॥

---

वासन्ती—( मनही मन ) शोक-भारकी अत्यन्त गम्भीर पूर्णता है। ( सुनाकर ) महाराज ! बीते हुए विषयमें धैर्यधारण कीजिए ?

राम—धैर्यधारणकी बात क्या करती हो ?

सीतासे रहित लोकका यह बारहवा वर्ष है, उनका नाम भी जैसे लुप्त-सा हो गया है; तो भी राम नहीं जीता है ? यह बात नहीं ( अर्थात् जो ही रहा है ) ॥ ३३ ॥

सीता—ओहरामि अ मोहिआ विअ एदेहिं अज्जउत्तस्स पिअवअणेहिं । ( अपहरामि च मोहितेव एतैरार्यपुत्रस्य प्रियवचनैः । )

तमसा—एवमेव वत्से !

नैताः प्रियतमा वाचः स्नेहार्द्रा शोकदारुणाः ।
एतास्ता मधुनो धाराः श्च्योतन्ति सविपास्त्वयि ॥ ३४ ॥

रामः—अयि वासन्ति ! मया खलु—

यथा तिरश्चीनमलातशल्यं प्रत्युप्तमन्तः सविषश्च दन्तः ।

---

सीतेति । मोहिता इव = संजातमोहा इव, अपहरामि = यापयामि, कालमिति शेषः ।

नैता इति । एता वाचः प्रियतमाः स्नेहार्द्राः शोकदारुणा न, ( किन्तु ) एताः ताः सविषा मधुनो धारा त्वयि श्च्योतन्ति इत्यन्वयः । एताः = सम्प्रत्येव रामोक्ता, वाचः = वाण्यः, प्रियतमाः = इष्टतमाः, स्नेहार्द्राः = अनुरागशीतला, शोकदारुणाः = मन्युना कठोराः, न = नो वर्तन्ते, किन्तु एताः = रामोक्ताः, ताः = त्वया श्रुता, सविषाः = गरलसहिताः, मधुनः = पुष्परसस्य, धाराः = प्रवाहाः, त्वयि = सीतायाम्, श्च्योतन्ति = स्रवन्ति, अत एव एता वाचो मधुधारारूपेण त्वत्प्रीतिजनयित्र्यः सविषत्वरूपेण च त्वन्मोहोत्पादिका इति भावः । अत्राऽपह्नुतिरलङ्कारः ॥ ३४ ॥

यथेति । यथा अन्तः प्रत्युप्तं तिरश्चीनम् अलातशल्यं, सविषो दन्तश्च, तथैव तीव्रो मर्माणि कृन्तन्नपि हृदि शोकशङ्कुः किं न सोढः ? इत्यन्वयः । यथा = येन प्रकारेण, अन्तः = मध्ये वक्षःस्थल इत्यर्थः, प्रत्युप्तं = निखातं, तिरश्चीनं = तिर्यग्भूतम्, अलातशल्यम् = उल्मुककीलकं, सविषः = सगरलः, 'क्ष्वेडस्तु गरलं विषम्' इत्यमरः, दन्तश्च = दशनश्च, सर्पादेरिति शेषः, क्वचिद्दन्तस्थाने 'दंश' इति पाठः । तथैव = तेन प्रकारेणैव तीव्रः = दुःसहः, मर्माणि =

---

**सीता**—आर्यपुत्रके इन प्यारे वचनोंसे मोहितकी तरह होकर समय विता रही हूं ।

**तमसा**—यही बात है बेटी !

ये वचन बहुत ही प्यारे, प्रेमसे शीतल और शोकसे कठोर नहीं हैं, ये वे विषयुक्त मधुकी धारायें तुम्हारे ऊपर बह रही हैं ॥ ३४ ॥

**राम**—अयि वासन्ति ! मैंने—

जैसे हृदयमें घुसा हुआ तिरछा जलता हुआ काष्ठखण्ड और विषैला दाँत दुःखदायक होता

तथैव तीव्रो हृदि शोकशङ्कुर्मर्माणि कृन्तन्नपि किं न सोढः ? ॥३५॥

सीता—एव्वं वि मन्दभाइणी अहं जा पुणो आआसआरिणी अज्जउत्तस्स । ( एवमपि मन्दभागिन्यहं या पुनरायासकारिणी आर्यपुत्रस्य । )

रामः—एवमतिगूढस्तम्भितान्तःकरणस्यापि मम संस्तुतवस्तुदर्शनादद्यायमावेगः । तथा हि—

✓ वेलोल्लोलक्षुभितकरुणोज्जृम्भणस्तम्भनार्थं

---

हृदयादीनि मर्मस्थलानि, कृन्तन्नपि = छिन्दन्नपि, हृदि = हृदये, शोकशङ्कः = मन्युरूपकीलकम्, किं न सोढः = किं न व्यषहत, अपि तु सोढ एवेत्यर्थः, तथापि त्वं धैर्यावलम्बनमुपदिशसीति भावः । अत्रोपमारूपकयोरङ्गाङ्गिभावेन सङ्करः । अत्र प्रथमतृतीययोर्द्वितीयचतुर्थयोश्चरणयोरुपेन्द्रवज्रेन्द्रवज्रयोः संमिश्रणादुपजातिर्वृत्तम् ॥ ३५ ॥

सीतेति । मन्दभागिनी = अल्पभाग्या, आयासकारिणी = कष्टदायिनी ।

राम इति । अतिगूढस्तम्भितान्तःकरणस्य = अतिगूढम् = अतिगुप्तं यथा तथा, 'अतिनिष्कम्पमि'ति पुस्तकान्तरपाठस्तस्याऽतिनिश्चलं यथा तथेत्यर्थः, तथा स्तम्भितम् = रुद्धम्, अन्तःकरणम् = चित्तम् येन, तस्य ; संस्तुतवस्तुदर्शनात् = संस्तुतानि = परिचितानि, सीतया सह प्राक् साक्षात्कृतानीति यावत्, च तानि वस्तूनि = पदार्थाः, तेषां दर्शनात् = विलोकनात्, क्वचित् 'संस्तुतबहुतरप्रियदर्शनात्' इति पाठस्तत्र = संस्तुतानां = परिचितानां बहुतराणाम् = भूरितराणाम्, प्रियाणाम् = अभीष्टपदार्थानाम्, दर्शनादित्यर्थः । आवेगः = चित्तविकारः, क्वचित् 'उद्दामोऽयमावेगः' इति पाठस्तत्र—उद्दामः = संरुद्ध इत्यर्थः ।

वेलोल्लोलेति । वेलोल्लोलक्षुभितकरुणोज्जृम्भणस्तम्भनाऽर्थं यो यो यत्नः

---

है, उसी तरह दुःसह और मर्मस्थलोंको छेदन करते हुए एवं हृदयमें घुसे हुए शोकरूप कीलकको क्या मैंने नहीं सहा ॥ ३५ ॥

सीता—मन्दभागिनी मैं इस तरह से भी आर्यपुत्रको फिर दुःख देनेवाली हो गई ।

राम—इस तरह बहुत ही गुप्त रूपसे अन्तःकरणको रोकनेपर भी परिचित वस्तुओंको देखनेसे आज मेरा ऐसा चित्तविकार हो रहा है । जैसा कि—

मर्यादाको लाँघनेवाले अत एव क्षुभित शोककी वृद्धिको रोकनेके लिए जो जो यत्न किसी

योयो यत्नः कथमपि समाधीयते * तं तमन्तः ।
हित्वा भित्त्वा प्रसरति बलात्कोऽपि चेतोविकार-
स्तोयस्येवाप्रतिहतरयः सैकतं सेतुमोघः ॥ ३६ ॥

सीता—अज्जउत्तस्स एदिणा दुव्वारदारुणारम्भेण दुःखसंजोएण परिमुसिअणिअदुःखं पमुक्कजीविअ मे हिअअं फुडइ । ( आर्यपुत्रस्यैतेन दुर्वारदारुणारम्भेण दुःखसंयोगेन परिमुषितनिजदुःखं प्रमुक्तजीवितं मे हृदयं स्फुटति । )

कथमपि समाधीयते, तं तं कोऽपि चेतोविकारः अप्रतिहतरयः तोयस्य ओघः सैकतं सेतुमिव अन्तः बलात् हित्वा भित्त्वा प्रसरति इत्यन्वयः । वेलोल्लोलक्षुभितकरुणोज्जृम्भणस्तम्भनाऽर्थम् = वेलायाः = मर्यादायाः, उल्लोलः = उद्गतः, क्वचिद् 'वेला'-स्थाने 'लोल'पदस्य पाठस्तत्र लोलाः = चञ्चलाः, उल्लोलाः = महातरङ्गाः, यस्य स इत्यर्थः, क्षुभितः = क्षोभं प्राप्तः, यः करुणः = शोकः, तस्य उज्जृम्भणम् = अभिवृद्धिः, तत्स्तम्भनार्थम् = तन्निवारणाऽर्थम्, यो यो यत्नः = यो यः प्रयासः, कथमपि = केनाऽपि प्रकारेण, समाधीयते = उत्पाद्यते, तं तं = यत्नं, कोऽपि = अनिर्वचनीयः, चेतोविकारः = मनोविकृतिः, अप्रतिहतरयः = अप्रतिरुद्धवेगः, तोयस्य = जलस्य, ओघः=प्रवाहः, सैकतम् = वालुकामयम्, सेतुमिव=आलिमिव, अन्तः=मध्ये, आधानस्तम्भनयोर्मध्ये इत्यर्थः, बलात् = हठात्, हित्वा = गत्वा, भित्त्वा = भेदं कृत्वा, क्वचित् 'भित्त्वा भित्त्वा' इति पाठः, प्रसरति = प्रसारं करोति, समुद्रस्येव मदीयशोकस्य स्तम्भनमशक्यमिति भावः । आत्रोपमाऽलङ्कारः । मन्दाक्रान्ता वृत्तम् ॥ ३६ ॥

सीतेति । एतेन=पुरोदृश्यमानेन, दुर्वारदारुणारम्भेण = दुर्वारः = दुर्निवर्त्यः, चाऽसौ दारुणः = कठोरः, एतादृशः आरम्भः = उपक्रमः, यस्य तेन, एतादृशेन दुःखसंयोगेन । क्वचित् 'दुःखसंक्षोभेण' इति पाठान्तरं, तस्य कष्टचाञ्चल्येनेत्यर्थः । प्रमुक्तजीवितम् = प्रमुक्तं = त्यक्तम्, जीवितं = जीवनं येन तत्, इवादिपदा-

तरहसे किया जाता है, उस २ यत्नको अनिर्वचनीय चित्तका विकार-नही रोके जानेवाले वेगसे युक्त जलप्रवाह जैसे बालूके पुलको तोडकर फैलता है, उसी तरह बीचमें बलसे जाकर और भेदन कर फैलता है ॥ ३६ ॥

**सीता**—आर्यपुत्रके इस दुर्निवार्य और कठोर आरम्भवाले दुःखसयोगसे जीवनको त्याग कर जैसे अपहृत निजदुःखवाला मेरा हृदय विदीर्ण होता है ।

* 'मयाऽऽधीयते इति पाठान्तरम् ।

वासन्ती—( स्वगतम् ) कष्टमत्यासक्तो देवः । तदाक्षिपामि तावत् । (प्रकाशम् ) चिरपरिचितानिदानीं जनस्थानाभागानवलोकनेन मानयतु देवः।

रामः—एवमस्तु । ( इत्युत्थाय परिक्रामति । )

सीता—संदीवण एव्व दुःखस्स पिअसहीए विणोदणोवाओ त्ति तक्केमि । ( संदीपन एव दुःखस्य प्रियसख्या विनोदनोपाय इति तर्कयामि । )

वासन्ती—देव देव !

---

ऽभावेनाऽत्र प्रतीयमानोत्प्रेक्षा । अत एव—परिमुषितनिजदुःखम् = परिमुषितम् = अपहृतम् , निजम् = आत्मीयम् , दुःख यस्य तत् । क्वचित्परिमुषितस्थाने 'प्रस्फुटितमि'ति पाठस्तस्य प्रस्फुटितं = दलितं, प्रकाशितमित्यर्थः । क्वचित् 'स्फुटितमि'ति पदं नाऽस्ति 'आकम्पितं मे हृदयम्' इत्यस्ति ।

वासन्तीति । अत्यासक्तः = अतिशयासक्तियुक्तः, सीतायामिति शेषः, क्वचित् 'अभ्यापन्न' इति पाठस्तस्य अभितः आपत्प्राप्त इत्यर्थः, 'आपन्न आपत्प्राप्तः स्यात्' इत्यमरः । आक्षिपामि = आक्षेपं करोमि, अन्यत्र नयामीति भावः । जनस्थानाभागान् = दण्डकारण्याऽशप्रदेशान् , मानयतु = सत्करोतु, क्वचित् 'आत्मानमानन्दयतु' इति पाठस्तत्र—आत्मानं = स्वम् , आनन्दयतु = साऽऽनन्दं करोतु ।

राम इति । एवम् = इदं भवत्योक्तं जनस्थानाभागाऽवलोकनम् , अस्तु = भवतु । परिक्रामति = परितश्चलति ।

सीतेति । दुःखस्य = व्यथायाः, मानस्या इति शेषः, सन्दीपने = उद्दीपने, एव प्रियसख्याः = वासन्त्याः, विनोदनोपायः = चित्ताह्लादनहेतुः । अस्तीति शेषः । तर्कयामि = जानामि, क्वचित् 'मन्यते' इति पाठस्तत्र मयेति शेषः ।

---

वासन्ती—(मनही मन) कष्ट है, महाराज बहुत ही आसक्त हो गये हैं । इसलिए इनके चित्तको दूसरी ओर ले जाती हूं । (सुनाकर) महाराज ! अब चिरकालसे परिचित दण्डकारण्यके प्रदेशोंको देखकर सम्मानित करें ।

राम—ऐसा ही हो । ( ऐसा कहकर उठकर चलते हैं । )

सीता—'दुःखके उद्दीपनमें ही प्रियसखीका दिल बहलानेका उपाय है' मैं ऐसा विचार करती हूं ।

वासन्ती—महाराज ! महाराज !!

सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ? ॥ ३८ ॥

( इति मूर्च्छति । )

सीता—हद्धी हद्धी ! पुणोवि मुद्धो अज्जउत्तो । ( हा धिक् हा धिक् ! पुनरपि मूढ आर्यपुत्रः । )

वासन्ती—देव ! समाश्वसिहि समाश्वसिहि ।

सीता—अज्जउत्त ! मं मन्दभाइणिं उद्दिसिअ सअलजीवलोअमङ्गलिअजम्मलाहस्स दे वारंवारं संसइदजीविअदालुणो दशापरिणामो त्ति हा हदह्मि । ( इति मूर्च्छति ) ( आर्यपुत्र ! मा मन्दभागिनीमुद्दिश्य सकलजीवलोकमाङ्गलिकजन्मलाभस्य ते वारंवारं संशयितजीवितदारुणो दशापरिणाम इति हा हतास्मि )।

---

लोकम् , शून्यम् = सकलप्राणिरहितम् , मन्ये = जानामि, अन्त =शरीराऽभ्यन्तरे अविरलज्वालम् = अविरला॰ = अविच्छिन्ना॰, ज्वालाः = तापा॰, यस्मिन्कर्मणि॰ तद्यथा तथेति क्रियाविशेषणम् , 'अविरतज्वालम्' इति पाठे—अविरता॰ = अविश्रान्ता इत्यर्थ॰ । ज्वलामि = दीप्ये इत्यर्थः, सीदन् = अवसन्नो भवन् , विधुरः= प्रियारहितः, अन्तरात्मा = शरीराऽभ्यन्तरस्य॰ पुरुष , अन्धे तमसि=गाढान्धकारे, मज्जति इव = मग्नो भवति इव, मोह॰ = मूर्च्छा, विष्वक् = परित॰, स्थगयति = छादयति, मदभाग्यः = अल्पभाग्य॰, अहं राम इति शेषः, कथं करोमि=किमाचरामीत्यर्थः । अस्य सीताविरहजन्यदु॰खातिशयस्य कमपि निवारणोपायं न पश्यामि इति भावः । उत्प्रेक्षाऽलङ्कारः । मन्दाक्रान्ता वृत्तम् ॥ ३८ ॥

सीतेति । मूढ॰ = मोहमुपगतः ।

सीतेति । सकलजीवलोकमाङ्गलिकजन्मलाभस्य = मङ्गलेन निर्वृत्तो माङ्गलिकः 'तेन निर्वृत्तम्' इति ठञ् , सकलजीवलोकानां = सर्वप्राणिसमूहानाम् ,

---

अन्तरात्मा मानो गाढ अन्धकारमें डूब रहा है, मूर्च्छा चारो तरफ आवरण कर रही है, मन्दभाग्य वाला मैं क्या करूँ ? ॥ ३८ ॥

( ऐसा कहकर मूर्च्छित होते हैं । )

सीता—हाय ! धिक्कार है, हाय ! धिक्कार है । आर्यपुत्र फिर भी मूर्च्छित हो गये हैं ।

वासन्ती—महाराज ! आश्वस्त हों, आश्वस्त हों ।

सीता—आर्यपुत्र ! जिनका जन्मलाभ सम्पूर्ण जीवोंके मङ्गलके लिए हुआ है, तथापि मुझ अभागिनीको उद्देश्य कर आपका जीवन सशययुक्त होनेसे भयङ्कर अवस्थाका परिणाम हो रहा

तमसा—वत्से ! समाश्वसिहि समाश्वसिहि। पुनस्ते पाणिस्पर्शो रामभद्रस्य जीवनोपायः।

वासन्ती—कथमद्यापि नोच्छ्वसिति ? हा प्रियसखि सीते ! कासि ? सम्भावयात्मनो जीवितेश्वरम्।

( सीता ससम्भ्रममुपसृत्य हृदि ललाटे च स्पृशति। )

वासन्ती—दिष्ट्या प्रत्यापन्नचेतनो रामभद्रः।

रामः—

आलिम्पन्नमृतमयैरिव प्रलेपैरन्तर्वा बहिरपि वा शरीरधातून्।

---

माङ्गलिको जन्मलाभो यस्य तस्य, क्वचित् 'सकलजीवलोकमङ्गलाधारस्य' इति पाठः, वारं वारं = भूयो भूयः, संशयितजीवितदारुण = संशयितम् = सन्देहविषयभूतम्, जीवितम् = जीवनम्, यस्मिन्सः, अत एव दारुणः = भयङ्करः दशापरिणामः = अवस्थापरिपाकः।

तमसेति। जीवनोपाय = जीवनस्य = चैतन्याधानस्य, उपायः = यत्नः।

वासन्तीति। न उच्छ्वसिति = चैतन्यं नाऽऽप्नोति, आत्मनः = स्वस्य, जीवितेश्वरं = प्राणेशं, राममित्यर्थः, सम्भावय = सम्भावितं कुरु।

वासन्तीति। दिष्ट्या = भाग्येन। प्रत्यापन्नचेतनः = प्रत्यापन्ना = पुनरागता, चेतना = संज्ञा यस्य सः।

आलिम्पन्निति। अमृतमयैः प्रलेपैः अन्तर्वा बहिरपि वा शरीरधातून् आलिम्पन्निव जीवयन् अकस्मात् संस्पर्शः पुनरपि आनन्दात् अपरं मोहम् आदधाति इवेत्यन्वयः। अमृतमयैः = पीयूषस्वरूपैः, 'चिन्मयमि'त्यादाविव स्वार्थिको मयट्प्रत्ययः, प्रलेपैः = प्रकृष्टो लेपो यैस्तैः = लेपसाधनद्रव्यैरित्यर्थः,

---

है हाय ! मैं हतप्राय हो रही हूँ। ( ऐसा कहकर मूर्च्छित होती हैं )

तमसा—वत्से ! आश्वस्त हो, आश्वस्त हो। फिर तुम्हारे हाथका स्पर्श रामभद्रको होशमें लानेका उपाय है।

वासन्ती—अभी तक भी क्यों होशमें नहीं आ रहे हैं ? हा प्रियसखि सीते ! तुम कहाँ हो ? अपने जीवनेश्वरको सम्भावित करो।

( सीता जल्दीसे निकट जाकर हृदय और ललाटपर स्पर्श करती हैं। )

वासन्ती—भाग्यसे रामभद्र फिर होशमें आ गये हैं।

राम—अमृतस्वरूप लेपसाधन द्रव्योंसे भीतर अथवा बाहर रहनेवाले शरीर और धातुओं-

संस्पर्शः पुनरपि जीवयन्नकस्मादानन्दादपरमिवादधाति मोहम् ॥ ३९ ॥

( सानन्दं निमीलिताक्ष एव । ) सखि वासन्ति ! दिष्ट्या वर्धसे ।

वासन्ती—कथमिव ?

रामः—सखि ! किमन्यत् । पुनरपि प्राप्ता जानकी ।

वासन्ती—अयि देव रामभद्र ! क सा ?

रामः—( स्पर्शसुखमभिनीय । ) पश्य, नन्वियं पुरत एव ।

वासन्ती—अयि देव रामभद्र ! किमिति मर्मच्छेददारुणैरतिप्रलापैः प्रियसखीविपत्तिदुःखदग्धामपि मां पुनर्मन्दभाग्यां दहसि ?

---

अन्तर्वा = मध्ये स्थितान् वा, बहिरपि वा = बहिः = स्थितान् वा, शरीरधातून् = शरीरं च धातवश्च, तान् = कायं त्वगादिधातूंश्चेत्यर्थः, आलिम्पन्निव = सर्वतो लिप्तान् कुर्वन्निव, जीवयन् = प्राणप्रतिष्ठामापादयन् , अकस्मात् = सहसा, जानकीदर्शनाऽभावेन निर्हेतुक इति भाव, संस्पर्शः = आमर्शनं, पुनरपि = भूयोऽपि, आनन्दात् = आनन्दमुत्पाद्य, 'ल्यब्लोपे कर्मण्यधिकरणे च' इति पञ्चमी, अपरम् = अन्यं, यद्वा न परम् अपरमनन्यमित्यर्थः । सीताविषयकं प्रागनुभूतमेवेति भावः, मोहं = दुःखहेतुभिन्नमपरां मूर्च्छामिति भावः, आदधाति इव = उत्पादयति इव । अत्र क्रियोत्प्रेक्षा । प्रहर्षिणी वृत्तम् ॥ ३९ ॥

सानन्दमिति । सानन्दम् = आनन्देन सहितं यथा तथा, निमीलिते = मुकुलिते, अक्षिणी = नेत्रे यस्य स इत्यर्थः ।

वासन्तीति । मर्मच्छेददारुणैः = मर्मच्छेदाः = हृदयाद्यवयवक्षतयः, इव दारुणाः = कठोराः, तैः, अतिप्रलापैः = अतिशयाऽनर्थकवचोभिः, सीताया अभावेऽपि सीताप्राप्तिकथनस्य मिथ्याभूतत्वादिति भावः ; प्रियसखीविपत्तिदुःख-

---

को लिप्त करते हुए की तरह होशमें लाता हुआ अतर्कित रूपसे हुआ यह स्पर्श फिर भी आनन्दको पैदाकर मानो दूसरी तरहकी मूर्च्छाको पैदा कर रहा है ॥ ३९ ॥

( आनन्दके साथ आँखोंको बन्द किये हुए ही ) सखि वासन्ति ! भाग्यसे बढती हो ।

**वासन्ती**—कैसे ?

**राम**—सखि ! और क्या ? फिर भी सीता मिल गई हैं ।

**वासन्ती**—हे महाराज रामभद्र ! वे कहाँ हैं ?

**राम**—( स्पर्शके सुखका अभिनय करके ) देखो, यह सामने ही तो है ।

**वासन्ती**—हे महाराज रामभद्र ! हृदय आदि मर्मस्थलोंके छेदनेकी तरह कठोर अतिशय प्रलापोंसे प्रियसखीकी आपत्तिकी पीडासे जली हुई मुझ मन्दभागिनीको बार बार क्यों जलाते हैं ?

सीता—ओसरिदुं इच्छम्मि । एसो उण चिरप्पणअसंभारसोम्मसीअलेण अज्जउत्तप्फरिसेण दीहदारुणं वि झत्ति संदावं उल्लाहअन्तेण वज्जलेहावणद्धो विअ परिअद्धवावारो आसंजिओ विअ मे अग्गहत्थो । ( अपसर्तुमिच्छामि । एष पुन चिरप्रणयसम्भारसौम्यशीतलेन आर्यपुत्रस्पर्शेन दीर्घदारुणमपि झटिति सन्तापमुल्लाघयता वज्रलेपोपनद्ध इव पर्यस्तव्यापार आसञ्जित इव मेऽग्रहस्तः । )

राम:—सखि ! कुतः प्रलापः ?

गृहीतो य॰ पूर्वं परिणयविधौ कङ्कणधरः

---

दग्धम् = प्रियसख्या॰ = सीतायाः, विपत्त्या=विपदा, यद्दु खं=कष्टम् , तेन दग्धाम्= सन्तप्ताम् , मां = वासन्तीम् ।

सीतेति । अपसर्तुम् = दूरं गन्तुम् , चिरप्रणयसंभारसौम्यशीतलेन = चिरप्रणयस्य = बहुकालप्रेम्ण॰, संभारेण = समूहेन, सौम्य=आह्लादकरः, तथा शीतलः= शीत॰, संतापाऽपहारक इति भाव॰, तेन, 'चिरसद्भावसौम्यशीतलेने'ति पाठान्तरम् , तत्र—चिरं = बहुकालम् , सद्भावः = उत्तमाऽभिप्रायः, अनुरागरूप इति भावः । दीर्घदारुणमपि = दीर्घः = आयत॰, निरवधिरिति भाव , अत एव दारुणः = भयङ्करस्तम् । उल्लाघयता = लघुकुर्वता, 'हरता' इति पाठान्तरं, तत्र सुगमोऽर्थः । वज्रलेपोपनद्धः = वज्रलेपेन = दृढलेपविशेषेण, उपनद्ध = बद्धः ; पर्यस्तव्यापारः = पर्यस्त॰ = अपगत॰, व्यापारः = क्रिया यस्य स॰, निष्पन्द इत्यर्थः । अग्रहस्तः = हस्ताऽग्रभागः, आसञ्जित इव = लग्न इव, वर्तत इति शेषः । 'वज्रलेपोपनद्ध इव' अत उत्तरं 'स्विद्यन्निःसहविपर्यस्तो वेपते अवश इव मे हस्त' इति पुस्तकान्तरस्थ॰ पाठस्तत्र—स्विद्यन् = स्वेदयुक्तो भवन् , नि॰सहविपर्यस्तः = नि॰सहम् = असमर्थः, यथा तथा विपर्यस्तः = पतितः, शिष्टं सुगमम् , इत्यर्थः ।

राम इति । 'अतिप्रलापैः' इति वासन्तीवाक्यस्योत्तरमाह—सखीति ।

गृहीत इति । पूर्वं परिणयविधौ कङ्कणधरो यो गृहीतः, सुधासूतेः अमृत-

---

सीता—मैं दूर होना चाहती हूं । क्योंकि बहुत समयके प्रेमके समूहसे हर्ष करनेवाला और ठण्डा, दीर्घ और दारुण सन्तापको भी कम करनेवाला जो आर्यपुत्रका स्पर्श है, उससे वज्रलेपसे बँधे हुएकी तरह निश्चेष्ट होकर मेरे हाथका अग्रभाग जैसे आर्यपुत्रमें जुड़ गया है ।

राम—सखि ! प्रलाप कहाँ ?

मैंने पहले विवाहकी विधिमें कङ्कणधारी जिस हाथको पकड़ा था और चन्द्रके अमृतके

सुधासूतेः पादैरमृतशिशिरैर्यः परिचितः।

सीता—अज्जउत्त ! सो एव्व दाणिंसि तुमम् ? ( आर्यपुत्र ! स एवेदानीमसि त्वम् )

रामः—

स एवाय तस्यास्तदितरकरौपम्यसुभगो

---

शिशिरैः पादैः यः परिचित इति पूर्वार्द्धान्वयः। पूर्वं = प्राक्, परिणयविधौ = विवाहविधौ, कङ्कणधरः = विवाहसूत्रधारकः, यः = करः, गृहीतः = स्वीकृतः, सुधासूतेः = सुधायाः = अमृतस्य, सूतिः = उत्पत्तिः यस्मात्तस्य = चन्द्रमस इत्यर्थः, अमृतशिशिरैः = पीयूषशीतलैः, पादैः = किरणैः 'पादा रश्म्यङ्घ्रितुर्यांऽशा' इत्यमरः, यः = करः परिचितः = संश्लिष्टः, आसीदिति शेषः। 'सुधासूतेः पादैः' इत्यत्र 'चिरं स्वेच्छास्पर्शैः' इति क्वचित्कः पाठस्तत्र—चिरम् = बहुकालं यावत्, स्वेच्छास्पर्शैः = निजवाञ्छाकालोपनतैः आमर्शनैरित्यर्थः।

रामेण सीतापाणेर्यानि विशेषणानि प्रतिपादितानि तान्येव रामपरकत्वेन संभाव्य सीता कथयति अज्जउत्तेत्यादि। स एव = परिणयविधौ कङ्कणधरो मया गृहीतः, सुधासूतेः अमृतशिशिरैः पादैः यः परिचितः स एव भवान्, न मनागप्यन्तरं जातमिति भावः।

स एवेति। ललितलवलीकन्दलनिभः तदितरकरौपम्यसुभगः स एवाऽयं तस्याः पाणिः मया लब्ध इत्युत्तरार्द्धान्वयः। ललितलवलीकन्दलनिभः = ललितम् = सुकुमारम्, यत् लवलीकन्दलम् = लवलीलताङ्कुरः, तेन सदृशः = तुल्यः, ललितलवलीकन्दलनिभः, 'निभसंकाशनीकाशप्रतीकाशोपमादयः' इत्यमरः। तदितरकरौपम्यसुभगः = तदितरकरेण = गृहीताऽपरहस्तेन, यत् औपम्यम् = सादृश्यम्, तेन सुभगः = सुन्दरः, वामकरसादृश्यं दक्षिणकरस्य तथा दक्षिणकरसादृश्यं सव्यकरस्य, तथा सीताकरद्वयसादृश्यं जनान्तरकरैः सह नास्तीति व्यतिरेको ध्वन्यते, स एवाऽयम् = प्राग्गृहीत एवाऽयम्, तस्याः = सीतायाः,

---

तुल्य किरणोंसे भी परिचित था।

सीता—आर्यपुत्र ! अभी भी आप वही हैं।

राम—सुन्दर लवलीके अङ्कुरकी तरह उनके दूसरे हाथकी उपमासे सुन्दर वही सीताका

मया लब्धः पाणिर्ललितलवलीकन्दलनिभः ॥ ४० ॥

( इति गृह्णाति । )

सीता—हद्धी हद्धी ! अज्जउत्तप्परिसमोहिदाए पमादो मे संवुत्तो ।

( हा धिक् हा धिक् ! आर्यपुत्रस्पर्शमोहितायाः प्रमादो मे संवृत्तः । )

रामः—सखि वासन्ति ! आनन्दमीलितः प्रियास्पर्शसाध्वसेन परवानस्मि । तत्त्वमपि धारय माम् ।

---

पाणिः = करः, मया = रामेण, लब्धः = आसादितः, न तु अन्यदीय इति भावः; तदितरेत्यत्र 'तुहिनकरकौपम्यसुभग' इति पाठान्तरं तत्र=तुहिनानाम् = हिमानाम्, करकाणाम् = वर्षोपलानाम्, औपम्यम् = तुल्यत्वम्, तेन सुभगः=सुन्दरः इत्यर्थः, 'वर्षोपलस्तु करका' इत्यमरः, अत्र पूर्वार्द्धेऽर्थश्लेषालङ्कार उत्तरार्द्धे उपमा तथा च द्वयोरङ्गाङ्गिभावेन सङ्करः । शिखरिणी वृत्तम् ॥ ४० ॥

सीतेति । आर्यपुत्रस्पर्शमोहितायाः = आर्यपुत्रस्पर्शेन मोहितायाः ततः कर्तव्याऽकर्तव्यविवेकशून्याया इति यावत्, प्रमादः = अनवधानता, संवृत्तः=संजातः ।

राम इति । आनन्दमीलितः = आनन्देन = सुखेन, मीलितः = मुद्रितलोचनः 'आनन्दनिमीलितेन्द्रिय' इति पाठे—आनन्देन = स्पर्शजन्यसुखेन, निमीलितानि = मुद्रितानि, स्वस्य कार्याऽसमर्थानीति भावः, इन्द्रियाणि = हस्तपादादीनि यस्य स इत्यर्थः । प्रियास्पर्शसाध्वसेन=प्रियायाः = सीतायाः, स्पर्शेन = आमर्शनेन, यत् साध्वसम् = शृङ्गारजन्यं भयम्, तेन परवान् = पराधीनः, 'परतन्त्रः पराधीनः परवान्नाथवानपि ।' इत्यमरः । तत्=तस्माद्धेतोः, त्वमपि=भवती वासन्त्यपि, मा=रामम्, धारय = गृहाण, यस्मादप्रत्याशितानन्दातिशयप्राप्तेर्मूर्च्छितो भूत्वा न पतेयमिति भावः; पुस्तकान्तरे तु 'एनां धारये'दिति पाठस्तत्र—एनाम् = सीताम्, धारय = गृहाण, येनेयं पलायितुं न शक्नुयादिति भावः ।

---

हाथ मैंने पाया है ॥ ४० ॥

( ऐसा कहकर पकडते हैं । )

सीता—हा धिक् ! हा धिक् ! आर्यपुत्रके स्पर्शसे मोहित होनेके कारण मुझसे गलती हो गई ।

राम—सखि वासन्ति ! आनन्दसे आँखें मूँदकर भी प्रियाके स्पर्शसे शृङ्गारजन्य भयके कारण पराधीन हूं । इस कारणसे तुम भी मुझको पकड़ो । ( जिससे कि मैं गिर न पड़ूं । )

वासन्ती—कष्टमुन्माद एव ।

( सीता ससंभ्रमं हस्तमाक्षिप्यापसर्पति । )

रामः—धिक् प्रमादः ।

करपल्लवः स तस्याः सहसैव जडो जडात्परिभ्रष्टः ।
परिकम्पिनः प्रकम्पी करान्मम स्विद्यतः स्विद्यन् ॥ ४१ ॥

---

वासन्तीति । उन्मादः = चित्तविभ्रम, सीताप्राप्तिसूचकरामवाक्याकर्णनोत्तरं सीताया अदर्शनाद्वासन्ती रामस्योन्मादं विचार्य कथयतीदं वाक्यमिति बोध्यम् ।

सीतेति । ससम्भ्रमम् = सत्वरम्, हस्तम् = रामकरम्, आक्षिप्य = निरस्य, अपसर्पति = दूरं गच्छति ।

रामः स्वस्याऽनववानता समर्थयति—करपल्लव इति । जडः प्रकम्पी स्विद्यन् तस्या स. करपल्लव. जडात् परिकम्पिन. स्विद्यतो मम करात् सहसा एव परिभ्रष्ट इत्यन्वय । जड = स्तब्ध, प्रकम्पी = कम्पयुक्त., स्विद्यन् = स्वेदयुक्तो भवन्, अत्र करनिष्ठे अवस्थात्रयेऽपि हेतु. प्रियस्पर्शो बोध्य, तथा चात्र उभयोरपि सात्त्विकभावोदय सूच्यते ; एतादृश. तस्या. = सीताया, स = प्रागसकृद् गृहीत., करपल्लव = पाणिकिसलयम्, जडात् = स्तब्धात्, परिकम्पिन = कम्पयुक्तात्, स्विद्यत = स्वेदयुक्तात्, मम = रामस्य, करात् = हस्तात्, सहसा एव = अतर्कित- एव, परिभ्रष्ट = परिच्युत., अभूदिति शेष. । अत्र काव्यलिङ्गोपमयोः सङ्करः । एवं सीतारामयोरुभयोरपि मिथ.स्पर्शसंभूतस्तम्भादिसात्त्विकभाववर्णनात् पोषितो रत्याख्य स्थायिभाव श्रृङ्गाररसता प्राप्त इति रसप्राधान्येन ध्वनिरयम् । अत्रार्या छन्द, तल्लक्षणं यथा वृत्तरत्नाकरे-'लक्ष्मैतत्सप्त गणा गोपेता भवति नेह विषमे ज । षष्ठोऽय नलघुर्वा प्रथमेऽर्द्धे नियतमार्याया. ॥ षष्ठे द्वितीयलात्परके ले मुखलाच्च स्यतिपदनियमः । चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः' इति ॥ ४१ ॥

---

वासन्ती—कष्ट है, यह पागलपन ही है ।

( सीता जल्दीके साथ हाथ खींचकर दूर होती हैं । )

राम—धिक्कार है, गलती हो गई ।

स्तब्ध, कम्पयुक्त और पसीजता हुआ पल्लवके तुल्य सीताका वह हाथ, उसी तरह स्तब्ध, काँपते हुए और पसीजते हुए मेरे हाथसे अकस्मात् ही छूट गया है ॥ ४१ ॥

सीता—हद्धी हद्धी ! अज्जवि अणुबद्धबहुघुम्मन्तवेअणं ण संठावेमि अत्ताणम् । ( हा धिक् हा धिक् ! अद्याप्यनुबद्धबहुघूर्णमानवेदन न संस्थापयाम्यात्मानम् । )

तमसा—( सस्नेहकौतुकस्मितं निर्वर्ण्य । )

सस्वेदरोमाञ्चितकम्पिताङ्गी जाता प्रियस्पर्शसुखेन वत्सा ।
मरुन्नवाम्भःपरिधूत*सिक्ता कदम्बयष्टिः स्फुटकोरकेव ॥ ४२ ॥

---

सीतेति । अनुबद्धबहुघूर्णमानवेदनम् = अनुबद्धा = उत्पन्ना, बह्वी = अधिका, घूर्णमाना = उद्गच्छन्ती, वेदना = दुःखम् यस्य तम् । आत्मानम् = स्वम् , न सस्थापयामि = न स्थिरं करोमि, पुस्तकान्तरे तु 'अनवस्थितस्तिमितमूढघूर्णमाननयनः' इति पाठस्तत्र = अनवस्थिते = करपरिभ्रंशेन हेतुना अस्थिरे, स्तिमिते = इष्टाऽप्राप्त्या वाष्पार्द्रे, मूढे = मत्स्थित्यज्ञानेन व्यापाररहिते, घूर्णमाने = मद्दर्शनाशया इतस्ततः प्रचलती, नयने = नेत्रे, यस्य स इति रामविशेषणम् ; 'आर्द्रं सार्द्रं क्लिन्न तिमितं स्तिमितं समुन्नमुत्तं च ।' इत्यमरः; एतादृशो रामः आत्मानम् = स्वम् , न पर्यवस्थापयति = प्रकृतिस्थं न करोतीत्यर्थः ।

सस्वेदेति । वत्सा प्रियस्पर्शसुखेन मरुन्नवाऽम्भ परिधुतसिक्ता स्फुटकोरका कदम्बयष्टिरिव सस्वेदरोमाञ्चितकम्पिताऽङ्गी जाता इत्यन्वयः । वत्सा = सीता, सीता तमसायाः स्नेहाऽनूबन्धेन पुत्रीसमा, तत 'वत्सेति' कथनं सगच्छते । प्रियस्पर्शसुखेन = प्रियस्य = वल्लभस्य, रामस्येत्यर्थः, स्पर्शसुखेन = आमर्शनानन्देन, मरुन्नवाम्भःपरिधुतसिक्ता = मरुता = वायुना, नवाऽम्भसा = नूतनजलेन, प्राथमिकवृष्टिजलेनेति भावः, यथाक्रमं परिधूता = परिकम्पिता, सिक्ता = उक्षिता च, स्फुटकोरका = प्रफुल्लकलिका, 'कलिका कोरकः पुमान्' इत्यमरः, कदम्बयष्टिरिव = कदम्बशाखेव, सस्वेदरोमाञ्चितकम्पिताऽङ्गी = रोमाञ्चा संजाता येषा तानि रोमाञ्चितानि, 'तदस्य संजात तारकादिभ्य इतच्' इतीतच्प्रत्ययः, सस्वेदानि = घर्मयुक्तानि, रोमाञ्चितानि = पुलकितानि, कम्पितानि = वेपथुयुक्तानि, अङ्गानि =

---

सीता—हा धिक् ! हा धिक् ! अभी तक अतिशय वेदनासे युक्त अपनेको स्थिर नहीं कर सकी हूँ ।

तमसा—( प्रेम, कौतुक और मुस्कराहटके साथ देखकर )

सीता पतिके स्पर्शके सुखसे वायुसे कम्पित और नये जलसे सींची गई विकसित कलियों युक्त कदम्बकी डालकी तरह स्वेद, रोमाञ्च और कम्पसे युक्त अङ्गोंसे सम्पन्न हो गई है ॥४२॥

---

* 'प्रविधूत—' इति पाठान्तरम् ।

सीता—( स्वगतम् ) अवसेन एदेण अत्ताणएण लज्जाविदह्मि भअवदीए तमसाए। किंति किल एसा मण्णिस्सदि—'एसो परिच्चाओ, एसो अहिसङ्गे'त्ति। ( अवशेनैतेनात्मना लज्जापितास्मि भगवत्या तमसया। किमिति किलैषा मंस्यत 'एष परित्याग एषोऽभिषङ्ग' इति। )

रामः—( सर्वतोऽवलोक्य। ) हा कथं नास्त्येव। नन्वकरुणे वैदेहि!

सीता—अकरुणह्मि, जा एव्वंविह तुम पेक्खन्दी एव जीवेमि। ( अकरुणास्मि, यैवंविधं त्वा पश्यन्त्येव जीवामि। )

रामः—क्वासि प्रिये! देवि! प्रसीद प्रसीद। न मामेवंविधं परित्यक्तुमर्हसि।

---

हस्तपादादयोऽवयवाः, यस्या सा, 'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्' इति सयोगोपधत्वेऽपि ङीष्; जाता = सम्पन्ना। अत्रोपमालङ्कारः, 'मरुता परिधूता, नवाम्भसा सिक्ता' इत्यत्र यथासंख्याऽलङ्कारश्च, तथा च द्वयोः सङ्करः। उपजातिर्वृत्तम् ॥ ४२ ॥

सीतेति। अवशेन = आनन्दाऽधीनेन, एतेन = अनेन, आत्मना = शरीरेण, 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च।' इत्यमरः, लज्जापिता = लज्जाम् = व्रीडाम्, आपिता = प्रापिता, अस्मि, स्वेदाद्युत्पत्तेरिति भावः। अभिषङ्ग = अनुरागः, 'हृदयासङ्ग' इति पुस्तकान्तरपाठस्तत्र—हृदयस्य = मनसः आसङ्गः = आसक्तिः। मंस्यते = विचारयिष्यति।

राम इति। अकरुणे = निर्दये।

सीतेति। या = अहम्। एवंविधम् = एतादृशं, मदीयशोकेन अतिविह्वलमिति भावः, पश्यन्त्येव = अवलोकयन्त्येव, जीवामि = प्राणान् धारयामि, न मुञ्चाम्यतः अकरुणाऽस्म्येवेति भावः।

राम इति। प्रसीद = प्रसादं कुरु, देहि मे दर्शनमिति भावः।

---

सीता—( मन ही मन ) विवश इस शरीरके कारण भगवती तमसासे लजवाई गई हूं। यह क्या विचार करती होगी—'यह परित्याग और यह आसक्ति?'

राम—( सब ओर देखकर ) हाय! कैसे। नहीं ही हैं। अरे निर्दय सीते!

सीता—मैं निर्दय ही हूं, जो ऐसे दुःखित आपको देखती हुई भी जी रही हूं।

राम—हे प्रिये! तुम कहाँ हो? प्रसन्न हो, प्रसन्न हो। तुम्हें इस अवस्थामें मेरा त्याग नहीं करना चाहिए।

सीता—अयि अज्जउत्त ! विप्पदीवं विअ। (अयि आर्यपुत्र ! विप्रतीपमिव।)

वासन्ती—देव ! प्रसीद प्रसीद । स्वेनैव लोकोत्तरेण धैर्येण संस्तम्भयातिभूमिं गतमात्मानम् । कुत्र मे प्रियसखी ?

रामः—व्यक्तं नास्त्येव । कथमन्यथा वासन्त्यपि न पश्येत् ? अपि खलु स्वप्न एष स्यात् ? न चास्मि सुप्तः । कुतो रामस्य निद्रा ? सर्वथापि स एवैष भगवाननेकवारपरिकल्पितो विप्रलम्भः पुनः पुनरनुबध्नाति माम् ।

---

सीतेति । विप्रतीपमिव=विशेषेण प्रतीपम्=अति प्रतिकूलमिव, प्राङ्मां त्यक्त्वा साम्प्रतं 'मा त्यक्तुं नाऽर्हसी' त्याकारकं त्वदीयं कथनं विशेषेण प्रतिकूलमेव, नाऽहं त्वा त्यक्तवतीति भावः । पुस्तकान्तरेषु 'विपरीतम्' इति पाठस्तत्राऽपि स एवाऽर्थः ।

वासन्तीति । स्वेनैव = आत्मीयेनैव, लोकोत्तरेण = लोकाऽतिशायिना, अतिभूमिम् = सीमाऽन्तमिति भावः, गतम् = प्राप्तम् , 'अतिभूमिगतविप्रलम्भम्' इति पुस्तकान्तरपाठस्तत्र—अतिभूमिगत० = सीमान्तं प्राप्तः, विप्रलम्भ० = प्रियावियोगः, यस्य तम् इत्यर्थः ; आत्मानम् = स्वम् , संस्तम्भय = अवष्टब्धं कुरु, स्थिरीकुर्विति भावः । प्रियसखी = सीतेति भावः ।

राम इति । नाऽस्त्येव = सीता न विद्यत एव, व्यक्तम् = स्पष्टम् । अन्यथा = सीताया सद्भावे, वासन्त्यपि = वनदेवताऽपि कथम् = कस्माद्धेतोः । राम एवं योग्याऽनुपलम्भनेन सीताया अभावं निश्चित्य पूर्वाऽनुभूतस्पर्शस्य भ्रमत्वरूपत्वं मीमासते अपीत्यादिना । एष० = प्रागुपलब्धः सीतास्पर्शः, स्वप्नः स्यादपि = स्वप्नो भवेत् किम् , अपिशब्द० संभावनाद्योतक , स्वापाऽनन्तरं स्वप्नस्य सत्त्वादाह—सुप्त० = निद्राण०, न चाऽस्मि । तदुपपादयति—कुतो रामस्य निद्रा ? सीतावियोगे 'अनिद्र० सततं राम' इति प्रसिद्धमेवेति भाव० । सर्वथाऽपि = सर्वैः प्रकारैरपि, मम वासन्त्याश्चाऽनुपलम्भान्निद्राभावेन स्वप्नस्याऽप्यसत्त्वादिति सर्वैरपि प्रकारैरिति भाव० । भगवान् = सामर्थ्यसम्पन्न०, अनेकवारपरिकल्पितः =

---

सीता—हे आर्यपुत्र ! यह आप उल्टा ही कहते हैं ।

वासन्ती—महाराज ! प्रसन्न हों, प्रसन्न हों । अपने ही अलौकिक धैर्यसे बहुत दूर गये हुए अपनेको सँभालिए। मेरी प्रिय सखी सीता कहाँ है ?

राम—सचमुच, सीता यहाँ नहीं है । नहीं तो वासन्ती भी उन्हें कैसे न देखतीं ? कदाचित् यह स्वप्न हो, मैं सोया भी नहीं हूं, रामको कहाँ नींद है ? सब तरहसे यह ऐश्वर्यसम्पन्न और चिन्तासे परिकल्पित वह भ्रम ही बारबार मेरा अनुसरण करता है ।

सीता—अह्महे ! उब्भत्तह्मि । ( अहो ! उद्भ्रान्तास्मि । )

रामः—अन्य एवायमधुना विपर्ययो वर्तते ।

उपायानां भावादविरलविनोदव्यतिकरै-
र्विमर्दैर्वीराणां जनितजगदत्यद्भुतरसः ।
वियोगो मुग्धाक्ष्याः स खलु रिपुघातावधिरभू-

---

राक्षसानां विनष्टत्वात्साम्प्रतं क्रोधो न कर्तव्य इति भावः ।

सीतेति । उद्भ्रान्ता = अतिशयभ्रान्तियुक्ता, पुस्तकान्तरेषु 'उन्मत्तिके'ति पाठस्तत्र उन्मादयुक्तेत्यर्थः । इयं कामस्याऽष्टम्यवस्था ।

राम इति । अन्य एव = अपर एव, सीतापूर्ववियोगाद्विलक्षण एवेत्यर्थः, विपर्ययः = सीतावियोगरूपविपर्यासः, पुस्तकान्तरेषु तु अन्यस्थाने 'अन्वर्थ' इति, विपर्ययस्थाने 'प्रलाप' इति पाठस्तत्र अधुना = साम्प्रतं, प्रलापः = अनर्थकं वचः, अन्वर्थः = अर्थमनुगतः, सीताया अभावाद्रावणादीनां च नाशितत्वादिदं मदीयं वचः 'आः पापे'त्यादिरूपमनर्थकमेवेति भावः ।

उपायानामिति । उपायानां भावात् अविरलविनोदव्यतिकरैः वीराणां विमर्दैः जनितजगदत्यद्भुतरसः मुग्धाक्ष्याः स वियोगः रिपुघाताऽवधि अभूत् खलु । कद्धः तूष्णीं सह्य अयं तु प्रविलयः निरवधिरित्यन्वयः । उपायानाम् = वियोगनिवर्तनहेतूनां, सेनासंनाहसेतुबन्धादिसाधनानामिति भावः, भावात् = सत्त्वात्, अविरलविनोदव्यतिकरैः = अविरलाः=सन्तताः 'अविरत' पाठेऽपि स एवार्थः, विनोदानाम्=दुःखविस्मृतिहेतूनाम्, व्यतिकराः = सम्बन्धाः येषु तैः, तादृशैः वीराणां=शूराणां, सुग्रीवप्रभृतीनामित्यर्थः, 'शूरो वीरश्च विक्रान्त' इत्यमरः, विमर्दैः = संप्रहारैः, जनितजगदत्यद्भुतरसः = जनितः = उत्पादितः, जगति=लोके, अत्यद्भुतरसः=विस्मयस्थायिको रसविशेषः, येन सः, मुग्धाक्ष्याः = मुग्धे = सुन्दरे, अक्षिणी = नेत्रे, यस्यास्तस्याः, सीताया इति भावः, 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति समासाऽन्तः षच्, 'षिद्गौरादिभ्यश्च' इति ङीष् । स = पूर्वाऽनुभूतः, वियोगः = विरहः, रिपुघा-

---

सीता—आश्चर्य है ! मुझको बहुत ही भ्रान्ति हो गई थी ।

राम—इस समय दूसरे ही प्रकारका विपर्यय हो गया है ।

उपायोंके रहनेसे निरन्तर दिल बहलानेके सम्बन्धोंसे युक्त सुग्रीव आदि वीरोंके युद्धोंसे जगत्में अतिशय अद्भुत रसको उत्पन्न करनेवाला सीताका वह पहलेका विरह शत्रुकी हत्या-

त्कटुस्तूष्णीं सह्यो निरवधिरयं तु प्रविलयः* ॥ ४४ ॥

सीता—बहुमाणिदह्मि पुव्वविरहे † । णिरवधित्ति हा हदह्मि । ( बहुमानितास्मि पूर्वविरहे । निरवधिरिति हा हतास्मि । )

रामः—कष्टं भोः !

व्यर्थं यत्र कपीन्द्रसख्यमपि मे, वीर्यं हरीणां वृथा,
प्रज्ञा जाम्बवतो न यत्र, न गतिः पुत्रस्य वायोरपि ।
मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः,

त्रावधि॰ = रिपूणा = रावणादीनाम् , घात॰ = वधः, अवधि = पर्यन्तः, सीमा इत्यर्थः, यस्य स॰, तथाविधोऽभूत् = अभवत् । कटुः=क्रूर॰, तूष्णीं सह्यः = प्रतीकाराऽभावाज्जोषंभावेन मर्षणीयः, अयं तु = साम्प्रतमनुभूयमानस्तु, प्रविलयः = प्रवियोगः, पुनर्दर्शनाऽभावाऽभिप्रायेण प्रविलयत्वोक्ति॰ । निरवधि॰ = अवधिशून्यः, यावज्जीवनभावीत्यर्थः । कटुस्थाने 'कथमि'ति, 'तु प्रविलय' इत्यत्र 'त्वप्रतिविधः' इति पाठान्तरम् , तत्र अप्रतिविध इत्यस्य प्रतिविधानरहित इत्यर्थः । अत्र काव्यलिङ्गाऽलङ्कारः । शिखरिणी वृत्तम् ॥ ४४ ॥

सीतेति । पूर्वविरहे=प्राक्तनवियोगे, बहुमानिताऽस्मि=अधिकसम्मानवत्यस्मि, मदर्थमेव सेतुनिर्माणादिदुष्करकार्याऽनुष्ठानादिति भाव॰ । निरवधिरिति = अवधिशून्य इति कथनेन, हताऽस्मि=नष्टाऽस्मि, प्रत्याशायाश्छिन्नत्वादिति भाव॰ ।

व्यर्थमिति । हे प्रिये ! यत्र मे कपीन्द्रसख्यमपि व्यर्थं, हरीणा वीर्यं वृथा, यत्र जाम्बवतः प्रज्ञा न वायो॰ पुत्रस्य अपि गतिर्न, यत्र विश्वकर्मतनयो नलोऽपि

काल तक रहनेवाला था, परन्तु कठोर और प्रतीकार न होनेसे चुपचाप सहने योग्य यह सीताका विरह तो अवधिशून्य है ॥ ४४ ॥

सीता—पहलेके विरहमें मैं बहुत सम्मानित हुई हूँ । 'साम्प्रतिक (इस समयका) विरह अवधिशून्य है' इस उक्तिसे हाय ! हाय ! मैं नष्ट हो गई ।

राम—ओः ! कष्ट है ।

हे प्रिये ! जिस स्थानमें मेरी सुग्रीवके साथ की गई मित्रता भी व्यर्थ है, वन्दरोंका पराक्रम भी निरर्थक है, जहाँ जाम्बवान्‌की बुद्धि भी समर्थ नहीं है, हनुमान्‌की भी गति नहीं है, जहाँपर विश्वकर्माके पुत्र नल भी मार्ग ( पुल ) बनानेमें समर्थ नहीं हैं, किं बहुना, मेरे भाई

* 'निरवधिरिदानीं तु विरह.' इति पाठान्तरम् ।

† 'इद पूर्ववाक्य पुस्तकान्तरेपु नोपलभ्यते । अनावश्यकञ्चैतत् , अग्रेऽस्यैव पुनरुक्तत्वात् । ( स० ) ।

सौमित्रेरपि पत्रिणामविषये तत्र प्रिये ! क्वासि मे ? ॥ ४५ ॥

सीता—बहुमाणिदह्मि पुव्वविरहे । ( बहुमानितास्मि पूर्वविरहे । )

रामः—सखि वासन्ति ! दुःखायैव सुहृदामिदानीं रामदर्शनम् । कियच्चिरं त्वां रोदयिष्यामि । तदनुजानीहि मां गमनाय ।

---

मार्गं कर्तुं न क्षमः, मे सौमित्रेरपि पत्रिणाम् अविषये तत्र क्व असि ? इत्यन्वयः । हे प्रिये = हे सीते ! यत्र=यस्मिन् स्थाने, मे=मम, कपीन्द्रसख्यम्=कपीन्द्रेण=सुग्रीवेण, सख्यम्=मैत्री, अपि, व्यर्थम् = निरर्थम्, निष्फलमित्यर्थः । हरीणा=वानराणा, 'शुकाऽहिकपिभेकेषु हरिर्ना कपिले त्रिषु ।' इत्यमरः, वीर्यं = पराक्रमः, वृथा = व्यर्थम् । यत्र = यस्मिन् स्थाने, जाम्बवत=तन्नामकस्य ऋक्षराजस्य, प्रज्ञा = बुद्धिः, युक्ताऽयुक्तत्वनिश्चायिकेति शेषः, न = न समर्थेति भावः । यत्र = यस्मिन् स्थाने, वायोः पुत्रस्याऽपि = हनूमतोऽपि, गतिः=गमनं, न = न समर्थेति भावः । यत्र=यस्मिन् स्थाने, विश्वकर्मतनयः = विश्वकर्मपुत्रः, नलोऽपि=नलनामको वानरोऽपि, मार्गं = पन्थानं, सेतुबन्धरूपमिति भावः कर्तुम् = विधातुम्, न क्षमः = न समर्थः । मे = मम, प्रियभ्रातुरिति शेषः, सौमित्रेरपि = लक्ष्मणस्यापि, पत्रिणाम्= बाणानाम्, 'पत्त्री रोप इषुर्द्वयो' इत्यमरः, अविषये = अगोचरे, तत्र = तादृशे, क्व = कुत्र स्थाने, असि = वर्तसे । प्राग्रावणहृतायास्तवाऽन्वेषणार्थं सुग्रीवसख्यादिकं सफलमभवत्, साम्प्रतं तु लोकाऽपवादभीतेन मया स्वयं विजने परिहापितायास्तवाऽन्वेषणे प्राक्तनं सर्वमपि साधनं न सार्थकमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ४५ ॥

राम इति । सुहृदाम् = मित्राणाम्, दुःखाय=पीडार्थम्, 'तादर्थ्ये चतुर्थी वाच्या' इति चतुर्थी, सर्वेऽपि सुहृदो मद्दर्शनाऽनन्तरं सीतायाः स्मरन्त्यतो मद्दर्शनं दुःखायैवेति भावः । रोदयिष्यामि = रुदतीं करोमि, गमनाय = गन्तुम् 'तुमर्थाच्च भाववचनात्' इति चतुर्थी, अनुजानीहि = अनुज्ञा देहि ।

---

लक्ष्मणके भी बाणोंसे अग्राह्य ऐसे किस स्थानमें तुम विद्यमान हो ? ॥ ४५ ॥

सीता—मैं पहलेके वियोगमें बहुत मानी गई हूँ ।

राम—सखि वासन्ति ! इस समय रामका दर्शन मित्रोंको दुःखके लिए ही है । मैं कितनी देरतक तुम्हें रुलाऊँ । इस कारणसे मुझे जानेके लिए आज्ञा दो ।

सीता—( सोद्वेगमोहं तमसामाश्लिष्य । ) हा भअवदि तमसे ! गच्छदि दाणिं अज्जउत्तो किं करिस्सम् ? ( इति मूर्च्छति । ) ( हा भगवति तमसे ! गच्छतीदानीमार्यपुत्रः । किं करोमि ? )

तमसा—वत्से जानकि ! समाश्वसिहि समाश्वसिहि । विधिस्तवानुकूलो भविष्यति । तदायुष्मतोः कुशलवयोर्वर्षवर्द्धिमङ्गलानि संपादयितुं भागीरथीपदान्तिकमेव गच्छावः ।

सीता—भअवदि ! पसीद । खणमेत्तं वि दुल्लहदंसणं पेक्खामि । ( भगवति ! प्रसीद । क्षणमात्रमपि दुर्लभदर्शनं पश्यामि । )

रामः—अस्ति चेदानीमश्वमेधसहधर्मचारिणी मे ।

---

सीतेति । सोद्वेगमोहम् = उद्वेगमोहाभ्याम् = विरहजदुःखवैचित्याभ्याम् , सहितं यथा तथेति क्रियाविशेषणम् ।

तमसेति । विधिः = भाग्यम् , 'भाग्यं स्त्री नियतिर्विधिः' इत्यमरः, आयुष्मतोः = जैवातृकयोः, जैवातृकः स्यादायुष्मान्' इत्यमरः, वर्षर्द्धिमङ्गलानि = वत्सरवृद्धिकल्याणकर्माणि, जन्मोत्सवपूजादीनीति भावः, संपादयितुम् = निष्पादयितुम् , भागीरथीपदाऽन्तिकम् = गङ्गापादनिकटम् । जन्मोत्सवपूजनीया देवता व्यवहारनिर्णये यथा—'नवाम्बरधरो भूत्वा पूजयेच्च चिरायुषम् । मार्कण्डेयं नरो भक्त्या पूजयेत्प्रयतस्तथा ॥ तथा दीर्घाऽऽयुषं व्यासं रामं द्रौणिं कृपं बलिम् । प्रह्लादं च हनूमन्तं विभीषणमथाऽर्चयेत् ॥ स्वनक्षत्रं जन्मतिथिं संप्राप्य पूजयेन्नरः । षष्ठीं च दधिभक्तेन वर्षे वर्षे पुनः पुनः ॥' इति ।

सीतेति । प्रसीद = अनुगृहाण । दुर्लभदर्शनम् = दुष्प्राप्यविलोकनं, राममित्यर्थः । रामस्य पुनर्दर्शनस्य सम्भावनाऽभावात्कातर्यात्सीतायाः कथनमिदम् ।

राम इति । अश्वमेधसहधर्मचारिणी = अश्वमेधस्य = तदाख्यराजक-

---

सीता—( उद्वेग और मोहके साथ तमसाको आलिङ्गनकर ) हाय ! भगवति तमसे ! आर्यपुत्र जा रहे हैं, अब मैं क्या करूँ ? ( ऐसा कहकर मूर्च्छित होती हैं । )

तमसा—बेटी जानकी ! धीरज धरो, धीरज धरो । तुम्हारा भाग्य अनुकूल होगा । इस कारणसे चिरजीव कुश और लवकी वर्षवृद्धि ( वर्षगाँठ ) के मङ्गल कर्मोंके सम्पादन करनेके लिए गङ्गाजीके चरणोंके निकट ही हमलोग चलें ।

सीता—भगवति ! अनुग्रह कीजिए । दुर्लभ दर्शनवाले आर्यपुत्रको कुछ समय और भी देख लूँ ।

राम—इस समय अश्वमेध यज्ञकी मेरी सहधर्मचारिणी ( धर्मपत्नी ) है ।

सीता—( साक्षेपम् ) अज्जउत्त ! का ? ( आर्यपुत्र ? का । )

वासन्ती—परिणीतमपि किम् ? *

रामः—नहि नहि । हिरण्मयी सीताप्रतिकृतिः ।

सीता—( सोच्छ्वासास्रम् । ) अज्जउत्त ! दाणिं सि तुमम् । अह्महे उक्खाइदं दाणि मे परिच्चाअसल्लं अज्जउत्तेण । ( आर्यपुत्र ! इदानीमसि त्वम् । अहो, उत्खातितमिदानीं मे परित्यागशल्यमार्यपुत्रेण )

---

र्त्तृकयज्ञविशेषस्य, सहधर्मचारिणी = सहधर्माचरणशीला, श्रौते स्मार्ते च कर्म्मणि दम्पत्योः सहाऽधिकारादिति भावः ।

सीतेति । साऽऽक्षेपम् = आक्षेपेण = भर्त्सनेन, सहितं यथा तथा, का = का त्वदीया सहधर्मचारिणीति भावः ।

वासन्तीति । परिणीतमपि = परिणयः कृतः किम् ? परिणीतमिति भावे क्तः सीतापरित्यागाऽनन्तरं न केवलं शरीरधारणं किंतु परिणयोऽपि जातः किम् ? इति भावः एतेन सीतादुःखदुःखिताया वासन्त्या विस्मृतिर्द्योत्यते । सा च प्रकृतरसपरिपोषिका

राम इति । नहि नहि = न परिणीतं न परिणीतं, परिणतिवार्ताप्यनिष्टेति वीप्सया द्योत्यते, हिरण्मयी = हिरण्यस्य विकारः = सुवर्णनिर्मितेति भावः, सीताप्रतिकृतिः = सीतायाः प्रतिकृतिः = प्रतिमा, 'प्रतिमा प्रतियातना प्रतिच्छाया । प्रतिकृतिरर्चा पुंसि प्रतिनिधिः' इत्यमरः ।

सीतेति । सोच्छ्वासाऽस्राभ्याम् = उच्छ्वासास्राभ्या = अन्तर्मुखश्वासाऽश्रुभ्याम् सहितं यथा तथेति क्रियाविशेषणम् , रामस्य यज्ञे सहचारिण्यर्थं परिणयस्यावश्यकत्वेऽपि तदकरणादुच्छ्वासः, रामस्य आत्मार्थं सर्वविधसुखत्यागदर्शनादश्रुपात इति ज्ञेयम् । इदानीम् = अधुनापि, त्वं = 'स्वापद्धेतुरनुपाश्रितोऽन्यया इत्युक्तरीत्या एकदारव्रतवान् , असि = वर्तसे । परित्यागशल्यम्=परित्याग =निर्वासनम् , एव शल्यम् = शङ्कुः, तत् उत्खातितम् = उद्धृतम् , 'परित्यागलज्जाशल्यम्

---

सीता—( आक्षेपके साथ ) आर्यपुत्र ! वह कौन है ?

वासन्ती—विवाह भी किया क्या ?

राम—नहीं नहीं । सुवर्णनिर्मित सीताकी मूर्त्ति है ।

सीता—( निःश्वासत्यागके साथ आँसू गिराकर ) आर्यपुत्र ! अब आप ( एकपत्नीव्रतके कारणसे ) प्रकृत आर्यपुत्र हैं । अहो ! मेरे परित्यागके शल्यको इस समय आर्यपुत्रने उखाड डाला ।

---

* अत्र 'वासन्तीकृत 'परिणीतमपि किम्' इत्याकारक पाठस्त्याज्य , 'वासन्त्या आत्रेय्याश्च 'अथ स रामभद्रः किमाचार विशातुमर्हति' इति सवादे रामकर्तृकविवाहनिषेधस्य यज्ञे हिरण्मयीसीताप्रतिकृतेश्च ज्ञातत्वादित्यवधेयम् ॥'( स० )

रामः—तत्रापि तावद्बाष्पदिग्धं चक्षुर्विनोदयामि ।

सीता—धण्णा खु सा, जा एव्वं अज्जउत्तेण बहुमण्णीअदि । जा एव्वं अज्जउत्तं विणोदयन्दी आसाबन्धणं खु जादा जीअलोअस्स । ( धन्या खलु सा, यैवमार्यपुत्रेण बहुमन्यते । यैवमार्यपुत्र विनोदयन्त्याशाबन्धन खलु जाता जीवलोकस्य । )

तमसा—( सस्मितस्नेहार्द्रं परिष्वज्य । ) अयि वत्से ! एवमात्मा स्तूयते ।

सीता—(सलज्जम् । )परिहसिदह्मि भअवदीए। (परिहसितास्मि भगवत्या।)

---

इति पुस्तकान्तरपाठस्तत्र—परित्यागेन लब्धा सैव शल्यमिति विग्रहः, मद्विषयकलोकापवादस्याऽवास्तविकत्वख्यापनार्थमेव त्वया स्वपरिणयसौलभ्येऽपि मदीया हिरण्मयी प्रतिकृतिर्यज्ञे सहधर्मचारिणीस्थाने स्थापितेति तवानेन व्यवहारेण मम परित्यागदुःखं निर्गतप्रायमिति भावः ।

राम इति । तत्रापि = हिरण्मयसीताप्रतिकृतावपि, बाष्पदिग्धम् = अश्रुलिप्तम् , विनोदयामि = विनोदयुक्तं करोमि, एवं च सीताप्रतिकृतेरश्वमेधसहधर्मचारिणीत्वमानुषङ्गिकं, मुख्यं तु चक्षुर्विनोद इति सूचितम् ।

सीतेति । सा = हिरण्मयी मत्प्रतिकृतिः, धन्या = पुण्यवती, 'सुकृती पुण्यवान् धन्य' इत्यमरः, बहु मन्यते = चक्षुर्विनोदनहेतुत्वेनाऽधिक सत्क्रियते, विनोदयन्ती= विनोदयुक्तं कुर्वती, जीवलोकस्य = प्राणिभुवनस्य, जाता = संपन्ना, जातेत्यस्य स्त्रीलिङ्गत्वमुद्देश्यभूता सीतामुद्दिश्येति बोध्यम् ।

तमसेति । परिष्वज्य = आलिङ्गय । एवं = 'धन्या से'त्यादिवचनैः, आत्मा= स्वा, स्तूयते = स्तुतिविषयीक्रियते ।

सीतेति । भगवत्या = तमसया ।

---

राम—सीताकी उस मूर्तिमें भी आँसुओंसे भरे हुए नेत्रोंको बहलाता हूँ ।

सीता—वह (मेरी मूर्ति) धन्य है, जो आर्यपुत्रसे इसतरह मानी जाती है। जो इस तरह आर्यपुत्रका दिलबहलाव करती हुई मनुष्यलोककी आशाकी रक्षा करनेवाली हो गई है ।

तमसा—( मन्द हास्य और स्नेहपूर्ण आर्द्र भावके साथ आलिङ्गन कर ) अरी बेटी ! इस तरह तुम अपनी प्रशंसा कर रही हो ।

सीता—( लज्जाके साथ ) भगवतीने मेरी हँसी की ।

---

* 'अधोमुखी स्थगयन्' इत्यधिकः पाठः कुत्रचित्पुस्तके ।

वासन्ती—महानयं व्यतिकरोऽस्माकं प्रसादः। गमनं प्रति यथा कार्यहानिर्न भवति तथा कार्यम्।

रामः—तथाऽस्तु।

सीता—पडिऊला दाणिं मे वासन्दी संवुत्ता। (प्रतिकूलेदानीं मे वासन्ती संवृत्ता।)

तमसा—वत्से! एहि गच्छावः।

सीता—एव्वं करम्ह। (एवं करिष्यावः।)

तमसा—कथं वा गम्यते। यस्यास्तव—

प्रत्युप्तस्येव दयिते तृष्णादीर्घस्य चक्षुषः।

---

वासन्तीति। अयम् = एष., व्यतिकरः = समागमः, प्रसादः = अनुग्रहः। यथा—येन प्रकारेण, कार्यहानिः = कर्तव्यलोपः। कार्यं = कर्तव्यम्, 'आस्ताम्' इति पाठे भवत्वित्यर्थः।

सीतेति। प्रतिकूला = अनिष्टकारिणीत्वाद्विपरीता, संवृत्ता = जाता, आर्यपुत्रगमनं प्रत्यनुज्ञाकरणादिति भावः।

तमसेति। गच्छावः—चलावः, भागीरथीपदान्तिकमिति शेषः।

सीतेति। एवम् = इत्थं, भवत्या यथोक्तं तथेति भावः, कुर्वः = अनुतिष्ठावः, आसन्नरामविरहेण विवशाया सीताया इयमुक्तिः।

प्रत्युप्तस्येति। दयिते प्रत्युप्तस्य इव तृष्णादीर्घस्य (तव) चक्षुषः सन्निकर्षः मर्मच्छेदोपमैः, यत्नैः निरुध्यत इत्यन्वयः। दयिते = प्रिये, राम इत्यर्थः, प्रत्युप्तस्य इव = निखातस्य इव, तृष्णादीर्घस्य = तृष्णया = दर्शनेच्छया, दीर्घस्य—आयतस्य, (तव = सीतायाः), चक्षुष = नेत्रस्य, सन्निकर्षः = दयिते

---

वासन्ती—यह आपका आगमन हमारे ऊपर महान् अनुग्रह है। गमनके लिये जिस तरह कार्यमें हानि न हो, वैसा करना चाहिए।

राम—ऐसा ही हो।

सीता—इस समय वासन्ती मेरे लिये प्रतिकूल हो गई।

तमसा—बेटी! आओ, चलें।

सीता—ऐसा ही करें।

तमसा—कैसे चलें, जिस तुम्हारे तो—

प्यारे राममें रोप हुए की तरह तथा तृष्णासे दीर्घ नेत्रोंका जो सम्बन्ध है, वह

मर्मच्छेदोपमैर्यत्नैः सन्निकर्षो निरुध्यते ॥ ४६ ॥

सीता—णमो सुकिदपुण्णजणदंसणिज्जाणं अज्जउत्तचलणकमलाणम् । ( इति मूर्च्छति । ) ( नमः सुकृतपुण्यजनदर्शनीयाभ्यामार्यपुत्रचरणकमलाभ्याम् । )

तमसा—वत्से ! समाश्वसिहि ।

सीता—( आश्वस्य । ) केच्चिरं वा मेहान्तरेण पुण्णचन्ददंसणम् ? ( कियच्चिरं वा मेघान्तरेण पूर्णचन्द्रदर्शनम् ? )

---

सम्बन्धः, 'आकर्ष' इति पाठे आकर्षणमित्यर्थः, मर्मच्छेदोपमैः = हृदयादिमर्मस्थलकृन्तनसदृशैः, 'मर्मच्छेदपरैः' इति पुस्तकान्तरपाठस्तत्र—हृदयादिमर्मस्थलकृन्तनकारिभिरित्यर्थः, यत्नैः = गमनादिव्यापारैः, निरुध्यते = निवर्त्यते । अतस्तथाविधया त्वया कथं गम्यत इति पूर्वेणाऽन्वयः । पुस्तकाऽन्तरेषु तु 'आकर्षो न समाप्यते' इति पाठान्तरन्तत्र—आकर्षः = आकर्षणं, न समाप्यते = न विरामं नीयते इत्यर्थः । रामे दृष्टिपथं प्राप्ते सति त्वच्चक्षुष आकर्षणमतीव दुःशकं भवतीति भावः । अत्रोत्प्रेक्षाऽलङ्कारः । अनुष्टुब् वृत्तम् ॥४६॥

सीतेति । सुकृतपुण्यजनदर्शनीयाभ्याम् = सुकृतं पुण्यं यैस्ते सुकृतपुण्याः, ते च ते जनाः सुकृतपुण्यजनाः = सुविहितधर्माचरणलोकाः, तैर्दर्शनीयाभ्याम् = विलोकनीयाभ्याम् , सेवितुं शक्याभ्या, न तु मादृशपापकृज्जनदर्शनाऽर्हाभ्यामिति भावः, आर्यपुत्रचरणकमलाभ्याम्—आर्यपुत्रस्य = रामचन्द्रस्य, चरणौ कमले इव चरणकमले, ताभ्या = पादपङ्कजाभ्यामित्यर्थः, नमःशब्दयोगे 'नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च' इति चतुर्थी, पुस्तकाऽन्तरेषु तु 'नमो नमोऽपूर्वपुण्यजनितदर्शनेभ्य आर्यपुत्रचरणकमलेभ्य' इति पाठान्तरन्तत्र—अपूर्वैः=अद्भुतैः, 'पूर्वै'रिति पाठे प्रागाचरितैरित्यर्थः, एतादृशैः पुण्यैः=सुकृतैः, जनितम्=उत्पादितम् , दर्शनं = विलोकनम् येषा तेभ्यः, बहुवचनं गौरवद्योतनाऽर्थम् । प्रकृते चतुर्थीस्थाने षष्ठी, द्विवचनस्य च बहुवचनं भवतीति बोध्यम् । मूर्च्छति=मूर्च्छामभिनयति ।

सीतेति ! आश्वस्य = संज्ञां लब्ध्वा । मेघान्तरेण = मेघव्यवधानेन, 'अन्त-

---

मर्मस्थलमें छेदन करनेके सदृश गमन आदि कर्मोंसे रोका जाता है ॥ ४६ ॥

सीता—उत्तम रूपसे पुण्यका आचरण करनेवाले जनोंसे दर्शनीय आर्यपुत्रके चरणकमलोंको नमस्कार है । ( ऐसा कहकर मूर्च्छित होती हैं । )

तमसा—बेटी ! आश्वस्त हो ।

सीता—( आश्वस्त होकर ) मेघकी रुकावटके कारण पूर्ण चन्द्रका दर्शन कितनी देर तक होगा ?

**तमसा**—अहो संविधानकम् ।

एको रसः करुण एव निमित्तभेदा-
द्भिन्नः पृथक्पृथगिव श्रयते विवर्तान् ।
आवर्तबुद्बुदतरङ्गमयान्विकारा-
नम्भो यथा, सलिलमेव हि तत्समस्तम् ॥ ४७ ॥

---

रमवकाशाऽवधिपरिधानाऽन्तर्द्धिभेदतादर्थ्ये । छिद्रात्मीयविनावहिरवसरमध्येऽन्तरात्मनि च ॥' इत्यमरः, पूर्णचन्द्रदर्शनम् = पूर्णिमेन्दुविलोकनम् , कियच्चिरम् = कियन्तमधिककालं यावद्भवेत् , क्षणिकमेव भवेन्ममाऽपि तत्तुल्यमार्यपुत्रदर्शनमित्यतिशयोक्तिरलङ्कारः ।

'ननु एक एव भवेदङ्गी शृङ्गारो वीर एव वा ।' इति नियममुल्लङ्घ्य कथमत्र कविः करुणमङ्गिन रसं कृतवानित्याशङ्का तमसामुखेन निवारयति कविः—तमसेति । अहो = आश्चर्यम् , संविधानकं = निर्माणम् , अपूर्वरूपकनिर्माणं विस्मयनीयमिति भावः ।

**एक इति ।** एकः करुणो रस एव निमित्तभेदात् भिन्न ( सन् ) पृथक् पृथक् विवर्तान् श्रयते इव, यथा अम्भः आवर्तबुद्बुदतरङ्गमयान् विकारान् श्रयते; तत् समस्त सलिलम् एव हि इत्यन्वयः । एकः = एकाकी, करुण =तदाख्यः शोकस्थायिकः, रस एव=काव्यास्वाद एव, निमित्तभेदात् = सीतारामाद्यालम्बनरूपकारणभेदात् , भिन्नः=विलक्षणः (सन्), पृथक् पृथक्=भिन्नान् भिन्नान् , विवर्तान् = शृङ्गारादिपरिणामान्, श्रयत इव=अवलम्बत इव । अत्र दृष्टान्तमाह—आवर्तेति । यथा=येन प्रकारेण, अम्भः = जलम् , आवर्तबुद्बुदतरङ्गमयान् = आवर्त =जलस्य भ्रमः, बुद्बुदः=अम्बुस्फोटः, कुड्मलाकारजलसंस्थानविशेषः, तरङ्गः=भङ्गः, तन्मयान् = तत्स्वरूपान् , अत्र स्वरूपाऽर्थे मयट् ; विकारान् = परिणामान् , श्रयते = आश्रयते, इव । तत् = पूर्वोक्तम् , आवर्तादिकमित्यर्थः , समस्तं = समग्रं; सलिलम् एव = जलम् एव, हि=निश्चयेनेत्यर्थः । यथा जलस्यैव रूपान्तराणि आवर्तादीनि, तथा एकस्य करुणरसस्यैव परिणामाः शृङ्गारादय इति भावः । अत्रोपमोत्प्रेक्षयोः सङ्करः । वसन्ततिलका वृत्तम् ॥ ४७ ॥

---

**तमसा**—अहो, कैसी रचना है !

एक करुण रस ही निमित्तभेदसे भिन्न होता हुआ पृथक् पृथक् शृङ्गार आदि परिणामोंको आश्रय करता है, ऐसा मालूम पड़ता है, जैसे एक जल ही भँवर, बुदबुद और तरङ्ग रूप विकारोंका आश्रय करता है , वह सब वास्तविकमें जल ही है ॥ ४७ ॥

रामः—विमानराज ! इत इतः । ( सर्वे उत्तिष्ठन्ति । )

तमसावासन्त्यौ—( सीतारामौ प्रति । )

अवनिरमरसिन्धुः सार्धमस्मद्विधाभिः स च कुलपतिराद्यश्छन्दसां यः प्रयोक्ता ।
स च मुनिरनुयातारुन्धतीको वसिष्ठस्तव वितरतु भद्रं भूयसे मङ्गलाय ।

( इति निष्क्रान्ताः सर्वे । )

इति महाकविभवभूतिविरचिते उत्तररामचरिते छाया नाम तृतीयोऽङ्कः ॥३॥

---

राम इति । विमानराज = व्योमयानश्रेष्ठ । पुष्पकेत्यर्थः ।

तमसेति । तमसा सीता वासन्ती च रामं प्रति मङ्गलं सूचयत इति भावः ।

अवनिरिति । अवनिः, अमरसिन्धुः, अस्माद्विधाभिः सार्धं, स च कुलपतिः यः छन्दसाम् आद्यः प्रयोक्ता स च मुनिः, अनुयातारुन्धतीको वसिष्ठश्च तव भूयसे मङ्गलाय भद्रं वितरतु इत्यन्वयः । अवनिः = पृथ्वी, अमरसिन्धुः = गङ्गा 'गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा ।' इत्यमरः, अस्माद्विधाभिः = तमसापक्षे मुरला-गोदावरीप्रभृतिभिः, वासन्तीपक्षे अन्याभिर्देवताभिरित्यर्थः, 'सार्धं' पदयोगे 'सहयुक्तेऽप्रधाने' इति तृतीया, 'सार्धं = सह, स च = श्रुतिस्मृतिपुराणादिप्रसिद्धः, कुलपतिः = कुलस्य = इक्ष्वाकुवंशस्य, पतिः = प्रवर्तकत्वेन स्वामी, सूर्य इत्यर्थः, तथा च यः, छन्दसां = अनुष्टुप्पद्यानाम्, आद्यः = प्रथमः, प्रयोक्ता = प्रयोगकर्ता, स च मुनिः = कुलपतिर्वाल्मीकिरित्यर्थः, अनुयातारुन्धतीकः = अनुयाता = अनुगता, अरुन्धती = एतन्नाम्नी तज्जाया यं सः, समासान्तः कप्, वसिष्ठश्च = इक्ष्वाकुवंशगुरुश्च, तव = तमसापक्षे सीतायाः, वासन्तीपक्षे च रामस्येत्यर्थः, चतुर्थ्यर्थे षष्ठी, भूयसे = प्रचुराय, मङ्गलाय = कल्याणाय, भद्रं = मङ्गलं, वितरतु = ददातु । अत्र तुल्ययोगिताऽलङ्कारः । मालिनी वृत्तम् ॥ ४८ ॥

इति श्रीशेषराजशर्मविरचितचन्द्रकलाव्याख्यायां तृतीयोऽङ्कः ॥ ३ ॥

---

राम—विमानराज ( पुष्पक ) ! इधर इधर । ( सब उठते हैं । )

तमसा और वासन्ती—( सीता और रामके प्रति )

पृथ्वी और गङ्गा, हमारी जैसी-मुरला गोदावरी आदिके अथवा वनदेवियोंके साथ प्रसिद्ध वंशपति सूर्य, जो छन्दोंके प्रथम प्रयोग करनेवाले हैं, वे मुनि वाल्मीकि और अरुन्धतीसे अनुगत वसिष्ठ ऋषि भी आपके प्रचुर कल्याणके लिए मङ्गलका वितरण करें ॥ ४८ ॥

( इसके अनन्तर सब जाते हैं।

'छाया नामक' तीसरा अङ्क समाप्त हुआ ॥ ३ ॥

दानीमेष महत· स्त्रीसार्थस्य धुरन्धरोऽद्यातिथिरागत ? )

दण्डायनः—धिक्प्रहसनम्। नन्वयमृष्यशृङ्गाश्रमादरुन्धतीं पुरस्कृत्य महाराजदशरथस्य दारानधिष्ठाय भगवान् वसिष्ठः प्राप्तः। तत्किमेवं प्रलपसि?

सौधातकिः—हुं वसिट्ठो ? ( हुं वसिष्ठः ? )

दण्डायनः—अथ किम् ?

सौधातकिः—मए उण जाणिदं कोवि वग्घो विअ एसोत्ति। ( मया तु ज्ञातं कोऽपि व्याघ्र इव एष इति। )

---

नेति पाठान्तरं, तत्र—भाण्डस्य युवाऽपत्यं पुमानिति विग्रहे 'गर्गादिभ्यो यञ्' इति यञन्तात् 'यञञोश्चे' ति फक्, तत्सम्बुद्धौ। महतः = प्रचुरस्य, स्त्रीसार्थस्य = नारीसमूहस्य। धुरन्धर· = धुर्य, = अग्रसर इति भावः।

दण्डायन इति। प्रहसनम् = उपहासम्, धिग्योगे 'धिगुपर्यादिषु त्रिषु।' इति द्वितीया, परिहासहेतुभूतं त्वदीयं वचो निन्दनीयमिति भाव·, दारान् = पत्नी·, 'भार्या जायाथ पुंभूम्नि दारा·' इत्यमरः अधिष्ठाय = गृहीत्वा, तन्नियामको भूत्वेत्यर्थः। प्रलपसि = उपहासरूपमनर्थकं वचो ब्रवीषि, महतामवमाननमनुचितमिति भावः।

सौधातकिरिति। हुं = प्रश्नद्योतकोऽयं निपात·।

दण्डायन इति। अथ किम् = अङ्गीकारद्योतकं पदद्वयमिदम्। वसिष्ठ एवेति भावः।

सौधातकिरिति। व्याघ्र इव = शार्दूल इव। पुस्तकान्तरे 'वृको वा' इत्यधिकः पाठस्तस्य-ईहामृग इत्यर्थः, 'भेड़िया' इति हिन्दी भाषा। 'स्थविरसार्थस्ये'ति पाठे वृद्धसमूहस्येत्यर्थः।

---

आये हुए हैं, उनका क्या नाम है ?

दण्डायन—तुम्हारे इस उपहास ( दिल्लगी ) को धिक्कार है। ऋष्यशृङ्गके आश्रमसे अरुन्धतीको आगेकर महाराज दशरथकी महारानियों को लेकर ये भगवान् वसिष्ठजी आये हैं। इस लिए क्यों ऐसा बकवाद करते हो ?

सौधातकि—हु, वसिष्ठ हैं ?

दण्डायन—और क्या ?

सौधातकि—मैंने समझा कि यह कोई व्याघ्र-जैसा है।

दण्डायनः—आः, किमुक्तं भवति ?

सौधातकिः—जेण परावडिदेण एव्व सा वराई कविला कल्लाणी बला-मोडिअ मडमडाइआ । ( येन परापतितेनैव सा वराकी कपिला कल्याणी बला-त्कृत्य मडमडायिता । )

दण्डायनः—समांसो मधुपर्क इत्याम्नायं बहुमन्यमानाः श्रोत्रियाया-भ्यागताय वत्सतरीं महोक्षं वा पचन्ति गृहमेधिनः । तं हि धर्मं धर्मसूत्रकाराः समामनन्ति ।

सौधातकिः—भो णिग्गिहीदोसि । ( भोः, निगृहीतोऽसि ) ।

---

दण्डायन इति । किमुक्त भवति = कस्माद्धेतोरेवमुच्यत इति भावः ।

सौधातकिरिति । येन = कारणेन, 'हेतौ' इति तृतीया, परापतितेन = , संप्राप्तेन, कपिला = सुवर्णवर्णविशिष्टा गौः । कल्याणी = वत्सतरी, द्विहायनीत्यर्थः । मडमडायिता = मडमडशब्दयुक्ता कृता, आलब्धेति यावत् , तेन 'व्याघ्र' इति ज्ञातमिति पूर्वेण सम्बन्धः ।

दण्डायन इति । मधुपर्क = दधि मधु घृतं च, आम्नायं = वेदं, बहुमन्य-मानाः=प्रमाणीकुर्वन्तः, गृहमेधिनः=गृहस्थाः, श्रोत्रियाय = वेदविदे, अभ्यागताय= अतिथये, वत्सतरीम्=द्विहायनीम् , महोक्षम्=महावृषभम् , अत्र 'अचतुरे'त्यादि-नाऽच्प्रत्ययान्तो निपातितः । 'महाज वा' इति पुस्तकान्तरस्थोऽधिकः पाठस्तस्य—महाछागं वेत्यर्थः, पचन्ति=श्रपयन्ति, पुस्तकान्तरेषु 'निर्वपन्ति' इति पाठस्तस्य—ददतीत्यर्थः । अत्राऽर्थे-'महोक्षं वा महाजं वा श्रोत्रियायोपकल्प-येत् ।' इति याज्ञवल्क्यस्मृतिवचनं प्रमाणम् । समामनन्ति=उपदिशन्ति । अतो वशिष्ठागमनेन कपिलाया आलम्भने सौधातक्युद्धाटितो दोषो निराक्रियत इति भावः ।

सौधातकिरिति । निगृहीतोऽसि = पराजितोऽसि ।

---

दण्डायन—ओ ! यह क्या कहते हो ?

सौधातकि—जिनके आनेके बाद ही कपिल वर्णवाली बेचारी बछिया बलात्कारसे मडमड़ शब्द वाली की गई ( मारी गई )

दण्डायन—'मधुपर्क मांसके साथ देना चाहिये' इस वेदवाक्यका विशेष सम्मान करनेवाले गृहस्थलोग वैदिक अतिथिके लिए दो सालकी बछियाको या बडे बैलको पकाते हैं । धर्मसूत्रकार इस धर्मकी आज्ञा देते हैं ।

सौधातकि—तुम पराजित हो गये ।

दण्डायनः—कथमिव ?

सौधातकिः—जेण आअदेसु वसिट्ठमिस्सेसु वच्छदरी विससिदा। अज्ज एव्व पच्चाअदस्स राएसिणो जणअस्स भअवदा वम्मीइणा धहिमहूहिं एव्व णिव्वत्तिदो महुवक्को। वच्छतरी उण विसज्जिदा। (येनागतेषु वसिष्ठमिश्रेषु वत्सतरी विशसिता। अद्यैव प्रत्यागतस्य राजर्षेर्जनकस्य भगवता वाल्मीकिना दधिमधुभ्यामेव निर्वर्तितो मधुपर्कः। वत्सतरी पुनर्विसर्जिता।)

दण्डायनः—अनिवृत्तमांसानामेवं कल्पं व्याहरन्ति केचित्। निवृत्तमांसस्तु तत्रभवान् जनकः।

सौधातकिः—किंणिमित्तम् ? (किंनिमित्तम् ?)

दण्डायनः—यद्देव्याः सीतायास्तादृशं दैवदुर्विपाकमुपश्रुत्य वैखानसः

---

दण्डायन इति। कथमिव = केन प्रकारेण ?

सौधातकिरिति। वसिष्ठमिश्रेषु = पूजनीयवसिष्ठेषु, विशसिता = हता। दधिमधुभ्यामेव = केवलेन दध्ना मधुना एव, न तु मांससहितेनेति भावः, निर्वर्तित = निष्पादितः। विसर्जिता = मुक्ता, न त्वालब्धेत्यर्थः, अतः 'समांसो मधुपर्क' इति त्वदीयं वचनं परास्तमिति भावः।

दण्डायन इति। अनिवृत्तमांसानाम्—अवर्जितमांसानाम्, एवं कल्पम् = एतादृशं 'समांसो मधुपर्क' इति विधिं, केचित् = आपस्तम्बादयो धर्मशास्त्रकाराः, व्याहरन्ति = प्रतिपादयन्ति। तत्र भवान् = पूजनीय, निवृत्तमांसः = वर्जितमांसः।

सौधातकिरिति। किंनिमित्तम्=किमस्ति कारणम्' यज्जनको निवृत्तमांसो जात इति भावः।

दण्डायन इति। दैवदुर्विपाकम्=भाग्यदुष्परिणामम्, निर्वासनरूपमित्यर्थः,

---

**दण्डायन**—कैसे ?

**सौधातकि**—क्योंकि वसिष्ठजीके आनेपर वछिया मारी गई, परन्तु भगवान् वाल्मीकिने आज ही आए हुए राजर्षि जनकका मधुपर्क दही और मधु ( शहद ) से ही सपन्न किया और वछियाको छोड दिया।

**दण्डायन**—कुछ धर्मशास्त्रकार मांसका परित्याग न करनेवालोंकी ऐसी ( मधुपर्क मांस सहित होना चाहिए ) विधि बतलाते हैं, परन्तु पूजनीय जनक महाराजने तो मांसका परित्याग कर दिया है।

**सौधातकि**—किस कारणसे ?

**दण्डायन**—महारानी सीताका वैसा भाग्यका दुष्परिणाम सुनकर जनक वानप्रस्थाश्रमी

संवृत्तः, तस्य कतिपयसंवत्सरश्चन्द्रद्वीपतपोवने तपस्तप्यमानस्य ।

सौधातकिः—तदो किति आअदो ? ( ततः किमित्यागतः ? )

दण्डायनः—सम्प्रति च प्रियसुहृदं भगवन्तं प्राचेतसं द्रष्टुम् ।

सौधातकिः—अवि अज्ज सवन्धिणीहिं समं णिव्वुत्तं दंसणं से णवेत्ति ? ( अप्यद्य सम्बन्धिनीभिः समं निर्वृत्तं दर्शनमस्य न वेति ? )

दण्डायनः—संप्रत्येव भगवता वसिष्ठेन देव्याः कौसल्यायाः सकाशं भगवत्यरुन्धती प्रहिता। यथा 'स्वयमुपेत्य स्नेहादयं द्रष्टव्य' इति ।

सौधातकिः—जह एदे थविरा परप्पर एव्व मिलिदा, तह अह्मे वि वडुहिं सह मिलअ अणज्झाअमूसवं खेलन्तो मणेम्ह । अह कुत्थ सो

---

वैखानसः = वानप्रस्थः, तप्यमानस्य = आचरतः, कतिपयसंवत्सरः = कतिपयहायनः, अतीत इति शेषः ।

सौधातकिरिति । ततः = चन्द्रद्वीपतपोवनात् , किमिति = केन हेतुना ।

दण्डायन इति । सम्प्रति = अधुना, प्रियसुहृदम् = अभीष्टमित्रं, 'चिरन्तनप्रियसुहृदम्' इति पुस्तकान्तरपाटस्तत्र—चिरन्तनं प्राचीनमित्यर्थः, प्राचेतसम् = वाल्मीकिम् ।

सौधातकिरिति । अपि = शब्दोऽयं प्रश्नार्थकः, सम्बन्धिनीभिः = जामातृमातृभिः, कौसल्यादिभिरित्यर्थः, समं = सह, अस्य = जनकस्य, दर्शनम् = साक्षात्कारः, निवृत्तं = निष्पन्नम् ।

दण्डायन इति । सकाशम् = समीपम् , 'सदेशाऽभ्याशसविधसमर्यादसवेशवत् ।' इत्यमरः, प्रहिता = प्रेपिता, स्वयम् = आत्मना, अयम् जनकः ।

सौधातकिरिति । स्थविराः = वृद्धाः, 'प्रवयाः स्थविरो वृद्धो जीनो जीर्णो

---

हो गये हैं और चन्द्रद्वीप नामक तपोवनमें तपस्या करते हुए उनके कई साल बात गये हैं ।

सौधातकि—तब यहां क्यों आये हुए हैं ?

दण्डायन—इस समय प्रिय मित्र भगवान् वाल्मीकिको देखनेके लिए आये हुए हैं ।

सौधातकि—आज सम्बन्धिनियों ( कौसल्यादिकों ) के साथ इनका साक्षात्कार हुआ कि नहीं ?

दण्डायन—अभी ही भगवान् वसिष्ठने कौसल्याके समीप भगवती अरुन्धतीको भेजा है कि—वे ( कौसल्या ) स्वयं आकर स्नेहपूर्वक जनकका साक्षात्कार करें ।

सौधातकि—जिस तरह ये बुड्ढे परस्पर मिल गये हैं, उसी तरह हम दोनों भी बालकोंके

जणओ ? ( यथैते स्थविराः परस्परमेव मिलिताः, तथावामपि वटुभिः सह मिलित्वानध्यायमहोत्सवं खेलन्तो मानयाव। अथ कुत्र स जनकः ? )

दण्डायनः—तथाय प्राचेतसवसिष्ठावुपास्य सम्प्रत्याश्रमस्य बहिर्वृक्षमूलमधितिष्ठति। य एषः—

हृदि नित्यानुषक्तेन सीताशोकेन तप्यते।
अन्तःप्रसृतदहनो जरन्निव वनस्पतिः ॥ २ ॥

( इति निष्क्रान्तौ। )

इति मिश्रविष्कम्भः।

---

जरन्नपि' इत्यमरः, वटुभिः = अन्यैः बालकैः, अनध्यायमहोत्सवम् = अनध्यायः = अध्ययनाऽभावः एव महोत्सवः = महाक्षणः, तम्, अनध्यायस्य आनन्दहेतुत्वादुत्सवरूपत्वम्; खेलन्तः = क्रीडन्तः, 'लक्षणहेत्वोः क्रियायाः' इति हेत्वर्थे शतृप्रत्ययः, खेलनेनेत्यर्थः। मानयावः = सम्भावयावः। कुत्र = क्व।

दण्डायन इति। अयम् = जनकः। पुस्तकान्तरेषु तु 'ब्रह्मवादी पुराणराजर्षिर्जनकः' इति पाठान्तरन्तत्र—ब्रह्मवादी = वेदव्याख्यातेत्यर्थः प्राचेतसवसिष्ठौ, उपास्य = सेवित्वा, सविनयदर्शनाऽभिवादनादिभिः परिचर्येति भावः, वृक्षमूलम् = तरुमूलम्, 'अधिशीङ्स्थाऽऽसां कर्म' इति आधारस्य कर्मत्वम्।

हृदीति। हृदि नित्याऽनुषक्तेन सीताशोकेन ( य एषः ) अन्तः प्रसृतदहनः जरन् वनस्पतिरिव तप्यत इत्यन्वयः। हृदि = हृदये, चित्त इत्यर्थः, नित्याऽनुषक्तेन = निरन्तरलग्नेन, सीताशोकेन, = सीताविषयकदुःखेन, (य एषः = जनकः)—अन्तःप्रसृतदहनः = अन्तः अभ्यन्तरे, प्रसृतः = व्याप्तः, दहनः = अग्निः, यस्य सः, जरन्=जीर्णः, अन्यत्र 'ज्वलन्' इति पाठस्तस्य-दहन्नित्यर्थः, वनस्पतिरिव = वृक्ष इव, तप्यते=तापमनुभवति। अत्रोपमाऽलङ्कारः। अनुष्टुब् वृत्तम् ॥ २ ॥

मिश्रेति। मिश्रविष्कम्भकः = संस्कृतप्राकृतात्मकविष्कम्भ इत्यर्थः। साहित्य-

---

साथ मिलकर खेलते हुए अनध्यायके महोत्सवका समान करें। तो वे जनक अभी कहाँ हैं ?

दण्डायन—ये ( जनक ) महर्षि वाल्मीकि और वसिष्ठका अभिवादन कर इस समय आश्रमके बाहर पेडके नीचे बैठे हुए हैं। जो ये—

हृदयमें निरन्तर विद्यमान सीताके शोकसे—जिसके भीतर आग फैली हुई है, ऐसे जीर्ण वृक्षकी तरह सन्तापका अनुभव कर रहे हैं ॥ २ ॥ ( दोनों चले जाते हैं )

मिश्रविष्कम्भक समाप्त।

( ततः प्रविशति जनकः । )

जनकः—

अपत्ये यत्तादृग्दुरितमभवत्तेन महता
विषक्तस्तीव्रेण व्रणितहृदयेन व्यथयता ।
पटुर्धारावाही नव इव चिरेणापि हि न मे
निकृन्तन्मर्माणि क्रकच इव मन्युर्विरमति ॥ ३ ॥

---

दर्पणकारमते तु मध्यमपात्राभ्यां दण्डायनसौधातकिभ्यां प्रयुज्यमानत्वादयं शुद्धविष्कम्भकस्तल्लक्षणं यथा—'मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः । शुद्धः स्यात्' इति ।

अपत्य इति । अपत्ये यत् तादृक् दुरितम् अभवत्, महता तीव्रेण व्रणितहृदयेन व्यथयता तेन विषक्तः पटुः धरावाही चिरेण अपि नव इव मे मन्युः क्रकच इव मर्माणि निकृन्तन् न विरमति इत्यन्वयः । अपत्ये = सीतायामित्यर्थः, यत्, तादृक् = तादृशं, दुरितं = लोकाऽपवादरूपं पापं निर्वासनं वा, अभवत् = संजातं, महता=दुरन्तेन, तीव्रेण=अतिकठोरेण, व्रणितहृदयेन = व्रणितं = व्रणयुक्तम्, हृदयं = वक्षःस्थलं येन तेन, अत एव व्यथयता = व्यथा कुर्वता, तेन = पूर्वोक्तेन सीताऽपवादरूपेण पापेन, विषक्त = विशेषेण सम्बद्धः, पटुः = समर्थः निकृन्तनसमर्थ इत्यर्थः, धरावाही = धारया = निरन्तरसन्तत्या वहतीति तच्छीलः निरन्तरमवस्थित इत्यर्थः, चिरेणाऽपि = बहुकालेनाऽपि, नव इव = नूतन इव, मे = मम, जनकस्येत्यर्थः, मन्युः=सीताविषयकः शोकः कोपो वा, क्रकच इव = करपत्रमिव, मर्माणि = हृदयादिमर्मस्थलानि, निकृन्तन् = छिन्दन्, न विरमति = न शाम्यति, 'व्याङ्परिभ्यो रम' इति परस्मैपदम् । करपत्रं यथा मर्मस्थलानि विदारयति, बहुकालाऽनन्तरमपि तथैव सीताविषयकः शोको मदीयमर्मस्थलानि निकृन्ततीति भावः । अत्र उपमोत्प्रेक्षयोराङ्गाङ्गिभावेन सङ्करः शिखरिणी वृत्तम् ॥ ३ ॥

---

( उसके बाद जनक प्रवेश करते हैं । )

जनक—सन्तान (सीता) में जो उस तरहका लोकाऽपवादरूप दुःख हुआ, दुरन्त, अति कठोर, हृदयको क्षत और दुःखित करनेवाले उस दुःखसे विशेषतः सम्बद्ध, हृदयका छेदन करनेमें समर्थ, निरन्तर रहनेवाला और बहुत काल बीतनेपर भी नूतनके तुल्य अवस्थित मेरा शोक मर्मस्थलोंको आरेकी तरह विदारण करता ( चीरता ) हुआ शान्त नहीं होता है ॥ ३ ॥

कष्टम् ! एवं नाम जरया दुःखेन च दुरासदेन भूयः पराकसान्तपनप्रभृतिभिस्तपोभिः शोषितान्तःशरीरधातोरवष्टम्भ एव । महानद्यापि मम दग्धदेहो न पतति । 'अन्धतामिस्रा ह्यसूर्या नामते लोकाः प्रेत्य तेभ्यः

---

कष्टमिति । कष्टं = दुःखम् । जरया = वार्धक्येन, दुरासदेन = दुःसहेन, सीतावियोगोत्पन्नेनेति भावः, भूयः = पुनरपि, पराकसान्तपनप्रभृतिभिः=पराकः=द्वादशदिनोपवाससाध्यो व्रतविशेषः, सान्तपनम् = दिनद्वयसाध्यो व्रतविशेषः, तौ प्रभृती = आदी येषां तैः, पराकलक्षणं यथाऽऽह भगवान्मनुः—'यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् । पराको नाम कृच्छ्रोऽयं सर्वपापाऽपनोदनः ॥' इति । सान्तपनलक्षणमपि—गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकरात्रोपवासश्च कृच्छ्रं सन्तापनं स्मृतम् ॥' इति । तादृशैस्तपोभिः = व्रतादिभिः, शोषिताऽन्तःशरीरधातोः = शोषिताः = नीरसीकृताः, अन्तःशरीरधातवः = अन्तर्देहधातवो यस्य तस्य तादृशस्य मम, अवष्टम्भ एव=प्राणाऽवलम्बनमेव, कथमहं जीवामीति भावः, पुस्तकान्तरेषु तु तपोभिरित्यनन्तरम् 'आत्तरसधातुरनुपयुज्यमानः' इति पाठान्तरन्तत्र = आत्तरसधातुः = आत्ताः = गृहीताः शरीरस्थाश्शोणितादयो द्रवाः, धातवः = मांसादयो यस्य सः, अनुपयुज्यमानः=अक्रियमाणोपयोगः, अन्नादिना पुष्टिमप्राप्नुवन्नित्यर्थः, दग्धदेहः = निन्दितशरीरं, हतहृदयमितीव निन्दायां दग्धशब्दः, अद्याऽपि=अस्मिन्दिवसेऽपि, न पतति = न विनश्यति । यदि जीवनं भारभूतं तर्हि क्रियतामात्महत्येत्यत्राह—अन्धतामिस्रेति । अन्धतामिस्राः = तमिस्रमेव तामिस्रं, स्वार्थे अण्, अन्धम् = अन्धकरणम्, तामिस्रं = तिमिरम्, येषु ते; सूर्यादिना तमोनाशनेनाऽपि तत्र भाव्यमित्यत आह—असूर्याः=सूर्यरहिताः, भगवत्पादैस्तु ईशावास्योपनिषद्भाष्ये 'असुर्याः' इति पाठोऽभ्युपगतस्तत्र असुरसम्बन्धिन इत्यर्थः; ते प्रसिद्धाः, आत्मघातिनः = आत्मानं घ्नन्तीति तच्छीलाः=आत्महत्याकारिणः, प्रेत्य=मृत्वा, तेभ्यः = अन्धतामिस्रादिलक्षणयुक्तेभ्यो लोकेभ्यः, तादर्थ्ये चतुर्थी, प्रतिविधीयन्ते = पापफलभोगाऽर्थं नियुज्यन्त इति भावः । 'असुर्या नाम ते लोका

---

कष्ट है ! इस तरह बुढापा, दुःसह दुःखसे और फिर पराक और सन्तापन आदि तपस्याओंसे शरीरके भीतर रही हुई धातुओंके शोषण होनेपर भी प्राणका अवलम्बन ही हो रहा है। महान् और दग्धप्राय मेरा शरीर अभी भी नहीं गिरता है। 'जो आत्महत्या करनेवाले हैं, मरनेपर उनको अन्धा करनेवाले, अन्धकारसे युक्त सूर्यरहित लोक मिलते हैं' ऋषिलोग ऐसा

प्रतिविधीयन्ते, य आत्मघातिन' इत्येवमृषयो मन्यन्ते । अनेकसंवत्सरातिक्रमेऽपि प्रतिक्षणपरिभावनास्पष्टनिर्भासः प्रत्यग्र इव न मे दारुणो दुःखसंवेगः प्रशाम्यति । अयि मातः देवयजनसंभवे ! ईदृशस्ते निर्माणभागः परिणतः ? येन लज्जया स्वच्छन्दमप्याक्रन्दितुं न शक्यते । हा पुत्रि !

अनियतरुदितस्मितं विराजत्कतिपयकोमलदन्तकुड्मलाग्रम् ।

---

अन्धेन तमसा वृताः । तांस्ते प्रेत्याऽभिगच्छन्ति ये के चात्मनो जना ॥' इति श्रुतेः । अत आत्मघात्यपि नैव भवामीति तात्पर्यम् । अनेकसंवत्सराऽतिक्रमेऽपि = बहुकालयापनेऽपि, प्रतिक्षणपरिभावनास्पष्टनिर्भास = प्रतिक्षणं सन्ततम्, परिभावनया=सीताविषयिण्या चिन्तया, स्पष्टः=स्फुट, निर्भासः=प्रकाशो, यस्य सः, प्रत्यग्र इव = नूतन इव, 'प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः ।' इत्यमरः; दारुणः = कठोरः, दुःखसंवेगः=कष्टप्रवाहः, न प्रशाम्यति = न नश्यति । ईदृशः = एतादृशः, निर्वासनदुःखभोगात्मक इति भावः, निर्माणभागः = सृष्टिफलम् । येन = निर्माणभागेन, आक्रन्दितुं= रोदितुम्, न शक्यते = नो पार्यते ।

अनियतेति । अनियतरुदितस्मितं विराजत्कतिपयकोमलदन्तकुड्मलाग्रं स्खलदसमञ्जसमञ्जुजल्पितं शिशोः ते वदनकमलकं स्मरामि इत्यन्वयः । अनियतरुदितस्मितम् = अनियते = नियमरहिते, निर्हेतुकत्वादिति भावः, रुदितस्मिते = रोदनहासौ यस्मिंस्तत्, विराजत्कतिपयकोमलदन्तकुड्मलाऽग्रम् = विराजन्ति = शोभमानानि, कतिपयानि = कियन्ति, कोमलानि = मृदूनि, दन्तकुड्मलाग्राणि= दशनमुकुलाऽग्राणि=यस्मिंस्तत्, दन्तकुड्मलाऽग्राणीत्यत्र—दन्ताः कुड्मलाग्राणीवेत्युपमितसमासः, एवं च स्खलदसमञ्जसमञ्जुजल्पितं—स्खलत् = गद्गदीभवत्, असमञ्जसं = पूर्वाऽपरसंगतिरहितम्, मञ्जु = सुन्दरम्, 'मुग्धम्' इति पाठे मधुरम् इत्यर्थः, एतादृशं जल्पितं = वचनम् यस्मिंस्तत्, जल्पितमित्यत्र 'नपुंसके भावे क्त' इति क्तः, शिशोः = बालिकायाः, ते = तव, सीताया इत्यर्थः, वदनकमलकं = वदनं कमलमिव वदनकमलम्, 'उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे'

---

मानते हैं । अनेक वर्षोंके बीतनेपर भी निरन्तरकी चिन्तासे स्पष्ट प्रकाशवाला अत एव नया-सा होकर मेरा कठोर दुःखसंवेग शान्त नहीं होता है । हे मातः ! यज्ञभूमिमें उत्पन्न होते ! तुम्हारा सृष्टिफल ऐसा परिणत हुआ, जिससे लज्जाके कारण स्वच्छन्दताके साथ रोना भी कठिन है । हा पुत्रि !

। कारणके विना भी रोने और हँसनेवाले, कलियोंके अग्रभागोंके तुल्य कुछ दाँतोंसे

वदनकमलकं शिशोः स्मरामि स्खलदसमञ्जसमञ्जुजल्पितं ते ॥ ४ ॥

भगवति वसुन्धरे ! सत्यमतिदृढासि ।

त्वं वह्निर्मुनयो वसिष्ठगृहिणी गङ्गा च यस्या विदु-
मर्हात्म्यं यदि वा रघोः कुलगुरुर्देवः स्वयं भास्करः ।
विद्यां वागिव यामसूत भवती शुद्धिं गतायाः पुन-

---

इत्युपमितकर्मधारयः, अनुकम्पितं वदनकमलमिति वदनकमलकं मुखपद्मकमित्यर्थः, 'अनुकम्पायाम्' इत्यनुकम्पाया कन्, स्मरामि = चिन्तयामि । आरब्धस्य स्मरणस्य निरन्तरं प्रवर्तमानत्वेन समाप्त्यभावाद्वर्तमानकालनिर्देशः । अत्र स्वभावोक्त्युपमयोरङ्गाङ्गिभावेन सङ्करः । पुष्पिताग्रा वृत्तम् ॥ ४ ॥

भगवतीति । अतिदृढा = अतिकठिना ।

त्वमिति । हे दारुणे ! यस्या माहात्म्यं त्वं वह्नि· मुनयो वसिष्ठगृहिणी गङ्गा रघोः कुलगुरु यदि वा देवः भास्करः स्वयं विदुः । वाक् विद्यामिव भवती याम् असूत, शुद्धिं गताया· त्वद्दुहितु·, पुन· तथा विशसनं किं मृष्यथा इत्यन्वय· । हे दारुणे = हे कठिने !, यस्या· = सीताया· माहात्म्यं = महिमानं, पातिव्रत्यमित्यर्थ·, त्वं = पृथिवी, वेत्सीति शेष, एवं च वह्नि = अग्नि·, मुनयः = वाल्मीक्यादय ऋषय·, वसिष्ठगृहिणी = वसिष्ठपत्नी, अरुन्धतीत्यर्थ·, गङ्गा = भागीरथी, रघोः = दिलीपपुत्रस्य राज्ञ·, कुलगुरुः = वंशाचार्य·, वसिष्ठ इत्यर्थः, यदि वा = अथ वा, देवो भास्कर· = सूर्य, स्वयम् = आत्मना, न तु परोपदेशद्वारेति भावः, यस्या· माहात्म्य विदुरिति संबन्धो योज्य· । वाक् = सरस्वती, 'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती ।' इत्यमर·, विद्याम् इव = शास्त्रम् इव, भवती = त्वं, या = सीताम्, असूत = सूतवती, शुद्धिं = वह्निशुद्धिं पवित्रतामित्यर्थः, गतायाः =प्राप्तायाः, त्वद्दुहितु· = त्वत्पुत्र्या·, सीताया इत्यर्थ·, पुनः = भूय·, रावणहननाऽनन्तरमिति

---

शोभित, अधूरे अक्षरोंवाले, असम्बद्ध और सुन्दर वचनोंसे युक्त शिशु तुम्हारे कमलके तुल्य मुखकी याद करता हूँ ॥ ४ ॥

भगवति पृथिवि ! सचमुच, तुम बहुत कठोर हो ।

हे कठिन चित्तवाली पृथिवि ! जिसकी महिमा तुम, अग्निदेव, ऋषिलोग, वसिष्ठपत्नी अरुन्धती, रघुवंशगुरु वसिष्ठ अथवा प्रकाशशील भगवान् सूर्य स्वयं जानते हैं। जैसे सरस्वती विद्याको उत्पन्न करती हैं, वैसे ही तुमने जिसको उत्पन्न किया, अग्निशुद्धिसे सम्पन्न उस पुत्री

स्तस्यास्त्वद्दुहितुस्तथा विशसनं किं दारुणे मृष्यथाः ? ॥५॥

( नेपथ्ये )

इत इतो भगवतीमहादेव्यौ ।

जनकः*—अये ? गृष्टिनोपदिश्यमानमार्गा भगवत्यरुन्धती (उत्थाय ।) का पुनर्महादेवीत्याह ? (निरूप्य ।) हा हा, कथमियं महाराजस्य दशरथस्य धर्मदाराः प्रियसखी मे कौसल्या ? क एतां प्रत्येति सैवेयमिति नाम ? ।

आसीदियं दशरथस्य गृहे यथा श्रीः
श्रीरेव वा किमुपमानपदेन सैषा ।

---

भावः, तथा = तेन रूपेण, भीषणप्रकारेणेति भाव', विशसनं=हिंसन, सीतापरित्यागरूपमित्यर्थ', किं मृष्यथाः = कथं सोढवती, स्वपुत्र्या तथाविधक्रूरव्यापारे जातेऽपि यत्तव सहनं तदेव त्वदीयमतिदारुणत्वं सूचयतीति भावः । अत्रोपमा तुल्ययोगिता च, द्वयोर्मिथोऽनपेक्षया स्थिते· संसृष्टिः । शार्दूलविक्रीडित वृत्तम् ॥ ५ ॥

इत इत इति । इतः इतः=अस्मिन्नस्मिन्मार्गे ।

जनक इति । गृष्टिना = तन्नाम्ना दशरथकञ्चुकिना, उपदिश्यमानमार्गा = उपदिश्यमानः = निर्दिश्यमान', मार्गः = पन्था', यस्याः सा । निरूप्य=हेतुभिर्विचार्य, सम्यग्दृष्ट्वेत्यर्थः, महादेवी = महाराज्ञी, इयं= दृश्यमाना, सैव=प्राग्दृष्टैव, प्रत्येति= प्रत्यभिजानाति ।

आसीदिति । इयं दशरथस्य गृहे श्रीर्यथा आसीत्, वा श्रीरेव । उपमानपदेन किम् ? कष्टं वत ! दैववशेन अन्यत् किमपि दु खात्मकं भूतम् इव जाता, अहो ! विकार इत्यन्वय' । इयं = पुर स्थिता, कौसल्येत्यर्थ' दशरथस्य = मत्सम्ब-

---

सीताका उस तरहसे परित्यागरूप हिंसाको तुमने कैसे सह लिया ? ॥ ५ ॥

( नेपथ्यमें )

भगवती और महारानी यहाँसे पधारें, यहाँसे पधारें ।

जनक—अरे ! भगवती अरुन्धती हैं, जिनको गृष्टि नामक कञ्चुकी मार्ग दिखा रहे हैं । ( उठकर ) फिर महारानी किसको कहा है ? ( अच्छीतरह देखकर ) हाय हाय ! कैसे ये महाराज दशरथकी धर्मपत्नी और मेरी प्रिय सखी कौसल्या आ गई ? ये वही हैं, ऐसे कौन इनको पहचानेगा ? ।

ये दशरथके भवनमें लक्ष्मीके सदृश थीं, अथवा लक्ष्मी ही थीं, औपम्यबोधक शब्दसे क्या

---

* '( दृष्ट्वा )' इति पुस्तकान्तरेऽधिकः पाठः ।

कष्टं वतान्यदिव दैववशेन जाता
दु:खात्मकं किमपि भूतमहो विकारः ॥ ६ ॥*

य एव मे जनः पूर्वमासीन्मूर्तो महोत्सवः ।
क्षते क्षारमिवासह्यं जातं तस्यैव दर्शनम् ॥ ७ ॥

( ततः प्रविशत्यरुन्धती कौसल्या कञ्चुकी च । )

अरुन्धती—ननु ब्रवीमि 'द्रष्टव्यः स्वयमुपेत्यैव वैदेहः' इत्येवं वः कुल-

न्धिनः, गृहे=भवने, श्रीर्यथा=लक्ष्मीरिव, आसीत् = अभवत्, वा=अथवा, श्रीरेव= लक्ष्मीरेव, आसीदिति शेषः। उपमानपदेन = औपम्यबोधकशब्देन, 'इव' पदे-नेत्यर्थ, किं = न किञ्चित्प्रयोजनमिति भावः। कष्टं = दुःखं, वत = हा!, सा = प्रागलक्ष्मीरूपा, एषा = पुरःस्थिता कौसल्या, दैववशेन = भाग्यवशेन, अन्यत् = अपरं, किमपि = वाचामनिर्वाच्यं, दुःखात्मकं = दुःखस्वरूपं, भूतं = प्राणिविशेषः, साक्षादलक्ष्मीरिति भावः, जाता = संवृत्ता, उद्देश्यप्राधान्यात्स्त्रीलिङ्गनिर्देशः। अहो = आश्चर्यम्, विकारः =विकृतिः, दुष्परिणाम इति भावः। अत्रोपमाऽतिशयो-क्त्युत्प्रेक्षाणां मिथोऽनपेक्षया संसृष्टिः। वसन्ततिलका वृत्तम् ॥ ६ ॥

य एवेति। य एव जनः पूर्वं मे मूर्तो महोत्सव आसीत्, ( अद्य ) तस्यैव दर्शनं क्षते क्षारम् इव असह्यं जातम् इत्यन्वयः। य एव जनः = कौसल्यारूपो, नाऽन्य इति भावः, पूर्वं = प्राक्, दशरथजीवनस्य सीताया गृहाऽवस्थानस्य च समय इति भावः। मे=मम, सम्बन्धिन इति भावः। मूर्तः = मूर्तिमान्, महोत्सवः= आनन्दप्रकर्षहेतुः आसीत् = अभवत्। ( अद्य = अस्मिन्दिने ) तस्यैव = कौस-ल्यारूपस्य जनस्यैव, दर्शनं = विलोकनं, क्षते = शस्त्रादिच्छिन्ने व्रणे वा, क्षारमिव= लवणमिव, असह्यं = सोढुमशक्यं, जातं = संवृत्तम्। अत्रोपमाऽलङ्कारः ॥ ७ ॥

अरुन्धतीति। ननु = सम्बोधनाऽर्थोयं शब्दः, उपेत्य = समीपं गत्वा,

प्रयोजन है? कष्ट है, हाय! ये वे ही भाग्यवश दूसरे कोई दुःखस्वरूप प्राणीके सदृश हो गईं। आश्चर्य है! यह विकार है ॥ ६ ॥

ये ही कौसल्या पहले मेरे लिए मूर्तिमान् महोत्सवस्वरूप होती थीं, आज इन्हींका दर्शन कटे हुएपर नमककी तरह असह्य हो रहा है ॥ ७ ॥

( तब अरुन्धती, कौसल्या और कञ्चुकी प्रवेश करते हैं। )

अरुन्धती—अरे! मैं कहती हूँ कि 'स्वयम् समीप जाकर ही महाराज जनकका दर्शन

* इतोऽग्रे 'अयमपरः पापो दशाविपर्यासः' इति पाठान्तरम्।

गुरोरादेशः । अत एव चाहं प्रेषिता । तत्कोऽयं पदे पदे महाननध्यवसायः?

कञ्चुकी—देवि! संस्तभ्यात्मानमनुरुध्यस्व भगवतो वसिष्ठस्यादेशमिति विज्ञापयामि ।

कौसल्या—ईरिसे काले मिहिलाहिवो मए दिट्ठव्वो त्ति समं एव्व सव्वदुःखाइ ओदरन्ति । ता ण सक्कणोमि उव्वट्टमाणमूलबन्धणं हिअअं पज्जवत्थावेदुम् । ( ईदृशे काले मिथिलाधिपो मया द्रष्टव्य इति सममेव सर्वदुःखान्यवतरन्ति । तस्मान्न शक्नोम्युद्वर्तमानमूलबन्धनं हृदयं पर्यवस्थापयितुम् । )

अरुन्धती—अत्र कः संदेहः ?

संतानवाहीन्यपि मानुषाणां दुःखानि संबन्धिवियोगजानि ।
दृष्टे जने प्रेयसि दुःसहानि स्रोतःसहस्रैरिव संप्लवन्ते ॥ ८ ॥

---

वैदेहः = विदेहराज , जनक इत्यर्थः । वः=युष्माकं, कुलगुरोः=वसिष्ठस्य, आदेशः = आज्ञा । पदे पदे = प्रतिपदम् , प्रतिपादन्यासमिति भावः, महाऽनध्यवसायः = महती अप्रवृत्तिः, जनकदर्शन इति शेषः ।

कञ्चुकीति । आत्मानं = धृतिम् , 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्यमरः, संस्तभ्य = स्थिरीकृत्य, अनुरुध्यस्व = अनुसर ।

कौसल्येति । ईदृशे = एतादृशे, सीतावियुक्त इति भावः, समं = युगपत् , अवतरन्ति = प्राप्नुवन्ति, 'समुद्भवन्ति' इति पाठे-उत्पद्यन्त इत्यर्थः । उद्वर्तमानमूलबन्धनम् = उद्वर्तमानम् = उद्गच्छत् , मूलबन्धनं=मूलनियन्त्रणम् , यस्य तत् , शिथिलबन्धनमिति भावः । एतादृशं हृदयं, पर्यवस्थापयितुं = प्रकृतिस्थं कर्तुम् ।

संतानेति । मानुषाणां सन्तानवाहीन्यपि सम्बन्धिवियोगजानि दुःखानि प्रेयसि जने दृष्टे दुःसहानि ( सन्ति ) स्रोतःसहस्रैः संप्लवन्ते इव इत्यन्वयः ।

---

करना चाहिए' ऐसा आपके कुलगुरु ( वसिष्ठजी ) की आज्ञा है । इस कारणसे मैं भेजी गई हूँ । तब पग पगपर यह कैसी आपकी भारी अप्रवृत्ति है ?

कञ्चुकी—महारानी ! मैं निवेदन करता हूँ कि धैर्य धारण कर भगवान् वसिष्ठकी आज्ञाका अनुसरण करें ।

कौसल्या—ऐसे समयमें मिथिलाऽधीश्वरका दर्शन करना होगा, इसलिये सब दुःख एक साथ प्राप्त होते हैं । इस कारणसे शिथिल बन्धनवाले हृदयको मैं सँभाल नहीं सकती हूँ ।

अरुन्धती—इसमें क्या सन्देह है ?

मनुष्योंके अविच्छिन्न भावसे बहनेवाले बन्धुवियोगसे उत्पन्न दुःख, प्रिय जनके देखे जानेपर दुःसह होते हुए अनन्तप्रवाहोंसे बहनेवालेकी तरह प्रतीत होते हैं ॥ ८ ॥

कौसल्या—कहं णु खु वच्छाए मे वहूए वनगदाए तस्सा पिदुणो राएसिणो मुहं दंसम्ह ? ( कथं नु खलु वत्साया मे वध्वा वनगतायास्तस्याः पितू राजर्षेर्मुखं दर्शयाम ? )

अरुन्धती—

एष वः श्लाघ्यसंबन्धी जनकानां कुलोद्वहः।
याज्ञवल्क्यो मुनिर्यस्मै ब्रह्मपारायणं जगौ ॥ ९ ॥

कौसल्या—एसो सो महाराअस्स हिअअणिव्विसेसो वच्छाए मे वहूए

---

मानुषाणां = मनुष्याणां, सन्तानवाहीन्यपि = अविच्छेदेन वहनशीलान्यपि, सम्बन्धिवियोगजानि = सम्बन्धिनः=बन्धो , वियोगात्=विरहात् , जायन्त इति, बन्धुविरहोत्पन्नानीति भावः, एतादृशानि कष्टानि=दुःखानि, प्रेयसि=प्रियतरे, जने=मनुष्ये, दृष्टे = साक्षात्कृते, दुःसहानि = सोढुमशक्यानि ( सन्ति ), स्रोत सहस्रै = अनन्तप्रवाहै , संप्लवन्ते इव = उद्गच्छन्ति इव। अत्र क्रियोत्प्रेक्षालङ्कारः। इन्द्रवज्रा वृत्तम् ॥ ८ ॥

कौसल्येति। वत्सायाः = वात्सल्यभाजः, वध्वा = स्नुषायाः, सीताया इत्यर्थः, पितुः = जनकस्य, सम्बन्धमात्रविवक्षाया षष्ठी, जनकेनेत्यर्थः।

एष इति। एष वः श्लाघ्यसम्बन्धी जनकाना कुलोद्वहः ( अस्ति ), यस्मै याज्ञवल्क्यो मुनिः ब्रह्मपारायणं जगौ इत्यन्वयः। एष = पुरः स्थित , व = युष्माकं, श्लाघ्यसम्बन्धी = श्लाघ्य = प्रशसनीयश्चासौ सम्बन्धी = पुत्रश्वशुरः, जनकाना = जनकवंशोत्पन्नाना राज्ञा, कुलोद्वह =कुलस्य=वंशस्य, उद्वह =श्रेष्ठः, अस्तीति शेषः। यस्मै = जनकाय, याज्ञवल्क्य = तन्नामकः, मुनिः=ऋषिः, ब्रह्मपारायण = ब्रह्मण = वेदस्य, पारायणम् = साकल्यवचनम् , उपनिषत्प्रमाण वेदान्तमित्यर्थः, जगौ = गीतवान्, उपदिदेशेत्यर्थः। याज्ञवल्क्यमहर्षिरपि यं जनकं वेदान्तमध्यापयदिति भावः ॥ ९ ॥

कौसल्येति। महाराजस्य = दशरथस्य, हृदयनिर्विशेष = हृदयात्=चित्तात् ,

---

**कौसल्या**—वात्सल्यभागिनी मेरी वधू ( सीता ) के वनमें जानेपर उसके पिता राजर्षि जनकको कैसे मुख दिखलाऊँ ?

**अरुन्धती**—ये आपके प्रशसनीय सम्बन्धी जनकवंशमें श्रेष्ठ हैं, जिनको याज्ञवल्क्य मुनिने वेदान्तका उपदेश किया था ॥ ९ ॥

**कौसल्या**—महाराज ( दशरथ ) के ये वे अभिन्नहृदय और वात्सल्यभागिनी मेरी वधूके

पिदा विदेहराओ सीरद्धओ। सुमरिदह्मि अणिव्वेदरमणीए दिवहे। हा देव्व ! सव्वं तं णत्थि। ( एष स महाराजस्य हृदयनिर्विशेषो वत्साया मे वध्वाः पिता विदेहराजः सीरध्वजः। स्मारितास्मि अनिर्वेदरमणीयान्दिवसान्। हा देव ! सर्वं तन्नास्ति। )

जनकः—(उपसृत्य।) भगवत्यरुन्धति ! वैदेहः सीरध्वजोऽभिवादयते।

यया पूतंमन्यो निधिरपि पवित्रस्य महसः
पतिस्ते पूर्वेषामपि खलु गुरूणां गुरुतमः।

---

निर्विशेषः=निर्भेदः, अभिन्नहृदय इत्यर्थः, सीरध्वजः=सीरः = सूर्यो हलं वा, ध्वजे= पताकायां, यस्य सः चिह्नरूपेणेत्यर्थः=अनिर्वेदरमणीयान्=अविद्यमानः=अवर्तमानः, निर्वेदः=चित्तग्लानिः, येषु ते, अनिर्वेदाश्च ते रमणीया =आनन्दहेतवः, तान्, दिवसान्=दिनानि, स्मारिता=कारितस्मरणा, अस्मि=भवामि, सुखमयदिवसविषयकस्मरणवती कृतास्मीति भावः। पुस्तकान्तरेषु तु 'सम्भाविताऽस्मि अनुपस्थितमहोत्सवे दिवसे' इति पाठस्तत्र अनुपस्थितमहोत्सवे = सीतापरित्यागेन अनुपस्थितः= नाशं गतः, महोत्सवः=महाऽऽनन्दहेतुः, यस्मिंस्तस्मिन्, दिवसे=दिने, सम्भाविता= सत्कृता, अस्मि=भवामि, आगमनेनेति भावः। हा=दुःखं, देव=महाराज ! तत् = प्रागनुभूतं, संयोगाऽवस्थायामिति भावः, सर्वं = सकलं, सुखमिति शेषः।

जनक इति। अभिवादयते = नमस्करोति, भवतीमिति शेषः।

ययेति। पवित्रस्य महसो निधिरपि पूर्वेषां गुरूणां गुरुतमः ( अपि ) ते पतिः यया पूतमन्यः खलु, त्रिलोकीमङ्गल्या जगद्वन्द्या देवीम् उषसम् इव भवतीम् अवनितललीनेन शिरसा वन्दे इत्यन्वयः। पवित्रस्य = पूतस्य, 'पवित्रः प्रयतः पूत' इत्यमरः, महसः = तेजसः, निधिरपि = आधारोऽपि, पूर्वेषां = प्राचीनानां, गुरूणाम् = आचार्याणां, गुरुतमः = श्रेष्ठ आचार्योऽपि, ते=तव, अरुन्धत्या इत्यर्थः।

---

पिता सीरध्वज हैं। चित्तग्लानिरहित और आनन्दके कारणभूत दिनोंकी याद हो आई है। हा देव ! अब वह कुछ नहीं है।

जनक—( समीप जाकर ) भगवति अरुन्धति ! विदेहवंशीय सीरध्वज आपको नमस्कार करता है।

पवित्र तेजके आधारस्वरूप और प्राचीन आचार्योंमें श्रेष्ठ होते हुए भी आपके पति ( वसिष्ठ जी ) जिस ( आप ) से अपनेको पवित्र मानते हैं, लोकत्रयके मङ्गलके कारणस्वरूप,

त्रिलोकीमङ्गल्यामवनितललीनेन शिरसा
जगद्वन्द्यां देवीमुपसमिव वन्दे भगवतीम् ॥ १० ॥

अरुन्धती—अक्षरं ते ज्योतिः प्रकाशताम्। स त्वां पुनातु देवः परो रजसां, य एष तपति।

जनकः—आर्ये गृष्टे! अप्यनामयमस्याः* प्रजापालकस्य मातुः?

पतिः=भर्ता, यया = त्वया, पूतंमन्यः = आत्मानपूत मन्यते इति 'आत्ममाने खश्' इति खश् प्रत्ययः 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमश्च, खलु = निश्चयेन। त्रिलोकीमङ्गल्या = त्रयाणां लोकानां समाहारस्त्रिलोकी, मङ्गलाय हिता मङ्गल्या, 'तस्मै हितम्' इति यत्। त्रिलोक्या मङ्गल्या ताम् = लोकत्रयमङ्गलहेतुभूतामित्यर्थः, जगद्वन्द्या = लोकनमस्कार्यां देवीं = द्योतमानाम्, उपसमिव = प्रातःकालदेवतामिव, भगवतीं = माहात्म्यसम्पन्नां, भवतीमिति शेषः, अवनितललीनेन = भूतलसम्बद्धेन, 'अवनितललोलेन' इति पाठे भूतलचञ्चलेनेत्यर्थः, शिरसा=मूर्ध्ना, वन्दे = नमामि। पूर्णोपमाऽलङ्कारः। शिखरिणी वृत्तम् ॥१०॥

अरुन्धतीति। अक्षरम् = अविनाशि, कूटस्थमित्यर्थः, पुस्तकान्तरे 'परम्' इति पाठस्तत्र प्रधानमित्यर्थः, अनितरापेक्षमिति यावत्, ज्योतिः = प्रकाशः, ब्रह्मेत्यर्थः, प्रकाशताम् = आविर्भवतु। रजसां = रज आदिसमस्तदोषाणां, सम्बन्धसामान्ये षष्ठी, परः = दूरवर्ती रज आदिदोषैरसंस्पृष्ट इति भावः, पुनातु=पवित्रं करोतु, 'परोरजाः' इति पाठे-रजसः पर इति विग्रहः, 'राजदन्तादिषु परम्' इति रजसः परनिपातः, 'पारस्करप्रभृतीनि च' इति सुट्, तपति = तापं करोति, तपनेन सर्वं लोकं जीवयतीति भावः। अत्र ब्रह्मणः प्रतीकत्वेन सविता लक्ष्यते।

जनक इति। प्रजापालकस्य = जनरक्षकस्य, एतेन विशेषणेन न तु पत्नीरक्षकस्येत्यर्थो व्यज्यते, रामस्येति भावः, मातुः = जनन्याः, कौसल्याया इत्यर्थः, अनामयम् अपि = आरोग्यमस्ति किं, 'ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम्' इति स्मृतेरनामयप्रश्नः सङ्गच्छते।

लोकसे वन्दनीय, प्रातःकालकी अधिष्ठात्री देवीकी तरह माहात्म्यसम्पन्न आपको (मैं) पृथ्वीमें झुके हुए शिरसे नमस्कार करता हूं ॥ १० ॥

अरुन्धती—आपको अविनाशी ज्योतिःस्वरूप ब्रह्म प्रकाशित हो। जो यह देवता प्रकाश करते हैं, रज आदि दोषोंसे असंस्पृष्ट, वे सूर्यदेव आपको पवित्र करें।

जनक—आर्ये गृष्टे! प्रजापालक (राम) की माता आरोग्यवती तो हैं?

* 'अपि कुशलमस्याः' इति पाठान्तरम्।

कञ्चुकी—(स्वगतम्।) निरवशेषमतिनिष्ठुरमुपालब्धाः स्मः। (प्रकाशम्।) राजर्षे। अनेनैव मन्युना चिरपरित्यक्तरामभद्रदर्शनां नार्हसि दुःखयितुमतिदुःखितां देवीम्। रामभद्रस्यापि दैवदुर्योगः कोऽपि। यत्किल समन्ततः प्रवृत्तबीभत्सकिंवदन्तीकाः पौराः। न चाग्निशुद्धिमनल्पकाः प्रतियन्तीति दारुणमनुष्ठितं देवेन।

जनकः—( सरोषम्। ) आः, कोऽयमग्निर्नामास्मत्प्रसूतिपरिशोधने ?

---

कञ्चुकीति। निरवशेषं = निःशेषं, 'निर्विशेषम्' इति पाठे निरतिशयमित्यर्थः, अतिनिष्ठुरम् = अतिशयकठोरम्, उपालब्धाः = कृतोपालम्भाः, 'अत्रापातकस्य मातुः' इति कथनेनेति भावः। देवीं=महाराज्ञीम् अनेनैव = सीतानिर्वासनरूपहेतुनैव, मन्युना=कोपेन, चिरपरित्यक्तरामभद्रदर्शना=चिरं=बहुकालम्, परित्यक्तं= परिमुक्तम्, रामभद्रदर्शनं=रामचन्द्रविलोकनम्, यया ताम्, अतिदुःखिता=सीताविरहेण तदुत्पन्नकोपकारितरामचन्द्रादर्शनेन चातिदुःखितामिति भावः। दुःखयितुं = दुःखितां कर्तुम्। कोऽपि = अनिर्वाच्यः, दैवदुर्योगः = भाग्यदुःसम्बन्धः। यत् = यस्माद्धेतोः, किल = निश्चयेन, समन्ततः = सर्वतः, प्रवृत्तबीभत्सकिंवदन्तीकाः = प्रवृत्ता = प्रसृता, बीभत्सा=जुगुप्सिता, किंवदन्ती=जनश्रुतिः, येषां ते, 'नद्यृतश्च' इति समासान्तः कप्, 'किंवदन्ती जनश्रुतिः' इत्यमरः, अनल्पकाः = अविद्यमानोऽल्पो येभ्यस्ते अत्यल्पाः क्षुद्रचित्ता इति भावः। अग्निशुद्धिम् = हुताशनकृता सीतापरिशुद्धिं, न प्रतियन्ति = न विश्वसन्ति, इति = अस्माद्धेतोः, देवेन = रामभद्रेण, दारुणं = सीतानिर्वासनात्मकं भयानकं कर्म, अनुष्ठितम् = आचरितम्।

जनक इति। आः = कोपव्यञ्जकमव्ययपदमिदम्, अस्मत्प्रसूतिपरिशोधने = अस्मत्प्रसूतेः = अस्मत्सन्ततेः, सीताया इत्यर्थः, परिशोधने = पवित्रीकरणे, मद्दुहितुः सीतायाः परिशोधनेऽनलो न समर्थस्तस्याः स्वतः शुद्धत्वादिति भावः।

---

कञ्चुकी—( मन ही मन ) इन्होंने कहनेमें कुछ बाकी न रखकर बड़ी निष्ठुरताके साथ हमलोगोंका उपालम्भ किया। (सुनाकर) राजर्षे! इसी कोपसे रामभद्रका दर्शन छोड़नेवाली अतिशय दुःखित महारानी (कौसल्या) को और भी दुःखित करना आपको उचित नहीं है। रामभद्रका भी अनिर्वचनीय भाग्यका दुःसम्बन्ध है। जो कि चारों ओरसे बीभत्स किंवदन्ती कहनेवाले अतिशय क्षुद्र चित्तवाले नागरिक सीताजीकी अग्निशुद्धिका विश्वास नहीं करते हैं इसलिए महाराजने ऐसा कठोर कर्म किया।

जनक—( कोपपूर्वक ) ओह! हमारी सन्तान (सीता) को शुद्ध करनेमें 'अग्नि' नाम

कष्टम्, एवंवादिना जनेन रामभद्रपरिभूता अपि पुनः परिभूयामहे।

अरुन्धती—( निश्वस्य। ) एवमेतत्। अग्निरिति वत्सां प्रति लघून्यक्षराणि। सीतेत्येव पर्याप्तम्। हा वत्से!

शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं द्रढयति।

---

एवंवादिना = सीताया अग्निशुद्धिरिति वादिना, जनेन = लोकेन, रामभद्रपरिभूता अपि = सीताचारित्र्यसंशयजन्यनिर्वासनरूपव्यापारेण रामभद्रतिरस्कृता अपि, वयमिति शेषः, पुनः=भूयः, परिभूयामहे=अवमन्यामहे, अवमानिता'स्म इति भावः।

अरुन्धतीति। एतत् = परिभूयामहे इति भवत्कथनम्, एवं = सत्यं, तत्र विप्रतिपत्तिर्नाऽस्तीति भावः। वत्सां प्रति = सीतां प्रति, लघूनि = लाघवोपेतानि, अक्षराणि = वर्णाः, पदमिति भावः। अग्निरिव सा स्वतः शुद्धा, अग्निस्तस्याः शुद्धिं किं करिष्यतीति भावः। पर्याप्तं = निकामम्, 'कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम्।' इत्यमरः।

शिशुरिति। त्वं मम शिशुर्वा शिष्या वा यत् असि, तत् तथा तिष्ठतु, त्वयि विशुद्धेः उत्कर्षस्तु मम भक्तिं दृढयति। ननु शिशुत्वं स्त्रैणं वा भवतु, जगतां धन्या असि, गुणिषु गुणाः पूजास्थानं, लिङ्गं न, वयश्च न इत्वन्वयः। त्वं = सीता, मम = अरुन्धत्याः, शिशुर्वा = बालिका वा, शिष्या वा = शासनीया वा, असि = भवसि; यत् = शिशुत्वं शिष्यात्वं वा, अस्तीति शेषः; तत्=पूर्वोक्तं शिशुत्वं शिष्यात्वं वा, तथा = तेनैव प्रकारेण, तिष्ठतु = आस्ताम्, तेन नाऽत्र किमपि कृत्यमिति भावः। परं—त्वयि = सीतायां, विशुद्धेः = निर्दोषतायाः, उत्कर्षस्तु=अतिशयस्तु, मम = अरुन्धत्याः, भक्तिं = पूज्यत्वबुद्धिं, द्रढयति = दृढीकरोति, 'जनयती'ति पुस्तकान्तरपाठस्तत्र—उत्पादयतीत्यर्थः। ननु = अवधारणाऽर्थकोऽयं

---

वाला यह कौन है? कष्ट है कि ऐसा कहनेवाले मनुष्यके द्वारा, रामभद्रसे तिरस्कृत होते हुए भी हमलोग फिर तिरस्कृत किये जाते हैं।

अरुन्धती—( लम्बी सास लेकर ) यह ठीक है। 'अग्नि' ये अक्षर सीताके लिये क्षुद्र हैं, 'सीता' यह कहना ही पर्याप्त ( काफी ) है। हाय बेटी!

तुम मेरी बेटी हो या शिष्या हो, जो सम्बन्ध है वह वैसा ही रहे, परन्तु तुममें जो पवित्रताका आधिक्य है, वह मेरी भक्तिको दृढ करता है। तुममें बालभाव हो या स्त्रीभाव, तम

शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्यासि जगतां
गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ॥ ११ ॥

कौसल्या—अहो समुम्मूलअन्ति विअ वेअणाओ । ( इति मूर्च्छति । )
( अहो, समुन्मूलयन्तीव वेदनाः । )

जनकः—हन्त ! किमेतत् ?

अरुन्धती—राजर्षे ! किमन्यत् ?
स राजा तत्सौख्यं स च शिशुजनस्ते च दिवसाः

---

शब्दः, शिशुत्वं = बाल्यं, शिशुत्वं शैशवं बाल्यम्' इत्यमरः, स्त्रैणं वा = स्त्रीत्वं वा, 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति नञ्प्रत्ययः । भवतु = स्यात्, परं जगतां = लोकानां, वन्द्या = नमस्करणीया, असि = वर्तसे, त्वन्निष्ठेन शिशुत्वेन स्त्रीत्वेन वा न वन्द्यात्वहानिः । उक्तं विशेषमर्थं समान्येन समर्थयति—गुणा इति । गुणिषु = गुणवत्सु, गुणाः = सदाचरणसत्यादयः, पूजास्थानं = सत्कारस्थानं, वर्तत इति शेषः, लिङ्गं = पुंस्त्वादिकं जटोपवीतादिकं वा, न = न पूजास्थानं; वयश्च = वृद्धत्वादिरवस्था च, न = न पूजास्थानम् । लोकोत्तरपातिव्रत्यादिगुणैस्त्वं सर्वेषामपि पूजनीयाऽसीति भावः । अत्राऽर्थान्तरन्यासोऽलङ्कारः । शिखरिणी वृत्तम् ॥ ११ ॥

कौसल्येति । वेदनाः = दुःखानि । समुन्मूलयन्ति इव = मूलमुत्पाटयन्ति इव मूर्च्छति = मूर्च्छामभिनयति ।

जनक इति । एतत् = कौसल्यायाः मूर्च्छनं, किं = किंविधम् ।

अरुन्धतीति । अन्यत् = अपरं, किं=किं भवेत्, ईदृश्या दशायां मूर्च्छाया ऋते किं भवेदिति भावः ।

स इति । स राजा, तत् सौख्यं, स च शिशुजनः, ते च दिवसाः; सुहृदि

---

संसारकी वन्दनीया हो। गुणियोंमें गुण ही पूजाके स्थान होते हैं, स्त्रीत्व, पुंस्त्व या जटा, यज्ञोपवीत वल्कल आदि चिह्न-विशेष और वय ( उम्र ) पूजाके स्थान नहीं होते हैं ॥ ११ ॥

कौसल्या—अहो ! दुःख मानो मूलको उखाड़ रहे हैं ( ऐसा कह कर मूर्च्छित होती हैं )

जनक—हाय ! यह क्या ?

अरुन्धती—राजर्षे ! और क्या होता ?

वे राजा ( दशरथ ), वह सौख्य, रामभद्र आदि वे बालजन, वे दिन; सम्बन्धी आपको

प्रसादे कोपे वा तदनु मदधीनो विधिरभू-
दलं वा तत्स्मृत्वा दहति यदवस्कन्द्य हृदयम् ॥ १४ ॥

अरुन्धती—हा! कष्टम्। अतिचिरनिरुद्धनिःश्वासनिष्पन्दहृदयमस्याः।

जनकः—हा प्रियसखि! ( इति कमण्डलूदकेन सिञ्चति। )

---

विधि अभूत्, तत् स्मृत्वा अलं; यत् हृदयम् अवस्कन्द्य दहति इत्यन्वयः। अस्याः = कौसल्यायाः, पत्युर्वा = भर्तुर्वा, दशरथस्य वेत्यर्थः, रहसि = एकान्ते, यत्परमन्त्रायित = यद् गुप्तभाषणं विचारो वा, आचारणिजन्तात्कर्तरि क्तप्रत्ययः, 'परमं दूषितम्' इति पुस्तकान्तरपाठस्तत्र—अतिशय प्रणयाऽपराध इत्यर्थः, अभूत् = अभवत्, ( तत्र ) अहं = जनकः, दम्पत्योः = जायापत्योः, कौसल्यादशरथयोरित्यर्थः, पृथक् = विभिन्नं यथा तथा, उपालम्भविषयः = दुर्वाक्यकथनपात्रम्, अभूवम् = अभवम्, दशरथकृतापराधे कौसल्या 'त्वदीयोऽयं सखा मय्यमीदृशमपराध्यति' इत्यब्रवीत्, कौसल्याकृताऽपराधे च दशरथः 'त्वदीयेयं सखी मय्यमीदृशमपराध्यति' इत्यवोचत्, इत्थं च द्वावपि सखित्वसख्यत्वरूपेण दोषेण मामुपालब्धवन्ताविति भावः। तदनु = उपालम्भाऽनन्तरं, प्रसादे = प्रसन्नतायां, कोपे वा = क्रोधे वा, दम्पत्योरिति शेषः, मदधीनः = मदायत्तः, विधिः = व्यापारः, अभूत्, उपालम्भानन्तरं तौ मिथः कोपयितुं प्रसादयितुं वा अहमेव समर्थोऽभूवमिति भावः। तत् = अतीतं वृत्तम्, स्मृत्वा = स्मरणं कृत्वा, अलं = पर्याप्तं, तत्स्मरणेन किमपि साध्यं नाऽस्तीत्यर्थः, 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' इति क्त्वा प्रत्ययः। यत् = अतीतं वृत्तं स्मृतं सदिति भावः, हृदयं = वक्षःस्थलम्, अवस्कन्द्य = आक्रम्य, दहति = तापयति। शिखरिणी वृत्तम् ॥ १४ ॥

अरुन्धतीति। अस्याः = कौसल्यायाः, अतिचिरनिरुद्धनिःश्वासनिष्पन्दहृदयम् = अतिचिरं = बहुकालपर्यन्तम्, निरुद्धाः = सञ्चाररहिताः, निःश्वासाः = प्राणवायवः, यस्मिंस्तत्, अतएव निष्पन्दं = निश्चेष्टम्, क्वचित् 'निष्ठुरम्' इति पाठस्तत्र—अतिनिरुद्धनिःश्वासैः निष्ठुरम् = कठोरम् इति योजना कार्या।

---

होता था। उसके बाद प्रसन्न वा कुपित करनेका काम मेरे हाथमें रहता था। अब वह सब याद करनेसे कोई प्रयोजन नहीं, जो कि हृदय को आक्रमण करके जलाता है ॥ १४ ॥

अरुन्धती—हाय! कष्ट है। बहुत काल तक श्वास रोकनेसे इनका हृदय चेष्टासे रहित हो गया है।

जनक—हाय प्रियसखि! ( ऐसा कहकर कमण्डलुके जलसे सींचते हैं )।

कञ्चुकी—

सुहृदिव प्रकटय्य सुखप्रदां प्रथममेकरसामनुकूलताम् ।
पुनरकाण्डविवर्तनदारुणः परिशिनष्टि विधिर्मनसो रुजम् ॥ १५ ॥

कौसल्या—(आश्वस्य ।) हा वच्छे जाणइ ! कहिं सि ? सुमरामि दे णव विवाहलच्छीपरिग्गहेक्कमङ्गलं संफुल्लमुद्धमुहपुण्डरीअ आरुहन्तकौमुदीचन्द-सुन्दरम् । एहि मे पुणो वि जादे ! उज्जोएहि उच्छङ्गम् । सव्वहा महाराज एव्वं भणदि—'एसा रहुउलमहत्तराणं वहु, अह्माणं दु जणअसुदा दुहिदे०व'। (हा वत्से जानकि ! क्वासि ? स्मरामि ते नवविवाहलक्ष्मीपरिग्रहैकमङ्गलं संफुल्लमुग्धमुखपुण्ड-रीकमारोहत्कौमुदीचन्द्रसुन्दरम् । एहि मे पुनरपि जाते ! उद्द्योतयोत्सङ्गम् । सर्वदा-

---

सुहृदिति । विधि प्रथमं सुहृत् इव सुखप्रदाम् एकरसाम् अनुकूलता प्रक-टय्य पुन अकाण्डविवर्तनदारुण ( सन् ) मनसो रुज परिशिनष्टि इत्यन्वय• । विधि• = भाग्यं, प्रथमं = पूर्वं, सुहृत् इव = मित्रम् इव, सुखप्रदाम् = आनन्दप्रदा, 'सुखप्रद' इति विधिविशेषणरूप पुस्तकान्तरपाठ , एकरसाम् = एक = एककः, रसान्तरेण अमिश्र इत्यर्थ , रस = प्रेम, यस्या ताम् , अनुकूलताम् = आनुकूल्यम् , योगक्षेमरूपमिति भाव , प्रकटय्य = प्रकाश्य, पुन• = अनन्तरम् , अकाण्डविव-र्तनदारुण = अकाण्डे = अनवसरे, यत् विवर्तन = परिवर्तनम् , तेन दारुण• = क्रूर• सन् मनस• = चेतस , रुज = पीडा, परिशिनष्टि = परिशिष्टा करोति । भाग्यं प्राक् सुहृदिव अनुकूलीभूय सुखमुत्पादयति, पश्चादकाण्डे दु खानि जनयतीति भावः । अत्र विषमोपमाऽलङ्कारयो• सङ्करः । द्रुतविलम्बितं वृत्तम्—'द्रुतविलम्बितमाह नभौ भरौ' इति तल्लक्षणम् ॥ १५ ॥

कौसल्येति । आश्वस्य = आश्वास कृत्वा, संज्ञा लब्ध्वेत्यर्थ• । नवविवाह-लक्ष्मीपरिग्रहैकमङ्गल = नवविवाहलक्ष्म्या = नूतनोद्वाहशोभाया , परिग्रह• = धार-णम् , तेन एकम् = अद्वितीयम् , मङ्गलं = शुभम् , यस्य तत् , 'मण्डनम्' इति पाठे···· परिग्रह एव एकं मण्डन = भूषणं यस्य तदित्यर्थ• आरोहत्कौमुदी-

---

कञ्चुकी—भाग्य पहले मित्रकी तरह सुख देनेवाला केवल प्रेमयुक्त अनुकूलताको प्रकाशित करके पीछेसे अनवसरमें परिवर्तन कर कठोर होता हुआ मनकी पीडाको परिशिष्ट करता ( बढाता ) है ॥ १५ ॥

कौसल्या—( होशमें आकर ) हाय बेटी जानकि ! तुम कहाँ हो ? नूतन विवाहकी शोभाके धारणसे अद्वितीय मङ्गल-सम्पन्न, चन्द्रिका ( चाँदनी ) में प्रकाशमान चन्द्रकी तरह

महाराज एवं भणति—'एषा रघुकुलमहत्तराणा वधूरस्माकं तु जनकसुता दुहितैव'।)

कञ्चुकी—यथाह देवी।

पञ्चप्रसूतेरपि तस्य राज्ञः प्रियो विशेषेण सुबाहुशत्रुः।

---

चन्द्रसुन्दरम् = कौमुद्याश्चन्द्रः कौमुदीचन्द्रः आरोहंश्चाऽसौ कौमुदीचन्द्र' आरोहत्कौमुदीचन्द्र = प्रादुर्भवन् चन्द्रिकाया द्योतमानश्चन्द्र इत्यर्थ, स इव सुन्दरम् = रुचिरम्; एतादृशं ते = तव, सीतायाः इत्यर्थ, संफुल्लमुग्धमुखपुण्डरीकम् = संफुल्ल = विकसितं हास्येनेति भावः, मुग्धं = सुन्दरम्, मुखपुण्डरीकम् = मुखकमलम्, स्मरामीत्यत्रान्वयः, पुस्तकान्तरेषु तु 'प्रस्फुरच्छुद्धहसितमुग्धमुखपुण्डरीकम्' इति पाठस्तत्र–प्रस्फुरता = विकसता, शुद्धेन = निर्दोषेण, हसितेन = हासेन, शेषं पूर्ववद्व्याख्येयम् अत उत्तरम् 'आस्फुरत्कौमुदचन्द्रचन्द्रिकासुन्दरैरङ्गैरुल्लासय' इत्यधिकः पुस्तकान्तरपाठस्तत्र–आस्फुरन् = प्रकाशमानः, य कौमुदश्चन्द्रः = कार्तिकपूर्णिमाचन्द्रः, तस्य चन्द्रिका = ज्योत्स्ना, ता इव सुन्दराणि, तैरेतादृशै अङ्गै = अवयवै, उल्लासय = शोभितं कुर्वित्यर्थः। जाते = हे दुहित। कौसल्या सीताया दुहितृवत्स्निह्यति स्म, अतो 'जाते' इति सम्बोधनं संगच्छते। एहि = आगच्छ, उत्सङ्गम् = अङ्कम्, उद्द्योतय = उपवेशनेन प्रकाशयेति भाव। सर्वदा = सर्वस्मिन्काले, 'सर्वैकान्यकियत्तदः काले दा' इति दाप्रत्ययः, महाराज = दशरथ, भणति = कथयति, स्मेत्यध्याहार्यम्, एषा = इयम्, जनकसुता = सीता, रघुकुलमहत्तराणा = रघुकुले = रघुवंशे, ये महत्तरा = महीयासः, माननीयमनुप्रभृतय इत्यर्थः, तेषाम्, वधूः = स्नुषा, अस्माकं तु = मम तु, दशरथस्य त्विति भाव, दुहिता एव = पुत्री एव, स्वसखजनकस्य दुहितृत्वादिति भावः।

कञ्चुकीति—देवी = कौसल्या, आह = कथयति, तथैवेति शेष।

पञ्चेति। पञ्चप्रसूतेरपि तस्य राज्ञः सुबाहुशत्रु' विशेषेण प्रिय, तथैव अस्य वधूचतुष्केऽपि सीता एव तनूजा यथा प्रिया, अन्या न इत्यन्वय। पञ्चप्रसूतेरपि–

---

सुन्दर—तुम्हारे विकसित और मनोहर मुखकमलको याद करती हूँ। बेटी! आओ, बैठकर मेरी गोदको फिर प्रकाशित करो। महाराज बराबर ऐसा कहते थे—यह जानकी रघुकुलके माननीय पुरुषाओं की ( इक्ष्वाकु, सूर्य आदिकी ) पुत्रवधू है, पर हमारी तो पुत्री ही है।

कञ्चुकी—महारानी ठीक कहती है।

महाराज दशरथ के पाँच सन्तानोंके रहनेपर श्रीरामभद्र विशेष प्यारे थे, उसी तरह

वधूचतुष्केऽपि तथैव नान्या प्रिया तनूजाऽस्य यथैव सीता ॥ १६ ॥

जनकः—हा प्रियसख महाराज दशरथ ! एवमसि सर्वप्रकारहृदयङ्गमः । कथं विस्मर्यते ?

कन्यायाः किल पूजयन्ति पितरो जामातुराप्तं जनं
संबन्धे विपरीतमेव तदभूदाराधनं ते मयि ।

---

पञ्च=पञ्चसंख्याकाः, प्रसूतयः=सन्ततयः, यस्य तस्य, शान्ताख्या कन्या रामादयश्चत्वारः पुत्राश्चेत्यपत्यपञ्चकयुक्तस्येति भावः, तस्य = दशरथस्य, राज्ञः = भूपतेः, सुबाहुशत्रुः = सुबाहोः = मारीचसहचरराक्षसस्य, शत्रुः = अरिः, राम इत्यर्थः, विशेषेण = अधिकरूपेण, प्रियः = अभीष्टः, आसीदिति शेषः । तथैव = तेन प्रकारेणैव, अस्य = राज्ञः, दशरथस्येत्यर्थः, वधूचतुष्केऽपि = चत्वारि परिमाणानि अस्य चतुष्कः 'संख्याया अतिशदन्तायाः कन्' इति कन्, वधूना चतुष्के = सीतादिस्नुषाचतुष्टयेऽपि, सीता एव = जनकनन्दिनी एव, तनूजा यथा = पुत्री इव, शान्तेवेत्यर्थः, प्रिया = अभीष्टा, अन्या = अपरा, माण्डव्यादिरित्यर्थः, न = न अभीष्टा । अत्रोपमालङ्कारः । इन्द्रवज्रोपेन्द्रवज्रयोः समिश्रणादुपजातिर्वृत्तम् ॥ १६ ॥

जनक इति । सर्वप्रकारहृदयङ्गमः = सर्वैः = सकलैः, प्रकारैः = धर्मैः, हृदयङ्गमः = मनोहारी । कथं = केन प्रकारेण, विस्मर्यते = विस्मर्तुं शक्यते ।

कन्याया इति । कन्यायाः पितरः जामातुः आप्तं जनं पूजयन्ति किल, सम्बन्धे मयि ते तत् आराधनं विपरीतम् एव अभूत् । तथाविधोऽपि त्वं कालेन अपहृतः, तत् सम्बन्धबीजं च ( अपहृतम् ), घोरे अस्मिन् जीवलोकनरके पापस्य मम जीवितं धिक् इत्यन्वयः । कन्यायाः = दुहितुः, पितरः=मातापितृपक्षीयाः, जामातुः= वरस्य, आप्तं जनं = बन्धुजनं, पूजयन्ति = सत्कुर्वन्ति, किल=प्रसिद्धम्, परं, सम्बन्धे = अस्मदपत्ययोर्वैवाहिकसम्बन्धे जाते, मयि = कन्यापितृत्वेन पूजकेऽपि मयि जनके, ते = तव, तत् = पूर्वाचरितम्, आराधनं = पूजनं, विपरीतं = लोकप्रसिद्धि-

---

उनके चार बहुओंके रहने पर भी सीता ही पुत्री ( शान्ता ) की तरह प्यारी थी, और कोई वैसी प्यारी नहीं थी ॥ १६ ॥

जनक—हाय ! प्रिय मित्र महाराज दशरथ ! इस तरह आप सब प्रकारोंसे प्रिय थे, आपको हम कैसे भूल सकते हैं ? ।

कन्याके पितृवर्ग जामाता ( दामाद ) के बन्धुजनकी पूजा करते हैं, परन्तु सम्बन्ध होनेपर भी मुझमें आपकी वह पूजा उल्टी ही रही । ऐसे भोलेभाले आपको तथा उस सम्बन्धकी

त्वं कालेन तथाविधोऽप्यपहृतः संबन्धबीज च त-
द्घोरेऽस्मिन्मम जीवलोकनरके पापस्य धिग्जीवितम् ॥ १७ ॥

कौसल्या—जादे जाणइ ! किं करोमि ? दिढवज्जलेवपडिबद्धणिच्चलं हदजीविद म मन्दभाइणीं ण पडिच्चअदि । ( जाते जानकि ! किं करोमि ? दृढवज्रलेपप्रतिबन्धनिश्चल हतजीवितं मा मन्दभागिनीं न परित्यजति । )

अरुन्धती—आश्वसिहि राज्ञि ! बाष्पविश्रामोऽप्यन्तरेषु कर्तव्य एव । अन्यच्च किं न स्मरसि ? यदवोचदृष्यशृङ्गाश्रमे युष्माकं कुलगुरु'—'भवि-

---

विरुद्धम् , एव अभूत्=जातम् । तथाविधोऽपि=तादृशोऽपि, लोकप्रसिद्धिविरुद्धरूपिण. सरलतया कन्यापितुर्मम पूजकोऽपीति भाव , त्वं = दशरथ., कालेन=समयेन, अपहृत.=नाशित., तत्=प्रसिद्धम् , सम्बन्धबीज च = आवयोर्मिथ. सम्बन्धित्वहेतुश्च, सीता चेति भाव', अपहृतमिति शेष. । घोरे = दारुणे, अस्मिन् = विद्यमाने, जीवलोकनरके = जीवलोक =मनुष्यलोक , नरक इव = दु.खहेतुत्वान्निरय इव, इति जीवलोकनरकस्तस्मिन् , पापस्य = पापात्मकस्य, मम = जनकस्य, जीवितं धिक्= प्राणधारणं धिक् , मज्जीवनं निष्फलमिति भावः । अत्रोपमालङ्कार. । शार्दूलविक्रीडित वृत्तम् ॥ १७ ॥

कौसल्येति । जाते = पुत्रि ! । दृढवज्रलेपप्रतिबन्धनिश्चलम् = दृढेन = दुरपनेयेन, वज्रलेपेन = बन्धकद्रव्यलेपनेन, यः प्रतिबन्ध. = विश्लेषाऽनुत्पादः, तेन निश्चलं = स्थिरम् , तादृशं हतजीवितं = निन्द्यजीवितम् ।

अरुन्धतीति । राज्ञि = हे कौसल्ये ! , आश्वसिहि—आश्वासं = दु'खलघूकरणं प्राप्नुहि । अन्तरेषु = मध्ये मध्ये, 'अन्तराले' इति पाठे मध्य इत्यर्थ , बाष्पविश्रामोऽपि = बाष्पस्य = दु खाश्रुण , विश्रामोऽपि = विच्छेदोऽपि । अन्यच्च = बाष्पविश्रामादपरं च, कुलगुरु. = वसिष्ठ', भवितव्य तथा = भाव्यं तथा, परि-

---

बीजभूत सीताको भी कालने अपहरण कर लिया । भयङ्कर इस नरकसदृश नरलोकमें मेरे सदृश पापीके जीवनको धिक्कार है ॥ १७ ॥

**कौसल्या**—बेटी जानकि ! मैं क्या करूँ ? दृढ वज्रलेपसे रुकावट होनेसे निश्चल निन्दनीय जीवन मुझ मन्दभागिनीको नहीं छोडता है ।

**अरुन्धती**—महारानी ! आप धैर्यधारण करें । बीच बीचमें आँसुओंको रोकना भी चाहिये । और भी, क्या आप याद नहीं करती हैं ? जो कि आपके कुलगुरु ( वसिष्ठ ) ने ऋष्यशृङ्गके आश्रममें कहा था कि—जैसी होनेवाली बात ( होनहार ) थी वैसी हो ही गई, परन्तु 'परि-

तव्यं तथेत्युपजातमेव । किंतु कल्याणोदर्कं भविष्यतीति ।

कौसल्या—कुदो अदिक्कन्दमणोरहाये मह एदम् ? ( कुतोऽतिक्रान्तमनोरथाया ममैतत् ? )

अरुन्धती—तत्किं मन्यसे राजपत्नि ! मृषोद्यं तदिति । न हीदं क्षत्रिये ! मन्तव्यम् ।

आविर्भूतज्योतिषां ब्राह्मणानां ये व्याहारास्तेषु मा संशयो भूत् ।

---

त्यागरूपेण भवनीयमित्यर्थः, उपजातमेव = संजातमेव । कल्याणोदर्कं = कल्याणम् = मङ्गलम्, उदर्कः = उत्तरं फलम्, यस्य तत्, 'उदर्कः फलमुत्तरम्' इत्यमरः, परिणामे संयोग एव भविष्यतीति भावः ।

कौसल्येति । अतिक्रान्तमनोरथायाः = अतिक्रान्तः = व्यतीतः, मनोरथ = अभिलाषः, यस्यास्तस्याः असम्भाव्याऽभिलाषविषयाया इति भावः, हिंस्रजन्तुपूर्णे विपिने सीताया विनाशस्यैव संभाव्यत्वात्कुत संयोगाशंसेति भावः ।

अरुन्धतीति । राजपत्नि = कौसल्ये, तत् = कुलगुरूक्तं 'पश्चात् संयोगो भविष्यती"त्यादिरूप वचनमित्यर्थः, मृषोद्यं = मृषा = अनृतम्, उद्यते = उच्यते, इति तत्, मिथ्यावचनमित्यर्थः, 'राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याऽव्यथ्या' इति मृषोपपदाद्वदेः क्यप्प्रत्ययान्तो निपातः । क्षत्त्रिये = हे बाहुजे !, तत् = गुरूक्तं वचनम्, इदं = मिथ्यावचनं, न मन्तव्यं = न ज्ञातव्यम् ।

आविर्भूतेति । आविर्भूतज्योतिषां ब्राह्मणाना ये व्याहाराः तेषु संशयो मा भूत्, हि एषा वाचि भद्रा लक्ष्मीः निषक्ता, एते विप्लुताऽर्थां वाचं न वदन्ति इत्यन्वयः । आविर्भूतज्योतिषाम् = आविर्भूतं = प्रकाशितम्, ज्योति = ब्रह्मतत्त्वम्, येषां तेषां कृतब्रह्मसाक्षात्काराणाम्, ब्राह्मणानां = विप्राणां, ये व्याहाराः = उक्तयः, तेषु = व्याहारेषु, संशयः = सन्देह, प्रामाण्यविषयक इति शेषः, मा भूत् =

---

णाममें कल्यान होगा" ।

कौसल्या—मनोरथको लाँघनेवाली मेरा ऐसा होना कैसे सम्भव है ?

अरुन्धती—महारानी ! "तब उनका कहना झूठ है" यह आप मानती हैं ? क्षत्रिये ! ऐसा नहीं मानना चाहिए ।

ब्रह्मसाक्षात्कार करनेवाले ब्राह्मणोंकी जो उक्तियां हैं, उनमें आपको संशय न हो, क्योंकि

भद्रा ह्येषां वाचि लक्ष्मीर्निषक्ता नैते वाचं विप्लुतार्थां वदन्ति ॥१८॥

( नेपथ्ये कलकलः । सर्वे आकर्णयन्ति । )

जनकः—अये, शिष्टानध्याय इत्यस्खलित खेलतां वटूनां कोलाहलः ।

कौसल्या—सुलहसोक्खं दाणिं बालत्तणं होदि । ( निरूप्य ) अह्मदे, एदाण मज्झे को एसो रामभद्दस्स कोमारलच्छीसावट्ठम्भेहिं मुद्धललिदेहिं अङ्गेहिं दारओ अह्माण लोअणे शीअलावेदि ? ( सुलभसौख्यमिदानीं बालत्वं भवति । अहो, एतेषां मध्ये क एष रामभद्रस्य कौमारलक्ष्मीसावष्टम्भैर्मुग्धललितै-रङ्गैर्दारकोऽस्माकं लोचने शीतलयति ? )

---

न भवेत्, तवेति शेष, 'माङि लुङ्' इति लुङ् । हि = यत , एषा = कृतब्रह्मसाक्षात्काराणा ब्राह्मणानाम्, वाचि = वचने, भद्रा = मङ्गलकरी, लक्ष्मी = सिद्धिः, निषक्ता = नित्यसङ्गिनी, भवतीति शेषः । एते = कृतब्रह्मसाक्षात्कारा ब्राह्मणा, विप्लुतार्थां = मिथ्याभूताऽर्थां, वाचं = वाणीं, न वदन्ति = न उच्चारयन्ति । अर्थान्तरन्यासोऽलङ्कारः । शालिनी वृत्तम् ॥ १८ ॥

नेपथ्य इति । कलकल = कोलाहल ।

जनक इति । शिष्टाऽनध्याय = शिष्टागमनेन सञ्जातः अनध्यायः, 'शिष्टे च गृहमागते' इति स्मृतिमनुरुध्य सञ्जात इति भावः । अस्खलितम् = अप्रतिबन्धम्, 'उद्धतम्' इति पाठेऽप्ययमेवाऽर्थः, वटूना = माणवकानाम् ।

कौसल्येति । बालत्व = शिशुत्वं 'शिशुत्वं शैशवं बाल्यम्' इत्यमरः, सुलभसौख्यम् = सुलभ=सुप्राप्यम्, सौख्यं=सुखम्, यस्मिंस्तत् । कौमारलक्ष्मीसावष्टम्भैः = कौमारलक्ष्म्या = बाल्यशोभाया, साऽवष्टम्भैः = अवलम्बनसहितैः, मुग्धललितै = सुन्दरसुकुमारै, अङ्गैः = हस्तपाद्यवयवैः, शीतलयति = शीतलं करोति, शीतलशब्दात्करोत्यर्थे णिच् ।

---

इनकी वाणीमें मङ्गलकारिणी सिद्धि नित्य सम्बद्ध रहती है । ये ( ब्रह्मसाक्षात्कार करनेवाले ) ब्राह्मण झूठी बात नहीं बोलते हैं ॥ १८ ॥

( नेपथ्यमें कोलाहल होता है । सब सुनते हैं । )

जनक— अरे ! शिष्टोंके आगमनसे अनध्याय होनेके कारण बिना रुकावटके खेलनेवाले बालकोंका यह कोलाहल है ।

कौशल्या—बचपनमें सुख सुलभ होता है । ( निरूपण कर ) अरे ! इन (बालकों) के बीचमें यह कौन बालक रामभद्रकी बाल्यशोभासे सम्पन्न—सुन्दर और सुकुमार अङ्गोंसे हमारे नेत्रों को ठण्डा कर रहा है ?

अरुन्धती—( स्वगतम् । सहर्षोत्कण्ठम् । ) इदं नाम भागीरथीनिवेदितं रहस्यकर्णामृतम् । न त्वेवं विद्मः कतरोऽयमायुष्मतोः कुशलवयोरिति । ( प्रकाशम् । )

कुवलयदलस्निग्धश्यामः शिखण्डकमण्डनो
वटुपरिषदं पुण्यश्रीकः श्रियैव सभाजयन् ।
पुनरपि शिशुर्भूतो वत्सः स मे रघुनन्दनो
झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् ? ॥ १९ ॥

---

अरुन्धतीति । सहर्षोत्कण्ठम् = हर्षेण = इष्टागमात्प्रीत्या, उत्कण्ठया = आकाराऽऽदिविषयाऽभिलाषेण, च सहित यथा तथा, भागीरथीनिवेदितम्=भागीरथ्या = गङ्गया, निवेदित = कथितम् , रहस्यकर्णाऽमृतम् = रहस्यं = गुह्यम् , च तत् कर्णाऽमृतम् = श्रोत्रयोः पीयूषवद्भोग्यम् । आयुष्मतोः=दीर्घायुषो , न विद्मः= न जानामि, 'अस्मदो द्वयोश्च' इत्येकत्वे वहुवचनम् ।

कुवलयेति । कुवलयदलस्निग्धश्यामः शिखण्डकमण्डनः पुण्यश्रीकः श्रिया वटुपरिषदं सभाजयन् एव पुनः शिशुः भूतः स मे वत्सो रघुनन्दन इव कोऽयं दृष्टः झटिति दृशोः अमृताऽञ्जनं कुरुते इत्यन्वयः । कुवलयदलस्निग्धश्यामः=कुवलयस्य= नीलकमलस्य, दलमिव=पत्रमिव, स्निग्ध = कोमलः, श्यामः=नीलः ; शिखण्डकमण्डनः=शिखण्डकः=काकपक्ष मण्डनं=भूषणम् , यस्य सः, पुण्यश्रीकः=पुण्या=पवित्रा श्री = शोभा, यस्य सः, 'शेषाद्विभाषा' इति कप् , 'संपत्तिः श्रीश्च लक्ष्मीश्च' इत्यमरः, श्रिया=शरीरकान्त्या, वटुपरिषदं=कुमारसमूह, सभाजयन एव=सेवमान एव, अलङ्कुर्वाण एव इति भावः, पुनः=भूयः, शिशुः=बालः, भूत =संजातः, सः मे=मम, वत्स =वात्सल्यपात्रं, रघुनन्दन इव=रामचन्द्र इव, कः, अयं=सन्निहितः, दृष्ट =अवलोकितः ( सन् ), झटिति=सत्वरं, दृशो =नेत्रयोः, अमृताञ्जनम्=सुधामयं नेत्राञ्जनं, कुरुते=रचयति । अत्रोत्प्रेक्षोपमयोः सङ्करः । हरिणी वृत्तम् ॥ १९ ॥

---

अरुन्धती—( मनही मन, हर्ष और उत्कण्ठाके साथ ) यह गङ्गाजीसे कहा गया तथा गोपनीय और कानके लिए अमृततुल्य आनन्दकारक वचन है । परन्तु मैं यह नहीं जानती हूँ कि चिरञ्जीव कुश और लवके बीचमें यह कौन है ? ( सुनाकर ) ।

नील कमलके पत्तेकी तरह स्निग्ध और श्यामवर्ण वाला, काकपक्षसे शोभित, पवित्र शोभासे सम्पन्न, शरीरकी कान्तिसे ब्रह्मचारियोंके समूह ( सभा ) को अलङ्कृत करता हुआ फिर बाल्यावस्थामें विद्यमान वात्सल्य-भाजन मेरे रामभद्रकी तरह देखा गया यह कौन बालक झटपट दृष्टिमें अमृतमय अञ्जनका लेप कर रहा है ? ॥ १९ ॥

कञ्चुकी—नूनं क्षत्रियब्रह्मचारी दारकोऽयमिति मन्ये।

जनकः—एवमेतत्। अस्य हि—

चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोकपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम्।
मौर्व्या मेखलया नियन्त्रितमधो वासश्च माञ्जिष्ठकं
पाणौ कार्मुकमक्षसूत्रवलयं दण्डोऽपरः पैप्पलः॥ २०॥

---

कञ्चुकीति। दारकः = बालकः, मन्ये = अनुमिनोमि।

चूडेति। पृष्ठतः अभितः चूडाचुम्बितकङ्कपत्रं तूणीद्वयं, भस्मस्तोकपवित्रलाञ्छनम् उरः, रौरवीं त्वचं धत्ते, अधः मौर्व्या मेखलया नियन्त्रितं माञ्जिष्ठकं वासः, पाणौ कार्मुकम्, अक्षसूत्रवलयम्, अपरः पैप्पलो दण्डः (अस्ति) इत्यन्वयः। (अयम् = बालकः) पृष्ठतः = पृष्ठदेशे, आद्यादित्वात्तसिः। अभितः = उभयतः, 'पर्यभिभ्यां च' 'सर्वोभयाऽर्थाभ्यामेव' इति तसिल्। चूडाचुम्बितकङ्कपत्रम् = चूडाभिः = शिखाभिः, चुम्बितानि = संस्पृष्टानि, कङ्कपत्राणि = बाणपुङ्खवर्तिनः कङ्कपक्षिपक्षाः, यस्मिंस्तत्; एतादृशं तूणीद्वयम् = इषुधियुग्मम्, भस्मस्तोकपवित्रलाञ्छनम् = भस्मनः = भूतेः, स्तोकम् = अल्पम्, पवित्रं=पावनम्, लाञ्छनं = चिह्नम्, यस्मिंस्तत्; एतादृशम् उरः=वक्षःस्थलं, रौरवीं=रुरुमृगस्य, त्वचं = चर्म, धत्ते = धारयति, अधः = उरसोऽधस्तात्, मौर्व्या = मूर्वाऽऽख्यलतागुणनिर्मितया, मेखलया = कटिसूत्रेण, नियन्त्रितं = बद्धं, माञ्जिष्ठकं = मञ्जिष्ठाऽऽख्येन रागद्रव्येण रक्तं, 'तेन रक्तं रागात्' इत्यण्, तदन्तात् स्वार्थे कन्; वासः = वस्त्रं, पाणौ = हस्ते, कार्मुकं = धनुः, अक्षसूत्रवलयम् रुद्राक्षमाला, अपरः = अन्यः, धनुर्दण्डादिति शेषः, पैप्पलः=अश्वत्थस्य, दण्डः=लगुडः, च अस्तीति शेषः। तथा चैतैर्लक्षणैः क्षत्रियब्रह्मचार्ययमिति निश्चीयत इति भावः। अत्र तुल्ययोगिताऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ २०॥

---

कञ्चुकी—'यह बालक क्षत्रिय ब्रह्मचारी है' मैं ऐसा विचार करता हूं।

जनक—ऐसा ही है। इसके—

कङ्कपत्रोंसे युक्त पीठके दोनों ओर चोटीको छूनेवाले दो तरकशोंको, थोड़ीसी भस्मसे पवित्र चिह्नवाली छातीको और रुरु नामक मृगके चमड़ेको भी यह धारण कर रहा हैं। इसकी छातीके नीचे मौर्वी मेखलासे बाँधी गई मजीठकी रंगवाली धोती, हाथमें धनु, रुद्राक्षमाला और पीपलका दण्ड भी है॥ २०॥

भगवत्यरुन्धति ! किमित्युत्प्रेक्षसे कुतस्त्योऽयम् ? इति ।

अरुन्धती—अद्यैव वयमागताः ।

जनकः—आर्ये गृष्टे ! अतिकौतुकं वर्तते । तद्भगवन्तं वाल्मीकिमेव गत्वा पृच्छ । इमं च दारकं ब्रूहि 'वत्स ! केऽप्येते प्रवयसस्त्वां दिदृक्षव' इति ।

कञ्चुकी—यदाज्ञापयति देवः । ( इति निष्क्रान्तः । )

कौसल्या—किं मण्णेध । एव्वं भणिदो आअमिस्सदि वा ण वेत्ति । ( किं मन्यध्वे ! एवं भणित आगमिष्यति वा न वेति । )

जनकः—भिद्यते वा सद्वृत्तमीदृशस्य निर्माणस्य ?

---

भगवतीति । अयं = बालकः, कुतस्त्यः = कस्माद्भवः, काभ्यां मातापितृभ्यामुत्पन्न इति भावः । 'अव्ययात्त्यप्'-'अमेहक्वतसित्रेभ्य एव' इति त्यप्, उत्प्रेक्षसे = तर्कयसि ।

अरुन्धतीति । अद्यैव = अस्मिन्दिन एव । यथा भवानिमं बालकं न जानाति तथैवाऽहमपि अद्यैवागतत्वान्न जानामीति भावः । भागीरथ्यनुरोधेनाऽरुन्धत्याऽयं निह्नवः कृत इत्यवसेयम् ।

जनक इति । पृच्छ = अनुयुङ्क्ष्व, कुतस्त्योऽयं माणवकः ? इत्यस्य परिचयं पृच्छेति भावः । केऽपि = अपरिचिताः, प्रवयसः = प्रकृष्टम् = अधिकम्, वयः = अवस्था, येषां ते वृद्धा इत्यर्थः । दिदृक्षवः = द्रष्टुमिच्छवः ।

कञ्चुकीति । आज्ञापयति = आदिशति, तदनुतिष्ठामीति भावः ।

कौसल्येति । एवम् = 'केऽपि प्रवयसस्त्वां दिदृक्षव' इत्येवं प्रकारेण, भणितः = कथितः ।

जनक इति । ईदृशस्य = लोकोत्तरस्य, सर्वाऽतिशायिरूपसंपन्नस्येति भावः, निर्माणस्य=आकारस्य, सद्वृत्तं = सदाचारः, 'वृत्तं पद्ये चरित्रे च' इत्यमरः, भिद्यते

---

भगवति अरुन्धति ! यह बालक कहांसे आया है ? आप क्या विचार करती हैं ?

अरुन्धती—हमलोग आज ही आये हैं ।

जनक—आर्य गृष्टि जी ! मुझे बहुत कुतूहल हो रहा है । इस कारण भगवान् वाल्मीकिजीके पास जाकर पूछिए । इस बालको भी कहिए—'बेटा ! कुछ अपरिचित वृद्ध तुमको देखना चाहते हैं' ।

कञ्चुकी—महाराजकी जो आज्ञा ( ऐसा कहकर जाता है ) ।

कौसल्या—आपलोग क्या विचार करते हैं ? ऐसा कहनेपर आ जायगा या नहीं ?

जनक—ऐसे लोकोत्तर आकारका भी सच्चरित्र टूट सकता है ?

कौसल्या—( निरूप्य । ) कहं सविणअणिसमिदगिट्ठिवअणो विसज्जिदासेससरिसदारओ एत्तोमुहं अवसरिदो एव्व स वच्छो । ( कथं सविनयनिशमितगृष्टिवचनो विसर्जिताशेषसदृशदारक इतोमुखमपसरित एव स वत्सः । )

जनकः—( चिरं निर्वर्ण्य । ) भोः किमप्येतत् ।

महिम्नामेतस्मिन्विनयशिशिरो मौग्ध्यमसृणो
विदग्धैर्निर्ग्राह्यो न पुनरविदग्धैरतिशयः ।
मनो मे संमोहस्थिरमपि हरत्येष बलवा-

---

वा = भिन्न भवति किम् ? 'यत्राकृतिस्तत्र गुणा वसन्ति' इति न्यायात् एतादृशाकारस्य सदाचारो न कदाऽपि विलुप्यत इति भावः, 'कर्मवत्कर्मणा तुल्यक्रियः' इति यगात्मनेपदे ।

कौसल्येति । निरूप्य = दृष्ट्वा, सविनयनिशमितगृष्टिवचनः = सविनयं = नम्रतापूर्वकम्, निशमितं श्रुतम्, गृष्टिवचनं=कञ्चुकिवाक्यम्, येन सः । विसर्जिताशेषसदृशदारकः = विसर्जिताः = वियुक्ताः, अशेषाः = समस्ताः, सदृशाः=तुल्याः, समवयस्का इत्यर्थः, दारकाः = बालकाः, येन सः ।

जनक इति । एतत् = वक्ष्यमाणं, किमपि = अपूर्वमित्यर्थः । तदाह—

महिम्नामिति । एतस्मिन् विनयशिशिरो मौग्ध्यमसृणो महिम्नाम् अतिशयो विदग्धैः निर्ग्राह्यः अविदग्धैः न पुनः ( निर्ग्राह्यः ) बलवान् एषः संमोहस्थिरम् अपि मे मनः परिलघुः अयस्कान्तशकलः अयोधातुं यद्वत् हरति इत्यन्वयः । एतस्मिन् = बाले, विनयशिशिरः = विनयेन=नम्रतया, शिशिरः=शीतलः, पुस्तकान्तरेषु तु शिशिरस्थाने 'शिशुते' त्याकारकमुत्तरपदेन समस्तं पदं वर्तते ; मौग्ध्येन = बाल्येन, सौन्दर्येण वा, मसृणः = कोमलः, महिम्ना = माहात्म्यानां विनयार्जवादिगुणानामित्यर्थः, अतिशयः उत्कर्षः, विदग्धैः = निपुणैः, निर्ग्राह्यः = निःशेषेण ग्रहीतुं शक्यो निर्णेय इत्यर्थः, 'ऋहलोर्ण्यत्' इति ण्यत् ; अविदग्धैः = अनि-

---

कौसल्या—नम्रताके साथ गृष्टिका वचन सुनकर और अपने सरीखे सब बालकोंको छोडकर किस तरह वह बालक इसी ओर आ रहा है ।

जनक—( बहुत देर तक देखकर ) ओह ! यह अपूर्व है ।

इस बालकमें नम्रतासे शीतल, बचपन वा सुन्दरतासे कोमल महिमाका उत्कर्ष, निपुण पुरुषोंसे ही पूर्णरूपसे ग्राह्य हो सकता है, अनिपुण पुरुषोंसे नहीं । शक्तिसम्पन्न यह (बालक) परिचय न होनेसे स्थिर हुए मेरे चित्तको भी जैसे छोटा-सा चुम्बकका टुकड़ा लोहेको अपनी

नयोधातुं यद्वत्परिलघुरयस्कान्तशकलः ॥ २१ ॥

लवः—( प्रविश्य स्वगतम् । ) अविज्ञातवयःक्रमौचित्यात्पूज्यानपि सतः कथमभिवादयिष्ये ? ( विचिन्त्य ) अयं पुनरविरुद्धप्रकार इति वृद्धेभ्यः श्रूयते । ( सविनयमुपसृत्य * । ) एष वो लवस्य शिरसा प्रणामपर्यायः ।

पुणैः, न पुन. = न निग्राह्यः, बलवान् = शक्तिसम्पन्न., एप.=बालः, संमोहस्थिरम्= अपि = संमोहेन = बालपरिचयाऽज्ञानेन, स्थिरम् अपि=अचञ्चलमपि, पुस्तकान्तरेपु संमोहस्थाने 'संमोद' इत्यसमस्तपदपाठस्तत्र—संमोदः = हर्ष इत्यर्थः, मे = मम, मनः = चित्तं, परिलघुः = अल्पः, अयस्कान्तशकल' = चुम्बकखण्ड , 'भित्तं शकल-खण्डे वा पुंसि' इत्यमर', चुम्बको नाम लौहाकर्षकपाषाणविशेप', अयोधातुं, = लोहधातुं, यद्वत् = इव, हरति = आकर्षति । अत्र परिसंख्योपमयोः मिथोऽन-पेक्षया स्थितेः संसृष्टिरलङ्कार' । शिखरिणी वृत्तम् ॥ २१ ॥

लव इति । अज्ञातवय क्रमौचित्यात् = वयः = अवस्था, च क्रमः = सत्का-रायानुपूर्व्यम् , च वय.क्रमौ, तयोरौचित्यम् = औचिती, वय क्रमौचित्यं, ज्ञातं = विदितम् च तद्वय'क्रमौचित्य ज्ञातवय'क्रमौचित्यं, तस्याऽभावः अज्ञातवय – क्रमौचित्यं, तस्मात् = वय क्रमौचित्यज्ञानाऽभावादित्यर्थः, अर्थाऽभावेऽव्ययीभाव', 'नाऽव्ययीभावादतोऽम्त्वपञ्चम्या' इत्यमोऽभावः । पुस्तकान्तरेपु तु अज्ञातनाम-क्रमाऽभिजनान्' इति पाठस्तत्र-अज्ञाताः = अविदिताः, नामक्रमाऽभिजना' = अभिधानपौर्वापर्यवंशा', येपा तान् इत्यर्थ कार्य', पूज्यान् = प्रतीक्ष्यान् । कथं = केन प्रकारेण, अभिवादयिष्ये = नमस्करोमि । अय = मद्बुद्धिस्थ', अविरुद्ध-प्रकार' = अविपरीता नमस्काररीतिः । व. = युष्माकं, प्रणामपर्याय' = प्रणामाना = नमस्काराणाम् , पर्यायः = परम्परा, पूज्याऽनुक्रमेण नमस्कारा इति भाव', 'सभाया प्रत्येक न नमस्कुर्यात्' इति गौतमस्मरणमिहाऽभिप्रेतम् ।

ओर खींचता है, उसी तरह आकृष्ट करता है ॥ २१ ॥

लव—( प्रवेश कर, मन ही मन ) अवस्था और क्रमके औचित्यके अज्ञानके कारण यहापर स्थित इन पूजनीयोंको कैसे प्रणाम करूँ ? ( विचार कर ) 'यह विरोधरहित नम-स्कारपद्धति है' ऐसा वृद्ध जनोंसे सुना जाता है । ( नम्रताके साथ निकट जाकर ) लवके शिरसे आपलोगोंको पूज्याऽनुक्रमसे ये नमस्कार हैं ।

* अतोऽग्रे 'प्रकाशम्' इत्यपि वक्तुं योग्यम् , 'अविज्ञात'' ''श्रूयते' इत्यंशस्य 'स्वगत' त्वेनोक्त्या 'एष वो ''पर्याय ' इत्यंशस्य 'प्रकाश' (सर्वश्राव्य) त्वेन कथनौचित्यात् । (त)

अरुन्धतीजनकौ—कल्याणिन् ! आयुष्मान्भूयाः ।

कौसल्या—जाद ! चिरं जीव । ( जात ! चिर जीव । )

अरुन्धती—एहि वत्स ! ( लवमुत्सङ्गे गृहीत्वा आत्मगतम् । ) दिष्ट्या न केवलमुत्सङ्गश्चिरान्मनोरथोऽपि मे पूरितः ।

कौसल्या—जाद ! इदो वि दाव एहि । ( उत्सङ्गे गृहीत्वा । ) अह्महे, ण केवल दरविप्पट्टकन्दोट्टमसलुज्जलेण देहबन्धणेण, कवलिदारविन्दकेसरकसाअकण्ठकलहंसघोसघग्घराणुणादिणा सरेण अ रामभद्दं अणुसरेदि । णं कठोरकमलगब्भप्पम्भलसरीरप्पस्सो वि तारिसो एव्व । जाद ! पेक्खामि दे मुहपुण्डरीअम् । (चिबुकमुन्नमय्य निरूप्य सवाष्पाकूतम् ।) राएसि ! किं ण पेक्खसि ? णिउणं णिरूवअन्तो वच्छाए मे वहूए मुहचन्देण विसंवददि एव्व । (जात ! इतोऽपि तावदेहि । अहो, न केवलं दरविस्पष्टकुवलयमांसलोज्ज्वलेन देहबन्धनेन, कवलितारविन्दकेसरकषायकण्ठकलहंसघोषघर्घरानुनादिना स्वरेण च

---

अरुन्धतीति । आयुष्मान्=चिरजीवी । भूया =भवतात् , आशिषि लिङ् ।

कौसल्येति । जात = पुत्र ।

अरुन्धतीति । उत्सङ्गे = अङ्के । दिष्ट्या=भाग्येन । मनोरथोऽपि = अभिलाषोऽपि, 'सीतापुत्रमुत्सङ्गे स्थापयिष्यामी'त्याकारिकेच्छापि इति भाव ।

कौसल्येति । इतोऽपि = ममोत्सङ्गेऽपि । दरविस्पष्टकुवलयमांसलोज्ज्वलेन = दरम्=ईषत् , विस्पष्टं = विकसितम् , यत् कुवलयं = नीलोत्पलम् , तदिव मांसलम्=पुष्टम् , उज्ज्वलं = निर्मलम् , तेन, एतादृशेन देहबन्धनेन = शरीररचनया, कवलिताऽरविन्दकेसरकषायकण्ठकलहंसघोषघर्घराऽनुनादिना = कवलिता = भक्षिता , ये अरविन्दकेसरा = कमलकिञ्जल्का , तै कषाय = मधुर , कण्ठ = गल , लक्षणया स्वर इत्यर्थ , यस्य स , एतादृशो य कलहंस = अव्यक्तमधुर-

---

अरुन्धती और जनक—हे कल्याण सम्पन्न ! तुम चिरञ्जीव होओ ।

कौसल्या—वेटा ! वहुत समय तक जीओ ।

अरुन्धती—आओ वेटा ! ( लवको गोदमें लेकर मन ही मन ) भाग्यसे गोद ही नहीं, वहुत कालका मेरा अभिलाष भी पूर्ण हुआ ।

कौसल्या—वेटा ! यहा भी आओ । ( गोदमें लेकर ) आश्चर्य है, यह वालक अधखिले नीलकमलकी तरह पुष्ट और उज्ज्वल शरीरकी गठनसे ही नहीं, वल्कि खाये हुए कमल केसरोंसे मधुर स्वरवाले हंसके स्वरके सदृश स्वरसे भी रामभद्रका अनुसरण करता है । ओह !

रामभद्रमनुसरति । ननु कठोरकमलगर्भपक्ष्मलशरीरस्पर्शोऽपि तादृश एव । जात ! पश्यामि ते मुखपुण्डरीकम् । राजर्षे ! किं न पश्यसि ? निपुणं निरूप्यमाणो वत्साया मे वध्वा मुखचन्द्रेणापि संवदत्येव । )

जनकः—पश्यामि सखि ! पश्यामि ।

कौसल्या—अह्महे, उम्मत्तीभूदं विअ मे हिअअं कुदो मुलं विलवदि ! ( अहो, उन्मत्तीभूतमिव मे हृदयं कुतोमुखं विलपति । )

---

स्वरो राजहंसः, तस्य घोषः = शब्दः, स इव घर्घरः = घर्घरेत्यनुकृतिशब्दः, तमनुनदतीति = अनुवदति इति, तेन । स्वरेण = कण्ठध्वनिना, अनुसरति = अनुकरोति, 'अनुहरते' इति पाठेऽप्ययमेवाऽर्थः, किन्तु 'अनुहरती'त्ययमपपाठः 'हरतेर्गतिताच्छील्ये' इत्यात्मनेपदित्वात् । कठोरस्य = समग्रस्य, विकसितत्वात्पूर्णस्येति भावः । कमलस्य = पद्मस्य, गर्भस्य इव = आन्तरपत्रस्य इव, पक्ष्मलः = सुकुमारः, शरीरस्पर्शः = देहस्पर्शः, तादृश एव=रामसदृश एव । चिबुकम्=अधरस्य अधोभागम्, उन्नमय्य=उन्नतं कृत्वा, सबाष्पाकूतम्=बाष्पेण अश्रुणा, आकूतेन=अभिप्रायेण, च सहितं यथा तथा, निपुणं निरूप्यमाणः= पटुतरं निरीक्ष्यमाणः, अयं बालक इति शेषः, वत्सायाः=वात्सल्यभाजः, मे= मम, वध्वाः=स्नुषायाः, सीताया इति भावः, संवदति = उपमामारोहति, अस्य बालस्य मुखं सीतामुखसदृशं वर्तत इति भावः ।

जनक इति । पश्यामि सखि । पश्यामि=आदराद् द्विरुक्तिः ।

कौसल्येति । उन्मत्तीभूतमिव=विक्षिप्तीभूतमिव, कुतोमुखं=कुतः स्थितं मुखं यस्य तत्, यत्र क्वाप्यसंभाव्यविषये लग्नमिति भावः, विलपति=परिदेवयति ।

---

खिले हुए कमलके भीतरवाले पत्रकी तरह सुकुमार ( मुलायम ) इसका शरीरस्पर्श भी रामचन्द्रके शरीरस्पर्शके ही सदृश है । बेटा ! मैं तेरे मुखकमलको देखती हूँ । ठुड्डीको ऊँचाकर आँसू गिराकर और अभिप्रायके साथ निहारकर ) राजर्षि जी ! आप क्या नहीं देख रहे हैं कि अच्छी तरहसे देखे जानेपर यह बालक मेरी वात्सल्यभागिनी बहू सीताके मुखचन्द्रके साथ उपमाका पात्र होता है ।

जनक—देख रहा हूँ, सखि ! देख रहा हूँ ।

कौशल्या—अरे ! पागल हुए मनुष्यकी तरह मेरा हृदय असम्भाव्य विषयमें लगता हुआ विलाप कर रहा है ।

जनकः—( निरूप्य । )

वत्सायाश्च रघूद्वहस्य च शिशावस्मिन्नभिव्यज्यते
सद्वृत्तिः प्रतिविम्बितेव निखिला सैवाकृतिः सा द्युतिः ।
सा वाणी विनयः स एव सहजः पुण्यानुभावोऽप्यसौ
हा हा देवि* किमुत्पथैर्मम मनः पारिप्लवं धावति ॥ २२ ॥

---

वत्साया इति । अस्मिन् शिशौ वत्साया रघूद्वहस्य च संवृत्ति प्रतिविम्बिता इव अभिव्यज्यते, सा एव निखिला आकृति॰, सा द्युति , सा वाणी, स एव सहजो विनय॰, ( स एव ) असौ पुण्याऽनुभाव॰ अपि ; हा हा देवि ! मम मन॰ पारिप्लवम् (सत्) उत्पथैः किं धावति ? इत्यन्वय । अस्मिन्=पुरोवर्तिनि, शिशौ= वालके, लव इत्यर्थ , वत्साया =सीताया , रघूद्वहस्य च = रघुवंशश्रेष्ठस्य राम॰ चन्द्रस्य चेत्यर्थ , सद्वृत्ति =सम्पर्क , सम्वन्ध इत्यर्थ , प्रतिविम्बिता इव=सङ्क्रान्ता इव, अभिव्यज्यते=अभिव्यक्ता भवति, दर्पणादौ विम्ववद् दृश्यत इति भावः । सा एव=तादृशी एव, सीतारामसदृश्येवेत्यर्थ , निखिला=समस्ता, आकृति = आकार , सा = तादृशी, द्युति = कान्ति , सा = तादृशी, वाणी = वाक् , स एव = तादृश एव, सहज॰ = स्वाभाविक॰, विनय॰ = नम्रता, ( स एव = तादृश एव ) असौ = अयं, पुण्याऽनुभावोऽपि = पवित्रसामर्थ्यमपि । श्वापदसङ्कुलेऽरण्ये परित्यक्ताया॰ सीताया मरणमेव निश्चप्रचमतः कुतोऽयं वालस्तस्या पुत्र॰ संभाव्यत इति नैराश्येनाऽऽह—हा हेति । हा हा देवि = सीते ! देवीति पदेन सीताया लोकान्तरगतत्वं व्यज्यते, मम = जनकस्य, मनः = चित्तं, पारिप्लव = चञ्चलं (सत्) 'चञ्चलं तरलं चैव पारिप्लवपरिप्लवे ।' इत्यमरः, उत्पथै =उन्मार्गैः , किं = किमर्थं, धावति= अनवस्थितं भवति, असम्भाव्यविषयाऽभिलाषेणेति भावः । अत्र तुल्ययोगिताऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २२ ॥

---

जनक—( देखकर ) ।

इस वालकमें वेटी सीताका और रामचन्द्रका सम्वन्ध प्रतिविम्वितकी तरह अभिव्यक्त हो रहा है । ( सीता और रामके ही सदृश सम्पूर्ण आकार, कान्ति, वाणी उसी तरह स्वाभाविक नम्रता और उस तरह पवित्र सामर्थ्य भी है । हाय हाय देवि ! मेरा मन चञ्चल हो कर क्यों उन्मार्गोंसे दौड रहा है ॥ २२ ॥

---

* 'दैव' इति पाठान्तरम् ।

कौसल्या—जाद ! अत्थि दे मादा ? सुमरसि वा तादम् ? ( जात ! अस्ति ते माता ? स्मरसि वा तातम् ? )

लवः—नहि ।

कौसल्या—तदो कस्स तुमम् ? ( ततः कस्य त्वम् ? )

लवः—भगवतः सुगृहीतनामधेयस्य वाल्मीकेः ।

कौसल्या—अयि जाद ! कहिदव्वं कहेहि । (अयि जात ! कथयितव्यं कथय ।)

लवः—एतावदेव जानामि ।

( नेपथ्ये । )

भो भोः सैनिका ! एष खलु कुमारश्चन्द्रकेतुराज्ञापयति–'न केनचिदाश्रमाभ्यर्णभूमय आक्रमितव्या' इति ।

---

कौसल्येति । तदा = मातापित्रोरविद्यमानत्वे, कस्य त्वम् = केन पुत्रस्त्वमिति भाव ।

लव इति । सुगृहीतनामधेयस्य = सुगृहीतं=सुष्ठु प्रतिपादितम् , नामधेयं=नाम यस्य तस्य ।

कौसल्येति । कथयितव्यं = स्वसम्बन्धे अन्यदपि कथनीयमिति भाव. ।

लव इति । एतावदेव = एतत्परिमाणमेव, कथनीयमिति शेषः ।

भो भो इति । सैनिकाः = सेनासमवायिनः । आश्रमाऽभ्यर्णभूमय = आश्रमस्य = तपोवनस्य, अभ्यर्णभूमयः = समीपदेशा इत्यर्थः, 'उपकण्ठाऽन्तिकाऽभ्यर्णाऽभ्यग्रा अप्यभितोऽव्ययम् ।' इत्यमरः, न आक्रमितव्याः = न आक्रमणीयाः, न पीडनीया इति भावः ।

---

कौसल्या—बेटा ! तुम्हारी माँ है ? तुम पिताजीको याद करते हो ?

लव—नहीं ।

कौसल्या—तब तुम किसके हो ?

लव—सुगृहीत नामवाले भगवान् वाल्मीकिके ।

कौसल्या—बेटा ! अपने विषयमें कहने योग्य और भी कुछ बात कहो ।

लव—इतना ही जानता हूँ ।

( नेपथ्यमें । )

अरे सैनिको ! कुमार चन्द्रकेतु आज्ञा देते हैं कि 'कोई भी आश्रमके निकटवर्ती प्रदेशोंमें आक्रमण न करे' ।

अरुन्धतीजनकौ—अये, मेध्याश्वरक्षाप्रसङ्गादुपागतो वत्सश्चन्द्रकेतुर्द्रष्टव्य इत्यसौ सुदिवसः।

कौसल्या—वच्छलक्खणस्स पुत्तओ आणवेदिति अमिदबिन्दुसुन्दराइं अक्खराइं सुणीअन्दि। ( वत्सलक्ष्मणस्य पुत्रकः आज्ञापयतीत्यमृतबिन्दुसुन्दराण्यक्षराणि श्रूयन्ते। )

लवः—आर्य ! क एष चन्द्रकेतुर्नाम ?

जनकः—जानासि रामलक्ष्मणौ दाशरथी ?

लवः—एतावेव रामायणकथापुरुषौ ?

जनकः—अथ किम् ?

---

अरुन्धतीति। मेध्याऽश्वरक्षाप्रसङ्गात्—मेध्याऽश्वस्य = यज्ञाऽङ्गभूतस्य हयस्य, रक्षाप्रसङ्गात् = रक्षणाऽवसरात्, रक्षणस्य अवसरं गृहीत्वेति भावः, 'ल्यब्लोपे कर्मण्यधिकरणे च' इति पञ्चमी, द्रष्टव्यः = विलोकनीयः, अस्माभिरिति शेषः।

कौसल्येति। अमृतबिन्दुसुन्दराणि = अमृतस्य = पीयूषस्य, बिन्दव इव = विप्रुष इव, सुन्दराणि = मनोहराणि, लक्षणया मधुराणीति भावः।

जनक इति। दाशरथी = दशरथस्याऽपत्ये पुमांसौ 'अत इञ्' इति इञ् प्रत्ययः।

लव इति। एतावेव = रामलक्ष्मणावेव, रामायणकथापुरुषौ = रामायणकथायाः = रामायणाऽऽख्यमहाकाव्यकथायाः, पुरुषौ = मुख्यत्वेन प्रतिपाद्याविदत्यर्थः। अत्र काक्वा प्रश्नो व्यज्यते।

जनक इति। अथ किम् = एवमेव, अङ्गीकारद्योतकमेतत्।

---

अरुन्धती और जनक—अरे! अश्वमेध यज्ञके पवित्र अश्वकी रक्षाके प्रसङ्गसे आये हुए कुमार चन्द्रकेतुका दर्शन होगा, इस लिए आज सुदिन है।

कौसल्या—'बेटा लक्ष्मणका पुत्र आज्ञा देता है' ये अमृत-बिन्दुओंके सदृश सुन्दर अक्षर सुने जा रहे हैं।

लव—आर्य! ये चन्द्रकेतु कौन हैं?

जनक—दशरथके पुत्र राम और लक्ष्मणको जानते हो?

लव—क्या ये ही रामायणकथाके मुख्य पुरुष हैं?

जनक—और क्या?

लवः—तत्कथं न जानामि ?

जनकः—तस्य लक्ष्मणस्यायमात्मजश्चन्द्रकेतुः ।

लवः—ऊर्मिलायाः पुत्रस्तर्हि मैथिलस्य राजर्षेर्दौहित्रः ।

अरुन्धती—आविष्कृतं कथाप्रावीण्यं वत्सेन ।

जनकः—(विचिन्त्य । ) यदि त्वमीदृशः कथायामभिज्ञस्तद् ब्रूहि तावत्पश्यामस्तेषां दशरथस्य पुत्राणां कियन्ति किंनामधेयान्यपत्यानि केषु दारेषु प्रसूतानि ?

लवः—नायं कथाविभागोऽस्माभिरन्येन वा श्रुतपूर्वः ।

जनकः—किं न प्रणीतः कविना ?

---

लव इति । तत् = तर्हि ।

जनक इति । तस्य = प्रसिद्धस्य, आत्मजः = पुत्रः ।

लव इति । मैथिलस्य = मिथिलाऽधिपतेः, दौहित्रः = दुहितुरनन्तराऽपत्यं पुमान्, 'अनृष्यानन्तर्ये विदादिभ्योऽञ्' इत्यञ्, राजर्षेः = जनकस्येति भावः ।

अरुन्धतीति । वत्सेन = लवेन, कथाप्रावीण्यम् = रामायणकथानैपुण्यम्, आविष्कृतं = प्रकाशितम् ।

जनक इति । अभिज्ञः = विज्ञः । पश्यामः = अवलोकयामः, जानीमस्तव कीदृशं ज्ञानमिति भावः । कियन्ति = किंपरिमाणानि, कतिसंख्यकानीति भावः । किंनामधेयानि = किं, नामधेयं = नाम येषां तानि किमाख्यानीत्यर्थः, दारेषु = पत्नीषु प्रसूतानि = उत्पन्नानि ।

लव इति । अयं = भवत्पृष्टो रामाऽपत्यवर्णनात्मकः, कथाप्रविभागः = कथाया एकदेशः, श्रुतपूर्वः = पूर्वं श्रुतः, 'सुप्सुपा' इति समासः ।

जनक इति । कविना = वाल्मीकिना, किं न प्रणीतः = किं न रचितः ।

---

लव—तब मैं क्यों उन्हें नहीं जानूंगा ?

जनक—यह चन्द्रकेतु उन्हीं लक्ष्मणका पुत्र है ।

लव—तब ये चन्द्रकेतु, ऊर्मिलाके पुत्र और मिथिलाके महाराज राजर्षि जनकके दौहित्र हैं ।

अरुन्धती—कुमारने रामायनकी कथामें निपुणता दिखलाई है ।

जनक—( विचार कर ) तुम रामायणकी कथामें ऐसे जानकार हो तो हम भी तुम्हारे ज्ञानको जान लें । बतलाओ—दशरथके उन पुत्रोंके कितने और किस २ नामवाले पुत्र किन किन पत्नियोंमें उत्पन्न हुए हैं ?

लव—यह कथाका भाग हमने या और किसीने भी नहीं सुना है ।

जनक—क्या कविने नहीं बनाया ?

लवः—प्रणीतः, न तु प्रकाशितः। तस्यैव कोऽप्येकदेशः प्रबन्धान्तरेण रसवानभिनेयार्थः कृतः। त च स्वहस्तलिखितं मुनिर्भगवान् व्यसृजद्भगवतो भरतस्य तौर्यत्रिकसूत्रधारस्य।

जनकः—किमर्थम्?

लवः—स किल भगवान् भरतस्तमप्सरोभिः प्रयोजयिष्यतीति।

जनकः—सर्वमिदमाकूततरमस्माकम्।

लवः—महती पुनरस्तस्मिन् भगवतो वाल्मीकेरास्था। ततः केषाञ्चिदन्तेवासिनां हस्तेन तत्पुस्तकं भरताश्रमं प्रति प्रेषितम्। तेषामनुयात्रिकश्चाप-

---

लव इति। न प्रकाशित = न प्रकाशं नीतः। तस्यैव = रामाद्यपत्यवर्णनात्मकस्यैव, कोऽपि = अनिर्धारित, एकदेशः = अंशः। स चाऽंश सप्तमेऽङ्के प्रदर्शयिष्यत इति बोध्यम्। प्रबन्धान्तरेण = अन्येन प्रबन्धविशेषेण, सहेति शेषः, रसवान् = करुणविप्रलम्भादिरसयुक्त, अभिनेयाऽर्थः = अभिनेय = अभिनेतुं = दृश्यतामापादयितुं, योग्य, अर्थ = वस्तु, यस्य सः, मुनि = वाल्मीकिः तौर्यत्रिकसूत्रधारस्य = तौर्यत्रिकस्य = नृत्यगीतवादित्रस्य, सूत्रधारस्य = प्रयोजकाचार्यस्य, समीप इति शेषः।

जनक इति। किमर्थम् = कस्मै प्रयोजनाय व्यसृजदिति शेषः।

लव इति। तं = रामायणैकदेशम्, अप्सरोभि = स्वर्वेश्याभिः प्रयोज्यकर्त्रीभिः, प्रयोजयिष्यति = प्रयोगं कारयिष्यति।

जनक इति। आकूततरम् = अतिशयगूढाऽभिप्रायम्।

लव इति। तस्मिन् = रामायणैकदेशे, आस्था = आदरः। अन्तेवासिना = छात्राणाम्, प्रेषित = प्रहितम्, अनुयात्रिकः = अनुचर, चापपाणिः = धनुर्हस्त,

---

लव—बनाया है, परन्तु प्रकाशित नहीं किया है। उसीका एक भाग दूसरे प्रबन्धके साथ करुणविप्रलम्भ आदि रससे युक्त और अभिनय करने योग्य बनाया है। अपने हाथके लिखे हुए उस अंशको भगवान् वाल्मीकि मुनिने तौर्यत्रिक ( नृत्य, गीत और वाद्य ) के प्रयोग करनेवाले आचार्य भगवान् भरतजीके पास भेजा है।

जनक—किस लिए।

लव—वे भगवान् भरत अप्सराओंसे उसका अभिनय करावेंगे।

जनक—हमलोगोंके लिए यह सब अत्यन्त गूढ अभिप्रायवाला है।

लव—उस भागमें भगवान् वाल्मीकिका बडा आदर है। उन्होंने कई विद्यार्थियोंके द्वारा उस पुस्तकको भरत मुनिके आश्रममें भेजा है। प्रमादसे होनेवाले विघ्नोंको हटानेके

पाणिः प्रमादच्छेदनार्थमस्मद्भ्राता प्रेषितः ।

कौसल्या—भादावि दे अत्थि ? ( भ्रातापि तेऽस्ति ? )

लवः—अस्त्यार्यः कुशो नाम ।

कौसल्या—जेट्ठेत्ति भणिद होदि । ( ज्येष्ठ इति भणितं भवति । )

लवः—एवमेतत् । प्रसवानुक्रमेण स किल ज्यायान् ।

जनकः—किं यमावायुष्मन्तौ ?

लवः—अथ किम् ?

जनकः—वत्स ! कथय कथाप्रपञ्चस्य कियान्पर्यन्तः ?

लवः—अलीकपौरापवादोद्विग्नेन राज्ञा निर्वासितां देवीं देवयजसं-

---

'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' इति चापपदस्य पूर्वप्रयोगः, प्रमादच्छेदनाऽर्थम् = अनवधानताऽपनयनार्थम् ।

लव इति । आर्यः = पूज्यः, ज्येष्ठभ्रातेत्यर्थः ।

लव इति । प्रसवाऽनुक्रमेण = उत्पत्तिक्रमेण, ज्यायान् = ज्येष्ठः ।

जनक इति । यमौ = यमजौ ।

जनक इति । कथाप्रपञ्चस्य = कथाविस्तरस्य, कियान् = किम्परिमाणः, पर्यन्तः = अवसानमवधिर्वा, कुत्र कथासमाप्तिरिति भावः ।

लव इति । अलीकपौराऽपवादोद्विग्नेन = अलीकः = मिथ्याभूतो यः, पौराऽपवादः = नागरिककर्तृकदोषकथनम् , तेन उद्विग्नेन = भीतेन, राज्ञा = रामेण, निर्वासिता = परित्यक्ताम् , देवयजनसंभवा=यागभूमिजाताम् , आसन्नप्रसववेदना= सन्निहितप्रसूतिदुःखाम् , एकाकिनीम् = असहायाम् , प्रतिनिवृत्तः = अयोध्या

---

लिए उनका अनुयायी बनाकर हाथमें धनुष लिए हुए हमारे भाईको भी भेजा है ।

कौसल्या—तुम्हारा भाई भी है ?

लव—पूजनीय वे 'कुश' नामक हैं ?

कौसल्या—तब वे बड़े भाई हैं ?

लव—हाँ हाँ, जन्मक्रमसे वे बड़े हैं ।

जनक—तुम दोनों क्या जुड़वे भाई हो ?

लव—और क्या ?

जनक—बेटा ! कथाभागकी अवधि कहाँ तक है ?

लव—नागरिकोंके मिथ्या अपवादसे डरे हुए राजा रामके द्वारा छोड़ी गई यज्ञभूमिमें उत्पन्न प्रसववेदनासे दुःखित होनेवाली महारानी सीताको जङ्गलमें छोड़कर लक्ष्मण भी लौट गये

भवां सीतामासन्नप्रसववेदनामेकाकिनीमरण्ये लक्ष्मणः परित्यज्य प्रतिनिवृत्त इति ।

कौसल्या—हा वच्छे मुद्धमुहि ! को दाणिं दे सरीरकुसुमस्स झत्ति देव्वदुव्विलासपरिणामो एक्काइणीए निवडिदो ? ( हा वत्से मुग्धमुखि ! क इदानीं ते शरीरकुसुमस्य झटिति दैवदुर्विलासपरिणाम एकाकिन्या निपतितः ? )

जनकः—हा वत्से !

नूनं त्वया परिभवं च वनं* च घोरं तां च व्यथा प्रसवकालकृतामवाप्य ।
क्रव्याद्गणेषु परितः परिवारयत्सु संत्रस्तया शरणमित्यसकृत्स्मृतोऽहम् ।२३।

---

प्रतियातः । एष कथैकदेशस्य पर्यन्त इति योजना ।

कौसल्येति । मुग्धमुखि = मुग्ध = सुन्दरम् , मुखम् = आननं, यस्याः सा तत्सम्बुद्धौ, शरीरकुसुमस्य = पुष्पसदृशदेहस्येत्यर्थः, दैवदुर्विलासपरिणामः = दैवदुर्विलासस्य = भाग्यदुश्चेष्टितस्य, परिणामः = परिपाकः ।

नूनमिति । परितः क्रव्याद्गणेषु परिवारयत्सु संत्रस्तया त्वया परिभवं, घोरं वनं, प्रसवकालकृता ता व्यथा च अवाप्य अहं शरणम् इति असकृत् स्मृतः नूनम् इत्यन्वयः । परितः=समन्तात्, क्रव्याद्गणेषु=मांसभक्षकेषु व्याघ्रादिवर्गेषु, परिवारयत्सु=मण्डलीकृत्याप्नुवत्सु ( सत्सु ), सन्त्रस्तया=अतिशयभीतया, त्वया=सीतया, परिभवं=तिरस्कारं, पतिकर्तृकपरित्यागरूपमिति भावः, घोरं=भयङ्करं, वनम्=अरण्यम् , प्रसवकालकृता=प्रसूतिसमयोत्पन्नां, ता=प्रसिद्धा, व्यथा च=वेदना च, अवाप्य=प्राप्य, अहं=पिता, शरणं = रक्षकः, 'शरणं गृहरक्षित्रोः' इत्यमरः, यद्यत्र पिताऽभविष्यत्तर्हि मद्रक्षकोऽभविष्यदिति भावः, इति=एवम् , असकृत्=मुहुर्मुहुः, स्मृतः=चिन्तितः, अभवमिति शेषः, नून=निश्चयेन । अत्र तुल्ययोगिताऽलङ्कारः । वसन्ततिलका वृत्तम् २३

---

है । ( यहीं तक कथाकी अवधि है । )

**कौसल्या**—सुन्दर मुखवाली हाय बेटी ! अकेली तुम्हारे फूलके सदृश शरीरका झटपट ऐसा भाग्यसम्बन्धी दुर्विलासका क्या परिणाम हो गया ?

**जनक**—हाय बेटी !

चारों तरफ व्याघ्र आदि हिंसक जन्तुओंसे व्याप्त होनेपर डरी हुई तुमने पतिकृत परित्यागरूप तिरस्कार, भयङ्कर वन और प्रसवके समयमें होनेवाली उस वेदनाको भी पाकर मुझको रक्षक समझकर निश्चय ही बारबार याद किया होगा ॥ २३ ॥

---

* 'नवम्' इति पाठान्तरम् ।

लवः—आर्ये ! कावेतौ ?

अरुन्धती—इयं कौसल्या। अथ जनकः। ( लवः सबहुमानखेदकौतुकं पश्यति । )

जनकः—अहो निर्दयता दुरात्मनां पौराणाम् ! अहो रामभद्रस्य क्षिप्रकारिता।

एतद्वैशसवज्रघोरपतनं शश्वन्ममोत्पश्यतः
क्रोधस्य ज्वलितुं झटित्यवसरश्चापेन शापेन वा।

---

सबहुमानेति। सबहुमानखेदकौतुकम्=बहुमानेन=कौसल्याजनकयोः पूज्यत्वादतिशयसमानेन, खेदेन = तद्दुःखदर्शनोत्पन्नदुःखेन, कौतुकेन = असम्भवदर्शनजकुतूहलेन च सहितं यथा तथा।

जनक इति। दुरात्मनाम् = दुष्टः = असन्, आत्मा = बुद्धिः, येषां तेषां दुर्बुद्धीनामित्यर्थः, 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च।' इत्यमरः; पौराणां नागरिकाणाम्, निर्दयता = निष्करुणत्वम्, 'दुर्मर्यादत्वम्' इति पाठे मर्यादालङ्घनमित्यर्थः। क्षिप्रकारिता = असमीक्ष्यकारिता, युक्ताऽयुक्तत्वमविचार्यैव कार्याऽनुष्ठातृत्वमिति भावः।

एतदिति। एतत् वैशसवज्रघोरपतनं शश्वत् उत्पश्यतो मम क्रोधस्य चापेन शापेन वा झटिति ज्वलितुम् अवसर इति श्लोकपूर्वाऽर्द्धाऽन्वयः। एतत् = समीपवर्ति, वैशसवज्रघोरपतनं = वैशसम् = सीताहननरूपमेव च, वज्रस्य = कुलिशस्य, घोरं = भयङ्करम्, यत् पतनं = पातः, तत्। शश्वत् = सदा, उत्पश्यतः = चिन्तयतः, मम=जनकस्य, क्रोधस्य=कोपस्य, चापेन = धनुषा, शापेन वा=शपनेन वा, अनिष्टोपधायकसंकल्पेन वेति भावः। झटिति = सत्वरम्, 'धगिति' इत्येपाठे 'धक्' इति ज्वलनशब्दाऽनुकरणम्, तद्यथा स्यात्तथा, ज्वलितुं = दाहयितुं, 'कालसमयवेलासु तुमुन्, इति तुमुन्, अवसरः = प्रसङ्गः, 'प्रसङ्गः स्यादवसर' इत्यमरः, उपस्थित इति शेषः। रामकर्तृकस्येदृशस्याऽन्यायाऽऽचरणस्य प्रतीकारं

---

लव—आर्ये ! ये दोनों कौन हैं ?

अरुन्धती—ये कौसल्या हैं और ये जनक हैं। ( लव बहुत सम्मान, विषाद और कौतूहलके साथ देखते हैं। )

जनक—ओह दुष्ट नागरिकों की निर्दयता ! ओह ! रामभद्रकी शीघ्रता (जल्दीबाजी)। सीताके हत्यारूप इस घोर वज्रपातकी निरन्तर चिन्ता करनेवाले मेरे क्रोधके-धनुषसे या शापसे शीघ्र प्रज्वलित होनेका यह अवसर है—

कौसल्या—( सभयकम्पम् । ) भअवदि ! परित्ताअदु । पसादेहि कुविदं राएसिम् । ( भगवति ! परित्रायताम्, प्रसादय कुपितं राजर्षिम् । )

लवः—

एतद्धि परिभूतानां प्रायश्चित्तं मनस्विनाम् ।

अरुन्धती—

राजन्नपत्यं रामस्ते पाल्याश्च कृपणा जनाः * ॥ २४ ॥

---

चापेन राजर्षित्वाच्छापेन वा करोमीति भावः । अत्र 'वैशसवज्रघोरपतनम्' इत्यत्र रूपकाऽलङ्कारः ।

कौसल्येति । परित्रायता = रक्षतु, कुपितराजर्षिजनकाद्रामो रक्षणीय इत्याशयः । राजर्षिम् = जनकम्, प्रसादय = प्रसन्नं कुरु, अनुनयेनाऽस्य कोप दूरीकुर्विति भावः ।

लव इति । परिभूताना मनस्विना प्रायश्चित्तम् एतत् हि इति श्लोकपूर्वार्द्धान्वयः । पुस्तकान्तरेषु इत्युक्तिरपि अरुन्धत्या एव । परिभूतानाम् = अवमताना, मनस्विना = प्रशस्तचित्ताना पुरुषाणा, प्रायश्चित्तं = कोपप्रतीकार इत्यर्थः, एतत् = प्रसादन, हि = निश्चयेन—

अरुन्धतीति । हे राजन् ! रामः ते अपत्यं, कृपणा जनाश्च ( ते ) पाल्या इति श्लोकोत्तरार्द्धान्वयः । हे राजन्=जनक ! राम =रामचन्द्रः, ते=तव, अपत्यं= सन्ततिः, सन्ततेः सीतायाः परिणेतृत्वात्स्वमित्रस्य दशरथस्य पुत्रत्वाच्च सन्ततिरेवेति भावः । कृपणाः=दीनाः, जनाश्च=प्रजाश्च, ते=तव, त्वयेति भावः । 'पाल्या' इति पदेन योगे 'कृत्याना कर्तरि वा' इति षष्ठी, पाल्याः = पालनीयाः, प्रजारक्षके रामचन्द्रे त्वया विनाशिते सति प्रजा अरक्षिताः स्युरतोऽपि त्वया कोपोऽपनेय इति भावः । अनुष्टुब्वृत्तम् ॥ २४ ॥

---

कौसल्या—(डरसे कापकर) भगवति ! रक्षा कीजिये । कुपित राजर्षिको प्रसन्न कीजिए ।

लव—तिरस्कार किये गये मनस्वियोंके कोपका प्रतिकार प्रसादन ही है—

अरुन्धती—हे राजन् ! राम आपके पुत्रतुल्य हैं और आपको दीन प्रजाओंका भी पालन करना ही चाहिए ॥ २४ ॥

---

* 'प्रजा' इति पाठान्तरम् ।

जनकः—

शान्तं वा रघुनन्दने तदुभयं यत्पुत्रभाण्डं हि मे
भूयिष्ठद्विजबालवृद्धविकलस्त्रैणश्च पौरो जनः ॥ २५ ॥

( प्रविश्य सम्भ्रान्ताः । )

वटवः—कुमार ! कुमार !! अश्वोऽश्व इति कोऽपि भूतविशेषो जनपदेष्वनुश्रूयते, सोऽयमधुनाऽस्माभिः स्वयं प्रत्यक्षीकृतः ।

---

शान्तमिति । हि यत् मे पुत्रभाण्डं, पौरो जनश्च भूयिष्ठद्विजबालवृद्धविकलस्त्रैणः । तस्मिन् रघुनन्दने तत् उभयं शान्तं वा, इति 'एतद्वैशसे'ति पूर्वोक्तश्लोकोत्तरार्द्धाऽन्वयः । हि = यत , यत् = रघुनन्दनपुत्रभाण्डरूपस्य विधेयस्य प्राधान्यात् नपुंसकलिङ्गनिर्देशः, मे = मम, जनकस्येत्यर्थः, पुत्रभाण्डं = तनयरूपं मूलधन, पौरः = नागरिकः, जनश्च = लोकश्च, भूयिष्ठद्विजबालवृद्धविकलस्त्रैणः = भूयिष्ठानि = बहूनि, द्विजाः = ब्राह्मणाः, बालाः=शिशवः, वृद्धाः=स्थविराः, विकलाः = भग्नाङ्गाः, अन्धबधिरादय इत्यर्थः, स्त्रैणानि = स्त्रीसमूहा , यस्मिन् तादृशोऽस्ति ; अतः, ( तस्मिन् = पूर्वोक्ते ) रघुनन्दने = रामचन्द्रे, तत् = पूर्वोक्तम् , उभयं = चापशापरूपं द्वितयमपि, शान्तं = निवृत्तं, भवत्विति शेषः । यस्माद्धेतोरामो मत्पुत्रस्यानीयस्तत्पाल्यासु प्रजासु बहवो ब्राह्मणादयः सन्ति, रामे विनष्टे सति तेऽपि पालकाऽभावाद्विनष्टा स्युरतो रामे मदीयश्चापः शापश्चोभयमपि शान्तं भवत्विति भावः । अत्र 'भूयिष्ठद्विजबाले' त्यादौ पदार्थहेतुकः काव्यलिङ्गाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २५ ॥

वटव इति । संभ्रान्ताः = संभ्रमयुक्ताः, कृतत्वरा इति यावत् । कोऽपि = अदृष्टः, भूतविशेषः = प्राणिविशेषः, जनपदेषु = कोसलादिदेशेषु, वृद्धनामारण्यकत्वादियमुक्तिः, श्रूयते = श्रोत्रेन्द्रियेण प्रत्यक्षीक्रियते । प्रत्यक्षीकृतः = चक्षुर्विषयीकृतः ।

---

जनक—अथवा जो राम मेरे पुत्ररूपमूलधन हैं और नागरिक लोग भी—बहुतेरे ब्राह्मण, बालक, वृद्ध, बधिरादि भग्न अङ्गवाले और स्त्रीसमूहसे युक्त हैं, इस कारण उन राममें वे दोनों ( धनु और शापके प्रयोग ) निवृत्त हों ॥ २५ ॥

( अस्थिर अवस्थामें प्रवेश कर )

ब्राह्मण-कुमारगण—कुमार ! कुमार !! देशोंमें जो 'घोड़ा' नामका प्राणिविशेष सुना जाता है, अभी हमने उसको देख लिया है ।

लवः—अश्वोऽश्व इति नाम पशुसमाम्नाये सांग्रामिके च पठ्यते, तत् ब्रूत कीदृशः ?

वटवः—अये, श्रूयताम्—

पश्चात्पुच्छं वहति विपुलं, तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति, खुरास्तस्य चत्वार एव ।
शष्पाण्यत्ति, प्रकिरति शकृत्पिण्डकानाम्रमात्रान्

---

लव इति । पशुसमाम्नाये = पशुनामसग्राहके शास्त्रे, निघण्टोरेकदेश इति भावः, साग्रामिके च = युद्धरीतिप्रतिपादकशास्त्रे, धनुर्वेदे चेत्यर्थः । ब्रूत = कथयत । कीदृश॰ = किलक्षण॰ ?

पश्चादिति । ( स॰ ) पश्चात् विपुलं पुच्छं वहति, तच्च अजस्रं धूनोति । स दीर्घग्रीवो भवति । तस्य चत्वार एव खुरा, ( स॰ ) शष्पाणि अत्ति, आम्रमात्रान् शकृत्पिण्डकान् प्रकिरति । व्याख्यानै॰ किं ? स पुन दूरं व्रजति, एहि एहि, याम॰ इत्यन्वयः । ( सः = अश्व इत्युच्यमान॰ ) पश्चात् = शरीरपश्चिमे भागे, विपुलं = विशालं, पुच्छं = लाङ्गूलं, वहति = धारयति, 'वनमहिष॰ कोऽयमुभयतः पुच्छ' इत्यारण्यवासनाव्यावृत्त्यर्थं पश्चात्पदम् । तच्च = पुच्छञ्च, अजस्रं = निरन्तरं, धूनोति = चालयति । सः = अश्व॰, दीर्घग्रीवो भवति = आयतकण्ठो भवति । तस्य = अश्वस्य, चत्वार एव = चतु संख्यका एव, खुरा = शफानि 'शफं क्लीवे खुरः पुमान्' इत्यमर॰, भवन्तीति शेष, स = अश्व॰, शष्पाणि = बालतृणानि, अत्ति = भक्षयति, आम्रमात्रान् = आम्रफल प्रमाणं येषा तान्, आम्रफलप्रमाणानित्यर्थः 'प्रमाणे द्वयसज्दघ्नञ्मात्रच॰' इति मात्रच्प्रत्यय॰, एतादृशान् शकृत्पिण्डकान् = पुरीषपिण्डकान्, प्रकिरति = विक्षिपति । व्याख्यानै॰ किं = विशेषकथनै॰ किं ? स॰ = अश्व॰, पुन॰=भूय, दूर = विप्रकृष्ट, व्रजति = गच्छति ; एहि एहि = आगच्छ आगच्छ, यामः = गच्छामः, सर्वे वयमिति शेष॰ । अत्रोपमास्वभा-

---

लव—'घोडा' यह नाम पशुनामसग्राहक शास्त्रमें और धनुर्वेदमें भी पडा जाता है, सो बतलाओ—'वह कैसा है ?'

ब्राह्मण-कुमारगण—अजी, सुनो—

वह शरीरके पीछे बडी पूँछ धारण करता है और उसे निरन्तर हिलाता रहता है । उसकी लम्बी गर्दन होती है और उसके चार ही खुर होते हैं । वह घास खाता है और आमके फलोंके बराबर लीदके टुकडोंको छोडता है । बहुत कहनेसे क्या ? वह फिर दूर जा रहा है, आओ

किं व्याख्यानैर्व्रजति स पुनर्दूरमेह्येहि यामः ॥ २६ ॥

( इत्यजिने हस्तयोश्चाकर्षन्ति । )

लवः—( सकौतुकोपरोधविनयम् । ) आर्याः ! पश्यत। एभिर्नीतोऽस्मि। ( इति त्वरितं परिक्रामति । )

अरुन्धतीजनकौ—महत्कौतुकं वत्सस्य * ।

कौसल्या—अरण्णगब्भरूवालावेहिं तुह्ये तोसिदा अह्मे अ। भअवदि ! जाणामि तं पेक्खन्ती वञ्चिदा विअ। ता इदो अण्णदो भविअ पेक्खम्ह दाव पलायन्तं दीहाउम्। ( अरण्यगर्भरूपालापैर्यूय तोषिता वयं च। भगवति! जानामि तं पश्यन्ती वञ्चितेव। तस्मादितोऽन्यतो भूत्वा प्रेक्षामहे तावत्पलायमानं दीर्घायुषम्।† )

---

वोक्तिसङ्कीर्णो दीपकाऽलङ्कारः। मन्दाक्रान्ता वृत्तम् ॥ २६ ॥

इतीति। अजिने = मृगचर्मणि।

लव इति। सकौतुकोपरोधविनयम्=कौतुकम् = अश्वदर्शनाऽभिलाषः, तस्य उपरोधेन = नियमेन, विनयेन = नम्रतया च सहितं यथा तथा। एभिः = वयस्यैः, नीतोऽस्मि=प्रापितोऽस्मि, भवद्दर्शनपथं परिहृत्य स्वेच्छया न दूरं गच्छामीति भावः।

कौसल्येति। अरण्यगर्भरूपालापैः = अरण्यगर्भाणां = वनचरशिशूनाम्, रूपैः = आकारैः, आलापैः = आभाषणैः। जानामि = विमृशामि, तं = लवम्, पश्यन्ती = प्रेक्षमाणा, वञ्चिता इव = प्रतारिता इव, रामभद्रसंवादेन प्रलोभिताऽस्मीति भावः। अन्यतो भूत्वा=अन्यत्रोपविश्येति भावः, दीर्घायुषं=जैवातृकं, लवमित्यर्थः।

---

आओ, हम जाते हैं ॥ २६ ॥

( ऐसा कहकर निकट आकर मृगचर्म और हाथोंमें पकड़कर लवको खींचते हैं। )

लव—( अश्वदर्शनकी उत्कण्ठा, ब्राह्मणबालकोंके आग्रह और नम्रताके साथ ) आर्य-गण ! देखिए। ये लोग मुझे ले जा रहे हैं। ( ऐसा कह जल्दीसे जाते हैं। )

अरुन्धती और जनक—वत्सको बड़ी उत्कण्ठा है।

कौसल्या—वनमें चरनेवाले लड़कोंके आकारोंसे और आभाषणोंसे आप लोग और हम लोग प्रसन्न किये गये हैं। भगवति! मैं विचार करती हूँ कि उस (लव) को देखती हुई (रामके रूप-सादृश्यसे) मैं ठगी-सी गई। अतः यहाँसे दूसरी जगह चलकर दौड़ते हुए चिरञ्जीवको देखें।

---

* 'पूरयतु कुतूहलं वत्सः' इति पाठान्तरम्।

† क्वचित् 'भअवदि! जाणामि, एदं अणालोअअन्ती ण जीआमि विअ। अदो अण्णदो भविअ पेक्खम्ह दूरगच्छमाणं दीहाउं' इति कौसल्योक्तः पाठान्तरम्। तस्य 'भगवति! जानामि, एतमनालोकयन्ती न जीवामीव। अतोऽन्यतो भूत्वा पश्यामस्तावद्दूरगच्छन्तं दीर्घायुषम्' इति च्छाया।

अरुन्धती—अतिजवेन दूरमतिक्रान्तः स चपलः कथं दृश्यते ?

कञ्चुकी—( प्रविश्य ) भगवान् वाल्मीकिराह—'ज्ञातव्यमेतदवसरे भवद्भि'रिति।

जनकः—अतिगम्भीरमेतत्किमपि। भगवत्यरुन्धति ! सखि कौसल्ये ! आर्य गृष्टे ! स्वयमेव गत्वा भगवन्तं प्राचेतसं पश्यामः।

( इति निष्क्रान्तो वृद्धवर्गः। )

( प्रविश्य। )

वटवः—पश्यतु कुमारस्तावदाश्चर्यम्।

लवः—दृष्टमवगतं च। नूनमाश्वमेधिकोऽयमश्वः।

---

अरुन्धतीति। चपलः = चञ्चलः, अतिजवेन = वेगाऽतिशयेन, अतिक्रान्तः= अतिक्रम्य गतः।

कञ्चुकीति। एतत् = इदम् 'कुतस्त्योऽयं माणवक' इति पृष्टं वृत्तम् इति भावः, अवसरे = उचितकाले, ज्ञातव्यं = वेदनीयम्। साम्प्रतं न कथ्यत इति भावः।

जनक इति। एतत्=वाल्मीकिवाक्यम्, किमपि = अपूर्वम्, अतिगम्भीरम्= अतिशयगूढाशयम्। स्वयमेव = आत्मनैव, प्राचेतसं = वाल्मीकिम्।

वटव इति। कुमारः = भवान्।

लव इति। दृष्टं = प्रत्यक्षीकृतम्, अवगतं च = ज्ञातं च, मयेति शेषः। आश्वमेधिकः = अश्वमेधः प्रयोजनमस्य इति, अश्वमेधाऽर्थक इत्यर्थः, नूनं = निश्चयेन।

---

अरुन्धती—अत्यन्त वेगसे दूर चला गया वह चञ्चल लड़का कैसे देखा जा सकता है ?

कञ्चुकी—( प्रवेश कर ) भगवान् वाल्मीकि कहते हैं कि—'यह ( लवका वृत्तान्त ) मौकेपर आप लोगोंको ज्ञातव्य है अर्थात् मालूम हो जायगा' ।

भगवति अरुन्धति ! सखि कौसल्ये ! आर्य गृष्टि जी ! स्वयं ही जाकर भगवान् वाल्मीकिका दर्शन करें।

( इसके अनन्तर वृद्धलोग चले जाते हैं। )

( प्रवेश कर )

ब्राह्मणकुमारगण—कुमार इस आश्चर्यको देखें।

लव—देखा और जान भी लिया। निश्चय यह अश्वमेध यज्ञका घोड़ा है।

वटकः—कथं ज्ञायते ?

लवः—ननु मूर्खाः ! पठितमेव हि युष्माभिरपि तत्काण्डम्। किं न पश्यथ प्रत्येकं शतसंख्याः कवचिनो दण्डिनो निषङ्गिणश्च रक्षितारः। तत्प्रायमेवान्यदपि* दृश्यते ।यदि च विप्रत्ययस्तत्पृच्छथ† ।

वटवः—भो भोः, किंप्रयोजनोऽयमश्वः परिवृतः पर्यटति ?

लवः—(सस्पृहमात्मगतम्।) अश्वमेध इति नाम विश्वविजयिनां क्षत्रियाणामूर्जस्वलः सर्वक्षत्रपरिभावी महानुत्कर्षनिकषः।

---

वटव इति। कथं = केन प्रकारेण, ज्ञायते = बुद्ध्यते, त्वयेति शेषः।

लव इति। तत्काण्डम् = अश्वमेधप्रतिपादकवेदभागः, शतसंख्याः = शतं संख्या तेषां ते, कवचिनः = कवचवन्तः, दण्डिनः = दण्डवन्तः, निषङ्गिणश्च = तूणीरवन्तश्च, रक्षितारः = रक्षकाः, सन्तीति शेषः। तत्प्रायमेव = कवच्यादिबहुलमेव, अन्यदपि = अनीकमपि। विप्रत्ययः = विरुद्धप्रत्ययः, अविश्वास इत्यर्थः।

वटव इति। भो भोः = सम्बोधनार्थको निपातः, किंप्रयोजनः = किं प्रयोजनं यस्य सः, किंफलक इत्यर्थः, परिवृतः = परिवेष्टितः, बलैरिति शेषः, पर्यटति = परिभ्रमति।

लव इति। सस्पृहम् = स्पृहया = अश्वमेधाऽनुष्ठानेच्छया, सहितं यथा तथा। विश्वविजयिनाम् = विश्वं = संसारम्, विजयन्ते तच्छीलास्तेषाम्, ऊर्जस्वलः = प्रशस्तम् ऊर्जोऽस्ति यस्य सः, अतिशयबल इत्यर्थः, 'ज्योत्स्नातमिस्रे' त्यादिना निपातः। सर्वक्षत्रपरिभावी=सर्वान् क्षत्रान् परिभवतीति तच्छील =सकलक्षत्रियतिरस्करणशील इति भावः, उत्कर्षनिकषः = शाणसमः प्रकर्षज्ञापक इति भावः, 'शाणस्तु निकषः कषः' इत्यमरः, 'निकर्ष' इति पाठे-निष्कर्षः = सारः।

---

ब्राह्मणकुमारगण—आप कैसे जानते हैं ?

लव—अरे मूर्खो ! तुम लोगोंने भी वह काण्ड ( अध्याय, प्रकरण ) पढ़ा ही है। क्या नहीं देखते हो ? सैकड़ों कवचधारी, सैकड़ों दण्डधारी और सैकड़ों तरकशवाले रक्षक हैं। उसी तरहकी सेना भी दिखाई पड़ती है। अविश्वास हो तो पूछ लो।

ब्राह्मणकुमारगण—अरे ! सेनाओंसे घिरा हुआ यह घोड़ा क्यों घूम रहा है ?

लव—(अभिलाषपूर्वक मन ही मन) 'अश्वमेध यज्ञ' संसारको जीतनेवाले क्षत्रियोंकी अतिशय शक्तियुक्त और संपूर्ण क्षत्रियोंका तिरस्कार करनेवाली बड़ी भारी उत्कर्षकी कसौटी है।

---

* 'भेवेदमपि' इति पाठान्तरम्।

† 'पृच्छत' इति पाठान्तरम्।

( नेपथ्ये । )

योऽयमश्वः पताकेयमथवा वीरघोषणा ।
सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः ॥ २७ ॥

लवः—( सगर्वम् । ) अहो सदीपनान्यक्षराणि ।

वटवः—किमुच्यते ? प्राज्ञः खलु कुमारः ।

लवः—भो भोः तत्किमक्षत्रिया पृथिवी ? यदेवमुद्घोष्यते ।

---

योऽयमिति । अयं य. अश्व, इयं सप्तलोकैकवीरस्य दशकण्ठकुलद्विपः पताका अथवा वीरघोषणा (अस्ति) इत्यन्वय. । अयं = संनिकृष्टस्थः, यः, अश्वः = हय', इयम् = एषा, विधेयभूताया पताकाया अथवा वीरघोषणायाः प्राधान्यात् स्त्रीलिङ्गनिर्देशः, सप्तलोकैकवीरस्य = सप्तसु = भूरादिषु, लोकेषु = भुवनेषु, एकवीरस्य = मुख्यशूरस्य, उत्तरपदसमास , 'एके मुख्यान्यकेवला.' इत्यमरः । दशकण्ठकुलद्विष = रावणवंशनाशकस्य, रामस्येत्यर्थः । पताका = विजयध्वजः, 'पताका वैजयन्ती स्यात्सौभाग्येऽङ्के ध्वजेऽपि च ।' इति विश्वः, अथवा = आहोस्वित् , वीरघोषणा = पराक्रमसूचको डिण्डिमध्वनिरिति भाव. । लोकसप्तकेऽपि रामसमः कोऽपि वीरो नाऽस्तीति भाव. । अत्र पताकावीरघोषणाभ्यामश्वस्य भेदेऽपि अभेदाऽध्यवसायेनाऽतिशयोक्तिरलङ्कार. ॥ २७ ॥

लव इति । सगर्वम्=गर्वेण=परोत्कर्षाऽनादरेण सहितं यथा तथा, 'सव्यथ'—मिति पाठे स्वस्याऽनादरेण सदु खमित्यर्थ । अक्षराणि = वर्णाः, 'योऽयमश्व' इत्याद्याकारका इति भावः, संदीपनानि = क्रोधोद्दीपकानीति भाव. ।

वटव इति । किमुच्यते = किमभिधीयते, एभिर्वलैरिति शेष । कुमारः = भवान् , प्राज्ञ' = ज्ञाता, अस्मासु विज्ञतम इति भावः । अश्वमेधीयोऽयमश्व इति भवता ज्ञात, सैनिककथनतात्पर्यमपि भवानेव जानातीति भाव. ।

लव इति । तत् = तर्हि, अक्षत्रिया = क्षत्रियरहिता, एवं = 'योऽयमश्व' इत्यादि, उद्घोष्यते = उच्चैर्घोषणा क्रियते, युष्माभिरिति शेष ।

---

( नेपथ्यमें )

यह जो घोडा है, यह सात लोकोंमें मुख्य वीर और रावणवंशके शत्रु रामचन्द्रजीकी विजयपताका अथवा वीरघोषणा है ॥ २७ ॥

लव—( गर्वके साथ ) अहो ! ये अक्षर क्रोधके उद्दीपक हैं ।

ब्राह्मणकुमारगण—क्या कहा जाता है ? कुमार समझदार है ।

लव—अरे सैनिको ! तब क्या पृथिवी क्षत्रियशून्य हो गई । जो कि इस तरहसे उद्घोषणा कर रहे हो ।

( नेपथ्ये । )

रे रे, महाराज प्रति कुतः क्षत्रियः ?

लवः—धिग्जाल्मान् ।

यदि नो सन्ति ? सन्त्येव, केयमद्य विभीषिका ?
किमुक्तैरेभिरधुना तां पताकां हरामि वः ॥ २८ ॥

हे वटवः ! परिवृत्य लोष्टैरभिघ्नन्त उपनयतैनमश्वम् । एष रोहितानां मध्येचरो भवतु ।

---

रे रे इति । रे रे = पदमिदमनादरद्योतके सम्बोधने । महाराजं = रामचन्द्रम्, कुतः = कस्माद्धेतोः क वा, क्षत्रियः = क्षत्रः, सर्वेषामपि क्षत्राणां परमप्रीत्या रामवश्यत्वादिति भावः ।

लव इति । जाल्मान् धिक् = असमीक्ष्यकारिणो युष्मान् धिक्, 'जाल्मोऽसमीक्ष्यकारी स्यात्' इत्यमरः ।

यदीति । नो सन्ति यदि, सन्ति एव, अद्य इयं का विभीषिका ? अधुना एभिः उक्तैः किम् ? वः तां पताकां हरामि इत्यन्वयः । नो सन्ति यदि=वीरक्षत्रिया न वर्तन्ते चेत्, सन्ति एव = वर्तन्त एव, पुस्तकान्तरेषु 'यदि ते सन्ति सन्त्येव' इति पाठस्तत्र—ते=रामाः, सन्ति यदि=तादृशा वीरा वर्तन्ते चेत्, सन्ति एव=वर्तन्त एव इत्यर्थः । अद्य=अस्मिन्दिने, इयम्=एषा, का विभीषिका = किमर्थं भयोत्पादनम् ? एभिः = अमीभिः, उक्तैः = कथितैर्वचनैः, किं = किं भवति, न किमपीत्यर्थः, 'एभिरधुना' इति स्थाने 'सन्निपत्यैव' इति पुस्तकान्तरपाठस्तत्र—संमुखं गत्वैवेत्यर्थः, वः = युष्माकं, तां = पूर्वोक्तां, पताकां = विजयध्वजरूपमश्वमिति भावः, हरामि = अन्यत्र प्रापयामि ॥ २८ ॥

हे वटव इति । परिवृत्य = वेष्टयित्वा, लोष्टैः = मृत्पिण्डैः, अभिघ्नन्तः = ताडयन्तः, उपनयत = उटजसमीपं प्रापयत । एषः = अश्वः, रोहितानां = मृगविशेषाणां, 'वराक' इति पाठे-तुच्छ इत्यर्थः ।

---

( नेपथ्यमें )

क्यों रे ! महाराज रामचन्द्रके प्रति क्षत्रिय कहाँ ?

लव—बिना विचारके काम करनेवालोंको धिक्कार है । वीर क्षत्रिय नहीं हैं क्या ? अर्थात् हैं ही । आज यह डर किस लिये दिखला रहे हो ? इस समय इन कथनोंसे क्या ? तुमलोगोंका उस विजयपताका ( अश्व ) का हरण कर लेता हूँ ॥ २८ ॥

हे ब्राह्मणकुमारो ! घेरकर ढेलोंसे मारते हुए तुम लोग इस घोड़ेको पर्णशालाके समीप पहुँचाओ । यह ( घोड़ा ) मृगोंके बीचमें विचरण करे ।

लवः—* किं नाम विस्फुरन्ति शस्त्राणि ? ( इति धनुरारोपयन् । )

ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्रमुद्भूरिघोरघनघर्घरघोषमेतत् ।
ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्रजृम्भाविडम्बि विकटोदरमस्तु चापम् ॥२९॥

( इति यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे । )

इति महाकविभवभूतिविरचिते उत्तररामचरिते कौसल्याजनकयोगो नाम चतुर्थोऽङ्कः ॥ ४ ॥

---

यतौ' इति लत्वम् ।

ज्येति । ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्रम् उद्भूरिघोरघनघर्घरघोषम् एतत् चापं ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्रजृम्भाविडम्बि विकटोदरम् अस्तु इत्यन्वयः । ज्याजिह्वया = ज्या=मौर्वी, सैव जिह्वा=रसना, तया, वलयितोत्कटकोटिदंष्ट्रम् = वलयिते=वेष्टिते, उत्कटकोटी = उन्नताऽग्रभागौ, एव दंष्ट्रे=पृथुदन्तौ, यस्य तत् । उद्भूरिघोरघनघर्घरघोषम् = उद्भूरयः=असंख्याताः, घोराः=भयङ्कराः, घनाः = सान्द्राः, घर्घरघोषाः = घर्घरेत्याकारकशब्दाः, यस्य तत् , उद्भूरीत्यत्र 'उद्गारी'ति पाठे—उद्गारिणः = उद्गच्छन्त इत्यर्थः, एतत् = समीपतरवर्ति, चापं = धनुः, ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्रजृम्भाविडम्बि = ग्रासे = कवलने, प्रसक्तम्=उद्युक्तम् , हसत् = हासं कुर्वत् , अन्तकवक्त्रम् = कृतान्तमुखम् , एव यन्त्रं, तस्य जृम्भा = व्यादानम् , विडम्बयति=अनुकरोति इति तच्छीलमत एव विकटोदरम्=विकटम् = भयङ्करम् , उदरं = मध्यम् यस्य तत् , तादृशम् , अस्तु = भवतु । अत्र रूपकेण सङ्कीर्णोपमा । वसन्ततिलका वृत्तम् ॥ २९ ॥

इति श्री पराजशर्म्मप्रणीतव्याख्यायां चतुर्थोऽङ्कः ॥ ४ ॥

---

कारणले आओ । मृगोंकी तरह कूदकर भाग चलें ।

लव—क्या शस्त्र चमक रहे हैं ? ( ऐसा कह धनुषपर डोरी चढाते हुए )

मौर्वीरूप जीभसे वेष्टित, उन्नतकोटिरूप दो दंष्ट्राओंसे युक्त और असंख्य भयङ्कर तथा घने घर्घर शब्दोंवाला यह धनुष, निगलनेमें तत्पर, हँसता हुआ, यमराजके यन्त्ररूप मुखकी जम्हाईकी नकल करनेवाला, अत एव भयङ्कर उदर ( मध्य भाग ) वाला हो जाय ॥ २९ ॥

( तब यथायोग्य टहलकर सब चले जाते हैं । )

यह 'कौसल्याजनकयोग' नामक चतुर्थ अङ्क समाप्त हुआ ॥ ४ ॥

---

* '( स्मितं कृत्वा )' इति अधिकः पाठः पुस्तकान्तरेषु ।

चन्द्रकेतुः—आर्य सुमन्त्र ! पश्य पश्य।

किरति कलितकिञ्चित्कोपरज्यन्मुखश्री-
रविरतगुणगुञ्जत्कोटिना कार्मुकेण।
समरशिरसि चञ्चत्पञ्चचूडश्चमूना-
मुपरि शरतुपारं कोऽप्ययं वीरपोतः॥ २॥

( साश्चर्यम्। )

क्रमदर्शनोत्पन्नेन आश्चर्येण, हर्षेण=स्वसमवीरदर्शनोपन्नेन आनन्देन, संभ्रमेण=लवकृतस्वसैनिकसंहारदर्शनोत्पन्नया त्वरया, च सहितं यथा तथा।

चन्द्रकेतुरिति। आर्य=हे पूज्य। सुमन्त्रस्य दशरथमन्त्रित्वादार्यपदेन सम्बोधनम्।

किरतीति। कलितकिञ्चित्कोपरज्यन्मुखश्री· चञ्चत्पञ्चचूडः कोऽपि अयं वीर-पोत· समरशिरसि अविरतगुणगुञ्जत्कोटिना कार्मुकेण चमूनाम् उपरि शरतुपा· किरति इत्यन्वय·। कलितकिञ्चित्कोपरज्यन्मुखश्रीः = कलितेन = कृतेन, किञ्चित्को-पेन=ईषन्मन्युना, रज्यन्ती=रक्तीभवन्ती, मुखश्री·=आननशोभा, यस्य सः। चञ्चत्प-ञ्चचूडः = चञ्चन्त्यः = चलन्त्य·, पञ्च = पञ्चसङ्ख्यका·, चूडा·=शिखाः यस्य सः। एतादृशः कोऽपि = अविदित , अय = निकटस्थ·, वीरपोत·=शूरशिशुः, समरशि-रसि = युद्धाग्रे, रणभूमावित्यर्थः। अविरतगुणगुञ्जत्कोटिना = अविरतं = विश्रा-न्तिरहितं, यथा तथा, गुणे = ज्यायाम् , गुञ्जन्त्यौ = शब्दायमाने, कोटी=अटन्यौ, धनुरग्रभागावित्यर्थः, यस्य तेन; एतादृशेन कार्मुकेण = धनुषा, चमूना = सेनाना, 'पृतनाऽनीकिनी चमूः' इत्यमरः ; उपरि = ऊर्ध्वम् , शरतुपारम् = शरः=बाणः, तुपार· = हिमम् इव, तम् 'उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे' इति समास·; 'जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्यामिति जातावेकवद्भावः; किरति = विक्षि-पति। अत्र 'शरतुपारम्' इत्यत्र लुप्तोपमाऽलङ्कारः। मालिनी वृत्तम् ॥ २॥

चन्द्रकेतु—आर्य सुमन्त्र! देखिए, देखिए।

कुछ कोप करनेसे जिसकी मुखश्री लाल हो गई है और जिसकी पाँचों शिखायें हिल रही हैं, ऐसा कोई यह वीरबालक युद्धभूमिमें मौर्वीमें लगातार गूँजनेवाली कोटियोंसे युक्त धनुषसे सेनाओंके ऊपर बाणरूप ओलोंको फेंक रहा है॥ २॥

आश्चर्यके साथ—

मुनिजनशिशुरेकः सर्वतः सम्प्रकोपा-
न्नव इव रघुवंशस्याप्रसिद्धि*-प्ररोहः ।
दलितकरिकपोलग्रन्थिटङ्कारघोर-
ज्वलितशरसहस्रः कौतुकं मे करोति ॥ ३ ॥

सुमन्त्रः—आयुष्मन् !

अतिशायितसुरासुरप्रभावं शिशुमवलोक्य तथैव† तुल्यरूपम् ।

---

मुनिजनेति । रघुवंशस्य नव अप्रसिद्धिप्ररोहः इव एको मुनिजनशिशुः संप्रकोपात् सर्वतः दलितकरिकपोलग्रन्थिटङ्कारघोरज्वलितशरसहस्रः ( सन् ) मे कौतुकं करोति इत्यन्वयः । रघुवंशस्य = रघुकुलस्य, नवः = नूतनः, अप्रसिद्धिप्ररोहः इव = ख्यातिरहिताऽङ्कुर इव, एकः = एकाकी, 'एकाकी त्वेक एकक' इत्यमरः, मुनिजनशिशुः = ऋषिबालः, संप्रकोपात् = प्रकृष्टक्रोधात्, सर्वतः = समन्तात्, दलितकरिकपोलग्रन्थिटङ्कारघोरज्वलितशरसहस्रः = दलितानां = विमर्दितानाम्, करिकपोलग्रन्थीनां = गजगण्डसन्धीनाम्, टङ्कारेण = टमितिरूपेण दलनशब्देन, घोरं = भयङ्करम्, ज्वलितं = प्रदीप्तम्, शराणां = बाणानाम्, सहस्रं = दशशती, यस्य सः तादृशः सन्, मे = मम, कौतुकं = कौतूहलं, करोति = विदधाति । अयमेकाकी बालको यदेतैर्हस्त्यश्वरथाऽऽरूढैः पदातिभिश्च सैनिकैः सह निर्भयं सङ्ग्रामं कुरुते, एतेन मे महदाश्चर्यमुत्पद्यत इति भावः । अत्रोपमाऽलङ्कारः । मालिनी वृत्तम् ॥ ३ ॥

अतिशायितेति । तथा एव तुल्यरूपम् अतिशायितसुराऽसुरप्रभावं शिशुम् अवलोक्य कुशिकसुतमखद्विषां प्रमाथे धृतधनुषं रघुनन्दनं स्मरामि इत्यन्वयः । तथा एव = तेन प्रकारेणैव, तुल्यरूपं = समानरूपं, रामसमरूपमित्यर्थः, अतिशायितसुराऽसुरप्रभावम् = अतिशायितः = अतिक्रान्तः, सुराऽसुराणां = देवदैत्यानाम्, प्रभावः = वीर्यम् येन तम्, एतादृशं शिशुम् = इमं मुनिबालकम्, अवलोक्य =

---

रघुकुलका नया अप्रख्यात अङ्कुरके सदृश, जिसके भयङ्कर हजारों बाण जल रहे हैं ऐसा यह एक मुनिकुमार अत्यन्त क्रोधसे चारों तरफ विमर्दित हाथियोंकी कपोलग्रन्थियोंके टङ्कारसे मेरे कौतुकको उत्पन्न कर रहा है ॥ ३ ॥

**सुमन्त्र**—चिरञ्जीव !

उसी तरहसे समान रूपवाले और देवता तथा दैत्योंके पराक्रमको लङ्घन करनेवाले इस

---

* 'प्रसिद्ध' इति पाठान्तरम् । † 'तवैव' इति पाठान्तरम् ।

कुशिकसुतमखद्विषां प्रमाथे धृतधनुषं रघुनन्दनं स्मरामि ॥ ४ ॥

चन्द्रकेतुः—मम त्वेकमुद्दिश्य भूयसामारम्भ इति हृदयमपत्रपते ।

अयं हि शिशुरेकको मदभरेण भूरि * स्फुर-
त्करालकरकन्दलीजटिलशस्त्रजालैर्बलैः ।

दृष्ट्वा, कुशिकसुतमखद्विषाम् = कुशिकसुतस्य = कौशिकस्य, विश्वामित्रस्येत्यर्थः, मखद्विषां = यज्ञदूषकाणां, सुबाहुप्रभृतीनां राक्षसानामित्यर्थः, प्रमाथे = विनाशे, धृतधनुषं = गृहीतकार्मुकं, रघुनन्दनं = रामचन्द्रं, स्मरामि = चिन्तयामि । न केवलं प्रभावतो रूपतोऽपि रामसममिमं बालकमवलोकयामीति भावः । अत्र प्रथमचरणेऽतिशयोक्तिः द्वितीयचरणे उपमा सदृशाऽनुभवाद्रामरूपवस्तुस्मृतेः स्मरणालङ्कारश्च, त्रयाणामपि अङ्गाङ्गिभावेन सङ्करः । पुष्पिताग्रा वृत्तम् ॥ ४ ॥

चन्द्रकेतुरिति । एकम् = एकाकिनमिमं बालकमित्यर्थः, उद्दिश्य = लक्ष्यीकृत्य, भूयसां = बहूनाम्, आरम्भः = व्यापारो, युद्धात्मक इति भावः, हृदयं = चित्तम्, अपत्रपते = लज्जते । अस्यैकस्य मुनिकुमारस्य कृते समवेतानां बहुसंख्यकानामस्माकं युद्धात्मको व्यापारोऽनुचित इति मत्वा मदीयं चित्तं जिह्रेतीति भावः ।

अयमिति । हि अयम् एककः शिशुः मदभरेण भूरिस्फुरत्करालकरकन्दलीजटिलशस्त्रजालैः क्वणत्कनककिङ्किणीझणझणायितस्यन्दनैः अमन्ददमदुर्दिनद्विरदवारिदैः बलैः आवृतः इत्यन्वयः । हि = यतः, अयं = निकटस्थः, एककः = एक एव, एकाक्येवेत्यर्थः 'एकादाकिनिच्चाऽसहाये' इत्यत्र चात्कन्, 'एकाकी त्वेक एककः' इत्यमरः, चाल्लुकि 'एक' इत्यपि । मदभरेण = मदाऽतिशयेन, वीरत्वाभिमानजनितेनेति शेषः, भूरिस्फुरत्करालकरकन्दलीजटिलशस्त्रजालैः = भूरि = अधिकं, यथा तथा, स्फुरन्ति = दीप्यमानानि, करालानि = क्रूराणि, करकन्दलीषु=

बालको देखकर विश्वामित्रके यज्ञमें विघ्न करनेवाले सुबाहु आदि राक्षसोंको नष्ट करनेके वास्ते धनुष लिये हुए रामचन्द्रकी याद कर रहा हूँ ॥ ४ ॥

चन्द्रकेतु—एकको लक्ष्य करके बहुतोंका युद्धारम्भ है, इसलिए मेरा हृदय तो लज्जित हो रहा है ।

यह अकेला बालक अतिशय मदसे अत्यन्त स्फुरित होती हुई भयङ्कर हस्ताग्रोंके अग्रभागोंके सदृश हाथोंमें अधिक शोभित होनेवाले कठोर और घने अस्त्रोंसे युक्त,

* 'समरभारभूरि' इति पाठान्तरम् ।

क्षणत्कनककिङ्किणीक्षणक्षणायितस्यन्दनै-
रमन्दमददुर्दिनद्विरदडामरैः*रावृतः ॥ ५ ॥

सुमन्त्रः—वत्स ! एभिः समस्तैरपि नालमस्य, किं पुनर्व्यस्तैः ?

चन्द्रकेतुः—आर्य ! त्वर्यतां त्वर्यताम्। अनेन हि महानाश्रितजन-प्रमारो† ऽस्माकमारब्धः । तथा हि—

हस्तशाखाऽग्रेषु, जटिलानि = निबिडानि, 'कलित' इति पाठे—कलितानि = धृतानीत्यर्थः, एतादृशानि शस्त्रजालानि = आयुधसमूहाः, येषां तैः, एवं क्षणत्कनककिङ्किणीक्षणक्षणायितस्यन्दनैः = क्षणन्तीभिः = शब्दवतीभिः, कनककिङ्किणीभिः = सुवर्णक्षुद्रघण्टिकाभिः, क्षणक्षणायिताः = क्षणक्षणेति शब्दं कुर्वन्तः, स्यन्दनाः = रथाः येषां तैः, 'किङ्किणी क्षुद्रघण्टिका' इत्यमरः, अमन्दमददुर्दिनद्विरद-डामरैः = अमन्दः = अनल्पः, अधिक इत्यर्थः, मदः=दानवारि, एव दुर्दिनं = वृष्टिः, येषां ते, ते च ते द्विरदाः = हस्तिनः, तैः डामरैः = भयङ्करैः, एतादृशैर्बलैः = अस्मत्सैन्यैः, आवृतः = परिवृतः, अतो मे लज्जेति भावः । अत्रोपमालङ्कारः । पृथ्वी वृत्तम्—'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति तल्लक्षणम् ॥ ५ ॥

सुमन्त्र इति । एभिः = पुरःस्थितैः, समस्तैरपि = सम्पूर्णैरपि, अस्मत्सैन्यैरिति शेषः, अस्य = मुनिकुमारस्य, न अलम् = न पर्याप्तिः । व्यस्तैः = पृथक् स्थितैः । अस्य मुनिकुमारस्य कृते सर्वेऽपीमे सैनिकास्तुच्छा इति भावः ।

चन्द्रकेतुरिति । त्वर्यतां=त्वरा क्रियताम्, अहमेतेन युध्यामीति भावः, संभ्रमे द्विरुक्तिः । आश्रितजनप्रमारः = आश्रितजनानाम् = उपजीविनराणाम्, प्रमारः = बहुमारणम् ।

बजनेवाली सुवर्णमयी क्षुद्रघण्टिकाओं (घुघुरुओं) से 'झण झण' शब्द करनेवाले रथोंसे सम्पन्न और अधिक मदजलकी वृष्टि करनेवाले हाथियोंसे भयङ्कर, हमारी सेनाओंके द्वारा घिरा हुआ है ॥ ५ ॥

सुमन्त्र—वत्स ! इकट्ठी हुई ये सब सेनायें भी इसको पर्याप्त (काफी) नहीं हैं तो विभक्त सेनाओंका क्या कहना ?

चन्द्रकेतु—आर्य ! जल्दी कीजिए, जल्दी कीजिए। इसने हमारे आश्रित जनोंका भारी विनाश आरम्भ कर दिया है। जैसे—

* 'वारिदैः' इति पाठान्तरम् ।
† 'प्रमाथो' इति पाठान्तरम् ।

आगर्जद्गिरिकुञ्जकुञ्जरघटानिस्तीर्णकर्णज्वर-
ज्यानिर्घोषममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन् ।
वेल्लद्भैरवरुण्डखण्डनिकरैर्वीरो विधत्ते भुव
तृष्यत्कालकरालवक्त्रविघसव्याकीर्यमाणामिव ॥ ६ ॥

सुमन्त्रः—(स्वगतम् ।) कथमीदृशेन सह वत्सस्य चन्द्रकेतोर्द्वन्द्वसंप्रहा-

आगर्जदिति । (अयम्) वीरः अमन्ददुन्दुभिरवैः आध्मातम् आगर्जद्गिरिकुञ्जकुञ्जरघटानिस्तीर्णकर्णज्वरज्यानिर्घोषम् उज्जृम्भयन् वेल्लद्भैरवरुण्डखण्डनिकरैः भुवं तृष्यत्कालकरालवक्त्रविघसव्याकीर्यमाणाम् इव विधत्त इत्यन्वयः । अयं वीरः=शूरः, मुनिकुमार 'शूरो वीरश्च विक्रान्त' इत्यमरः । अमन्ददुन्दुभिरवैः = अमन्दैः = अतिशयितैः, दुन्दुभिरवैः = भेरीशब्दैः, आध्मातम् = प्रवृद्धम्, आगर्जद्गिरिकुञ्जकुञ्जरघटानिस्तीर्णकर्णज्वरज्यानिर्घोषम् = आगर्जताम् = भयवशाद्गादगर्जनं कुर्वताम्, गिरिकुञ्जकुञ्जराणाम् = पर्वतनिकुञ्जहस्तिनाम्, घटायै = पङ्क्त्यै, निस्तीर्णः = दत्तः, 'विस्तीर्ण' इति पाठे घटासु विस्तीर्णः = प्रसारित इत्यर्थः, एतादृशः कर्णज्वरः = श्रोत्रपीडा, येन तं, तथाविधं ज्यानिर्घोषम् = मौर्वीशब्दम्, उज्जृम्भयन् = उत्पादयन्, वेल्लद्भैरवरुण्डखण्डनिकरैः = वेल्लद्भिः = लुठद्भिः, भैरवाणां = भयङ्कराणाम्, रुण्डखण्डानां = कबन्धानां तच्छिरसां च, निकरैः = समूहैः, खण्डस्थाने 'मुण्ड' पदस्य पाठेऽप्ययमेवार्थः, भुवं = पृथिवीं, तृष्यत्कालकरालवक्त्रविघसव्याकीर्यमाणाम् इव = तृष्यतः = पिपासतः, कालस्य = मृत्योः, यत् करालवक्त्रं = भयङ्करमुखम्, तस्य विघसैः = भुक्तशिष्टैः, व्याकीर्यमाणाम् इव = संस्तीर्यमाणाम् इव, 'अमृतं विघसो यज्ञशेषयोः' इत्यमरः, विधत्ते = करोति । यथा मृत्युर्भुक्तावशिष्टैः प्राण्यवयवैः भूमिं समाच्छादयति तथैवाऽयं वीरोऽपि अस्मत्सैनिकानां कबन्धैस्तच्छिरोभिश्च भूमिं समन्तादास्तृणाति, अतः सत्वरमस्य प्रतीकारः कर्तव्य इति भावः । अत्राऽतिशयोक्त्युत्प्रेक्षयोर्मिथो नैरपेक्ष्यात्संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

सुमन्त्र इति । ईदृशेन = एतादृशेन, वीरवरेणेत्यर्थः, द्वन्द्वसंप्रहारं = द्वन्द्व-

यह वीर बालक अधिक भेरीके शब्दोंसे बढ़े हुए, पर्वतीय लताकुञ्जके, बहुत गर्जनेवाले हाथियोंकी पङ्क्तिके कानोंको पीडित करनेवाले मौर्वीशब्दको उत्पन्न करता हुआ—छटपटाते हुए कबन्ध और उनके शिरोंके समूहोंसे पृथ्वीको, प्यासे मृत्युके भयङ्कर मुखके भुक्तावशिष्ट पदार्थोंसे आच्छादितकी तरह कर रहा है ॥ ६ ॥

सुमन्त्र—( मन ही मन ) इस योद्धाके साथ वत्स चन्द्रकेतुको द्वन्द्वयुद्धकी आज्ञा कैसे

क्वणत्कनककिङ्किणीझणझणायितस्यन्दनै-
रमन्दमददुर्दिनद्विरदडामरैः*रावृतः ॥ ५ ॥

सुमन्त्रः—वत्स ! एभिः समस्तैरपि नालमस्य, किं पुनर्व्यस्तैः ?

चन्द्रकेतुः—आर्य ! त्वर्यतां त्वर्यताम्। अनेन हि महानाश्रितजन-प्रमारो † ऽस्माकमारब्धः। तथा हि—

---

हस्तशाखाऽग्रेषु, जटिलानि = निबिडानि, 'कलित' इति पाठे—कलितानि = धृतानीत्यर्थः, एतादृशानि शस्त्रजालानि = आयुधसमूहाः, येषां तैः, एवं क्वणत्कनककिङ्किणीझणझणायितस्यन्दनैः = क्वणन्तीभिः = शब्दवतीभिः, कनककिङ्किणीभिः = सुवर्णक्षुद्रघण्टिकाभिः, झणझणायिताः = झणझणेति शब्दं कुर्वन्तः, स्यन्दनाः = रथाः येषां तैः, 'किङ्किणी क्षुद्रघण्टिका' इत्यमरः, अमन्दमददुर्दिनद्विरदडामरैः = अमन्द = अनल्पः, अधिक इत्यर्थः, मदः=दानवारि, एव दुर्दिनं = वृष्टिः, येषां ते, ते च ते द्विरदाः = हस्तिनः, तैः डामरैः = भयङ्करैः, एतादृशैर्बलैः = अस्मत्सैन्यैः, आवृतः = परिवृतः, अतो मे लज्जेति भावः। अत्रोपमालङ्कारः। पृथ्वी वृत्तं—'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति तल्लक्षणम् ॥ ५ ॥

सुमन्त्र इति। एभिः = पुरःस्थितैः, समस्तैरपि = सम्पूर्णैरपि, अस्मत्सैन्यैरिति शेषः, अस्य = मुनिकुमारस्य, न अलम् = न पर्याप्तिः। व्यस्तैः = पृथक् स्थितैः। अस्य मुनिकुमारस्य कृते सर्वेऽपीमे सैनिकास्तुच्छा इति भावः।

चन्द्रकेतुरिति। त्वर्यतां=त्वरा क्रियताम्, अहमेतेन युध्यामीति भावः, संभ्रमे द्विरुक्तिः। आश्रितजनप्रमारः = आश्रितजनानाम् = उपजीविनराणाम्, प्रमारः = बहुमारणम्।

---

बजनेवाली सुवर्णमयी क्षुद्रघण्टिकाओं (घुंघुरुओं) से 'झण झण' शब्द करनेवाले रथोंसे सम्पन्न और अधिक मदजलकी वृष्टि करनेवाले हाथियोंसे भयङ्कर, हमारी सेनाओंके द्वारा घिरा हुआ है ॥ ५ ॥

**सुमन्त्र**—वत्स ! इकट्ठी हुई ये सब सेनायें भी इसको पर्याप्त (काफी) नहीं हैं तो विभक्त सेनाओंका क्या कहना ?

**चन्द्रकेतु**—आर्य ! जल्दी कीजिए, जल्दी कीजिए। इसने हमारे आश्रित जनोंका भारी विनाश आरम्भ कर दिया है। जैसे—

---

* 'वारिदे' इति पाठान्तरम्।

† 'प्रमाथो' इति पाठान्तरम्।

आगर्जद्गिरिकुञ्जकुञ्जरघटानिस्तीर्णकर्णज्वर-
ज्यानिर्घोषममन्दुन्दुभिरवैराध्मातमुज्जृम्भयन् ।
वेल्लद्भैरवरुण्डखण्डनिकरैर्वीरो विधत्ते भुवं
तृष्यत्कालकरालवक्त्रविघसव्याकीर्यमाणामिव ॥ ६ ॥

सुमन्त्रः—(स्वगतम् ।) कथमीदृशेन सह वत्सस्य चन्द्रकेतोर्द्वन्द्वसंप्रहा-

---

आगर्जदिति । ( अयम् ) वीरः अमन्ददुन्दुभिरवैः आध्मातम् आगर्जद्गिरिकुञ्जकुञ्जरघटानिस्तीर्णकर्णज्वरज्यानिर्घोषम् उज्जृम्भयन् वेल्लद्भैरवरुण्डखण्डनिकरैः भुवं तृष्यत्कालकरालवक्त्रविघसव्याकीर्यमाणाम् इव विधत्त इत्यन्वयः । अयं वीरः=शूरः, मुनिकुमार 'शूरो वीरश्च विक्रान्त' इत्यमरः । अमन्ददुन्दुभिरवैः = अमन्दैः = अतिशयितैः, दुन्दुभिरवैः = भेरीशब्दैः, आध्मातम् = प्रवृद्धम् , आगर्जद्गिरिकुञ्जकुञ्जरघटानिस्तीर्णकर्णज्वरज्यानिर्घोषम् = आगर्जताम् = भयवशाद्नादगर्जनं कुर्वताम् , गिरिकुञ्जकुञ्जराणां = पर्वतनिकुञ्जहस्तिनाम् , घटायै = पङ्क्त्यै, निस्तीर्णः = दत्तः, 'विस्तीर्ण' इति पाठे घटासु विस्तीर्णः = प्रसारित इत्यर्थः, एतादृशः कर्णज्वरः = श्रोत्रपीडा, येन तं, तथाविधं ज्यानिर्घोषम् = मौर्वीशब्दम् , उज्जृम्भयन् = उत्पादयन् , वेल्लद्भैरवरुण्डखण्डनिकरैः = वेल्लद्भिः = लुठद्भिः, भैरवाणां = भयङ्कराणाम् , रुण्डखण्डानां = कबन्धानां तच्छिरसां च, निकरैः = समूहैः, खण्डस्थाने 'मुण्ड' पदस्य पाठेऽप्ययमेवार्थः, भुवं = पृथिवीं, तृष्यत्कालकरालवक्त्रविघसव्याकीर्यमाणाम् इव = तृष्यतः = पिपासतः, कालस्य = मृत्योः, यत् करालवक्त्रं = भयङ्करमुखम् , तस्य विघसैः = भुक्तशिष्टैः, व्याकीर्यमाणाम् इव = संस्तीर्यमाणाम् इव, 'अमृतं विघसो यज्ञशेषयो' इत्यमरः, विधत्ते = करोति । यथा मृत्युभुक्तावशिष्टैः प्राण्यवयवैः भूमिं समाच्छादयति तथैवाऽयं वीरोऽपि अस्मत्सैनिकानां कबन्धैस्तच्छिरोभिश्च भूमिं समन्तादास्तृणाति, अतः सत्वरमस्य प्रतीकारः कर्तव्य इति भावः । अत्राऽतिशयोक्त्युत्प्रेक्षयोर्मिथो नैरपेक्ष्यात्संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

सुमन्त्र इति । ईदृशेन = एतादृशेन, वीरवरेणेत्यर्थः, द्वन्द्वसंप्रहारं = द्वन्द्व-

---

यह वीर बालक अधिक भेरीके शब्दोंसे बढ़े हुए, पर्वतीय लताकुञ्जके, चुत गर्जनेवाले हाथियोंकी पङ्क्तिके कानोंको पीडित करनेवाले मौर्वीशब्दको उत्पन्न करता हुआ—छटपटाते हुए कबन्ध और उनके शिरोंके समूहोंसे पृथ्वीको, प्यासे मृत्युके भयङ्कर मुखके भुक्तावशिष्ट पदार्थोंसे आच्छादितकी तरह कर रहा है ॥ ६ ॥

सुमन्त्र—( मन ही मन ) इस योद्धाके साथ वत्स चन्द्रकेतुको द्वन्द्वयुद्धकी आज्ञा देने

रमनुजानीमः। ( विचिन्त्य। ) अथवा इक्ष्वाकुकुलवृद्धाः खलु वयम्। प्रत्युपस्थिते रणे का गतिः ?

चन्द्रकेतु —( सविस्मयलज्जासम्भ्रमम्। ) हन्त धिक्! अपावृत्तान्येव सर्वतः सैन्यानि मम।

सुमन्त्रः—(रथवेगं निरूप्य।) आयुष्मन्! एष ते वाग्विषयीभूतः स वीरः।

चन्द्रकेतु—(विस्मृतिमभिनीय।) आर्य! किंनामधेयमाख्यातमाह्वायकैः।

---

युद्धम्, अनुजानीम = अनुज्ञां कुर्मः। विचिन्त्य = विचार्य। इक्ष्वाकुकुलवृद्धाः = इक्ष्वाकुकुलस्य = इक्ष्वाकुवंशस्य, वृद्धाः = स्थविराः, मर्माऽभिज्ञा इत्यर्थः, 'अस्मदो द्वयोश्च' इत्येकत्वे बहुवचनम्। रणे = युद्धे, उपस्थिते = सम्प्राप्ते, का गतिः = क उपायः ? समरे उपस्थिते इक्ष्वाकुकुलोत्पन्न नामनिवर्तितत्वेनाऽऽभिमुख्यमेव कर्तव्यमिति भावः।

चन्द्रकेतुरिति। सविस्मयलज्जासंभ्रमं = विस्मयेन = लवपराक्रमदर्शनोत्पन्नेन आश्चर्येण, लज्जया = स्वसैन्यपराजयोत्पन्नया व्रीडया, सम्भ्रमेण = स्वसैन्यरक्षणप्रयोजनया त्वरया च सहितं यथा तथा। सर्वतः = समन्तात्, अपावृत्तानि = पराङ्मुखीभूतानि।

सुमन्त्र इति। निरूप्य = दर्शयित्वा, अभिनीयेत्यर्थः। एषः = समीपस्थितः, स = प्रसिद्धः, वीरः = शूरः, लव इत्यर्थः, ते = तव, वाग्विषयीभूतः = वाचा = वाणीनाम्, विषयीभूतः = गोचरीभूतः, प्राग्दूरवर्तित्वादयमसम्भाष्योऽभूत्साम्प्रतं निकटस्थत्वात् संभाषणयोग्योऽयं जात इति भावः।

चन्द्रकेतुरिति। विस्मृतिं = विस्मरणम्, अभिनीय = अभिनयं कृत्वा। आह्वायकैः = स्पर्द्धाशीलैः, 'आख्यायकैः' इति पाठे वार्ताहरैरित्यर्थः, नामधेयं = नाम, अस्येति शेषः, आख्यातं = कथितम्।

---

दूँ ? ( विचार कर ) अथवा हमलोग इक्ष्वाकुवंशमें सेवा कर बूढ़े हुए हैं। युद्धके उपस्थित होनेपर क्या उपाय है ?

**चन्द्रकेतु**—( आश्चर्य, लज्जा और शीघ्रताके साथ ) हाय ! धिक्कार है। मेरी सेनायें चारों ओरसे ही भाग रही हैं।

**सुमन्त्र**—( रथके वेगका अभिनय करके ) चिरञ्जीव ! यह वही वीर आपके वचनका विषय हो गया है ( अब आपकी बात सुन सकता है। )

**चन्द्रकेतु**—( भूलनेका अभिनय करके ) आर्य ! स्पर्धा करने वालोंने ( इसका ) क्या नाम कहा था ?

सुमन्त्रः—'लव' इति ।

चन्द्रकेतुः—

भो भो लव ! महाबाहो ! किमेभिस्तव सैनकैः ? ।
एषोऽहमेहि मामेव तेजस्तेजसि शाम्यतु ॥ ७ ॥

सुमन्त्रः—कुमार ! पश्य पश्य ।

विनिवर्तित एष वीरपोतः पृतनानिर्मथनात्त्वयोपहूतः ।
स्तनयित्नुरवादिभावलीनामवमर्दादिव दृप्तसिंहशावः ॥ ८ ॥

---

भो भो इति । भो भो महाबाहो । लव ! एभिः सैनिकैः तव किम् ? एषः अहम् । माम् एव एहि, तेजः तेजसि शाम्यतु इत्यन्वयः । भो भो महाबाहो लव = हे दीर्घभुज ! हे लव ! एभिः = त्वत्समीपस्थैः, सैनिकैः = सैन्यैः, अस्मदीयैरिति शेषः । तव = भवतः किं = कोऽर्थः इत्यर्थः । एषः = तव निकटस्थः अहं = चन्द्रकेतुः, अस्मीति शेषः । अतो मामेव, एहि = आगच्छ, समामायेति शेषः । तेजः = शौर्यं, तेजसि = शौर्ये, शाम्यतु = शान्तं भवतु, निर्वाणं भवत्विति भावः । वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ७ ॥

विनिवर्तित इति । एष वीरपोतः त्वया उपहूतः ( सन् ) दृप्तसिंहशावः स्तनयित्नुरवात् इभाऽऽवलीनाम् अवमर्दात् इव पृतनानिर्मथनात् विनिवर्तित इत्यन्वयः । एषः = समीपस्थः, वीरपोतः = शूरशिशुः 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ।' इत्यमरः, 'बालवीर' इति पाठे 'शिशुशूर' इत्यर्थः । त्वया = भवता, उपहूतः = आहूतः सन्, द्वन्द्वयुद्धायेति शेषः । दृप्तसिंहशावः = दृप्तः = दर्पयुक्तः, चासौ सिंहशावः = मृगेन्द्रशिशुः, स्तनयित्नुरवात् = मेघशब्दात्, इभावलीनाम् = हस्तिपङ्क्तीनाम्, अवमर्दात् इव = मर्दनात् इव, पृतनानिर्मथनात् = सेनाप्रहारात्, विनिवर्तितः = निवृत्तव्यापारः, अस्तीति शेषः । 'व्य-

---

सुमन्त्र—'लव' ।

चन्द्रकेतु—हे दीर्घबाहु लव ! इन सैनिकोंसे तुम्हें क्या मतलब है ? तुम्हारे लिए यह मैं हूँ । मेरे ही पास आओ । तेज तेजमें शान्त हो जाय ॥ ७ ॥

सुमन्त्र—कुमार ! देखिए, देखिए ।

यह वीर बालक, आपके चुनौती देनेपर, दर्पयुक्त सिंहका बच्चा मेघका शब्द सुनकर हाथियोंके समूहोंके मर्दनसे जैसे विरत होता है, उसीतरह सेनाओंके विनाशसे निवृत्त हो गया है ॥ ८ ॥

( ततः प्रविशति धीरोद्धतपराक्रमो लवः । )

लवः—साधु राजपुत्र ! साधु । सत्यमैक्ष्वाकः खल्वसि । तदहं परागत एवास्मि ।

( नेपथ्ये महान् कलकलः । )

लवः—( सावष्टम्भं परावृत्य ) कथमिदानीं भग्ना अपि पुनः प्रतिनिवृत्ताः पृष्ठानुसारिणः पर्यवष्टम्भयन्ति मां चमूपतयः । धिग्जाल्मान् ।

---

पवर्तत' इति पाठे परावर्तत इत्यर्थः । उपमाऽलङ्कारः । मालभारिणी वृत्तम् । 'विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणीयम्' । इति तल्लक्षणम् ॥ ८ ॥

तत इति । धीरोद्धतपराक्रमः = धीरोद्धतः = युद्धोद्भटः, पराक्रमः = शौर्यं यस्य सः, 'त्वरितोद्धतक्रमः' इति पाठे-त्वरितः = त्वरायुक्तः, चन्द्रकेतोराह्वानादिति शेषः, उद्धतः = गर्वयुक्तः, क्रमः = पादविक्षेपः, यस्य स इत्यर्थः ।

लव इति । ऐक्ष्वाकः = इक्ष्वाकुकुलोत्पन्नः । परागतः = सम्प्राप्तः ।

नेपथ्य इति । कलकलः = कोलाहलः, सैन्यानामिति शेषः ।

लव इति । साऽवष्टम्भम् = अवष्टम्भेन = स्थिरतया, न तु सैन्यकर्तृकाक्रमणोत्पन्नयाऽधीरतया इति भावः, सहितं यथा तथा । परावृत्य = विवृत्तवदनीभूयेत्यर्थः, 'सावेगम्' इति पाठे—आवेगेन = त्वरया, सहितं यथा तथा, भग्नाः = पलायिताः, प्रतिनिवृत्ताः, = सनिवृत्ताः, पृष्ठाऽनुसारिणः = मत्पृष्ठाऽनुसरणशीलाः, 'युद्धाऽभिसारिणः' इति पाठे रणोपस्थायिन इत्यर्थः । चमूपतयः = सेनापतयः, पर्यवष्टम्भयन्ति = समीपस्थिता भवन्ति, 'अवाच्चालम्बनाविदूर्ययोः' इति षत्वम् । पलायमाना अपि मां चन्द्रकेतुसकाशं गच्छन्तं दृष्ट्वा प्रहर्तुकामा एते इति भावः ।

---

( अनन्तर युद्धमें उद्भट पराक्रमवाले लव प्रवेश करते हैं । )

लव—वाह राजपुत्र ! वाह सचमुच तुम इक्ष्वाकुवंशी हो । इस लिए मैं तुम्हारे सम्मुख ही आ गया हूँ ।

( नेपथ्यमें बड़ा कोलाहल होता है । )

लव—( लौटकर ठहरावके साथ ) अभी अभी भागे हुए भी सेनापति लौटकर मेरे पीछे अनुसरण करते हुए किस तरह समीपवर्ती हो रहे हैं । अविचारसे काम करनेवालोंको धिक्कार है ।

अयं शैलाघातक्षुभितवडवावक्त्रहुतभु-
क्प्रचण्डक्रोधार्चिर्निचयकवलत्वं व्रजतु मे।
समन्तादुत्सर्पद्घनतुमुलहेला *कलकलः
पयोराशेरोघः प्रलयपवनास्फालित इव ॥ ९ ॥

( सवेगं परिक्रामति। )

चन्द्रकेतुः—भो भोः कुमार !

---

अयमिति। अयं समन्तात् उत्सर्पद्घनतुमुलहेलाकलकलः प्रलयपवनास्फालितः पयोराशेः ओघः इव मे शैलाघातक्षुभितवडवावक्त्रहुतभुक्प्रचण्डक्रोधाऽर्चिर्निचयकवलत्वं व्रजतु इत्यन्वयः। अयं = निकटोत्पन्नः, समन्तात् = सर्वतः, उत्सर्पद्घनतुमुलहेलाकलकलः = उत्सर्पन् = प्रसरन्, घनः = निविडः, तुमुलः = सङ्कुलः, यो हेलायाः = रणक्रीडायाः, कलकलः = कोलाहलः, सः, प्रलयपवनास्फालितः = प्रलयपवनेन = संवर्तवायुना, आस्फालितः = ताडितः, पयोराशेः = समुद्रस्य, ओघ इव = प्रवाह इव, मे = मम, शैलाऽऽघातक्षुभितवडवावक्त्रहुतभुक्प्रचण्डक्रोधाऽर्चिर्निचयकवलत्वम् = शैलानाम् = पर्वतानाम्, समुद्राऽभ्यन्तरस्थानामिति भावः, आघातेन = ताडनेन, क्षुभितः = संचलितः, यो वडवावक्त्रहुतभुक् = वडवानलः, स इव प्रचण्डः = कठोरः, यः क्रोधः = कोपः, स एव अर्चिषाम् = ज्वालानाम्, निचयः = समूहः, तस्य कवलत्वम् = ग्रासत्वं, भक्ष्यत्वमित्यर्थः। व्रजतु = गच्छतु। समुद्रस्य महाप्रवाहो यथा वाडवाऽग्निं प्राप्य नश्यति तथैवाऽयं सेनासमूहो मत्कोपाऽग्निं प्राप्य नश्यत्विति भावः। अत्रोपमारूपकयोरङ्गाङ्गिभावेन सङ्करः। शिखरिणी वृत्तम् ॥ ९ ॥

---

प्रलयकालके वायुसे ताडित समुद्रका प्रवाह जैसे पर्वतके आघातसे संचलित वाडवाग्निके प्रचण्ड कोपज्वालाओंके समूहके ग्रासभावको प्राप्त करता है, वैसे ही यह चारों तरफसे फैलता हुआ घना और तुमुल रणक्रीडाका कोलाहल प्रचण्ड कोपज्वाला-समूहके ग्रासभावको प्राप्त करे ॥ ९ ॥

( वेगके साथ चलते हैं। )

चन्द्रकेतु—कुमार जी !

---

* 'घना' इति पाठान्तरम्।

अत्यद्भुतादपि गुणातिशयात्प्रियो मे
तस्मात्सखा त्वमसि, यन्मम तत्तवैव ।
तत्किं निजे परिजने कदनं करोषि ?
नन्वेष दर्पनिकषस्तव चन्द्रकेतुः ॥ १० ॥

लवः—( सहर्षसंभ्रमं परावृत्य । ) अहो महानुभावस्य प्रसन्नकर्कशा वीर-

---

अत्यद्भुतादिति । अत्यद्भुतात् गुणाऽतिशयात् अपि त्वं मे प्रियः सखा असि, तस्मात् यत् मम, तत् तव एव । तत् निजे परिजने किं कदनं करोषि ? ननु एष चन्द्रकेतुः तव दर्पनिकष इत्यन्वयः । अत्यद्भुतात्=अतिशयाश्चर्यजनकात्, गुणाऽतिशयात् अपि = शौर्याऽऽदिगुणप्रकर्षात् अपि, न केवलमाकारेण, गुणोत्कर्षादपीति भावः, त्वं = लवः, मे = मम, प्रियः = अभीष्टः, सखा = मित्रम्, असि=वर्तसे । तस्मात् = हेतोः, यत् = वस्तु, मम = मदीयं, तत् = वस्तु, तव एव = त्वदीयमेव, मित्रयोर्मिथो भेदाऽभावादिति भावः । तत् = तस्मात्, निजे = आत्मीये, परिजने = पोष्यवर्गे, मत्सैन्यरूप इति भावः, किं = किमर्थं, कदनं = पीडनं, करोषि = विदधासि, मित्रपोष्यवर्गस्य पीडनमनुचितमिति भावः । तर्हि संग्रामाद्विरम्यतामित्याशङ्कायामाह—नन्विति । ननु = सम्बोधनाऽर्थकमेतदव्ययम्, हे लव इत्यर्थः, एषः = तवाऽन्तिकस्थः, चन्द्रकेतुः = अहं, तव = भवतः, दर्पनिकषः = गर्वपरीक्षानिकषरूप इत्यर्थः, एतान् वराकान् सैनिकान् विहाय त्वं मया सह योद्धुमर्हसीति भावः । अत्र चन्द्रकेतौ निकषत्वारोपे दर्पपरीक्षाया उपयोगित्वेन परिणामाऽलङ्कारः । वसन्ततिलका वृत्तम् ॥ १० ॥

लव इति । सहर्षसंभ्रमं = हर्षेण = आत्मसमवीरलाभजन्येन आनन्देन, संभ्रमेण = युद्धनिमित्तया त्वरया, च सहितं यथा तथा, परावृत्य=निवृत्य, सेनायाः पराङ्मुखीभूयेति भावः । महाऽनुभावस्य = प्रकृष्टप्रभावस्य, विकर्तनकुलकुमारस्य = सूर्यवंशराजपुत्रस्य, प्रसन्नकर्कशा=प्रसन्ना=प्रसादयुक्ता, त्वं मे सखेति कथनादिति भावः, कर्कशा = कठोरा एष चन्द्रकेतुस्तव दर्पनिकष इति च कथनादिति भावः,

---

अतिशय आश्चर्यकारक गुणोंके उत्कर्षसे भी तुम मेरे प्यारे मित्र हो, इसलिए जो पदार्थ मेरा है, वह तुम्हारा ही है । अतः अपने पोष्यवर्ग ( मेरे सैन्यों ) को क्यों पीडित कर रहे हो ? यह चन्द्रकेतु तुम्हारे गर्वकी कसौटी ( परीक्षाका स्थान ) है ॥ १० ॥

लव—( हर्ष और शीघ्रतासे लौटकर ) अहो ! महाप्रभावसे सम्पन्न सूर्यवंशीय कुमारके

वचनप्रयुक्तिर्विकर्तनकुलकुमारस्य। तत्किमेभिः? एनमेव तावत्संभावयामि।

( पुनर्नेपथ्ये कलकलः। )

लवः—( सक्रोधनिर्वेदम्। ) आः, कदर्थीकृतोऽहमेभिर्वीरसंवादविघ्नकारिभिः पापैः। ( इति तदभिमुखं परिक्रामति। )

चन्द्रकेतुः—आर्य! दृश्यतां द्रष्टव्यमेतत्।

दर्पेण कौतुकवता मयि बद्धलक्ष्यः
पश्चाद्बलैरनुसृतोऽयमुदीर्णधन्वा।

---

विशेषणवाचकपदयोर्मिथः समासे विशेष्यविशेषणभाव ऐच्छिको भवति। वीरवचनप्रयुक्तिः = वीरवाक्यप्रयोगः। एभिः = सैनिकैः, एनमेव = चन्द्रकेतुमेव। संभावयामि = युद्धेन सत्करोमि।

लव इति। सक्रोधनिर्वेदम् = क्रोधेन = पलायितसैन्यप्रहारजनितेन कोपेनेति भावः, निर्वेदेन = मत्तः पलायिता अप्येते चन्द्रकेतुं प्रत्यभिमुखीभूतं मां मुहुर्मुहुरनुसरन्तीति खेदेन च सहितं यथा तथा। वीरसंवादविघ्नकारिभिः=वीरेण= चन्द्रकेतुना, सह यः संवादः = युद्धाऽर्थसंभाषणम्, तत्र विघ्नं = प्रतिबन्धं कुर्वन्तीति तच्छीलास्तैः, एभिः = सैनिकैः, कदर्थीकृतः = अवमानितः। तदभिमुखं = सैन्यसंमुखम्।

चन्द्रकेतुरिति। द्रष्टव्यं = द्रष्टुं योग्यं, विलोकनीयमित्यर्थः।

दर्पेणेति। कौतुकवता दर्पेण मयि बद्धलक्ष्यः पश्चात् बलैः अनुसृतः उदीर्णधन्वा अयं द्वेधा समुद्धतमरुत्तरलस्य माघवतचापधरस्य मेघस्य लक्ष्मीं धत्ते इत्यन्वयः। कौतुकवता = उत्कण्ठायुक्तेन, मत्पराक्रमज्ञाने इति शेषः, दर्पेण = गर्वेण, मयि = चन्द्रकेतौ, बद्धलक्ष्यः = दत्तचक्षुः, पश्चात् = पृष्ठदेशे, बलैः =अस्मत्सैन्यैः, अनुसृतः = अनुगतः, उदीर्णधन्वा = उदीर्णम् = उत्थापितम्, धनुः =

---

वीरवाक्यका प्रयोग, प्रसाद और कठोरतासे युक्त है। इस लिए इन सैनिकोंसे क्या? (युद्धसे) इन्हींका सत्कार करता हूँ।

( फिर नेपथ्यमें कोलाहल होता है। )

लव—( क्रोध और खेदके साथ ) ओह! वीरके साथ संवाद (बातचीत) करनेमें विघ्न करनेवाले इन पापियोंसे मैं अपमानित हुआ हूँ। ( ऐसा कहकर उन्हींके सम्मुख होते हैं। )

चन्द्रकेतु—आर्य! दर्शनीय इस विषयको देखिए।

कौतुकयुक्त गर्वसे मुझे लक्ष्य करनेवाले और पीछेसे सेनाओंसे अनुगत धनुर्धारी ये लव,

द्वेधा समुद्धतमरुत्तरलस्य धत्ते
मेघस्य माघवतचापधरस्य लक्ष्मीम् ॥ ११ ॥

सुमन्त्रः—कुमार एवैनं द्रष्टुमपि जानाति। वयं तु केवलं परवन्तो विस्मयेन।

चन्द्रकेतुः—भो भो राजानः?

संख्यातीतैर्द्विरदतुरगस्यन्दनस्थैः पदाता-
वत्रैकस्मिन् कवचनिचितैर्नद्धचर्मोत्तरीये।

---

चाप॰, येन सः, 'धनुपश्च' इति समासाऽन्तोऽनङ्। अयं = वीरो लवः, द्वेधा = द्वाभ्यां प्रकाराभ्यां, समुद्धतमरुत्तरलस्य = समुद्धतेन=सञ्चलितेन, मरुता=वायुना, तरलस्य= चञ्चलस्य, माघवतचापधरस्य = मघवत =इन्द्रस्य, अयं माघवत = ऐन्द्र इत्यर्थः, एतादृशो यश्चापः = धनु, तद्धरस्य=तद्धारकस्य, एतादृशस्य, मेघस्य = जलदस्य, वर्षाकालभवस्येति भाव॰, लक्ष्मीं = शोभां, धत्ते = धारयति। कदाचित्प्राच्यवायु-ताडितस्य जातुचिच्च पाश्चात्यवायुताडितस्य इन्द्रायुधधरस्य मेघस्य यादृशी शोभा भवति, तथैव कदाचिन्मयि, जातुचिच्च मत्सैन्येषु अभिमुखीभूतोऽयं वीरशिशुस्तादृशीमेव शोभां बिभर्तीति भावः। अत्र मेघशोभां कथं लवो धारयतीत्यसम्भवद्वस्तु-सम्बन्धा निदर्शना, छेकाऽनुप्रासश्च। वसन्ततिलका वृत्तम् ॥ ११ ॥

सुमन्त्र इति। एनम् = इमं, लवमित्यर्थः, 'द्वितीयाटौस्स्वेन' इति अन्वादेशे एन॰, विस्मयेन = आश्चर्येण, परवन्त॰ = पराधीना॰, 'परतन्त्रः पराऽधीनः परवान्नाथवानपि।' इत्यमरः, वीर एव वीरं द्रष्टुं जानाति, वयं तु केवलं विस्मय-रसाऽऽविष्टा इति भावः।

संख्यातीतैरिति। संख्यातीतै॰ द्विरदतुरगस्यन्दनस्थैः कवचनिचितैः काल-ज्येष्ठैः अपरवयसि ख्यातिकामैः भवद्भिः एकस्मिन् पदातौ नद्धचर्मोत्तरीये अत्र

---

दोनों ओरसे चलनेवाले वायुसे चञ्चल इन्द्रधनुषसे युक्त मेघकी शोभाको धारण कर रहे हैं॥११॥

**सुमन्त्र**—कुमार ही इनको देखना भी जानते हैं। हम तो केवल आश्चर्यके अधीन हो गये हैं।

**चन्द्रकेतु**—हे राजाओं!

अगणित हाथी, घोडे और रथपर चढे हुए, कवचधारण किये हुए, वयमें ज्येष्ठ और वृद्धावस्थामें प्रसिद्धिकी इच्छा रखनेवाले आप लोगोंने—अकेले, पैदल, मृगचर्मको ही उत्तरीय

कालज्येष्ठैरपरवयसि ख्यातिकामैर्भवद्भि-
योऽयं बद्धो युधि समभरस्तेन धिग्वो धिगस्मान् ॥ १२ ॥

युधि यः अयं समभरः बद्धः, तेन वो धिक्, अस्मान् ( च ) धिक् इत्यन्वयः । संख्यातीतैः = संख्यामतीताः संख्यातीतास्तैः, असंख्येयैरित्यर्थः, 'द्वितीया श्रिते'-त्यादिना द्वितीयातत्पुरुषः । द्विरदतुरगस्यन्दनस्थैः = द्विरदाः = गजाः, तुरगाः = अश्वाः, स्यन्दनाः = रथाः, इति द्विरदतुरगस्यन्दनं, 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इति सेनाङ्गत्वात्समाहारद्वन्द्वः, तस्मिंस्तिष्ठन्तीति तैः, कवचनिचितैः = कवचैः = वर्मभिः, निचिताः = व्याप्ताः, तैः बद्धकवचैरित्यर्थः । कालज्येष्ठैः = वयोऽधिकैः, पुनश्च = अपरवयसि—बार्धके * ख्यातिकामैः = विजयप्रसिद्ध्यभिलाषुकैः, भवद्भिः = युष्माभिः, राजभिरित्यर्थः । एकस्मिन् = एकाकिनि, असहाय इत्यर्थः, पदातौ = पदाभ्यां गच्छतीति पदातिस्तस्मिन् = पादचारिणि, 'पादे च' इतीण्प्रत्ययः, 'पादस्य पदाज्यातिगोपहतेषु' इति पदादेशः । नद्धचर्मोत्तरीये = नद्धं = बद्धम्, चर्म = मृगाजिनम्, एव उत्तरीयं = प्रावारः, येन तस्मिन्, नद्धस्थाने 'मेध्य' इति पाठे—मेध्यं = पवित्रम्, चर्मैव उत्तरीयं यस्य तस्मिन्निति विग्रहः, 'अपरवयसि ख्यातिकामैः' इत्यत्र 'अभिनववयःकाम्यकाये' इति पुस्तकान्तरपाठस्तत्र—अभिनवेन = नूतनेन, वयसा = अवस्थया, किशोराऽवस्थयेत्यर्थः, काम्यः = कमनीयः, इच्छाविषय इत्यर्थः, कायः = शरीरं, यस्य तस्मिन् इत्यर्थः कार्यः । अत्र = अस्मिन्, लव इत्यर्थः, युधि = संग्रामे, यः अयम् = एषः, समभरः = समेषां = सर्वेषाम्, भरः = भारः, लवस्य पराजयाय सर्वैर्बद्धो भार इति भावः, बद्धः = गृहीतः 'समभर' इत्यत्र 'परिकर' इति पुस्तकान्तरपाठस्तस्य यत्न आरम्भो वेत्यर्थः, 'यत्नाऽऽरम्भौ परिकरौ' इति त्रिकाण्डशेषः । तेन = कारणेन, वः = युष्मान्, धिक् = निन्दामि, अस्मांश्च = मां च, धिक्=निन्दामि । असहायस्य ( एकस्य ) पदातेः परिहितमृगचर्मणः शिशोर्हननार्थं बहुसंख्यकानां हस्त्यादिवाहनारूढानां कवचधारिणां वयोवृद्धानां युष्माकं कृत्यमिदमनुचितमिति

बनाकर बाँधे हुए इन ( टर ) पर जो यह मिलकर चढ़ाई की है, इस लिए आप लोगोंको धिक्कार है और हमको भी धिक्कार है ॥ १२ ॥

* 'अपरवयसि' इति लवेनैव सम्बन्ध 'बाल्ये' इति चार्थं कार्यः, तस्य राजभिः सह सम्बन्धे लवस्य बालकत्वाऽनुपपत्तेः, पाठान्तरं तु समीचीनतरमिति बोध्यम् ( स )

लवः—( सोन्मायम ) आ., कथमनुकम्पते नाम ? (ससंभ्रमं विचिन्त्य ।) भवतु । कालहरणप्रतिषेधाय जृम्भकास्त्रेण तावत्सैन्यानि सस्तम्भयामि । ( इति ध्यानं नाटयति । )

सुमन्त्रः—तत्किमकस्मादुल्लोलाः सैन्यघोषाः प्रशाम्यन्ति ?

लवः—पश्याम्येनमधुना प्रगल्भम् ।

सुमन्त्र —( ससभ्रमम् । ) वत्स ! मन्ये कुमारकेणानेन जृम्भकास्त्रमामन्त्रितमिति ।

---

भाव॰ । एतेन 'न केवलं युष्माकमेव, किन्त्वध्यक्षत्वान्ममाऽपि महती निन्दा भविष्यतीति तात्पर्यम् । अत्र श्लोके विषमाऽलङ्कारः । मन्दाक्रान्ता वृत्तम् ॥ १२ ॥

लव इति । सोन्मायम् = उन्मायेन = पीड्या, सहित यथा तथा, 'सक्षोभम्' इति पाठे—क्षोभेण = चित्तचञ्चलेन, सहितं यथा तथेत्यर्थः, अनुकम्पते = दया करोति, एकाकित्वादिना मद्दौर्बल्यमाशङ्क्य मदु खं परिजिहीर्षतीति भावः । कालहरणप्रतिषेधाय=समययापनवारणाय, एभि॰ सह युद्धे बहुकालातिपातो भविष्यतीत्येतन्निवारणार्थमिति भाव॰, संस्तम्भयामि = मोहोत्पादनेन निवृत्तव्यापाराणि करोमीति भाव । नाटयति = अभिनयति ।

सुमन्त्र इति । तत् = तदा, भवत्कर्तृकगर्हणाऽनन्तरमेवेति भाव॰, अकस्मात् सहसा, उल्लोलाः = अतिचञ्चला॰, अतिशयप्रसारिण इति भाव । सैन्यघोषा॰ = सैनिककोलाहला॰, प्रशाम्यन्ति = विरमन्ति ।

लव इति । प्रगल्भम् = अतिशयधृष्टम् , अस्य कियद्बलमस्तीति परीक्ष इति भावः ।

सुमन्त्र इति । ससंभ्रमं = सत्वरम् , आमन्त्रितम् = आहूतम् ।

---

लव—( पीडाके साथ ) ओह ! क्यों ये दया कर रहे हैं। जल्दीसे विचार कर ) अच्छा, कालक्षेप न करनेके लिए जृम्भकास्त्रसे इन सैनिकोंको स्तब्ध कर देता हूँ। ( ध्यान करनेका अभिनय करते हैं । )

सुमन्त्र—तब क्यों अकस्मात् अतिशय चञ्चल सैनिकोंका कोलाहल शान्त होता जाता है ।

लव—अब मैं इस धृष्ट ( ढीठ ) को देखता हू ।

सुमन्त्र—( जल्दीके साथ ) वत्स ! मैं समझता हू कि इस कुमारने जृम्भक अस्त्रका प्रयोग किया है ।

चन्द्रकेतुः—अत्र कः सदेहः ?

व्यतिकर इव भीमस्तामसो वैद्युतश्च
प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति ।
अथ लिखितमिवैतत्सैन्यमस्पन्दमास्ते
नियतमजितवीर्यं जृम्भते जृम्भकास्त्रम् ॥ १३ ॥

आश्चर्यमाश्चर्यम् ।

पातालोदरकुञ्जपुञ्जिततमः श्यामैर्नभो जृम्भकै-

---

व्यतिकर इति । तामसो वैद्युतश्च भीमो व्यतिकर इव प्रणिहितमपि ग्रस्तमुक्तं चक्षुः हिनस्ति, अथ एतत् सैन्यं लिखितम् इव अस्पन्दम् आस्ते, नियतम् अजितवीर्यं जृम्भकाऽस्त्रं जृम्भते इत्यन्वयः । तामसः = तमःसम्बन्धी, वैद्युतश्च = विद्युत्सम्बन्धी च, भीमः = भयङ्करः, व्यतिकर इव = सम्पर्क इव, प्रणिहितम् अपि = प्रयत्नेन निक्षिप्तम् अपि, ग्रस्तमुक्तम् = तमसा प्राग्ग्रस्तं ज्योतिषा पश्चान्मुक्तं, चक्षुः = नेत्रं, हिनस्ति = बाधते, विषयज्ञानाऽसमर्थं करोतीति तात्पर्यम् । अथ = अनन्तरम्, एतत् = दृश्यमानं, सैन्यं = बलम्, लिखितम् इव = चित्राऽर्पितम् इव, अस्पन्दम् = चेष्टारहितम्, आस्ते = अवतिष्ठते । नियतं = निश्चितम्, अजितवीर्यम् = अपराजितपराक्रमम्, 'अमितवीर्यम्' इति पाठे अपरिमितपराक्रममित्यर्थः । जृम्भकाऽस्त्रं = जृम्भकाख्यशस्त्रं, जृम्भते = आविर्भवति । अत्रोपमाऽनुमानाऽलङ्कारयोरङ्गाङ्गिभावेन सङ्करः । मालिनी वृत्तम् ॥ १३ ॥

पातालोदरेति । पातालोदरकुञ्जपुञ्जिततमःश्यामैः उत्तप्तस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिः जृम्भकैः कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैः लीनाऽम्भोदतडित्कडारकुहरैः विन्ध्याद्रिकूटैः इव नभः अभिस्तीर्यते इत्यन्वयः । पातालोदरकुञ्जपुञ्जिततमःश्यामैः = पातालस्य = रसातलस्य, उदरेषु = अभ्यन्तरेषु, ये

---

चन्द्रकेतु—इसमें क्या सन्देह है ?

अन्धकार और बिजलीके भयङ्कर सम्पर्ककी तरह प्रयत्नसे निक्षेप करनेपर भी पहले अन्धकारसे ग्रस्त पीछे प्रकाशमें छूटे हुए नेत्रको विषयके ज्ञानमें असमर्थ कर देता है। अब यह हमारी सेना लिखी हुईकी तरह निश्चेष्ट हो गई है। निश्चय ही जिसका पराक्रम नहीं जीता गया है, ऐसा जृम्भक अस्त्र आविर्भूत हो रहा है ॥ १३ ॥

आश्चर्य है ! आश्चर्य है !

पातालके भीतरके लतागृहोंमें इकट्ठे हुए अन्धकारोंके सदृश श्यामवर्णवाले, चमकते हुए

उत्तप्तस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिः ।
कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैरभिस्तीर्यते *
लीनाम्भोदतडित्कडारकुहरैर्विन्ध्याद्रिकूटैरिव ॥ १४ ॥

सुमन्त्रः—कुतः पुनरस्य जृम्भकाणामागमः स्यात् ?

चन्द्रकेतुः—भगवतः प्राचेतसादिति मन्यामहे ।

कुञ्जाः = लतागृहाणि, तेषु पुञ्जितानि = राशीभूतानि, यानि तमांसि = अन्धकाराः, तानि इव श्यामानि = कृष्णवर्णानि तैः, उत्तप्तस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिः = उत्तप्तम् = सन्तप्तम्, स्फुरत् = दीप्यमानम्, यत् आरकूटं=रीतिः, पित्तलमित्यर्थः, 'रीतिः स्त्रियामारकूटम्' इत्यमरः, तस्य कपिलं=पिशङ्गम्, ज्योतिः= तेजः, इव ज्वलन्ती = दीप्यमाना, दीप्तिः =प्रभा, येषां तानि तैः, एतादृशैर्जृम्भकैः = तन्नामाऽस्त्रैः, कल्पाऽऽक्षेपकठोरभैरवमरुद्व्यस्तैः = कल्पस्य = ब्रह्मणो दिनस्य, आक्षेपे = अवसाने, कठोराः = दृढाः, भैरवाः = भयङ्कराः, ये मरुतः = वायवः, तैर्व्यस्तैः = वियोजितैः, लीनाऽम्भोदतडित्कडारकुहरैः = लीनाः = श्लिष्टाः, अम्भोदाः = मेघाः, येषु तानि, 'लीनाम्भोद' स्थाने 'मीलन्मेघ' इति पाठे मीलन्तः = संयुज्यमाना इत्यर्थः, तथा तडिद्भिः = विद्युद्भिः कडाराणि = पिङ्गलानि, 'कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ' इत्यमरः, एतादृशानि कुहराणि = गुहाः, येषां तानि तैः; विन्ध्याद्रिकूटैः इव = विन्ध्याद्रेः = विन्ध्यपर्वतस्य, कूटैः इव = शृङ्गैः इव, नभः = आकाशम्, अभिस्तीर्यते = आच्छाद्यते । अत्रोत्प्रेक्षाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १४ ॥

सुमन्त्र इति । कुतः = कस्मात्पुरुषात् । अस्य = लवस्य । आगमः = प्राप्तिः । चन्द्रकेतुरिति । प्राचेतसात् = वाल्मीकेः ।

पीतलके तेजके तुल्य प्रकाशित कान्तिसे सम्पन्न जृम्भक अस्त्र, प्रलयकालमें कठोर और भयङ्कर वायुसे वियुक्त छिपे मेघवाले और बिजलीसे पीले गुफाओंसे युक्त विन्ध्यपर्वतके शिखरोंकी तरह आकाशको व्याप्त कर रहे हैं ॥ १४ ॥

सुमन्त्र—इन्हें किससे जृम्भक अस्त्रोंकी प्राप्ति हुई होगी ?

चन्द्रकेतु—भगवान् वाल्मीकिसे हुई होगी, ऐसा हम मानते हैं ।

* 'रवाकीर्यते' इति पाठान्तरम् ।

सुमन्त्रः—वत्स ! नैतदेवमस्त्रेषु* विशेषतो जृम्भकेषु । यतः ।

कृशाश्वतनया ह्येते कृशाश्वात्कौशिकं गताः ।
अथ तत्संप्रदायेन रामभद्रे स्थिता इति ॥ १५ ॥

चन्द्रकेतुः—अपरेऽपि प्रचीयमानसत्त्वप्रकाशाः स्वयं सर्वं मन्त्रद्दशः पश्यन्ति ।

सुमन्त्रः—वत्स ! सावधानो भव । परागतस्ते प्रतिवीरः ।

---

सुमन्त्र इति । एतत् = आगमनम् ।

कृशाश्वेति । एते कृशाश्वतनया हि, कृशाश्वात् कौशिकं गताः । अथ तत्सम्प्रदायेन रामभद्रे स्थिता इति इत्यन्वयः । एते=जृम्भकास्त्ररूपपदार्थाः, कृशाश्वतनयाः=कृशाश्वोत्पन्नाः, कृशाश्वेन प्राप्ता इति भावः । हि = निश्चयेन, कृशाश्वस्थाने पुस्तकान्तरेषु भृशाश्व इति पाठः । कृशाश्वात्=कृशाश्वनामकपुरुषात्, कौशिकं= विश्वामित्रं, गताः=प्राप्ताः । अथ=अनन्तरं, तत्सम्प्रदायेन=विश्वामित्रोपदेशेन 'तत्सम्प्रदानेने'ति पाठे—तस्य=विश्वामित्रस्य, सम्प्रदानेन=वितरणेन, रामभद्रे=वत्से रामभद्रे, स्थिताः=विद्यमानाः, जाता इति शेषः । 'व्यवस्थिता' इति पाठे नियता इत्यर्थः । अत्र जृम्भकास्त्राणामनेकगतत्वात्पर्यायाऽलङ्कारः, तल्लक्षणं यथा—'क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात् । भवति क्रियते वा चेत्तदा पर्याय इष्यते ॥' इति॥

चन्द्रकेतुरिति । अपरेऽपि=भवदुक्तेभ्योऽन्येऽपि, प्रचीयमानसत्त्वप्रकाशाः = प्रचीयमानः = उपचीयमानः, सत्त्वस्य = सत्त्वगुणस्य, प्रकाशः = आविर्भावः, येषु ते, मन्त्रद्दशः = वेदमन्त्राणां साक्षात्कर्तारः, स्वयं = सम्प्रदायेन विनाऽपि ।

सुमन्त्र इति । सावधानः = अनन्यमनाः, प्रतिवीरः = प्रतिद्वन्द्वी वीरः ।

---

सुमन्त्र—वत्स ! अस्त्रोंके विषयमें वाल्मीकि ऋषिसे आगमनकी बात नहीं ठीक है, विशेष कर जृम्भक अस्त्रोंके विषयमें । क्योंकि—

जृम्भक अस्त्र कृशाश्वको प्राप्त हुए थे, उनसे विश्वामित्र ऋषिने प्राप्त किया । अनन्तर विश्वामित्रके उपदेशसे ये अस्त्र रामभद्रमें स्थिर हुए हैं ॥ १५ ॥

चन्द्रकेतु—आपने जिनका नाम लिया, उनसे भिन्न और मन्त्रद्रष्टा जो सत्त्व गुणके आविर्भावसे युक्त हैं सम्प्रदायके बिना भी ज्ञानरूप प्राप्त कर सकते हैं ।

सुमन्त्र—वत्स ! सावधान (होशियार) हो जाओ, तुम्हारा प्रतिद्वन्द्वी वीर आ गया है ।

---

* 'नास्त्र सम्प्रदायोऽस्त्वेषु' इति पाठान्तरम् ।

कुमारौ—( अन्योन्यं प्रति । ) अहो प्रियदर्शनः कुमारः । ( सस्नेहानुरागं निर्वर्ण्य । )

यदृच्छासंवाद. किमु गुणगणानामतिशयः
पुराणो वा जन्मान्तरनिविडबद्धः परिचयः।
निजो वा सबन्ध किमु विधिवशात्कोऽप्यविदितो
ममैतस्मिन्दृष्टे हृदयमवधान रचयति ॥ १६ ॥

---

कुमाराविति । कुमारौ = लवचन्द्रकेतू, प्रियदर्शन· = प्रियम् = अभीष्टम्, दर्शनम् = अवलोकनम्, यस्य स· ।

यदृच्छेति । एतस्मिन् दृष्टे यदृच्छासंवादः किमु, गुणगणानाम् अतिशयः किमु, जन्मान्तरनिविडबद्धः पुराण· परिचयो वा, विधिवशात् अविदित कोऽपि निज सम्बन्धो वा किमु, मम हृदयम् अवधानं रचयति इत्यन्वय । एतस्मिन्=लवे चन्द्रकेतौ वा, दृष्टे = अवलोकिते सति, यदृच्छासंवाद· किमु = यदृच्छया=दैवेन, संवाद = समागम·, किमु = किम् ?, गुणगणाना = शौर्यौदार्यादिगुणसमूहानाम्, अतिशय = उत्कर्ष, किमु = किम् ? जन्मान्तरनिविडबद्ध· = जन्मान्तरेषु= अन्येषु जन्मसु, निविडबद्ध· = दृढारूढ, पुराण· = प्राचीन, परिचयो वा = वासना किमु ? विधिवशात् = दैवेच्छाया, अविदित· = अज्ञात·, कोऽपि = प्रतिपादयितुमशक्य, निज· = आत्मीय, सम्बन्धो वा = भ्रातृत्वादिर्वा ? मम = लवस्य चन्द्रकेतोर्वा, हृदयं = चित्तम्, अवधानम् = एकाग्रता, रचयति = करोति । अस्य दर्शनाऽनन्तरं यन्मदीयं हृदयं प्रणयैकप्रवण जात तत्र हेतुरावयोः शुभक्षणे सम्मेलनकृद्दैवं, किं वा एतन्निष्ठशौर्यादिगुणोत्कर्षोऽथवा जन्मान्तरजात परिचय आहोस्विदपरिज्ञात कोऽपि भ्रातृत्वादिरूप सम्बन्धोऽस्तीति परिच्छेत्तु न प्रभवामीति भावः । अत्र पादत्रये शुद्धसदेहालङ्कारश्चतुर्थपादे च काव्यलिङ्गम्, इति तयोरङ्गाङ्गितया सङ्करः । शिखरिणी वृत्तम् ॥ १६ ॥

---

दोनों कुमार—( एक दूसरे को ) अहो! कुमार प्रियदर्शन हैं। ( स्नेह और अनुरागके साथ देखकर )

इनको देखने पर भाग्य-समागम, वा शौर्य आदि गुणोंका उत्कर्ष, अथवा जन्मान्तरीण दृढ आरूढ प्राचीन परिचय, किंवा भाग्यवश अज्ञात कोई निजी सम्बन्ध मेरे चित्तको एकाग्र कर रहा है ॥ १६ ॥

सुमन्त्र—भूयसां जीविनामेव धर्म एष', यत्र स्वरसमयी कस्यचित्क्वचित्प्रीतिः, यत्र लौकिकानामुपचारस्तारामैत्रक चक्षूराग इति । तदप्रतिसङ्ख्येयनिबन्धन प्रमाणमामनन्ति ।

अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया ।
स हि स्नेहात्मकस्तन्तुरन्तर्भूतानि सीव्यति ॥ १७ ॥

कुमारौ—( अन्योन्यमुद्दिश्य । )

---

सुमन्त्र इति । भूयसा = बहूना, जीविनामेव=प्राणिनामेव, धर्म = स्वभाव', स्वरसमयी = आत्मानन्दमयी, यत्र = यस्या प्रीतौ, उपचारः = परम्पराप्रवादः, तारामैत्रकं = तारयो' = कनीनिकयो , मैत्रकं = सख्यम् , चक्षूराग• = नेत्रप्रीति' । अप्रतिसङ्ख्येयनिबन्धनम् = अप्रतिसंख्येयम् = अविचारणीयम् , निबन्धन = मूलं, यस्य तत् , प्रमाण = यथार्थाऽनुभवविषयं, 'प्रेमाणं' इति पाठे प्रणयमित्यर्थः, एतत्पाठे सर्वनामशब्देऽपि तमिति निर्देशः कार्य , आमनन्ति = असकृद्वदन्ति, 'म्ना अभ्यासे' इति धातोर्लट् ।

अहेतुरिति । य अहेतुः पक्षपात', तस्य प्रतिक्रिया न अस्ति, हि स स्नेहात्मकः तन्तु' भूतानि अन्त' सीव्यति इत्यन्वयः । यः, अहेतु = निष्कारणकः, पक्षपात• = पक्षाश्रयण, तस्य = अहेतुकपक्षपातस्य, प्रतिक्रिया = प्रतिकार , निवर्तकव्यापार इति यावत् , न अस्ति = न सम्भवति, कृत्रिमस्यैव स्नेहस्य प्रतीकारः संभवति, न तु स्वाभाविकस्येति भाव• । तदेव प्रतिपादयति—स इति । हि = यतः, सः = अहेतुपक्षपात , स्नेहात्मक = प्रेममय', तन्तु' = सूत्र, भूतानि = प्राणिन , अन्तः = अभ्यन्तरे, 'अन्तर्मर्माणि' इति पाठे आभ्यन्तराणि सन्धिस्थानानीत्यर्थ• । सीव्यति = स्यूतानि करोति । तादृक्सूत्रप्रणयनाद्धे देहोच्छेदप्रसङ्ग इति भाव• । अत्रार्थान्तरन्यासरूपकयोरङ्गाङ्गिभावेन सङ्कर' ॥ ७ ॥

---

सुमन्त्र—बहुतेरे प्राणियोंका यह स्वभाव है, जिसमें किसीको किसीमें अपनी आनन्दमयी प्रीति होती है । जिसमें लौकिकोंका कहना है कि—तारामैत्रक ( आँखोंकी पुतलियोंकी मैत्री ) या चक्षूराग ( नेत्रोंकी प्रीति ) होता है । उस प्रेमको कारणका विचार नहीं किया जा सकनेवाला प्रमाणभूत ( यथार्थ ज्ञानका विषय ) मानते हैं ।

जो बिना कारणका पक्षपात है, उसका प्रतीकार नहीं है, क्योंकि वह प्रेममय सूत्र प्राणियोंको हृदयमें सी देता है ॥ १७ ॥

दोनों कुमार—( एक दूसरेको उद्देश्य करके )

एतस्मिन्मसृणितराजपट्टकान्ते मोक्तव्याः कथमिव सायकाः शरीरे ।
यत्प्राप्तौ मम परिरम्भणाभिलाषादुन्मीलत्पुलककदम्बमङ्गमास्ते ॥१८॥
किं चा*ऽऽक्रान्तकठोरतेजसि गतिः का नाम शस्त्रं विना ?
शस्त्रेणापि हि तेन किं न विषयो जायेत यस्येदृशः ।

---

एतस्मिन्निति । मसृणितराजपट्टकान्ते एतस्मिन् शरीरे सायकाः कथमिव मोक्तव्याः ? संप्राप्तौ परिरम्भणाऽभिलाषात् मम अङ्गम् उन्मीलत्पुलककदम्बम् आस्ते इत्यन्वयः । मसृणितराजपट्टकान्ते = मसृणित = मसृणः कृतः, संस्कारविशेषेण संघट्टित इत्यर्थः, यो राजपट्टः = राजकीयो वस्त्रविशेषः, स इव कान्तं = कमनीयम् , तस्मिन् , एतस्मिन् = अस्मिन् , शरीरे = देहे, सायकाः = बाणाः, कथमिव = केन प्रकारेण, मोक्तव्याः = मोक्तुं योग्याः ? एतादृशे देहे बाणप्रहारोऽनुचित इति भावः । यत्प्राप्तौ = यस्य = शरीरस्य, प्राप्तौ = आसादने सति, परिरम्भणाऽभिलाषात् = परिरम्भणस्य = आलिङ्गनस्य, अभिलाषात् = मनोरथात् , मम = मामकम् , अङ्गम् = देहावयवः, उन्मीलत्पुलककदम्बम् = उन्मीलत् = उद्यत् , पुलकानां = रोमाञ्चानाम् , कदम्बं = समूहः, यस्मिंस्तत् , आस्ते = विद्यते । 'मसृणितराजपट्टकान्त' इत्यत्र लुप्तोपमा वाक्यार्थहेतुकं काव्यलिङ्गं च, तथा च द्वयोरङ्गाङ्गिभावेन सङ्करः । प्रहर्षिणी वृत्तम् ॥ १८ ॥

किञ्चेति । किं च आक्रान्तकठोरतेजसि शस्त्रं विना का नाम गतिः, यस्य ईदृशो विषयो न जायेत, तेन शस्त्रेण अपि किम् ? आयुधे उद्यते अपि युद्धविमुखं माम् अयम् एव किं वक्ष्यति ? हि दारुणरसो वीराणां समयः स्नेहक्रमं बाधत इत्यन्वयः । किं च = अपरं च, पूर्वोक्तादन्यच्चेति भावः, आक्रान्तकठोरतेजसि = आक्रान्तं = प्राप्तम् , कठोरं = पूर्णम् , तेजः = वीर्यं येन तस्मिन् , एतादृशे विषये, शस्त्रं विना = आयुधप्रहारात् ऋते, का नाम गतिः=को नामोपायः ? एतादृशे महावीरे शस्त्रप्रहारमन्तरेण नाऽन्य उपाय इति भावः । यस्य = शस्त्रस्य,

---

मह्रीन राजकीय वस्त्रके सदृश सुन्दर इस शरीरपर बाणोंको कैसे छोड़ूँ ? जिसको पानेपर आलिङ्गनके अभिलाषसे मेरा अङ्ग रोमाञ्चोंसे युक्त हो रहा है ॥ १८ ॥

और कठोर तेजको प्राप्त किये हुए पुरुषमें शस्त्रके विना क्या उपाय है ? जिस शस्त्रको छोड़ने के लिए ऐसा पात्र न होगा (वीर नहीं मिलेगा) तो उस शस्त्रसे भी क्या काम ? शस्त्र

---

* 'किन्त्वा–' इति पाठान्तरम् ।

किं वक्ष्यत्ययमेव युद्धविमुखं मामुद्यतेऽप्यायुधे
वीराणां समयो हि दारुणरसः स्नेहक्रमं बाधते ॥ १९ ॥

सुमन्त्रः—( लवं निर्वर्ण्य साम्रमात्मगतम् । ) हृदय ! किमन्यथा परिप्लवसे ?

मनोरथस्य यद्बीजं तद्दैवेनादितो हृतम् ।

---

ईदृशः = एतादृशः, एतद्वीरसदृश इति भावः, विषयः = गोचरः, प्रयोगपात्रमिति भावः । न जायेत = न भवेत्, तेन = तादृशेन, शस्त्रेणापि = आयुधेनाऽपि, किं = किं प्रयोजनम् ? वीरपुरुषाऽलाभे शस्त्रस्याऽपि वैफल्यमेव प्रसज्येतेति भावः । आयुधे = शस्त्रे, उद्यतेऽपि=प्रहर्तुमुत्तोलितेऽपि, युद्धविमुखं=रणपराङ्मुखं, स्नेहादेतोरिति शेषः, मा=लवं चन्द्रकेतुं वा, अयम् एव = चन्द्रकेतुर्लव एव वा, किं वक्ष्यति= किं कथयिष्यति ? मदीयं भीरुत्वमेव सम्भावयिष्यति न तु प्रणयप्रवणत्वमिति भावः । हि = यतः, दारुणरसः = दारुणः = कठोरः, रसः = वीररसः, यस्मिन् सः, एतादृशो वीराणां = शूराणाम्, समयः = आचारः, 'समयाः शपथाचारकालसिद्धान्तसंविदः ।' इत्यमरः, स्नेहक्रमं = प्रणयव्यापारपरिपाटीम्, बाधते = निवर्तयति, त्यक्त्वा प्रणयबन्धनं केनाऽपि प्रकारेण सग्राम एव कर्तव्य इति भावः । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥१९॥

सुमन्त्र इति । अन्यथा=सभाव्यविषयाऽनुसारेण, न तु निश्चयात्मकविषयाऽनुसारेणेति भावः, परिप्लवसे = चपलीभवसि ? रामसादृश्यात्तदपत्यं लव इति किं शङ्कस इति भावः, 'परिकल्पसे' इति पाठे तर्कयसीत्यर्थः ।

मनोरथस्येति । मनोरथस्य यत् बीजं, तत् दैवेन आदितो हृतम् । लतायां पूर्वलूनायां प्रसवस्य कुत उद्भवः ? इत्यन्वयः । मनोरथस्य = 'अयं लवो रामतनयो भविष्यति' इत्यभिलाषस्य, यत्, बीजं = सीतारूपं कारणं, तत् = कारणं, दैवेन = भाग्येन, आदितः = पूर्वमेव, हृतम् = अपहृतं, गर्भिण्यवस्थायामेव हिंस्रश्वापदस-

---

उठानेपर भी युद्धसे पराङ्मुख होनेवाले मुझको ये ही क्या कहेंगे ? क्योंकि वीररससे सम्पन्न वीर पुरुषोंका आचार प्रेमके क्रमको रोक देता है ॥ १९ ॥

सुमन्त्र—( लवको देखकर, आँखोंमें आँसू भरकर मन ही मन ) हृदय ! तू क्यों अन्यथा ( असम्भाव्य विषयके अनुसार ) चञ्चल हो रहा है ?

मनोरथका जो कारण था, उसको भाग्यने पहले ही हरण कर लिया, पहले ही काटी गई

लतायां पूर्वलूनाया प्रसवस्योद्भवः कुतः ? ॥ २० ॥

चन्द्रकेतु—अवतराम्यार्य सुमन्त्र ! स्यन्दनात् ।

सुमन्त्र—कस्य हेतोः ?

चन्द्रकेतु—एकस्तावदय वीरपुरुषः पूजितो भवति । अपि च खल्वार्य ! क्षत्रधर्मः परिपालितो भवति । 'न रथिनः पादचारमभियुञ्जन्ती'ति शास्त्रविदः परिभाषन्ते ।

सुमन्त्रः—( स्वगतम् । ) आः, कष्टां दशामनुप्रपन्नोऽस्मि ।

कथं हीदमनुष्ठानं मादृशः प्रतिषेधतु ।

---

कुले विजने वने सीतायास्त्यागात् तस्या नाशस्यैव सभाव्यमानत्वाद्याऽय लवो रामतनयो भवेदिति भाव । अत्र दृष्टान्त —लताया = व्रतती, पूर्वलूनाया = प्रागेव छिन्नाया सत्या, प्रसवस्य=पुष्पस्य, कुत =कथम्, उद्भव=उत्पत्ति ? यथा प्रागेव छिन्नाया लताया कुसुमस्योत्पत्तिर्न संभाव्यते, तथैव प्रसवात्प्रागेव हिंस्रश्वापदसङ्कुले वने त्यक्ताया सीताया लवरूपाऽपत्योत्पत्तिर्न संभाव्यत इति भाव । अत्र दृष्टान्तालङ्कार ॥ २० ॥

चन्द्रकेतुरिति । स्यन्दनात् = रथात् ।

सुमन्त्र इति । कस्य हेतो = अत्र 'षष्ठी हेतुप्रयोगे' इति षष्ठी ।

चन्द्रकेतुरिति । वीरपुरुष = लवः, पूजित = सत्कृत । परिपालित = अनुष्ठित । रथिन = रथारूढा, पादचारं = पदातिं, न अभियुञ्जन्ति = न युध्यन्ति, शास्त्रविद = मनुप्रभृतयो धर्मशास्त्रप्रवर्तका, 'न च हन्यात्स्थलारूढ न क्लीबं न कृताञ्जलिम् ।' इति स्मरणादिति भाव ।

सुमन्त्र इति । कष्टा = दुःखमयीं, दशाम् = अवस्थाम्, अनुप्रपन्न=प्राप्त ।

कथमिति । हि मादृश इदम् अनुष्ठानं कथं प्रतिषेधतु, साहसैकरसा

---

लतामें फूलकी कैसे उत्पत्ति होगी ? ॥ २० ॥

चन्द्रकेतु—आर्य सुमन्त्र ! मैं रथसे उतरता हू ।

सुमन्त्र—किस कारणसे ?

चन्द्रकेतु—एक तो इन वीर पुरुषका सत्कार होता है और आर्य ! क्षत्रिय-धर्मका परिपालन होता है । 'रथारूढ पैदलसे नहीं लड़ते हैं' शास्त्रवेत्तालोग ऐसा कहते हैं ।

सुमन्त्र—( मन ही मन ) ओह ! कष्टजनक अवस्थाको प्राप्त हुआ हू । क्योंकि—

मेरे ऐसा पुरुष इस अनुष्ठान ( योग्य कार्य ) का कैसे निवारण करे ? और एकमात्र

कथं वाऽभ्यनुजानातु साहसैकरसां क्रियाम् ॥ २१ ॥

चन्द्रकेतुः—यदा तातमिश्रा अपि पितुः प्रियसखं त्वामर्थसंशयेषु पृच्छन्ति, तत्किमार्यो विमृशति ?

सुमन्त्रः—आयुष्मन् ! एवं यथाधर्ममभिमन्यसे ।

एष सांग्रामिको न्याय एष धर्मः सनातनः ।
इयं हि रघुसिंहानां वीरचारित्रपद्धतिः ॥ २२ ॥

---

क्रियां कथं वा अभ्यनुजानातु इत्यन्वयः । हि = यतः, मादृशाः=मत्सदृशाः, वीराचाराऽभिज्ञ इति भावः । इदं = रथादवतरणरूपं, 'न्याय्य' मिति पुस्तकान्तरपाठस्तत्र = न्यायादनपेतं, समुचितमित्यर्थः, 'धर्मपथ्यर्थन्यायादनपेते' इति यत्, अनुष्ठानम् = आचरणं, कथं = केन प्रकारेण, प्रतिषेधतु=निवारयतु ? निवारणाऽभावे तु साहसैकरसां = साहसम् = सहसा प्रवृत्तिः, एव एकः=मुख्यः, रसः = रागः, यस्याः तां, 'श्रृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः ।' इत्यमरः, एतादृशीं क्रियां = कार्यं, कथं वा = केन प्रकारेण वा, अभ्यनुजानातु = अनुज्ञां ददातु ? अत उभयतः पाशारज्जुन्यायेन कष्टां दशामनुप्रपन्नोऽस्मीति भावः ॥ २१ ॥

चन्द्रकेतुरिति । तातमिश्राः = पूज्यपितरो रामादय इति भावः, पितुः = जनकस्य, दशरथस्येत्यर्थः, प्रियसखं = प्रियमित्रं, 'राजाऽहःसखिभ्यष्टच्' इति समासाऽन्तष्टच्, अर्थसंशयेषु = कर्तव्याऽकर्तव्यसन्देहेषु, आर्यः = पूज्यः, विमृशति = विचारयति । न्याय्ये कर्मणि प्रवर्तनायां विमर्शस्याऽनावश्यकत्वादिति भावः ।

सुमन्त्र इति । एवं=रथादवतरणं, यथाधर्मं=क्षत्रधर्माऽनतिक्रमेणेति भावः ।

एष इति । एष साम्रामिकः न्यायः, एष सनातनो धर्मः, हि इयं रघुसिंहानां वीरचारित्रपद्धतिः इत्यन्वयः । एषः = वीरपूजारूप आचारः, सांग्रामिकः = संग्रामे भवः, 'तत्र भवः' इति ठञ्, न्यायः = समुचितो नियम इति भावः । एषः = वीरपूजारूपो व्यवहारः, सनातनः = चिरन्तनः, धर्मः = आचारः । हि = यतः, इयं = त्वदाचरिता कृतिः, रघुसिंहानां = रघुवंश्यानां श्रेष्ठभूपालानां,

---

साहसमें अनुराग करनेवाले ऐसे कामकी भी कैसे अनुमति दें ? ॥ २१ ॥

चन्द्रकेतु—जब कि पूजनीय पिता लोग (राम लक्ष्मण आदि) भी अपने पिता (दशरथ) के प्रिय मित्र आपको कार्य-संशयोंमें पूछते हैं, तब क्यों आप विचार कर रहे हैं ?

सुमन्त्र—चिरञ्जीव ! आप इस तरह धर्मके अनुसार कर्तव्यको जानते हैं ? ।

संग्रामके अवसरमें उत्पन्न यह (वीरसत्कार) न्याययुक्त है, यह सनातन धर्म है, क्योंकि यह रघुवंशके वीरोंकी आचारपद्धति है ॥ २२ ॥

लतायां पूर्वलूनायां प्रसवस्योद्भवः कुतः ? ॥ २० ॥

चन्द्रकेतुः—अवतराम्यार्य सुमन्त्र ! स्यन्दनात् ।

सुमन्त्रः—कस्य हेतोः ?

चन्द्रकेतुः—एकस्तावदय वीरपुरुषः पूजितो भवति । अपि च खल्वार्य ! क्षत्रधर्मः परिपालितो भवति । 'न रथिनः पादचारमभियुञ्जन्ती'ति शास्त्रविदः परिभाषन्ते ।

सुमन्त्रः—( स्वगतम् । ) आः, कष्टां दशामनुप्रपन्नोऽस्मि ।

कथं हीदमनुष्ठानं मादृशः प्रतिषेधतु ।

---

कुले विजने वने सीतायास्त्यागात् तस्या नाशस्यैव सम्भाव्यमानत्वाद्‌अयं लवो रामतनयो भवेदिति भावः । अत्र दृष्टान्तः—लतायाः = व्रततौ, पूर्वलूनायां = प्रागेव छिन्नायां सत्यां, प्रसवस्य=पुष्पस्य, कुतः=कथम्, उद्भवः=उत्पत्तिः ? यथा प्रागेव छिन्नाया लताया कुसुमस्योत्पत्तिर्न सम्भाव्यते, तथैव प्रसवात्प्रागेव हिंस्रश्वापदसङ्कुले वने त्यक्तायाः सीताया लवरूपाऽपत्योत्पत्तिर्न संभाव्यत इति भावः । अत्र दृष्टान्तालङ्कारः ॥ २० ॥

चन्द्रकेतुरिति । स्यन्दनात् = रथात् ।

सुमन्त्र इति । कस्य हेतोः = अत्र 'षष्ठी हेतुप्रयोगे' इति षष्ठी ।

चन्द्रकेतुरिति । वीरपुरुषः = लवः, पूजितः = सत्कृतः । परिपालितः = अनुष्ठितः । रथिनः = रथारूढाः, पादचारं = पदातिं, न अभियुञ्जन्ति = न युध्यन्ति, शास्त्रविदः = मनुप्रभृतयो धर्मशास्त्रप्रवर्तकाः, 'न च हन्यात्स्थलारूढं न क्लीबं न कृताऽञ्जलिम् ।' इति स्मरणादिति भावः ।

सुमन्त्र इति । कष्टां = दुःखमयीं, दशाम् = अवस्थाम्, अनुप्रपन्नः=प्राप्तः ।

कथमिति । हि मादृशः इदम् अनुष्ठानं कथं प्रतिषेधतु, साहसैकरसा

---

लतामें फूलकी कैसे उत्पत्ति होगी ? ॥ २० ॥

चन्द्रकेतु—आर्य सुमन्त्र ! मैं रथसे उतरता हूं ।

सुमन्त्र—किस कारणसे ?

चन्द्रकेतु—एक तो इन वीर पुरुषका सत्कार होता है और आर्य ! क्षत्रिय-धर्मका परिपालन होता है । 'रथारूढ पैदलसे नहीं लड़ते हैं' शास्त्रवेत्तालोग ऐसा कहते हैं ।

सुमन्त्र—( मन ही मन ) ओह ! कष्टजनक अवस्थाको प्राप्त हुआ हूं । क्योंकि—

मेरे ऐसा पुरुष इस अनुष्ठान ( योग्य कार्य ) का कैसे निवारण करे ? और एकमात्र

कथं वाऽभ्यनुजानातु साहसैकरसा क्रियाम् ॥ २१ ॥

चन्द्रकेतुः—यदा तातमिश्रा अपि पितुः प्रियसखं त्वामर्थसंशयेषु पृच्छन्ति, तत्किमार्यो विमृशति ?

सुमन्त्रः—आयुष्मन् ! एवं यथाधर्ममभिमन्यसे ।

एष सांग्रामिको न्याय एष धर्मः सनातनः ।
इयं हि रघुसिंहानां वीरचारित्रपद्धतिः ॥ २२ ॥

---

क्रिया कथं वा अभ्यनुजानातु इत्यन्वयः । हि = यतः, मादृशः=मत्सदृशः, वीराचाराऽभिज्ञ इति भावः । इदं = रथादवतरणरूपं, 'न्याय्य' मिति पुस्तकान्तरपाठस्तत्र = न्यायादनपेतं, समुचितमित्यर्थः, 'धर्मपथ्यर्थन्यायादनपेते' इति यत्, अनुष्ठानम् = आचरणं, कथं = केन प्रकारेण, प्रतिषेधतु=निवारयतु ? निवारणाऽभावे तु साहसैकरसा = साहसम् = सहसा प्रवृत्तिः, एव एकः =मुख्यः, रसः = रागः, यस्याः सा, 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः ।' इत्यमरः, एतादृशीं क्रियां = कार्यं, कथं वा = केन प्रकारेण वा, अभ्यनुजानातु = अनुज्ञां ददातु ? अत उभयतः पाशारज्जुन्यायेन कष्टां दशामनुप्रपन्नोऽस्मीति भावः ॥ २१ ॥

चन्द्रकेतुरिति । तातमिश्राः = पूज्यपितरो रामादय इति भावः, पितुः = जनकस्य, दशरथस्येत्यर्थः, प्रियसखं = प्रियमित्रं, 'राजाऽहःसखिभ्यष्टच्' इति समासान्तष्टच्, अर्थसंशयेषु = कर्तव्याऽकर्तव्यसन्देहेषु, आर्यः = पूज्यः, विमृशति = विचारयति । न्याय्ये कर्मणि प्रवर्तनाया विमर्शस्याऽनावश्यकत्वादिति भावः ।

सुमन्त्र इति । एवं=रथादवतरणं, यथाधर्मं=क्षत्रधर्माऽनतिक्रमेणेति भावः ।

एष इति । एष साङ्ग्रामिकः न्यायः, एष सनातनो धर्मः, हि इयं रघुसिंहानां वीरचारित्रपद्धतिः इत्यन्वयः । एष = वीरपूजारूप आचारः, साङ्ग्रामिकः = संग्रामे भवः, 'तत्र भव' इति ठञ्, न्यायः = समुचितो नियम इति भावः । एषः =वीरपूजारूपो व्यवहारः, सनातनः = चिरन्तनः, धर्मः = आचारः । हि = यतः, इयं = त्वदाचरिता रीतिः, रघुसिंहानां = रघुवंश्यानां श्रेष्ठभूपालानां,

---

साहसमें अनुराग करनेवाले ऐसे कामको भी कैसे अनुमति दे ? ॥ २१ ॥

चन्द्रकेतु—जब कि पूजनीय पिता लोग (राम लक्ष्मण आदि) भी अपने पिता (दशरथ) के प्रिय मित्र आपको कार्य-सन्देहोंमें पूछते हैं, तब क्यों आप विचार कर रहे हैं ?

सुमन्त्र—चिरञ्जीव ! आप इस तरह धर्मके अनुसार ही ठीक जानते हैं ।

संग्रामके अवसरमें उचित यह (शिष्टाचार) न्याययुक्त है, यह सनातन धर्म है, क्योंकि यह रघुवंशके वीरोंका आचारपद्धति है ॥ २२ ॥

चन्द्रकेतुः—अप्रतिरूप वचनमार्यस्य ।

इतिहास पुराणं च धर्मप्रवचनानि च ।
भवन्त एव जानन्ति रघूणा च कुलस्थितिम् ॥ २३ ॥

सुमन्त्रः—( सस्नेहास्र परिष्वज्य । )

जातस्य ते पितुरपीन्द्रजितो निहन्तु-
र्वत्सस्य वत्स ! कति नाम दिनान्यमूनि ।

---

वीरचारित्रपद्धति = वीरव्यापारपरिपाटी, तव पूर्वजा अप्येतादृशमेवाचारमन्वपाल- यन्निति भाव ॥ २२ ॥

चन्द्रकेतुरिति । अप्रतिरूपं = निरुपममिति भाव., 'प्रतिरूपम्' इति पाठे—अनुरूप, योग्यमिति भाव. ।

इतिहासमिति । भवन्त एव इतिहास पुराण धर्मप्रवचनानि रघूणा कुल- स्थिति च जानन्ति इत्यन्वय । भवन्त एव = आर्या एव, नाऽन्ये इति भाव., इतिहासं = पुरावृत्त, पुराण = पञ्चलक्षण, ब्राह्मादिकमिति भावः, धर्मप्रवचनानि = धर्माः = नित्यनैमित्तिकादय , प्रोच्यन्ते = प्रकाश्यन्ते एभिस्तानि, मन्वादीनि धर्म- शास्त्राणीत्यर्थ , 'करणाऽधिकरणयोश्च' इति करणे ल्युट् । रघूणा = रघुवंशो- द्भवाना राज्ञा, कुलस्थितिं च = वंशमर्यादा च, जानन्ति = विदन्ति, अत एव भवदीय वचनमप्रतिरूपमिति भाव । अत्रैकस्या ज्ञानरूपक्रियायामितिहासादीना पदार्थाना सम्बन्धेन तुल्ययोगिताऽलङ्कार ॥ २३ ॥

सुमन्त्र इति । सस्नेहास्र = स्नेहेन = प्रेम्णा, अस्रेण = आनन्दाश्रुणा च सहित यथा तथेति क्रियाविशेषणं, परिष्वज्य = आलिङ्ग्य ।

जातस्येति । हे वत्स ! इन्द्रजित निहन्तु. वत्सस्य ते पितुरपि जातस्य अमूनि कति नाम दिनानि ? तस्य अपत्यमपि वीरधर्मम् अनुतिष्ठति, दिष्ट्या दश- रथस्य कुलं प्रतिष्ठाम् आगतम् इत्यन्वय । हे वत्स = हे चन्द्रकेतो ! इन्द्रजित.= रावणपुत्रस्य मेघनादस्य, 'कर्तृकर्मणो. कृति' इति कर्मणि षष्ठी, निहन्तुः = नाशकस्य, वत्सस्य = वात्सल्यभाजनस्य, ते = तव, पितुरपि = जनकस्याऽपि,

---

चन्द्रकेतु—आपका वचन अनुपम ( बेजोड ) है ।

आपही इतिहास, पुराण, धर्मशास्त्र और रघुवशके राजाओंकी वशमर्यादा भी जानते हैं ॥२३॥

सुमन्त्र—( स्नेहके साथ आनन्दाश्रुको गिराकर और आलिङ्गन कर )

हे वत्स ! इन्द्रजितको मारनेवाले वात्सल्यभाजन आपके पिता लक्ष्मणकी भी उत्पत्तिके

तस्याप्यपत्यमनुतिष्ठति वीरधर्मं
दिष्ट्यागत * दशरथस्य कुल प्रतिष्ठाम् ॥ २४ ॥

चन्द्रकेतु.—( सकष्टम् । )

'अप्रतिष्ठे कुलज्येष्ठे का प्रतिष्ठा कुलस्य नः' ।
इति दुःखेन तप्यन्ते त्रयो नः पितरोऽपरे ॥ २५ ॥

---

लक्ष्मणस्याऽपीति भाव , जातस्य = उत्पन्नस्य सत , अमूनि = अतिक्रान्तानि, कति नाम = कियन्ति नाम, दिनानि = वासराः ? जातस्य त्वत्पितुरपि वर्धमान मत्पुरतो नाऽधिकमिति भावः । तस्य = तादृशस्य, मदपेक्षयाऽल्पवयसो लक्ष्मणस्येति भावः, अपत्यमपि=त्वद्रूप पुत्रोऽपि, वीरधर्मं=शूराचारम् , 'वीरवृत्तम्' इति पाठे शूरचरित्रमित्यर्थः, 'वृत्तं पद्ये चरित्रे चे'त्यमरः, अनुतिष्ठति=करोति, 'अनुगच्छति' इति पाठे-अनुसरतीत्यर्थः, अतो दिष्ट्या = भाग्येन, दशरथस्य = त्वत्पितामहस्य, कुल = वंशः, प्रतिष्ठा = वंशस्थिति माहात्म्यं वा, 'प्रतिष्ठा स्थितिमाहात्म्ये' इति यादव', आगत = प्राप्तम् । अत्र वाक्यार्थहेतुक काव्यलिङ्गमलङ्कारः । वसन्ततिलका वृत्तम् ॥ २४ ॥

अप्रतिष्ठ इति । 'कुलज्येष्ठे अप्रतिष्ठे ( सति ) न' कुलस्य का प्रतिष्ठा ?' इति दु.खेन न अपरे त्रय पितरः तप्यन्ते इत्यन्वयः । कुलज्येष्ठे=वंशश्रेष्ठे, ज्येष्ठे भ्रातरि राम इति भाव', अप्रतिष्ठे = प्रतिष्ठारहिते सति, सन्तानाऽभावेनेति भाव', न. = अस्माकं, कुलस्य = वंशस्य, का प्रतिष्ठा = का स्थिति ? इति = ईदृशेन, दु.खेन=कष्टेन, न = अस्माकम् , अपरे = अन्ये, त्रयः = त्रिसंख्यका', पितरः = ताताः, भरतलक्ष्मणशत्रुघ्ना इति भाव', तप्यन्ते = तापमनुभवन्ति । कुलश्रेष्ठस्य ज्येष्ठभ्रातुः पुत्राभावेन भरतलक्ष्मणशत्रुघ्नाः स्वपुत्राणा सत्वेऽपि न नन्दन्तीति भावः, अत्र करुणो रस ॥ २५ ॥

---

ये कितने दिन हुए हैं ? उनके पुत्र ( आप ) भी वीरधर्मका अनुष्ठान कर रहे हैं, भाग्यसे दशरथका वश प्रतिष्ठासे प्राप्त हो गया है ॥ २४ ॥

चन्द्रकेतु—( कष्टके साथ )

'कुलमें ज्येष्ठ रामचन्द्रजीके सन्तानहीन होनेपर हमारे कुलकी क्या प्रतिष्ठा है ?' इस दुःखसे हमारे और तीन पिता ( भरत, लक्ष्मण और शत्रुघ्न ) तापका अनुभव करते हैं ॥२५॥

---

* 'दिष्ट्या गतम्' इति पाठान्तरम् ।

सुमन्त्रः—हृदयमर्मदारणान्येव चन्द्रकेतोर्वचनानि ।

लवः—हन्त ! मिश्रीकृतक्रमो रसो वर्तते ।

यथेन्दावानन्दं व्रजति समुपोढे कुमुदिनी
तथैवास्मिन्दृष्टिर्मम, कलहकामः पुनरयम् ।
रणत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनु-
र्धृतप्रेमा बाहुर्विकचविकरालव्रणमुखः ॥ २६ ॥

---

सुमन्त्र इति । हृदयमर्मदारणानि = हृदयमर्मणाम् = हृदयसन्धिस्थानानाम्, दारणानि = छेदकानि, अतिशयदुःखोत्पादकानीति भावः ।

लव इति । हन्तेति हर्षद्योतकमव्ययम्, रसः = अनुरागः, मिश्रीकृतक्रमः = मिश्रीकृत = संयोजितः, वीररसेनेति शेषः, क्रमः = परिपाटी यस्य सः । तदेव प्रतिपादयति—

यथेति । इन्दौ समुपोढे कुमुदिनी यथा आनन्दं व्रजति, तथा एव अस्मिन् मम दृष्टिः ( आनन्दं व्रजति ) । रणत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनुर्धृतप्रेमा विकचविकरालव्रणमुखः अयं ( मम ) बाहुः पुनः कलहकामः इत्यन्वयः । इन्दौ = चन्द्रे, समुपोढे = उदिते सति, कुमुदिनी = कुमुद्वती, यथा = येन प्रकारेण, आनन्दं = विकासं, व्रजति = प्राप्नोति, तथा एव=तेन प्रकारेण एव, अस्मिन् = चन्द्रकेतौ, मम = लवस्य, दृष्टिः = नेत्रम्, आनन्दं = प्रफुल्लता, व्रजति = प्राप्नोति । रणत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनुर्धृतप्रेमा = रणत्कारेण = रणदितिशब्देन, क्रूरं=भयङ्करं यथा तथा, क्वणितम् = शब्दं कुर्वत्, गुरु=महत्, यत् धनुः=कार्मुकम्, तस्मिन् धृतं = बद्धम्, प्रेम = प्रणयः, येन सः, तथा विकचविकरालव्रणमुखः = विकचानि = विस्तृतानि, विकरालानि = अतिशयविशालानि, व्रणानि = क्षतचिह्नानि, मुखे = अग्रे, यस्य सः, एतादृशः, अयम् = एषः, मम = लवस्य, बाहुः पुनः = भुजस्तु, कलहकामः = युद्धाकाङ्क्षी, भवतीति शेषः, 'व्रणमुखः' इत्यत्र 'उल्बणरसः' इति पाठस्तत्र—उल्वणः = अत्युद्धतः, रसः = वीररसः,

---

सुमन्त्र—चन्द्रकेतुके वचन हृदयके मर्मस्थलोंको विदारण करनेवाले ही हैं ।

लव—वाह ! वीर रससे मिश्रित स्थितिसे युक्त रस हो रहा है ।

चन्द्रके उदित होनेपर कुमुदिनी जिस तरह विकासको प्राप्त होती है, उसी तरह इनमें मेरी दृष्टि भी प्रफुल्लताको प्राप्त होती है । 'रणत्' ऐसे शब्दसे भयङ्कर करनेवाली मौर्वीसे गूँजते हुए बड़े धनुषमें प्रेम करनेवाला और अग्रभागमें विस्तृत तथा अतिशय विशाल घावके चिह्नोंसे युक्त यह मेरा बाहु फिर युद्ध करनेकी इच्छा रखता है ॥ २६ ॥

चन्द्रकेतुः—( अवतरणं निरूपयन् । ) आर्य ! अयमसावैक्ष्वाकश्चन्द्रकेतुरभिवादयते ।

सुमन्त्रः—अहितस्यैव पुनः पराभवाय महानादिवराहः कल्पताम् । अपि च ।

देवस्त्वां सविता धिनोतु समरे गोत्रस्य यस्ते पति-

---

यस्य स इत्यर्थः । अत्र पूर्वार्द्धे रत्याख्यः स्थायिभावः, प्रसादो गुणः, कैशिकी रीतिः, उत्तरार्द्धे तु वीरो रस ओजोगुण आरभटी रीतिरिति मिश्रितो रस इति ज्ञेयम् । अत्र विरूपयोः रागोत्साहयो सङ्घटनया विषमालङ्कारस्योपमायाश्च सङ्करः । शिखरिणी वृत्तम् ॥ २६ ॥

चन्द्रकेतुरिति । ऐक्ष्वाकः = इक्ष्वाकुवंशोत्पन्नः, 'सावित्र' इति पाठे सूर्यवंशोत्पन्न इत्यर्थः ।

सुमन्त्र इति । अहितस्यैव = शत्रोरेव, पराभवाय = अवमानाय, 'क्लृपि संपद्यमाने च' इति चतुर्थी । आदिवराह एव = पृथ्व्या उद्धर्ता वराहरूपेणाऽवतीर्णो भगवान् एव, कल्पताम् = आविर्भवतु । पुस्तकान्तरे तु एतत्स्थाने—

'अजितं पुण्यमूर्जस्वि ककुत्स्थस्येव ते महः ।
श्रेयसे शाश्वतो देवो वराहः परिकल्पताम् ॥'

इति पाठस्तत्र—शाश्वतो देवो वराहः ते श्रेयसे ककुत्स्थस्य इव अजितं पुण्यम् ऊर्जस्वि महः परिकल्पताम् इत्यन्वयः । शाश्वतः=सनातनः, देवः = द्योतनशीलः, वराहः = वराहरूपेणाऽवतीर्णो भगवान्विष्णुः, ते = तव, श्रेयसे=कल्याणाय, 'तादर्थ्ये चतुर्थी वाच्या' इति चतुर्थी, ककुत्स्थस्य इव = पुरञ्जयस्य इव, अजितम्= अनभिभूतम् , अन्यैरिति शेषः , पुण्यं = पवित्रम् , ऊर्जस्वि = बलयुक्तं, महः = तेजः, परिकल्पताम् = विधत्ताम् । अत्रोपमाऽलङ्कारः । पुरा पुरञ्जयाख्य इक्ष्वाकुवंश्यो राजा वृषभरूपधारिण इन्द्रस्य स्कन्ध समारुह्य भगवतो विष्णोस्तेजसा देवारीन्दैत्याञ्जित्वा 'ककुत्स्थ' इति नाम लेभ इति रामायणीया कथाऽनुसन्धेया ॥

देव इति । देवः सविता समरे त्वा धिनोतु, यः ते गोत्रस्य पतिः, मैत्रा-

---

चन्द्रकेतु—( उतरनेका अभिनय करते हुए ) आर्य ! इक्ष्वाकु वंशमें उत्पन्न यह चन्द्रकेतु आपको अभिवादन करता है ।

सुमन्त्र—शत्रुके पराभवके लिए महान् आदि वराह फिर आविर्भूत हों । और भी—भगवान् सूर्य समरमें आपको प्रसन्न करें, जो आपके वंशके प्रवर्तक हैं । वसिष्ठजी

त्वां मैत्रावरुणोऽभिनन्दतु गुरुर्यस्ते गुरूणामपि ।
ऐन्द्रावैष्णवमाग्निमारुतमथो सौपर्णमोजोऽस्तु ते
देयादेव च रामलक्ष्मणधनुर्ज्याघोषमन्त्रो जयम् ॥ २७ ॥

लवः—अतीव नाम शोभते रथस्थ एव । कृतं कृतमत्यादरेण ।

---

वरुण त्वाम् अभिनन्दतु, य॰ ते गुरूणाम् अपि गुरु॰, अथो ऐन्द्रावैष्णवम् आग्निमारुत सौपर्णम् ओज॰ ते अस्तु, रामलक्ष्मणधनुर्ज्याघोषमन्त्र॰ जयं देयात् एव इत्यन्वयः । देव॰ = द्योतमान॰, सविता = सूर्य॰, समरे = सङ्ग्रामे, त्वा = चन्द्रकेतुं, धिनोतु = प्रीणयतु, 'धिवि प्रीणन' इति धातोर्लोट्, य॰ = सूर्यः, ते = तव, गोत्रस्य = वंशस्य, पति॰ = स्वामी, प्रवर्तकत्वेनेति भाव॰ । मैत्रावरुण॰ = वसिष्ठ॰ त्वा = चन्द्रकेतुम्, अभिनन्दतु = प्रशंसतु, य = मैत्रावरुण॰, ते=तव, गुरूणाम् अपि = मातापित्रादिपूज्यजनानाम् अपि, गुरुः = आचार्य॰, वर्तत इति शेष॰ । अथो = अनन्तरम्, ऐन्द्रावैष्णवम् = इन्द्रश्च विष्णुश्च इन्द्राविष्णू, 'देवता द्वन्द्वे च' इत्यानङ्, इन्द्राविष्ण्वोरिदम्, इन्द्रस्य विष्णोश्चेत्यर्थ॰ । आग्निमारुतम् = अग्निश्च मरुच्च अग्नामरुतौ, 'देवताद्वन्द्वे च' इत्यानङ् अग्नामरुतोरिदमिति आग्निमारुतम्, अण्प्रत्यय॰, 'इद्वृद्धौ' इति इत् 'देवता द्वन्द्वे च' इत्युभयपदवृद्धिः, अग्नेर्मरुतश्चेत्यर्थ॰ । सौपर्णं = सुपर्णस्य इदम्, गरुड॰सम्बन्धि चेत्यर्थः, एतादृशम् ओज =पराक्रम, ते=तव, अस्तु=भवतु । रामलक्ष्मण धनुर्ज्याघोषमन्त्र =रामलक्ष्मणयोर्धनुषः=कार्मुकस्य, ज्याया =मौर्व्या, घोष॰=शब्दः, स एव मन्त्र॰, जयं = विजय, देयात् एव=दत्तात् एव, 'एर्लिङि' इत्येत्त्वम् । अत्र असम्भवद्वस्तुसम्बन्धरूपो निदर्शनालङ्कार॰ रूपकं च' तथा च द्वयोर्मिथोऽनपेक्षया स्थितेः संसृष्टिः । शार्दूलविक्रीडित वृत्तम् ॥ २७ ॥

लव इति । अतीव = अत्यर्थम्, शोभसे = शोभितो भवसि । अत्यादरेण = अतिशयसंमानेन, कृतं कृतम् = अलम् अलम्, अत्यादरस्य प्रयोजनं नाऽस्तीत्यर्थः,

---

आपका अभिनन्दन करें, जो आपके माता-पिता आदि गुरुओंके भी गुरु हैं ।इन्द्र और विष्णु का, अग्नि और वायुका एवम् गरुडका तेज आपको प्राप्त हो, राम और लक्ष्मणके धनुषके मौर्वीका शब्द ( टङ्कार ) रूप मन्त्र निश्चय आपको जय दे ॥ २७ ॥

लव—आप रथमें रहते हुए ही अत्यधिक शोभित हो रहे हैं। बहुत समान करनेकी आवश्यकता नहीं है ।

चन्द्रकेतुः—तर्हि महाभागोऽप्यन्यं रथमलङ्करोतु ।

लवः—आर्य ! प्रत्यारोपय रथोपरि राजपुत्रम् ।

सुमन्त्रः—त्वमप्यनुरुध्यस्व वत्सस्य चन्द्रकेतोर्वचनम् ।

लवः—को विचारः स्वेषूपकरणेषु ? किं त्वरण्यसदो वयमनभ्यस्तरथचर्याः ।

सुमन्त्रः-जानासि वत्स ! दर्पसौजन्ययोर्यदाचरितम् । यदि पुनस्त्वामीदृशमैक्ष्वाको राजा रामभद्रः पश्येत्तदायमस्य स्नेहेन हृदयमभिष्यन्दयेत्* ।

गम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजिका' इति करणत्वात् तृतीया, रथादवतरणं न कार्यमिति भावः ।

चन्द्रकेतुरिति । तर्हि = यदि मम रथादवतरणमनिष्टं तदेति भावः, महाभागः = महान् = श्रेष्ठः, भागः = भाग्यम् , यस्य सः, भवानपीति भावः, अलङ्करोतु = उपवेशनेन भूषयतु ।

लव इति । आर्य = पूज्य ! सुमन्त्रं प्रत्युक्तिरियम् , राजपुत्र = राजकुमारं, चन्द्रकेतुमित्यर्थः, प्रत्यारोपय = आरोपय ।

सुमन्त्र इति । अनुरुध्यस्व = अनुसर, रथान्तरारोहणेन चन्द्रकेतुवचनं स्वीकुर्विति भावः ।

लव इति । स्वेषु = स्वीयेषु, आत्मीयेष्विति भावः, उपकरणेषु = रथाद्युपयोगिपदार्थेष्विति तात्पर्यम् , अरण्यसदः = अरण्ये सीदन्तीति, 'सत्सूद्विषे' त्यादिना क्विप् , वनवासिन इत्यर्थः, अनभ्यस्तरथचर्याः=अनभ्यस्ता=अशिक्षिता, रथचर्या= रथचरणव्यवहारः, यैस्ते, अत एव स्थलस्थेनैव मया युद्धं कर्तुं पार्यत इति भावः ।

सुमन्त्र इति । दर्पसौजन्ययोः = अभिमानविनययोः, यत् आचरितम् = आचारः, तत् = आचरितमिति शेषः, जानासि = वेत्सि, त्वया रथप्रत्याख्या-

चन्द्रकेतु—तब आप भी दूसरे रथको अलङ्कृत करें ।

लव—आर्य ! राजकुमारको रथपर चढ़ाइए ।

सुमन्त्र—आप भी वात्सल्यभाजन चन्द्रकेतुके वचनका अनुसरण करें ।

लव—अपने उपयोगके पदार्थों में क्या विचार ? परन्तु वनमें चलने वाले हमलोग रथके व्यवहारमें अभ्यस्त नहीं हैं ।

सुमन्त्र—वत्स ! अभिमान और विनयका जो आचार है, उसे जानते हो । ऐसे तुम्हें इक्ष्वाकुवंशीय राजा रामभद्र देखेंगे तो उनका हृदय स्नेहसे पिघल जायगा ।

* 'उदाऽस्य ⋯ ⋯नभिष्यन्देत' इति पाठान्तरम् ।

सा योनिः सर्ववैराणां सा हि लोकस्य निष्कृतिः ॥ २६ ॥

इति ह स्म तां निन्दन्ति । इतरामभिष्टुवन्ति ।

कामं दुग्धे, विप्रकर्षत्यलक्ष्मीं, कीर्तिं सूते, दुर्हृदो निष्प्रलाति ।
शुद्धां शान्तां मातरं मङ्गलानां धेनुं धीराः सूनृतां वाचमाहुः ॥ ३० ॥

---

सा = राक्षसी वाक्, सर्ववैराणां = सकलविरोधानां, योनिः = कारणं, सा = राक्षसी वाक्, लोकस्य = जनस्य, 'लोकस्तु भुवने जने' इत्यमरः, निष्कृतिः = परिभवहेतुः, 'निर्ऋतिः' इति पाठे अलक्ष्मीरित्यर्थः, 'स्यादलक्ष्मीस्तु निर्ऋतिः' इत्यमरः । अत्र रूपकाऽलङ्कारः ॥ २६ ॥

इतीति । इति ह स्मेति प्रसिद्धिद्योतकोऽव्ययसमूहः । तां = राक्षसीं वाचम् । इतरां = राक्षस्या वाचोऽन्यां, वक्ष्यमाणस्वरूपामिति भावः, अभिष्टुवन्ति = प्रशंसन्तीति भावः ।

काममिति । ( इतरा वाक् ) कामं दुग्धे, अलक्ष्मीं विप्रकर्षति, कीर्तिं सूते, दुर्हृदः निष्प्रलाति, ( अतः ) धीराः सूनृतां वाचं, शुद्धां शान्तां मङ्गलानां मातरं धेनुम् आहुः इत्यन्वयः । ( इतरा = सूनृता वाक् ), कामम् = अभिलाषं, दुग्धे = प्रपूरयति, अलक्ष्मीं = निर्ऋतिं, विप्रकर्षति = दूरीकरोति, कीर्तिम् = यशः, सूते = जनयति, दुर्हृदः = दुष्टं हृदयं येषां तान् = शत्रूनित्यर्थः, 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति हृदयस्य हृद्भावः, निष्प्रलाति = अतिशयेन नाशयति, पुस्तकान्तरेषु तु 'दुष्कृतं या हिनस्ति' इति पाठस्तत्र—या = सूनृता वाक्, दुष्कृतं = पापं, हिनस्ति = नाशयतीत्यर्थः । ( अतः ) धीराः = विद्वांसः, सूनृतां = सत्यप्रियां, 'सूनृतं प्रिये । सत्ये' इत्यमरः, वाचं = वाणीं, शुद्धां = दोषशून्यां, शान्तां = पारुष्यरहितां, मङ्गलानां = कल्याणानां, मातरम् = उत्पादयित्रीं, धेनुं = कामधेनुं, तत्तुल्यामिति भावः, आहुः = कथयन्ति । सूनृता वाक् कामधेनुवत् सर्वान् कामान् पूरयतीति भावः । अत्र दोहनाद्यनेकक्रियाणामेककारकत्वाद्दी-

---

विरोधोंका कारण है और वही ( राक्षसी वाणी ) लोकके तिरस्कारका कारण है ॥ २९ ॥

इससे उसकी निन्दा करते हैं और दूसरी वाणीकी प्रशंसा करते हैं ।

दूसरी ( सत्य और प्रिय ) वाणी अभिलाषको पूर्ण करती है, अलक्ष्मीको दूर करती है, प्रसिद्धिको पैदा करती है और शत्रुओंको विनष्ट करती है । इस कारणसे विद्वान् पुरुष सूनृत ( सत्य और प्रिय ) वाणीको दोषशून्य, कठोरतारहित और कल्याणोंकी उत्पत्ति करनेवाली कामधेनुके तुल्य कहते हैं ॥ ३० ॥

सुमन्त्रः—परिभूतोऽयं बत कुमारः प्राचेतसान्तेवासी। वदत्ययमभ्युपपन्नामर्षेण संस्कारेण।

लवः—यत्पुनश्चन्द्रकेतो! वदसि 'किन्तु भवतस्तातप्रतापोत्कर्षेऽप्य' इति, तत्पृच्छामि 'किं व्यवस्थितविषयः क्षत्रधर्मः'? इति।

सुमन्त्रः—नैव खलु जानासि देवमैक्ष्वाकम्! तद्विरमातिप्रसङ्गात्।

---

ऽलङ्कारः। धेनुमित्यत्र कामधेनुसादृश्येन चाऽसम्भवद्वस्तुसम्बन्धा निदर्शना, व द्वयोरलङ्कारयोर्मिथो नैरपेक्ष्येण स्थितेः संसृष्टिः। शालिनी वृत्तम् ॥३०॥

सुमन्त्र इति। प्राचेतसाऽन्तेवासी = प्राचेतसस्य = वाल्मीकेः, अन्तेवासी = , परिभूत = तिरस्कृतः, 'परिपूतस्वभाव' इति पुस्तकान्तरपाठस्तत्र—त॰ = पवित्रः, स्वभावः = शीलं, यस्य स इत्यर्थ, अभ्युपपन्नाऽमर्षेण = पपन्न॰ = उत्पन्नः, अमर्षः = कोपो, यस्य तेन, एतादृशेन संस्कारेण = वासन॰ वदति = परिभाषते, 'अभिसपन्नमार्षेण सस्कारेण' इति पुस्तकान्तर॰ त्र—आर्षेण = ऋषिसम्बन्धिना, सत्कारेण = संस्कृत्या, अनुभूत्येति यावत्, = प्रतिपादयति, 'कामान्दुग्धे' इत्यादीति शेषः।

लव इति। तत् = तत्र, क्षत्रधर्म॰=शौर्यादिः, व्यवस्थितविषय॰ = व्यवस्थित= नत॰, विषयः = आश्रय॰, यस्य सः, शौर्यादिः क्षत्रधर्मो रामचन्द्र एव नियतः ति भावः।

सुमन्त्र इति। ऐक्ष्वाकम् = इक्ष्वाकुवंशोत्पन्नं, देवं = महाराजं, रामचन्द्र-र्थः। तत् = तस्माद्धेतो॰, अतिप्रसङ्गात्=अनिष्टप्रसङ्गात्, महावीरे रामेऽपि मसहिष्णुत्वाधिक्याद्दिति भाव॰, 'विरमे'तिपदेन योगे 'जुगुप्साविरामप्र-र्थानानुपसंख्यानम्' इति पञ्चमी, विरम = विरतो भव।

---

सुमन्त्र—खेद है, वाल्मीकि ऋषिके शिष्य ये कुमार तिरस्कृत हुए हैं, इसलिए ये नु भासनाने बोल रहे हैं।

लव—चन्द्रकेतुजी! जो आप कहते हैं कि 'पिताजीके प्रतापके उत्कर्षमें भी आपको नापता है?' तो मैं पूछता हूं कि क्षत्रियका धर्म (शूरता आदि) क्या उनमें ही ना है?

सुमन्त्र—तुम इक्ष्वाकुवंशोत्पन्न रामभद्रको नहीं जानते हो, इसलिए अनिष्ट प्रसङ्गको ।

लवः—को हि रघुपतेश्चरितं महिमानं च न जानाति ? यदि नाम किंचिदस्ति वक्तव्यम् । अथवा शान्तम् ।

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते *

सुन्दस्त्रीमथनेऽप्यकुण्ठयशसो लोके महान्तो हि ते ।

---

भूरादिलोकानाम् , अभयम् = भयाभावः, एव दक्षिणा = देयपदार्थः, येषु तानि, पुण्यानि = पवित्राणि, तातचरितानि अपि = पितृचरणरामचन्द्रचरित्राणि अपि, न वेद = न जानाति, लोकसप्तकायापि अभयं वितरत पितृचरणस्य रामचन्द्रस्यासाधारणशौर्यसमन्वित पुण्यचरित्रमपि यो लोकोत्तरत्वेन न सभावयत्यतोऽय कोऽप्यपूर्व· पुरुषाऽवतार इति भाव· । अत्र रूपकाऽलङ्कारस्य च्छेकाऽनुप्रासस्य च संसृष्टिः । वसन्ततिलका वृत्तम् ॥ ३२ ॥

लव इति । रघुपते· = रामचन्द्रस्य, महिमान = 'महतो भावो महिमा' तं महत्त्वमित्यर्थ·, 'पृथ्वादिभ्य इमनिज्वा' इतीमनिच्प्रत्यय । 'यदि नामे'ति सभावनायाम् । वक्तव्य = वाच्यम् । शान्तं = पर्याप्त, न वाच्यमिति भावः । शान्तमिति कथयित्वापि किंचिद्विवृणोति ।

वृद्धा इति । हु वर्तते, वृद्धा· विचारणीयचरिताः न तिष्ठन्तु, सुन्दस्त्रीमथनेऽपि अकुण्ठयशस· ते लोके महान्तो हि, खरायोधने यानि त्रीणि, कुतोमुखानि पदानि अपि आसन् , वा इन्द्रसूनुनिधने यत् कौशलं, तत्र अपि जन· अभिज्ञः इत्यन्वय· । हुमिति वितर्के, वर्तते = विद्यते, रघुपतेश्चरिते महिम्नि च किंचिद्वक्तव्यमिति शेषः, वृद्धा· = वयोज्येष्ठा·, ते = रामादय , विचारणीयचरिताः = आलोचनीयचरित्रा·, न तिष्ठन्तु = न वर्तन्ताम् , संभावनाया लोट् , एतेषा वयोमात्रं गौरवहेतुर्न चरित्रमिति भावः । सुन्दस्त्रीमथनेऽपि = सुन्दस्त्रिया = सुन्ददैत्यपत्न्या·, ताडकाया इत्यर्थ·, मथनेऽपि = वधेऽपि, अकुण्ठयशस· = अकुण्ठम् = अप्रतिहतम् , 'अखण्ड' मिति पाठे पूर्णमित्यर्थः, तादृशं यशः = कीर्ति·, येषा ते, ते = रामचन्द्रा·, लोके = भुवने, महान्त· = श्रेष्ठा·, हि = निश्चयेन, शास्त्रनिषिद्धे स्त्रीवधाचरणेऽपि लोकस्तान् प्रशंसत्येवेति अहो ! तेषा महत्त्वमिति भाव· । खरा-

---

लव—रामचन्द्रके चरित्र और महिमाको कौन नहीं जानता ? कुछ कहनेके योग्य भी हो अथवा नहीं कहना चाहिए। ( रामचन्द्रजीके चरित्रमें कुछ वक्तव्य ) हाँ है।

बूढे वे ( रामचन्द्र ) आलोचनीय चरित्रवाले नहीं। सुन्दकी स्त्री ( ताडका ) को

---

* 'किं वर्ण्यते' इति पाठान्तरम् ।

यानि त्रीणि कुतोमुखान्यपि पदान्यासन्खरायोधने
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥ ३४ ॥

चन्द्रकेतुः—आः तातापवादिन्! भिन्नमर्याद! अति हि नाम प्रगल्भसे।

---

योधने = खरेण = तदाख्येन राक्षसेन सह, आयोधने = युद्धे, 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्' इत्यमरः। यानि = प्रागनुष्ठितानि, त्रीणि = त्रिसंख्यकानि, कुतोमुखानि = पराङ्मुखानि, पदानि अपि = पादन्यासाः अपि, आसन् = अभवन्, खरस्याऽत्यन्ताऽऽसन्नत्वेन स्थितत्वात्, रामश्चापकर्षणार्थं पदत्रयं निवृत्य तं जघानेति प्रसिद्धिः, तच्च रामकर्तृकं पदत्रयं यावन्निवर्तनं पलायनं मन्यमानो लवः 'न निवर्तेत संग्रामात्क्षात्रं धर्ममनुस्मरन्' इति स्मृत्वाऽऽचिक्षेपेति ज्ञेयम्। 'कुतोमुखानी'त्यत्र 'अपराङ्मुखानी'ति पुस्तकान्तरपाठस्तत्र—अपरावृत्तानीत्यर्थः, अनिवृत्तपदं यथा तथा पश्चात्स्थापितानीति भावः। वा = अथवा, इन्द्रसूनुनिधने = इन्द्रसूनोः = वालिनः, निधने = वधे, यत् = पूर्वाऽनुष्ठितं, कौशलं = नैपुण्यम्, अन्तर्धानपूर्वकमिति भावः, सुग्रीवेण सह युद्ध्यन्तं वालिनं वृक्षखण्डे तिरोभूय रामो जघानेति विशदार्थः। तत्राऽपि = तस्मिन् कौशलेऽपि, जनः = सर्वो लोकः, अभिज्ञः = विज्ञाता, अस्तीति शेषः, सर्वजनप्रसिद्धान्येतानि रामकार्याणि नाऽस्माभिर्वर्णनीयानीति भावः। अत्र वक्तुमिष्टस्य रामदोषरूपस्य वस्तुनः तिष्ठन्त्वित्ययनेन निषेधाभावाद्वक्ष्यमाण आक्षेपाऽलङ्कारः। तदुक्तं साहित्यदर्पणे—'वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये। निषेधाभास आक्षेपो वक्ष्यमाणोक्तगो द्विधा ॥' इति शार्दूलविक्रीडितं वृत्तम् ॥ ३४ ॥

चन्द्रकेतुरिति। आः = कोपद्योतकमव्ययमिदम्, तातऽपवादिन् = रामविषयकदोषवादिन्, अत एव भिन्नमर्याद = भिन्ना = वर्जिता, मर्यादा = सदाचारो येन, तत्सम्बुद्धौ, 'ताताऽपवादभिन्नमर्याद'इति पाठे—तातस्य = पितृचरणस्य, रामस्येत्यर्थः, अपवादेन = निन्दया, भिन्नमर्याद, शिष्टं स्पष्टम्। अति हि = अत्यर्थमेव, नाम = कोपद्योतकमव्ययमिदं 'नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने।' इत्यमरः, प्रगल्भसे = धृष्टो भवसि, 'गल्भ धार्ष्ट्ये' इति धातोर्लट्।

---

मारनेमें ना अग्रसित ... थे लोकमें ख्यात है। खरके साथ युद्धमें तीन पग पीछे हटे थे, अथवा वालीके मारनेमें जो निपुणताकी थी उसमें भी लोग जानकार हैं ॥ ३४ ॥

चन्द्रकेतु—अरे! पिताजीकी निन्दा और शिष्टाचारका उल्लङ्घन करनेवाले! तुम बहुत ही ढीठ हो रहे हो।

लवः—अये ! मय्येव भ्रुकुटीमुखः संवृत्तः ।

सुमन्त्रः—स्फुरितमनयोः क्रोधेन । तथा हि ।

क्रोधेनोद्धतधूतकुन्तलभरः सर्वाङ्गजो वेपथुः
किञ्चित्कोकनदच्छदस्य सदृशे नेत्रे स्वयं रज्यतः ।
धत्ते कान्तिमिदं च वक्त्रमनयोर्भङ्गेन भिन्नं* भ्रुवो-

---

लव इति । भ्रुकुटीमुखः = कोपेन भ्रूभङ्गयुक्तवदनः, संवृत्तः = संजातः ।

सुमन्त्र इति । अनयोः = लवचन्द्रकेत्वोः, स्फुरितं = प्रादुर्भूतं, 'नपुंसके भावे क्त' इति क्तप्रत्ययः, क्रोधस्फुरितं द्योतयति—तथा हीति ।

क्रोधेनेति । क्रोधेन उद्धतधूतकुन्तलभरः सर्वाङ्गजो वेपथुः, स्वयं कोकनदच्छदस्य किंचित् सदृशे नेत्रे रज्यतः । भ्रुवोः भङ्गेन भीमम् अनयोः इदं वक्त्रं च उद्भटलाञ्छनस्य चन्द्रस्य उद्भ्रान्तभृङ्गस्य कमलस्य च कान्तिं धत्त इत्यन्वयः । क्रोधेन = कोपेन, उद्धतधूतकुन्तलभरः = उद्धतं = सातिशयं, यथा तथा, धूताः = चलिताः, कुन्तलभराः = केशभाराः यस्मिन् सः, 'चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः ।' इत्यमरः, सर्वाङ्गजः=समस्तशरीरोत्पन्नः, एतादृशो वेपथुः = कम्पः, अस्तीति शेषः, 'चूडामण्डलबन्धनं तरलयत्याकूतजो वेपथु'रिति पुस्तकान्तरपाठस्तत्र—आकूतजो वेपथुः चूडामण्डलबन्धनं तरलयतीत्यन्वयः । आकूतजः = रिपुदमनाऽभिप्रायोत्पन्नः, वेपथुः = कम्पः, चूडामण्डलबन्धनं, चूडामण्डलस्य = शिखासमूहस्य, बन्धनं = ग्रन्थिम् , तरलयति = चालयति इत्यर्थः । स्वयं = स्वभावादेव, कोकनदच्छदस्य=रक्तोत्पलपत्रस्य, 'रक्तोत्पलं कोकनदं', 'दलं पर्णं छदः पुमान्' इत्युभयत्राऽप्यमरः, किंचित् = ईषत्, सदृशे = तुल्ये, एतादृशे नेत्रे = नयने, रज्यतः = रक्ते भवतः, कोपेनेति शेषः । भ्रुवोः = भ्रूद्वयस्य, भङ्गेन = कौटिल्येन, भीमं = भयङ्करम् , अनयोः =

---

लव—अरे ! ये मेरे ऊपर ही भ्रुकुटी चढ़ाने लगे हैं ।

सुमन्त्र—इन दोनोंके क्रोधकी वृद्धि हो गई है । क्योंकि—

क्रोधसे केशोंको अतिशय हिलानेवाला समस्त शरीरमें उत्पन्न कम्प प्रकट हो रहा है । स्वभावसे ही रक्तकमलके पत्रके कुछ सादृश्यवाले दोनों नेत्र लाल हो रहे हैं । भ्रूभङ्गसे

---

* 'कान्तिमकाण्डताण्डवितयोर्भङ्गेन वक्त्रम्' इति पाठान्तरम् ।

श्चन्द्रस्योद्भट*लाञ्छनस्य कमलस्योद्भ्रान्तभृङ्गस्य च ॥३५॥

लवः—कुमार ! कुमार ! एह्येहि । विमर्दक्षमां भूमिमवतरावः ।

( इति निष्क्रान्ताः सर्वे । )

इति महाकविभवभूतिविरचिते उत्तररामचरिते कुमारविक्रमो नाम पञ्चमोऽङ्कः ॥ ५ ॥

---

लवचन्द्रकेत्वोः, इदम् = एतत्, वक्त्रं च = मुखं च, उद्भटलाञ्छनस्य = प्रकटकलङ्कस्य, एतादृशस्य चन्द्रस्य = चन्द्रमसः, एवं च उद्भ्रान्तभृङ्गस्य = उद्भ्रान्ताः = ऊर्ध्वं भ्रमन्तः, भृङ्गा = भ्रमराः, यस्मिंस्तस्य, तथाभूतस्य कमलस्य च = पद्मस्य च, कान्ति = शोभा, धत्ते = धारयति । अत्र 'कान्ति धत्ते' इत्यत्र असम्भवद्वस्तुसम्बन्धरूपो निदर्शनाऽलङ्कारः, कम्परक्तनेत्रतादिरूपैर्हेतुभिः क्रोधरूपसाध्यस्य ज्ञानादनुमानाऽलङ्कारश्च, तया च द्वयोरङ्गाङ्गिभावेन सङ्करः । शार्दूलविक्रीडितं वृत्तम् ॥ ३५ ॥

लव इति । एहि = आगच्छ, विमर्दक्षमां = युद्धयोग्याम्, अवतरावः = अवतीर्णौ भवावः ।

इति श्रीशेषराजशर्म्मप्रणीतायामुत्तररामचरितव्याख्यायां चन्द्रकलाऽऽख्यायां कुमारविक्रमनामकः पञ्चमोऽङ्कः ॥ ५ ॥

---

भयङ्कर इन दोनोंके मुख भी कलङ्कयुक्त चन्द्रकी और ऊपर घूमनेवाले भ्रमरोंसे युक्त कमलकी भी कान्तिको धारण कर रहे हैं ॥ ३५ ॥

लव—कुमार ! कुमार ! आओ आओ, युद्धके योग्य भूमिमें हम दोनों उतर पड़ें ।

( इसके अनन्तर सब जाते हैं । )

यह कुमारविक्रमनामक पाँचवाँ अङ्क समाप्त हुआ ॥ ५ ॥

---

* 'स्योत्कट' इति पाठान्तरम् ।

# षष्ठोऽङ्कः ।

( ततः प्रविशति विमानेनोज्ज्वलं विद्याधरमिथुनम् । )

विद्याधरः—अहो नु खल्वनयोर्विकर्तनकुलकुमारयोरकाण्डकलह-प्रचण्डयोरुद्द्योतितक्षत्रलक्ष्मीकयोरत्यद्भुतोद्भ्रान्तदेवासुराणि विक्रान्त-विलसितानि । तथा हि प्रिये ! पश्य ।

झणज्झणितकङ्कणक्वणितकिङ्किणीक धनु-

---

तत इति । युद्धस्य 'दूराह्वान वधो युद्ध राज्यदेशादिविप्लव' ।' इति दृश्यत्व-निषेधात् विष्कम्भकेन तदाह—विद्याधरमिथुनमित्यादिना । विद्याधरो देवयोनि-विशेषः, स च विद्याधरी च विद्याधरौ, 'पुमान् स्त्रिया' इत्येकशेष., तयोर्मिथुनम् = द्वन्द्वम् , विमानेन = व्योमयानेन ।

विद्याधर इति । अहो = आश्चर्यद्योतकमव्ययमिदम् । अकाण्डकलहप्रच-ण्डयो. = अकाण्डे = अनवसरे, य· कलहः = विरोध., तेन प्रचण्डयो. = अतिशयि-तकोपनयोः, उद्योतितक्षत्रलक्ष्मीकयो = उद्योतिता = प्रकाशिता, क्षत्रलक्ष्मी –क्षत्रि-यशोभा, ययोस्तयो , एतादृशयो , अनयो. = पुर.स्थितयो , विकर्तनकुलकुमा-रयोः = सूर्यवंशबालकयो., लवचन्द्रकेत्वोरिति भावः । अत्यद्भुतोद्भ्रान्तदेवाऽसुरा-णि = अत्यद्भुतेन = अतिविस्मयेन, उद्भ्रान्ताः = विमूढा , देवासुरा = अमरदैत्या', यैस्तानि, विक्रान्तविलसितानि = वीरचरितानि, 'शूरो वीरश्च विक्रान्त' इत्यमर., 'गत्यर्थाऽकर्मके'त्यादिना क्तप्रत्यय । अनयोरुभयोरपि पराक्रमेण देवादयोऽपि कतरस्य जय कतरस्य पराजयश्च भविष्यतीति निश्चेतुमशक्ता सन्तो विस्मयपर-वशा भवन्तीति भाव. । पश्य पश्य = अवलोकय अवलोकय, विस्मये द्विरुक्ति. ।

झणदिति । झणज्झणितकङ्कणक्वणितकिङ्किणीकं ध्वनद्गुरुगुणाऽटनीकृतक-रालकोलाहल धनुः वितत्य शरान् अविरतं किरतोः शूरयो पुन विचित्रं भुवन-भीमम् आयोधनम् अभिवर्तत इत्यन्वय· । झणज्झणितकङ्कणक्वणितकिङ्किणीकं = 'झणज्झण' इति अव्यक्ताऽनुकरणशब्दः, स सजातोऽस्य तत् , 'तदस्य संजात तारकादिभ्य इतच्' इति इतच्प्रत्यय , झणज्झणितं = सजातझणज्झण-शब्दम् , यत् कङ्कण = करभूषणम् , तस्येव क्वणित = शब्द', यासा ता', तादृश्यः किङ्किण्यः = क्षुद्रघण्टिका , यस्मिंस्तत् , 'किङ्किणी क्षुद्रघण्टिका' इत्यमर',

---

( अनन्तर विमानमें चढकर प्रकाशमान विद्याधरी और विद्याधर प्रवेश करते हैं । )

विद्याधर—अहो ! अनवसरमें विरोध कर अतिशय क्रुद्ध, क्षत्रियशोभासे सम्पन्न सूर्यवंशके इन दोनों कुमारोंके, अतिशय आश्चर्यसे देवता और दैत्योंको भी मोहयुक्त करनेवाले वीरचरित्र प्रकाशित हो रहे हैं । जैसे कि प्रिये ! देखो—

'झन झन' शब्द करनेवाले कङ्कणकी तरह शब्द करनेवाली किङ्किणियोंसे युक्त, भारी

ध्वनदुगुरुगुणाटनीकृतकरालकोलाहलम् ।
वितत्य किरतोः शरानविरतं पुनः शूरयो-
विचित्रमभिवर्तते भुवनभीममायोधनम् ॥ १ ॥
जृम्भितं च विचित्राय मङ्गलाय द्वयोरपि ।
स्तनयित्नोरिवामन्ददुन्दुभेर्दुन्दुमायितम् ॥ २ ॥
तत्प्रवर्त्यतामनयोः प्रवीरयोरनवरतमविरलमिलितविकचकनककमल-

ध्वनद्गुरुगुणाऽटनीकृतकरालकोलाहल = ध्वनन् = शब्दं कुर्वन्, गुरु = महान्, गुण. = मौर्वी, यया, तादृशी या अटनी = धनुष्कोटिः, 'कोटिरस्याऽटनी' इत्यमरः, तया कृतः = विहित., कराल. = भीषण., कोलाहलः = कलकल., यस्मिन्स्तत्, एतादृश धनु. = कार्मुक, वितत्य = मण्डलीकृत्य, शरान् = बाणान्, अविरतं = निरन्तरं, किरतो. = प्रक्षिपतोः, शूरयो. = वीरयो., लवचन्द्रकेत्वोरित्यर्थः। 'अविरतस्फुरच्चूडयोः' इति पाठान्तर तत्र—अविरतं = निरन्तरम्, यथा तथा स्फुरन्त्यः = प्रचलन्त्य, चूडाः = शिखाः, ययोस्तयोरित्यर्थ, पुनः = भूयः, विचित्रम् = अत्यद्भुत, भुवनभीमं = भुवनेषु = लोकेषु, भीमम् = भयङ्करम्, आयोधनं = युद्धम्, अभिवर्तते = सम्मुख वियत इति भावः। 'अभिवर्द्धत' इति पाठे संमुख वृद्धिं प्राप्नोतीति भावः। अत्र उपमावृत्त्यनुप्रासयोः संसृष्टिः। पृथ्वी वृत्तं, 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः।' इति तल्लक्षणम् ॥ १ ॥

जृम्भितमिति। द्वयोरपि विचित्राय मङ्गलाय स्तनयित्नोरिव अमन्ददुन्दुभेः दुन्दुमायितं जृम्भितम् इत्यन्वयः। द्वयोरपि = उभयोरपि, लवचन्द्रकेत्वोरपीति भाव., विचित्राय = अत्यद्भुताय, मङ्गलाय = कल्याणाय, उत्साहवर्द्धनायेति भावः, स्तनयित्नोरिव=गर्जन्मेघस्येव, अमन्ददुन्दुभे =महाभेर्या., दुन्दुमायितं = दुन्दुमेत्याकारकः शब्दः, जृम्भितं=प्रवृत्तम्, 'विजृम्भित च दिव्यस्य' इति पुस्तकान्तरपाठे—'दिव्यस्य' इत्येतत् 'दुन्दुभे' रित्यस्य विशेषण, शेष प्राग्वत्। उपमालङ्कारः॥२॥

तदिति। तत् = तस्माद्धेतो., प्रवीरयोः = महावीरयोः, अनयोः = लवचन्द्र-

मौर्वीको शब्दायमान करनेवाले और अग्र भागसे भयङ्कर कोलाहल करनेवाले धनुषको फैलाकर बाणोंको लगातार छोड़नेवाले इन दोनों वीर कुमारोंका फिर विचित्र (अनूठा) और लोकके लिए भयङ्कर सग्राम हो रहा है ॥ २ ॥

इन दोनों वीरोंके विचित्र कल्याणके लिए गर्जनेवाले मेघकी सदृश भारी भेरीका 'दुन् दुन' शब्द उत्पन्न हो रहा है ॥ २ ॥

इस कारणसे इन दोनों महावीरोंके ऊपर घने, मिले हुए और खिले हुए सुवर्ण-कमलोंसे

आश्चर्यम् । प्रवृत्त एवायमुच्चण्डवज्रखण्डावस्फोटपटुरटत्स्फुलिङ्गगुरुरुत्तालतुमुललेलिहानोज्ज्वलज्ज्वालासभारभैरवो भगवानुपर्बुधः । प्रचण्डश्चास्य सर्वतः संपातः । तत्प्रियामंशुकेनाच्छाद्य सुदूरमपसरामि (तथा करोति ।)

---

ना=महाकेतूनाम् , अंशुकानि = सूक्ष्मवस्त्राणि, एव पटाः = शोभनवस्त्राणि, तेषाम् , अवलीं = पङ्क्तिम् , 'उत्तरीये वस्त्रमात्रे सूक्ष्मवस्त्रेऽपि चांशुकम् ।' इति रत्नमाला, दहति=भस्मीकरोति, उपमाऽलङ्कारः । पुस्तकान्तरेषु तु उत्तरार्द्धे— 'दधति ध्वजाऽङ्कुशपटाऽञ्चलेष्विमाः । क्षणकुङ्कुमच्छुरणविभ्रम शिखाः ।' इति पाठस्तत्र—इमाः शिखाः ध्वजाऽङ्कुशपटाञ्चलेषु क्षणकुङ्कुमच्छुरणविभ्रमं दधतीत्यन्वयः । इमाः = सन्निकृष्टस्थाः, शिखाः = वह्निज्वालाः, ध्वजाऽङ्कुशपटाञ्चलेषु = ध्वजानाम्=महाकेतूनाम् , ये अङ्कुशाः=तदाकारदण्डाः, तेषां ये पटाः = शोभनवस्त्राणि, तेषाम् अञ्चलेषु=प्रान्तेषु, क्षणकुङ्कुमच्छुरणविभ्रम = क्षणं = कञ्चित्कालं यावत् , यत् कुङ्कुमच्छुरणं=केसरसम्पर्कः, तस्य विभ्रमं = शोभाम् , दधति = धारयन्ति । तत्र असम्भवद्वस्तुसम्बन्धरूपो निदर्शनाऽलङ्कारः । मञ्जुभाषिणी वृत्तम् , 'सजसा जगौ भवति मञ्जुभाषिणी ।' इति तल्लक्षणम् ॥ ४ ॥

आश्चर्यमिति । उच्चण्डवज्रखण्डावस्फोटपटुरटत्स्फुलिङ्गगुरुः = उच्चण्डः = अतिभयङ्करः, यः वज्रखण्डः = अशनिशकलम् , तस्य अवस्फोटः=स्फोटनम् , स इव पटु =प्रबलम् , यथा तथा, रटन् = शब्दं कुर्वन् , स्फुलिङ्गगुरुः = कणबहुलः, उत्तालतुमुललेलिहानोज्ज्वलज्ज्वालासंभारभैरवः = उत्तालम् = अत्युन्नत, तुमुलः = सङ्कुलः, लेलिहानः = भृशं कवलनपरः, उज्ज्वलः = प्रदीप्तः, यः ज्वालासम्भारः अर्चिःसमूहः, तेन भैरवः =भयङ्करः, भगवान्=सामर्थ्यसम्पन्नः, उपर्बुधः =उपसि= सन्ध्यायाम् , बुध्यत इत्युषर्बुधः, अग्निरित्यर्थः, आहिताऽग्नयो हि अग्निमुषसि प्रादुष्कुर्वन्ति, 'शोचिष्केश उषर्बुधः' इत्यमरः, प्रवृत्त एव=संलग्न एव । अस्य=अग्नेः, संपातः=सम्पतनं, 'सन्ताप' इति पाठे संदाह इत्यर्थः । प्रचण्डः = अतितीक्ष्णः । अंशुकेन=वस्त्रेण, 'अङ्केने'ति पाठे हस्तोरस्थलाद्यवयवेनेत्यर्थः ।

---

आश्चर्य है । अतिभयङ्कर वज्रखण्डके टूटनेके समान प्रबलतापूर्वक शब्द करते हुए और चिनगारियोंसे अत्युन्नत और तुमुल तथा बारबार ग्रास करनेवाले प्रदीप्त ज्वालासमूहसे भयङ्कर ये भगवान् अग्निदेव प्रकट हुए हैं । इनका सब ओर भयङ्कर संपात ( गमन ) हो रहा है । इस कारण प्रियाको कपडेसे ढाँककर दूर चला जाता हू ( वैसा ही करता है ) ।

विद्याधरी—दिट्ठिया एदेण विमलमुत्तासेअसीअलसिणिद्धमसिणमंसलेण णाहदेहप्पंसेण आणन्दसंदलिदघुण्णमाणवेअणाए अद्धोदिदो एव्व अन्तरिदो मे संदावो । ( दिष्ट्या एतेन विमलमुक्ताशैलशीतलस्निग्धमसृणमांसलेन नाथदेहस्पर्शेनानन्दसंदलितघूर्णमानवेदनाया अर्धोदित एवान्तरितो मे सन्तापः । )

विद्याधरः—अयि ! किमत्र मया कृतम् ? अथवा ।

न किञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ ५ ॥

विद्याधरी—कहं अविरलविलोलघुण्णमाणविज्जुल्लदाविलासमंसलेहिं मत्तमऊरकण्ठसामलेहिं ओत्थरीअदि णभोङ्गणं जलहरेहिं ? (कथमविरलवि-

---

विद्याधरीति । दिष्ट्या = भाग्येन, विमलमुक्ताशैलशीतलस्निग्धमसृणमांसलेन = विमलः = निर्मलः, यः मुक्ताशैलः = मौक्तिकपर्वतः, 'मौक्तिकसर' इति पाठे हार इत्यर्थः, स इव शीतलः = शीतः, स्निग्धः = स्नेहयुक्तः, मसृणः=कोमलः, तथा मांसलश्च = पुष्टश्च, तेन, नाथदेहस्पर्शेन=नाथदेहस्य=पतिशरीरस्य, स्पर्शेन=आमर्शनेन, आनन्दसंदलितघूर्णमानवेदनायाः = आनन्देन = स्पर्शजन्यसुखेन, संदलिता = विनष्टा, घूर्णमाना = प्रसरन्ती, वेदना = दुःखम् , यस्यास्तस्याः, एतादृश्या मे=विद्याधर्याः, अर्धोदित एव = किञ्चिदुत्पन्न एव, सतापः = दाहः, अन्तरितः = तिरोहितः ।

विद्याधर इति । अयि = कोमलाऽऽमन्त्रणद्योतकमिदमव्ययम् । किं कृतं = किमनुष्ठितं, न किमपीति भावः । अथवा = यद्वा ।

न किञ्चिदपीति । श्लोकोऽयं द्वितीयाऽङ्के श्रीरामपठितो व्याख्यातपूर्वश्च तत्रैव ( पृ० ११० तत्र ) द्रष्टव्यः ॥ ५ ॥

विद्याधरीति । अविरलविलोलघूर्णमानविद्युल्लताविलासमांसलैः = अविरलं =

---

विद्याधरी—कुछ ही उत्पन्न हो कर मेरा सन्ताप भाग्यसे निर्मल मोतीके पहाड़के सदृश ठन्डा, चिकना, कोमल और पुष्ट पतिदेवके इस शरीरस्पर्शसे आनन्दके कारण फैली हुई वेदनाके दूर होनेसे विनष्ट हो गया है ।

विद्याधर—अरी ! इसमें मैंने क्या किया है ? अथवा—

जो मनुष्य जिसका प्यारा है, वह कुछ न करता हुआ भी सानोन्मादसे समस्त दुःखोंका नाश करता है, इस कारणसे वह उसका अनिर्वचनीय पदार्थ है ॥ ५ ॥

विद्याधरी—जिस तरह निरन्तर चञ्चल और घूमती हुई बिजलियोंके चमकनेसे पुष्ट और

विद्याकल्पेन मरुता मेघानां भूयसामपि ।
ब्रह्मणीव विवर्तानां क्वापि प्रविलयः कृतः ॥ ६ ॥

विद्याधरी—णाध ! को दाणि एसो ससंभमोक्खित्तकरब्भमदुत्तरीअञ्चलो दूरदो एव्व महुरसिणिद्धवअणपडिसिद्धजुद्धव्वावारो एदाण अन्दरे विमाणवर ओदरावेदि ? (नाथ ! क इदानीमेष ससंभ्रमोत्क्षिप्तकरभ्रमदुत्तरीयाञ्चलो दूरत एव मधुरस्निग्धवचनप्रतिषिद्धयुद्धव्यापार एतयोरन्तरे विमानवरमवतारयति ? )

---

विद्याकल्पेनेति । विद्याकल्पेन मरुता भूयसाम् अपि मेघानां विवर्तानां ब्रह्मणि इव क्वापि प्रविलयः कृत इत्यन्वयः । विद्याकल्पेन = तत्त्वमस्यादिवाक्यविहितेन तत्त्वज्ञानसदृशेन, मरुता = वायुना, भूयसामपि = बहूनामपि, मेघानां = जलदानां, विवर्तानां = ब्रह्मणि कल्पितानां नामरूपात्मकदृश्यपदार्थानां, ब्रह्मणि इव = निर्विशेषसन्मात्रे कूटस्थचैतन्य इव, क्वापि = कुत्रापि स्थले, प्रविलयः = निवृत्तिः, 'विप्रलय' इति पाठान्तरेऽप्ययमेवार्थः, कृतः = विहितः । यथा ब्रह्मनिष्ठगुरूपदेशवशात्प्राप्तेन तत्त्वमस्यादिमहावाक्योत्पन्नेन तत्त्वज्ञानेन नामरूपात्मकानां निखिलानामपि प्रपञ्चानां ब्रह्मणि लयो भवति तथैव चन्द्रकेतुप्रयुक्तेन वायव्यास्त्रेण लवप्रयुक्तस्य वारुणास्त्रस्य कुत्रापि प्रविलयः सञ्जात इति भावः । अत्र पूर्वार्द्धे उत्तरार्द्धे च स्थितयोर्द्वयोरुपमयोः सङ्करः ॥ ६ ॥

विद्याधरीति । ससंभ्रमोत्क्षिप्तकरभ्रमदुत्तरीयाञ्चलः = ससंभ्रमम् = सत्वरं यथा तथा, उत्क्षिप्तः = ऊर्ध्वं प्रेरितः, यः करः = पाणिः, तेन भ्रमन् = घूर्णन्, उत्तरीयाञ्चलः = प्रावारप्रान्तः, येन सः, 'पट्टकाञ्चल' इति पाठे राजवस्त्रप्रान्त इत्यर्थः, उत्तरीयाञ्चलभ्रामणं च युद्धनिवारणार्थं बोध्यम् । मधुरस्निग्धवचनप्रतिषिद्धयुद्धव्यापारः = मधुराणि = प्रियाणि, स्निग्धानि = स्नेहपूर्णानि, यानि वचनानि = वाक्यानि, तैः प्रतिषिद्धः = निषिद्धः, युद्धव्यापारः = समरक्रिया, येन सः, एतयोः = लवचन्द्रकेत्वोः, अन्तरे = मध्ये, विमानवरं = व्योमयानप्रधानं, पुष्पकमिति भावः, अवतारयति = अवरोहयति ।

---

जिस तरह तत्त्वज्ञान ब्रह्मकल्पित नामरूपात्मक पदार्थोंका ब्रह्ममें लय कर देता है, उसी तरह वायुने भी बहुसंख्यक मेघोंका कहींपर लय कर दिया है ॥ ६ ॥

विद्याधरी—नाथ ! अभी यह कौन दूरसे ही शीघ्रतासे ऊंचे किये हुए हाथसे उत्तरीयको हिलाता हुआ मीठे और स्नेहपूर्ण वचनोंसे युद्धक्रियाका निषेध कर इन दोनोंके बीचमें श्रेष्ठ विमान ( पुष्पक ) को उतार रहा है ।

विद्याधरः—( दृष्ट्वा । ) एष शम्बूकवधात्प्रतिनिवृत्तो रघुपतिः ।

शान्तं महापुरुषसंगदितं निशम्य तद्गौरवात्समुपसंहृतसंप्रहारः ।
शान्तो लवः, प्रणत एव च चन्द्रकेतुः कल्याणमस्तु सुतसंगमनेन राज्ञः ॥

तदितस्तावदेहि । ( इति निष्क्रान्तौ । )

विष्कम्भकः ।

---

विद्याधरः । शम्बूकवधात् = शम्बूकवधं कृत्वा, 'ल्यप् लोपे कर्मण्यधिकरणे च' इति पञ्चमी, रघुपतिः = रामः ।

शान्तमिति । शान्तं महापुरुषसंगदितं निशम्य तद्गौरवात् समुपसंहृतसंप्रहारः लवः शान्तः, चन्द्रकेतुश्च प्रणत एव, सुतसंगमनेन राज्ञः कल्याणम् अस्तु इत्यन्वयः । शान्तं = कठोरतारहित, महापुरुषसंगदितं = महापुरुषेण = रामेण, संगदितम् = समुच्चारितम्, वचनमिति शेषः, निशम्य = श्रुत्वा, तद्गौरवात् = तस्य रामस्य, गौरवात् = गुरुत्वाद्धेतो:, रामविषयकपूज्यत्वबुद्धेरिति भावः, समुपसंहृतसंप्रहारः = समुपसंहृतः = संत्यक्तः, संप्रहारः = युद्धम्, येन सः, एतादृशो लवः = चन्द्रकेतुप्रतिद्वन्द्वी, शान्तः = शान्तिं प्राप्तः, एनेन लवस्य विनयो व्यज्यते । चन्द्रकेतुश्च = लक्ष्मणपुत्रश्च, प्रणत एव = रामं प्रणमतीदेव । सुतसंगमनेन = सुताभ्यां = लवचन्द्रकेतुभ्यां कुशलवाभ्यां वा, संगमनं = समागमः, तेन, राज्ञः = नृपस्य, रामचन्द्रस्येत्यर्थः, कल्याणं = मङ्गलम्, अस्तु = भवतात्, रामो लवम् 'अयं मत्पुत्र' इति परिचिनोत्विति भावः, विद्याधरेण प्रातन्नाद्बुद्धेरुक्तिः । अत्र लवचन्द्रकेत्वोरौद्धत्यस्य भावस्य प्रशमो रामविषयकरतेरङ्गमिति समाहितमलङ्कारः । वसन्ततिलका वृत्तम् ॥ ७ ॥

विष्कम्भक इति । मध्यमपात्राभ्यां विद्याधरदम्पतिभ्यां प्रयोजितत्वात् शुद्धविष्कम्भकः । विष्कम्भकलक्षणं च साहित्यदर्पणे—'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥' इति । शुद्ध-

---

विद्याधर—( देखकर ) शम्बूक को मारकर लौटे हुए ये राम [illegible] हैं ।

[illegible] ( राम [illegible] ) [illegible] सुनकर [illegible] गौरव से [illegible]
[illegible] हैं और [illegible] राम [illegible] नमस्कार [illegible] है [illegible]
[illegible] ( [illegible] ) [illegible] ।

[illegible] ( दोनों [illegible] ) ।

[illegible] समाप्त हुआ ।

( ततः प्रविशति रामो लवः प्रणतश्चन्द्रकेतुश्च । )

रामः—( पुष्पकादवतरन् । )

दिनकरकुलचन्द्र चन्द्रकेतो ! सरभसमेहि दृढं परिष्वजस्व ।
तुहिनशकलशीतलैस्तवाङ्गैः शममुपयातु ममापि चित्तदाहः ॥ ८ ॥

( उत्थाप्य सस्नेहास्रं परिष्वज्य । ) अप्यनामयं नूतनदिव्यास्त्रायोधनस्य तव ?

---

विष्कम्भकलक्षणमपि तत्रैव—'मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः । शुद्धः स्यात्' इति ।

दिनकरेति । दिनकरकुलचन्द्र हे चन्द्रकेतो ! सरभसम् एहि, दृढं परिष्वजस्व । तुहिनशकलशीतलैः, तव अङ्गैः मम चित्तदाहः अपि शमम् उपयातु इत्यन्वयः । दिनकरकुलचन्द्र = दिनकरकुलस्य = सूर्यवंशस्य, चन्द्र = चन्द्रतुल्याह्लादक, हे चन्द्रकेतो ! सरभसं = वेगपूर्वकम्, एहि = आगच्छ, दृढं = गाढं परिष्वजस्व = आलिङ्ग, मामिति शेषः । आलिङ्गनप्रयोजनमुपपादयति—तुहिनेति । तुहिनशकलशीतलैः = तुहिनस्य = हिमस्य, शकलैरिव = खण्डैरिव, शीतलैः = शीतैः, तव = चन्द्रकेतो, अङ्गैः = शरीरावयवैः, मम = अतिशयसन्तापयुक्तस्य रामस्य, चित्तदाहोऽपि=सीताविरहजन्यो मनस्तापोऽपि, शरीरदाहमात्रस्य का कथेति भावः । शमं = शान्तिम्, उपयातु = प्राप्नोतु । अत्रोपमाऽर्थापत्तिलाटाऽनुप्रासानामलङ्काराणां मिथोऽनपेक्षया स्थितेः संसृष्टिः । पुष्पिताग्रा वृत्तम् ॥ ८ ॥

उत्थाप्येति । परिष्वज्य = आलिङ्ग्य । नूतनदिव्यास्त्राऽऽयोधनस्य = नूतनं = नवीनम्, दिव्यास्त्रैः = अलौकिकाऽऽयुधैः, आयोधनं = संग्रामः, यस्य स इति बहुव्रीहिः, एतादृशस्य तव = चन्द्रकेतो, अनामयम् अपि = आरोग्यमस्ति किमित्यर्थः, 'ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् ।' इति स्मृतेः रामकर्तृकश्चन्द्रकेतुं प्रति कुशलप्रश्नः संगच्छते ।

---

( तब रामचन्द्रजी, लव और नमस्कार करते हुए चन्द्रकेतु प्रवेश करते हैं । )

**राम**—( पुष्पकसे उतरते हुए )

सूर्यवंशके चन्द्ररूप हे चन्द्रकेतो ! जल्दी आओ और दृढ आलिङ्गन करो । बरफके टुकडेके समान ठण्डे तुम्हारे अङ्गोंसे मेरा मनका ताप भी शान्तिको प्राप्त करे ॥ ८ ॥

( उठाकर स्नेहसे आँसू गिराते हुए आलिङ्गन कर ) दिव्य अस्त्रोंसे नूतन संग्राम करनेवाले तुम्हारा अनामय ( स्वास्थ्य—आरोग्य ) है न ?

चन्द्रकेतुः—अभिवादये । कुशलमत्यद्भुतप्रियवयस्यलाभाभ्युदयेन । तद्विज्ञापयामि मामिव विशेषेण स्निग्धेन चक्षुषा पश्यत्वमुं वीरमनराल-साहसं तातः ।

रामः—( लवं निरूप्य । ) दिष्ट्या अतिगम्भीरमधुरकल्याणाकृतिरयं वयस्यो वत्सस्य ।

त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोशस्य गुप्त्यै ।

---

चन्द्रकेतुरिति । अत्यद्भुतप्रियवयस्यलाभाऽभ्युदयेन = अत्यद्भुतस्य = अत्याश्चर्यकरस्य, प्रियवयस्यस्य=हृद्यमित्रस्य, यो लाभः=प्राप्तिः, स एव अभ्युदयः= उन्नतिः, तेन । विज्ञापयामि = निवेदयामि, स्निग्धेन = स्नेहयुक्तेन, अनरालसा-हसम् = अनरालम् = अकुटिलम् , साहसं = दुष्करं कर्म, यस्य तम् , 'अरालं वृजिनं जिह्मम्' इत्यमरः, 'साहसं तु दमे दुष्करकर्मणि । अविमृश्यकृतौ धार्ष्ट्ये' इति हैमः, अमुं = पुरःस्थं, वीरं = लवमित्यर्थः ।

राम इति । निरूप्य=दृष्ट्वा । अतिगम्भीरमधुरकल्याणाकृतिः =अतिगम्भीरा= अक्षोभणीया, मधुरा = सौन्दर्योपेता, कल्याणी = सुलक्षणा, आकृतिः = आकारो यस्य सः ।

त्रातुमिति । लोकान् त्रातुं परिणतः कायवान् अस्त्रवेद इव, ब्रह्मकोशस्य गुप्त्यै तनुं श्रितः क्षात्रो धर्म इव, सामर्थ्यानां समुदय इव, गुणानां सञ्चयो वा, जगत्पुण्यनिर्माणराशिः आविर्भूय स्थित इव इत्यन्वयः । लोकान् = भुवनानि, त्रातुं = रक्षितुं, परिणतः = परिणामं गतः, नररूपं गत इत्यर्थः, अस्त्रवेद इव = धनुर्वेद इव, कायवान् = मूर्तिमान् सन् , ब्रह्मकोशस्य = वेदसमूहस्य, 'वेदस्तत्त्वं तपो ब्रह्म, ब्रह्मा विप्रः प्रजापतिः ।' इत्यमरः, गुप्त्यै = रक्षणाय, तनुं = शरीरं, श्रितः = आश्रितः, क्षात्रः = क्षत्रसम्बन्धी, धर्म इव = स्वभाव इव, शौर्यादिरूप इव

---

चन्द्रकेतु—अभिवादन । आश्चर्यजनक प्रिय मित्रकी प्राप्तिरूप उन्नतिके कारण कुशल हूँ । इसलिए निवेदन करता हूँ कि पिताजी ! मेरा उदार, अकुटिल दुष्कर कर्म करनेवाले इस [illegible]—जैसे मुझे देखते हैं, उसी तरह विशेष स्नेहपूर्ण दृष्टिसे देखें ।

राम—( लवको देखकर ) [illegible] वत्सका यह मित्र अतिशय गम्भीर, सुन्दर और शुभ लक्षणोंसे युक्त आकारवाला है ।

यह लोकरक्षाके लिए शरीरधारीके रूपमें परिणत धनुर्वेदके समान, वेदसमूहकी रक्षा

सामर्थ्यानामिव समुदयः, संचयो वा गुणाना-
मा‌विर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥ ६ ॥

लवः—( स्वगतम् । ) अहो पुण्यानुभावदर्शनोऽय महापुरुषः ।

आश्वास इव भक्तीनामेकमायतन महत् ।
प्रकृष्टस्येव धर्मस्य प्रसादो मूर्तिसुन्दरः ॥ १० ॥

आश्चर्यम् ।

---

इति भाव., सामर्थ्याना = प्रारब्धकार्यनिर्वाहशक्तीनाम् , समुदाय इव = समूह इव, गुणानां = धैर्यादीनां, सञ्चयो वा = समूह इव, जगत्पुण्यनिर्माणराशिः = जगता = लोकानाम् , यानि पुण्यनिर्माणानि = धर्मानुष्ठानानि, तेषां राशिः = पुञ्ज॰, आविर्भूय = प्रत्यक्षीभूय, स्थित इव = विद्यमान इव, अयं वत्सस्य वयस्य इति पूर्ववाक्यांशेनान्वय॰ । अयं कोऽपि लोकोत्तर॰ पुरुष इति भावः । अत्र पञ्चानामपि गुणोत्प्रेक्षाणां मिथोऽनपेक्षया संसृष्टिः । मन्दाक्रान्ता वृत्तम् ॥ ६ ॥

लव इति । अहो = आश्चर्यद्योतकोऽयं निपात॰, पुण्यानुभावदर्शनः = पुण्ये = पवित्रे, अनुभावदर्शने = प्रभावविलोकने, यस्य स॰ ।

आश्वास इति । भक्तीनाम् आश्वास इव, एकं महत् भक्तीनाम् आयतनं च, प्रकृष्टस्य धर्मस्य मूर्तिसुन्दरः प्रसाद इव इत्यन्वयः । भक्तीना = श्रद्धानाम् , आश्वास इव = जनकस्थानसुखमिव, एकम्=अद्वितीयं, महत्=विपुलम् , भक्तीनां=श्रद्धानाम् , आयतनं च = आधारश्च, 'आश्वासःस्नेहभक्तीनाम्' इति पाठे स्नेहस्य = प्रेम्णः, शिष्टं सुगमम् । 'प्रकृष्टस्य = लोकोत्तरस्य, धर्मस्य = पुण्यस्य, मूर्त्या = शरीरेण, सुन्दरः = रुचिरः, 'संचर' इति पाठे—संचरणशील इत्यर्थः । प्रसाद इव = प्रसन्नता इव, महापुरुषेऽस्मिन् धर्मो मूर्तिमान् सन् सञ्चरतीति भाव॰ । अत्रोत्प्रेक्षाऽलङ्कारः ॥ १० ॥

---

करनेके लिए देहधारी क्षत्रियधर्मके समान; पराक्रमोंके समुदायके तुल्य, धैर्य आदि गुणोंके सञ्चयके सदृश, और लोकोंके धर्माऽनुष्ठानोंका समूह प्रकट होकर स्थित है ॥ ९ ॥

लव—( मन ही मन ) अहो ! ये महापुरुष पवित्र सामर्थ्य और दर्शन से युक्त हैं ।

ये श्रद्धाओंके सुखजनक स्थानके सदृश, श्रद्धाओंके अद्वितीय और महान् आधार तथा लोकोत्तर धर्मकी मूर्तिमती प्रसन्नताके सदृश हैं ॥ १० ॥

आश्चर्य है ।

विरोधो विश्रान्तः, प्रसरति रसो निर्वृतिघन-
स्तदौद्धत्यं क्वापि व्रजति, विनयः प्रह्वयति माम् ।
झटित्यस्मिन्दृष्टे किमिति परवानस्मि, यदि वा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥ ११ ॥

रामः—तत्किमयमेकपद एव मे दुःखविश्रामं ददात्युपस्नेहयति च कुतोऽपि निमित्तादन्तरात्मानम् ? अथवा 'स्नेहश्च निमित्तसव्यपेक्ष' इति विप्रतिषिद्धमेतत् ।

---

विरोध इति । विरोधो विश्रान्तः, निर्वृतिघनो रसः प्रसरति, तत् औद्धत्यं क्वापि व्रजति, विनयो मां प्रह्वयति, अस्मिन् दृष्टे किमिति झटिति परवान् अस्मि, यदि वा हि तीर्थानाम् इव महतां कोऽपि महार्घः अतिशय इत्यन्वयः । विरोधः = वैरं, 'वैरं विरोधो विद्वेष' इत्यमरः, विश्रान्तः = विरतः । निर्वृतिघनः = निर्वृत्या = आनन्देन, घनः=सान्द्रः, एतादृशो रसः=अनुरागः, प्रसरति=विसर्पति, अथ शान्त्यादयस्य भावस्योदयः । तत्=प्राग्भवम् , औद्धत्यं=दर्पः, क्वापि=कुत्रापि, व्रजति = गच्छति, एतद्दर्शनेनैव दर्पो दूरीभूत , इयं भावशान्तिः । विनयः =नम्रता, मां = लवं, प्रह्वयति=नमयति । अस्मिन्=पुरःस्थिते महापुरुषे, दृष्टे=अवलोकित एव, किमिति= केन हेतुना, झटिति=सत्वरं, परवान्=पराधीनप्रायः, अस्मि=भवामि । यदि वा = अथवा, हि=यतः, तीर्थानाम् इव = पुण्यक्षेत्राणाम् इव, महतां = महापुरुषाणां, कोऽपि = लोकोत्तरः, महार्घः = महामूल्यः, अतिशयः=उत्कर्षः, भवतीति शेषः । अत्रोपमाऽर्थान्तरन्यासयोः सङ्करः । शिखरिणी वृत्तम् ॥ ११ ॥

राम इति । एकपद एव = एकस्मिन्क्षण एव, अव्ययपदमेतत् , दुःखविश्रामं = दुःखस्य = सीताविरहोत्पन्नायाः पीडायाः, विश्रामं = विश्रान्तिम् , 'विश्राम' इत्यत्र श्रम एव श्रामः, स्वार्थे अण् , ततो विशिष्टः श्रामो विश्राम इति गतिसमासः, अन्यथा घञि 'नोदात्तोपदेशस्ये'त्यादिना निषेधेन वृद्ध्यनुपलम्भात्पाणिनीयत्वाऽऽपत्तिः स्यादिति । कुतोऽपि = अनिर्वाच्यात् , निमित्तात् = हेतोः, अन्तरात्मानम् = अन्तःकरणम् , उपस्नेहयति = स्नेहयुक्तं करोति । निमि-

---

वैर शान्त हो गया, आनन्द से पूर्ण यह अनुराग फैल रहा है, वह दर्प कहीं पर चला गया है और नम्रता मुझे झुका रही है, इनके देखते न जाने क्यों झटपट परवश हो गया हूँ । अथवा तीर्थ स्थानों की तरह महापुरुषों का कोई अनूठा उत्कर्ष होता है ॥ ११ ॥

राम—यह बात क्या है ? सहसा ही दुःख को विश्राम दे रहा है, किसी कारण से मन को स्नेहयुक्त कर रहा है, अथवा 'स्नेह कारण की अपेक्षा करता है' यह विरुद्ध बात है ।

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ १२ ॥

लवः—चन्द्रकेतो! क एते?

---

त्तसव्यपेक्षः = व्यपेक्षया सह वर्तत इति सव्यपेक्षः, निमित्तेन = कारणेन, सव्यपेक्षः = व्यपेक्षायुक्तः, इत्येतत् = इतीदं, विप्रतिषिद्धं = विशेषेण विरुद्धम्, स्वाभाविकोऽसौ प्रणयो न कमपि हेतुमपेक्षत इति भावः।

व्यतिषजतीति। आन्तरः कोऽपि हेतुः पदार्थान् व्यतिषजति, प्रीतयः बहिरुपाधीन् न संश्रयन्ते खलु। हि पतङ्गस्य उदये पुण्डरीकं विकसति। हिमरश्मौ उद्गते चन्द्रकान्तो द्रवति इत्यन्वयः। आन्तरः = अभ्यन्तरस्थः, कोऽपि = निर्वक्तुमशक्यः, हेतुः = कारणं, पदार्थान् = वस्तूनि, व्यतिषजति = परस्परसंलग्नान् करोति, 'षञ्ज सङ्गे' इति धातोरन्तर्भावितण्यर्थे लट्, 'दंशसञ्जस्वञ्जां शपि' इति नलोपः, 'उपसर्गात्सुनोती' त्यादिना षत्वम्, प्रीतयः = स्नेहाः, बहिरुपाधीन् = बाह्यधर्मान्, पुत्रमित्रकलत्रत्वादिहेतूनिति भावः, न संश्रयन्ते = स्वोत्पादकत्वेन नाऽपेक्षन्त इति भावः, खलु = निश्चयेन। हि = यस्मात्कारणात्, पतङ्गस्य = सूर्यस्य, 'पतङ्गौ पक्षिसूर्यौ च' इत्यमरः, उदये = उदयगते, पुण्डरीकं = श्वेतकमलं, विकसति = उन्मीलति। हिमरश्मौ = चन्द्रे, उद्गते = उदिते सति, चन्द्रकान्तः = चन्द्रकान्ताऽऽख्यो मणिविशेषः, द्रवति = आर्द्रीभवति। सूर्योदये पद्मस्य विकासश्चन्द्रोदये चन्द्रकान्तमणेर्द्रवीभावश्च यथा हेतुनिरपेक्षस्तथैव एतस्य बालस्यावलोकनेन सञ्जातोऽयं मदीयस्नेहो न कमपि हेतुमपेक्षते, अपि तु स्वाभाविको मत्स्नेह इति भावः। अत्र द्वाभ्यां विशेषाभ्यां सामान्येनार्थसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः। मालिनी वृत्तम् ॥ १२ ॥

लव इति। क एते इत्यत्र आदरार्थकं बहुवचनम्।

---

भीतर रहा हुआ कोई कारण पदार्थोंको परस्पर मिलाता है, प्रेम बाहरके कारणोंका आश्रय नहीं करता। क्योंकि—सूर्यके उदय होनेपर श्वेत कमल खिलता है और चन्द्रके उदित होनेपर चन्द्रकान्त मणि पिघलता है ॥ १२ ॥

लव—चन्द्रकेतुजी! ये कौन हैं?

चन्द्रकेतुः—प्रियवयस्य ! ननु तातपादाः।

लवः—ममापि धर्मतस्तथैव, यतः प्रियवयस्येति भवतोक्तम्। किंतु चत्वारः किल भवन्त्येवंव्यपदेशभागिनस्तत्रभवन्तो रामायणकथापुरुषाः। तद्विशेषं ब्रूहि।

चन्द्रकेतुः—ज्येष्ठतात इत्यवेहि।

लवः—( सोल्लासम्। ) कथं रघुनाथ एव ? दिष्ट्या सुप्रभातमद्य, यद्देवो दृष्टः। (सविनयं निर्वर्ण्य।) तात ! प्राचेतसान्तेवासी लवोऽभिवादयते।

रामः—आयुष्मन् ! एह्येहि। ( इति सस्नेहमालिङ्ग्य। ) अयि वत्स ! कृतमत्यन्तविनयेन। अङ्गेन मामपरिश्लथं परिरम्भस्व।

---

चन्द्रकेतुरिति। तातपादाः = पितृचरणाः।

लव इति। धर्मतः = वयस्यधर्मतः, तथैव = तातपादा एव, एवंव्यपदेशभागिनः = तातपादेतिपदभाजः। तत्रभवन्तः = पूजनीयाः, रामायणकथापुरुषाः = रामायणस्य = तदाख्यग्रन्थस्य, या कथा, तस्याः पुरुषाः = प्रधानपात्राणि। तत् = तस्मात्कारणात्, विशेषं ब्रूहि = विशेषनाम्ना सूचय, चतुर्षु रामादिषु कोऽयमिति प्रतिपादयेति भावः।

चन्द्रकेतुरिति। अवेहि = जानीहि।

लव इति। सोल्लासं = सहर्षम्। रघुनाथ एव = राम एव। सुप्रभातं = शोभनं विभातम्, देवः = महाराजः। प्राचेतसान्तेवासी = वाल्मीकिशिष्यः, अभिवादयते = प्रणमति, भवन्तमिति शेषः।

राम इति। एहि एहि = आगच्छ आगच्छ, अनुकम्पायां द्विरुक्तिः। कृतम् = अलम्, अत्यन्तविनयस्य नावश्यकतेति भावः। अपरिश्लथम् =

---

चन्द्रकेतु—हे मित्र ! ये पूज्य पिताजी हैं।

लव—तब ये न्याय से मेरे भी पूज्य पिताजी ही हैं, क्योंकि आपने मुझे 'प्रिय मित्र' कहा है। परन्तु आपके 'पिता' शब्द व्यवहार के योग्य, पूजनीय और रामायण कथा के प्रधान पात्र चार हैं, इस कारण से विशेष नाम बतलाइये।

चन्द्रकेतु—इन्हें आप ज्येष्ठ पिताजी जानिए।

लव—(हर्ष के साथ) क्या रघुनाथजी ही हैं ? भाग्य से आज सुप्रभात है, जो कि महाराज का दर्शन मिल गया। ( नम्रता के साथ देखकर ) पिताजी ! महर्षि वाल्मीकि का छात्र लव अभिवादन करता है।

राम—चिरंजीव ! आओ आओ। ( स्नेह के साथ आलिङ्गन कर ) अये वत्स ! अधिक नम्रता दिखाने की आवश्यकता नहीं है। तुम मुझे अङ्ग से [illegible] आलिङ्गन करो।

परिणतकठोरपुष्करगर्भच्छदपीनमसृणसुकुमारः।
नन्दयति चन्द्रचन्दननिष्यन्दजडस्तव स्पर्शः॥ १३ ॥

लवः—( स्वगतम् । ) ईदृशो मां प्रत्यमीषामकारणस्नेहः । मया पुनरेभ्य एवाभिद्रोग्धुमज्ञेनायुधपरिग्रहः कृतः । (प्रकाशम् ।) मृष्यन्तां त्विदानीं लवस्य बालिशता तातपादाः ।

---

अशिथिलं, दृढमिति भावः, परिरम्भस्व = आलिङ्ग ।

परिणतेति । परिणतकठोरपुष्करगर्भच्छदपीनमसृणसुकुमारः चन्द्रचन्दननिष्यन्दजडः तव स्पर्शः नन्दयति इत्यन्वयः । परिणतकठोरपुष्करगर्भच्छदपीनमसृणसुकुमारः = परिणतं = विकसितम्, कठोरं = सम्पूर्णम्, यत् पुष्करं = पद्मम्, तस्य गर्भच्छद इव = अभ्यन्तरस्थपत्रम् इव, पीनः = स्थूलः, मसृणः = स्निग्धः, सुकुमारः = कोमलः, चन्द्रचन्दननिष्यन्दजडः = इन्दुश्रीखण्डद्रवशीतलः, तव = भवतः, स्पर्शः = आमर्शनं, नन्दयति = आह्लादयति मामिति शेषः । अत्र द्वयोरुपमयोर्मिथोऽनपेक्षया स्थितेः संसृष्टिः । आर्या छन्दः ॥ १३ ॥

लव इति । अमीषाम् = एतेषाम्, रामचन्द्रादीनामित्यर्थः, अकारणस्नेहः = निर्हेतुकः प्रेमा । अज्ञेन = अनभिज्ञेन, स्वपरविवेकरहितेनेति भावः, एभ्य एव = रामाय एवेति भावः, 'तादर्थ्ये चतुर्थी वाच्या' इति चतुर्थी, न तु क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति चतुर्थी, तस्य सूत्रस्य 'क्रुधद्रुहोरुपसृष्टयोः कर्म'ति सूत्रेण बाध्यत्वात् । अभिद्रोग्धुम् = अपकर्तुम्, आयुधपरिग्रहः = शस्त्रधारणं, कृतः = अनुष्ठितः, 'आयुधपरिग्रहं यावदध्यारूढो दुर्योगः' इति पाठे—आयुधपरिग्रहं यावत् = शस्त्रधारणपर्यन्तम्, दुर्योगः = दुरुपायः, 'योगः संनहनोपायध्यानसंगतियुक्तिषु ।' इत्यमरः, अध्यारूढः = प्रवृत्त इत्यर्थः, मखध्वंसायेति भावः । बालिशतां = मूर्खताम्, 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः ।' इत्यमरः, मृष्यन्ताम् = सहन्ताम्, 'मृष तितिक्षायाम्' इति दैवादिकाद्धातोः प्रार्थनायां लोट् ।

---

विकसित और पूर्ण कमलके भीतरके पत्रकी तरह पुष्ट, स्निग्ध और कोमल तथा चन्द्र (अथवा कर्पूर) और चन्दनके द्रवके सदृश शीतल तुम्हारा स्पर्श मुझे आनन्दित कर रहा है ॥१३॥

लव—( मन ही मन ) इनका मेरे ऊपर ऐसा अकारण प्रेम है । बेसमझ होकर मैंने इन्हींका अपकार करनेके लिए शस्त्र ग्रहण किया । ( प्रकाश भावसे ) पिताजी ! अब आप लवकी मूर्खताको क्षमा कीजिये ।

रामः—किमपराद्धं वत्सेन ?

चन्द्रकेतुः—अश्वानुयात्रिकेभ्यस्तातप्रतापाविष्करणमुपश्रुत्य वीरायितमनेन ।

रामः—नन्वयमलङ्कारः क्षत्रियस्य ।

न तेजस्तेजस्वी प्रसृतमपरेषां विषहते
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।

---

राम इति । वत्सेन = वात्सल्यपात्रेण, त्वयेति भावः, किम् अपराद्धं = कोऽपराधोऽनुष्ठितः ? यदयं क्षमां प्रार्थयस इति भावः ।

चन्द्रकेतुरिति । अश्वानुयात्रिकेभ्यः = अनुयात्रायां नियुक्ताः आनुयात्रिकाः, 'तत्र नियुक्त' इति ठक्, अश्वस्य = यज्ञियहयस्य, आनुयात्रिकेभ्यः = अनुसरणकारिभ्यः, अश्वरक्षार्थमश्वानुचारिभ्य इति भावः, 'आख्यातोपयोगे' इति पञ्चमी, तातप्रतापाविष्करणम् = तातस्य = पितुः, भवत इति भावः, प्रतापस्य=सामर्थ्यस्य, आविष्करणम् = प्रकाशनम्, 'योऽयमश्व' इत्याद्याकारकमिति भावः, उपश्रुत्य = आकर्ण्य, अनेन = लवेन, वीरायित = वीरवदाचरितं, संग्रामः प्रारब्ध इति भावः ।

राम इति । अयं = वीरभावः ।

न तेज इति । तेजस्वी प्रसृतम् अपरेषां तेजो न विषहते, तस्य स प्रकृतिनियतत्वात् अकृतकः स्वो भावः देवो दिनकरो मयूखैः अश्रान्तं तपति यदि आग्नेयो ग्रावा निकृत इव किं तेजांसि वमति ? इत्यन्वयः । तेजस्वी = महाप्रतापी जनः, प्रसृतं = विस्तृतम्, अपरेषाम्=अन्येषां, तेजः=प्रतापं, न विषहते=न क्षाम्यति, 'परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्' इति षत्वम् । तस्य = तेजस्विनः, सः = परतेजोऽसहनरूपो धर्मः, प्रकृतिनियतत्वात् = स्वभावव्याप्तत्वात्, अकृतकः= अकृत्रिमः, अनागन्तुक इति भावः । स्वः=आत्मीयः, भावः=धर्मः, अस्तीति शेषः ।

---

राम—वत्सने क्या अपराध किया ?

चन्द्रकेतु—घोड़ेके अनुचरोंसे आपके (पिताके) प्रतापको प्रकट करनेवाली घोषणा सुनकर इन्होंने वीरके सदृश आचरण (युद्ध) किया ।

राम—अरे ! यह तो क्षत्रियका अलङ्कार है ।

तेजस्वी पुरुष फैले हुए दूसरोंके तेजको नहीं सहता है । उसका यह (दूसरोंका तेज न सहना) स्वभावसे व्याप्त होनेके कारण अकृत्रिम (स्वाभाविक) अपना धर्म है । [illegible]

मयूखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयो ग्रावा निकृत इव तेजांसि वमति ? ॥१४॥

चन्द्रकेतुः—अमर्षोऽप्यस्यैव शोभते महावीरस्य । पश्यन्तु हि तातपादाः ? प्रियवयस्यनियुक्तेन जृम्भकास्त्रेण विक्रम्य स्तम्भितानि सर्वसैन्यानि ।

रामः—( सविस्मयखेद निर्वर्ण्य * । स्वगतम् । ) अहो, वत्सस्य ईदृशः प्रभावः ? ( प्रकाशम् । ) वत्स ! संह्रियतामस्त्रम् । त्वमपि चन्द्रकेतो निर्व्यापारतया विलक्षाणि सान्त्वय बलानि ।

---

देवः = द्योतनशीलः, दिनकर सूर्यः, मयूखैः = किरणैः, अश्रान्त = विश्रामरहितं, निरन्तरमिति भाव, तपति यदि=ताप करोति चेत्, आग्नेय=अग्निसम्बन्धी, ग्रावा =प्रस्तर, सूर्यकान्तमणिरिति भावः, निकृत इव=तिरस्कृत इव, किं = कस्माद्धेतोः, तेजासि = अग्नीन्, वमति = उद्गिरति, उत्पादयतीति भाव १ यथा सूर्यकरसन्तप्तः सूर्यकान्तमणिरग्नीनुत्पादयति, तथैव वीरवरोऽयं लवोऽप्यस्मत्प्रतापसंतप्तः सन् स्वकीयं सामर्थ्यं प्राकाशयत्, उभयत्रापि स्वभावातिरिक्तो नान्यो हेतुरिति भावः, अत परप्रतापामर्षण क्षत्रियस्य भूषणमिति पूर्ववाक्यार्थेन सङ्गति । अत्र विशेषेण सामान्यार्थसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कार, निकृत इवेत्यत्र क्रियोत्प्रेक्षा च, तथा च द्वयो सङ्करः । शिखरिणी वृत्तम् ॥ १४ ॥

चन्द्रकेतुरिति । अमर्षोऽपि = अक्षमापि, न केवलं तेजः किन्तु अक्षमापीति भाव, प्रियवयस्यनियुक्तेन = प्रियवयस्येन = प्रियमित्रेण, लवेनेति भावः, नियुक्तेन=प्रेरितेन, विक्रम्य=पराक्रम कृत्वा, स्तम्भितानि = निष्क्रियाणि कृतानि ।

राम इति । अस्त्रं = जृम्भकास्त्रं, संह्रियताम् = आकृष्यताम्, निवार्यतामिति भावः । निर्व्यापारतया=क्रियाशून्यत्वेन, विलक्षाणि=विस्मयान्वितानीति भाव, 'विलक्षो विस्मयान्विते' इत्यमर, बलानि=सैन्यानि, सान्त्वय=मधुरवचनै समाश्वासयेति भाव ।

---

किरणोंसे लगातार तपते हुए तो सूर्यकान्त मणि तिरस्कृतकी तरह होकर क्यों आग उगलता है ॥१४॥

चन्द्रकेतु—असहनशीलता भी इसी महावीरकी शोभित होती है । देखिए पिता जी ! प्रिय मित्र (लव) से छोडे गये जृम्भक अस्त्रने पराक्रम करके सब सेनाओं को स्तब्ध कर दिया है।

राम—( आश्चर्य और खेदके साथ देखकर मन ही मन ) अहो ! वत्सका ऐसा प्रभाव है ? ( प्रकाश भावसे ) वत्स ! अस्त्रका निवारण करो । चन्द्रकेतो ! तुम भी क्रियाशून्य होनेसे आश्चर्यित सेनाओंको आश्वासन दो ।

---

* क्वचित् 'विलोक्य' इत्येव पाठान्तरम् ।

( लवः प्रणिधानं नाटयति ।

चन्द्रकेतुः—यथा निर्दिष्टम् । ( इति निष्क्रान्तः । )

लवः—तात ! प्रशान्तमस्त्रम् ।

रामः–सरहस्यप्रयोगसंहारजृम्भकास्त्राणि दिष्ट्या वत्सस्यापि सपद्यन्ते ।

ब्रह्मादयो ब्रह्महिताय तप्त्वा परःसहस्रं शरदस्तपांसि ।

एतान्यदर्शन्गुरवः पुराणाः स्वान्येव तेजांसि तपोमयानि ॥ १५ ॥

अथैतामस्त्रमन्त्रोपनिषदं भगवान्कृशाश्वः परःसहस्राधिकसंवत्सरपरि-

---

लव इति । प्रणिधानं = ध्यानम् , अस्त्रोपसंहारार्थमिति शेषः ।

चन्द्रकेतुरिति । निर्दिष्टम् = आज्ञप्तं, तथैव करोमीति भावः ।

लव इति । प्रशान्तं = संहृतम् ।

राम इति । सरहस्यप्रयोगसंहारजृम्भकास्त्राणि = सरहस्यौ = अङ्गन्यासाद्यनुष्ठानसहितौ, प्रयोगसंहारौ = नियोजनाकर्षणे, येषां तादृशानि जृम्भकास्त्राणि, संपद्यन्ते = संपन्नानि भवन्ति, भाग्येन तवाऽप्येतादृशान्यस्त्राणीति भावः, 'सरहस्यप्रयोगसंहरणान्यस्त्राण्याम्नायवन्ति' इति पुस्तकान्तरपाठस्तत्र—आम्नायवन्ति= सम्प्रदायसिद्धानि, गुरूपदेशेनैवं तादृशान्यस्त्राणि लभ्यन्त इति भावः ।

ब्रह्मादय इति । प्रथमाऽङ्के चित्रदर्शनाऽवसरे ( २७ तमे पृष्ठे ) रामेणाभिहितोऽयं श्लोको व्याख्यातपूर्व इति तत एव द्रष्टव्यः ॥ १५ ॥

अथेति । अथ = अत्रेदं वाक्यारम्भार्थकमव्ययम् , अस्त्रमन्त्रोपनिषदम् = अस्त्रमन्त्रमयीं ब्रह्मविद्याम् , 'एतन्मन्त्रपारायणोपनिषदम्' इति पाठे—एतेषां = जृम्भकास्त्राणाम् , मन्त्राणां = जप्यमानानां वाक्यविशेषाणाम् , पारायणं = पूर्वाभ्यासेन पारगमनम् , तद्रूपाम् उपनिषदम् = गुह्यविद्याम् इत्यर्थः, परःसहस्राधिकसंवत्सरपरिचर्यानिरताय = सहस्रात् परे परःसहस्राः =

---

( लव ध्यानका अभिनय करते हैं )

चन्द्रकेतु—जैसी आज्ञा है । ( ऐसा कहकर जाते हैं । )

लव—पिताजी ! अस्त्र शान्त हो गया ।

राम—भाग्यसे वत्सको भी अङ्गन्यासादि अनुष्ठानसे युक्त प्रयोग–संहारवाले जृम्भक-अस्त्र सम्पन्न हुए हैं ।

चित्रदर्शनावसरमें प्रथम अङ्कमें ( पृष्ठ २७ में ) इस श्लोकका अर्थ देखिए ॥ १५ ॥

इस अस्त्रमन्त्रमयी ब्रह्मविद्याको भगवान् कृशाश्वने सहस्रोंसे अधिक वर्षोंतक सेवामें

चर्यानिरतायान्तेवासिने कौशिकाय प्रोवाच। स भगवान् मह्यमिति गुरुपूर्वानुक्रमः। कुमारस्य कुतः सम्प्रदाय ? इति पृच्छामि।

लवः—स्वतःप्रकाशान्यावयोरस्त्राणि।

रामः—( विचिन्त्य। ) किं न सभाव्यते ? प्रकृष्टपुण्योपादानकः कोऽपि महिमा स्यात्। द्विवचनं तु कथम् ?

लव—भ्रातरावावां यमौ।

---

सहस्रादधिका, राजदन्तादि, 'पारस्करप्रभृतीनि च संज्ञायाम्' इत्यत्र पाठात्सुट्, पर सहस्रेभ्य अधिका = अतिरिक्ताः, ये संवत्सरा = हायनानि, तत्कालं व्याप्य या परिचर्या = शुश्रूषा, 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया, 'अत्यन्तसंयोगे च' इति समास, तस्या निरताय = तत्पराय, अन्तेवासिने = गुरोः अन्ते = समीपे, वसतीति तच्छीलस्तस्मै = छात्राय, 'शयवासवासिष्वकालात्' इत्यलुक्, कौशिकाय = विश्वामित्राय। गुरुपूर्वानुक्रम = गुरूणाम् = आचार्याणाम्, पूर्वः = प्राचीनः, अनुक्रमः = परम्परा, सम्प्रदाय इत्यर्थ, कुत = कस्मात् ?।

लव इति। स्वत प्रकाशानि = स्वत = स्वयमेव, गुरूपदेशं विनैवेति भावः, प्रकाश = प्रादुर्भाव, येषा तानि, अस्त्राणि = जृम्भकाऽस्त्राणि।

राम इति। किं न संभाव्यते = सर्वमपि सभाव्यत एवेति भावः, प्रकृष्टपुण्योपादानक = प्रकृष्टम् = उत्कृष्टम्, पुण्यम् = धर्म, उपादानं = कारणं यस्य स, पुण्योत्तर 'परिपाक' शब्दाधिक क्वचित्क पाठस्तत्र परिपाकः = परिणाम इत्यर्थ। द्विवचनन्तु = 'आवयो' इति षष्ठीद्विवचन तु।

लव इति। यमौ = यमजावित्यर्थ, 'यमो दण्डधरे ध्वाङ्क्षे संयमे यमजेऽपि च' इति विश्व।

---

तत्पर शिष्य विश्वामित्रजीको बतलाया। उन भगवान् विश्वामित्रने मुझको बतलाया, इस तरह आचार्योंका प्राचीन क्रम है। कुमारको कहाँसे इसका उपदेश मिला ? यह पूछता हूँ।

लव—हम दोनोंको इन अस्त्रोंका स्वत ( आपसे आप ) प्रादुर्भाव हुआ है।

राम—( विचार कर ) क्या नहीं हो सकता ? उत्कृष्ट धर्महेतुक कोई महिमा होगी। द्विवचन क्यों ?

लव—हम दोनों जुडवे ( यमज = एक साथ पैदा हुए ) भाई हैं।

रामः—स तर्हि द्वितीयः क्व ?

( नेपथ्ये। )

दण्डायन ! *

आयुष्मतः किल लवस्य नरेन्द्रसैन्यै-
रायोधन ननु किमात्थ ? सखे ! तथेति।
अद्यास्तमेतु भुवनेषु च राजशब्दः †
क्षत्रस्य शस्त्रशिखिनः शममद्य यान्तु ॥ १६ ॥

---

राम इति। तर्हि = एवं चेत्, युवयोर्यमजत्वे सतीति भावः।

दण्डेति। दण्डायननामा कश्चिद्वाल्मीकिशिष्यस्तस्य चतुर्थाङ्कविष्कम्भके सौधातकिनामधेयेनापरेण सतीर्थ्येन संवाद संजात।

आयुष्मत इति। सखे! आयुष्मतो लवस्य नरेन्द्रसैन्यैः आयोधनं ननु? किल तथा इति आत्थ किम्? अद्य भुवनेषु राजशब्द. अस्तम् एतु। अद्य क्षत्रस्य शस्त्रशिखिन शमं यान्तु इत्यन्वय। सखे=हे मित्र! आयुष्मतः=दीर्घायुषो लवस्यानुमतयैतादृशोक्तिः, लवस्य तन्नामकस्य मदनुजस्य, नरेन्द्रसैन्यैः = राजसैनिकै', सहेति शेषः, 'सहयुक्तेऽप्रधाने' इति सूत्रेण विनाऽपि तद्योगं तृतीया, आयोधनं ननु = युद्धं किम्, अत्र ननुशब्द. प्रश्नार्थक., 'प्रश्नावधारणाऽनुज्ञाऽनुनयामन्त्रणे ननु।' इत्यमर। किल = निश्चयेन, तथा इति=युद्धं संजातम् इति, आत्थ किं = कथयसि किम्? अद्य = अस्मिन् दिने, भुवनेषु = लोकेषु, राजशब्द.='राजे'त्याकारक' शब्द', अस्तं=नाशम्, एतु= प्राप्नोतु, अद्य= अस्मिन्दिने, क्षत्रियस्य = राजन्यस्य, शस्त्रशिखिन.। शस्त्राणि = आयुधानि, एव शिखिन' = अग्नयः, शमं=शान्ति, निर्वाणमिति भाव, यान्तु = प्राप्नुवन्तु। महाराजेत्युपाधि विनाश्य क्षत्रस्य शस्त्राग्नितापापहरणमपि अस्माकं कर्तव्यमिति भावः। अत्र रूपकाऽलङ्कार। वसन्ततिलका वृत्तम् ॥ १६ ॥

---

राम—तव वह दूसरा भाई कहाँ है ?

( नेपथ्यमें )

दण्डायन !

मित्र ! चिरञ्जीवी लवका राजाकी सेनाके साथ युद्ध हो रहा है क्या ? 'हो रहा है' ऐसा कहते हो क्या ? आज लोकोंमें 'राजा' शब्द नाशको प्राप्त हो और आज क्षत्रियकी शस्त्ररूप अग्नि बुझ जाय ॥ १६ ॥

---

* 'भाण्डायन भाण्डायन' इति पाठान्तरम्। † 'भुवनेष्वधिराजशब्द.' इति पाठान्तरम्।

रामः—

अथ कोऽयमिन्द्रमणिमेचकच्छविर्ध्वनिनैव बद्धपुलकं करोति माम्।
नवनीलनीरधरधीरगर्जितक्षणबद्धकुड्मलकदम्बडम्बरम् ॥ १७ ॥

लवः—अयमसौ मम ज्यायानार्यः कुशो नाम भरताश्रमात्प्रतिनिवृत्तः।

रामः—( सकौतुकम्। ) तर्हि वत्स ! इत एवैतमाह्वयायुष्मन्तम्।

लवः—यदाज्ञापयति। ( इति निष्क्रान्तः। )

( ततः प्रविशति कुशः। )

---

अथेति। अथ इन्द्रमणिमेचकच्छविः कः अयं ध्वनिना एव बद्धपुलकं मां नवनीलनीरधरधीरगर्जितक्षणबद्धकुड्मलकदम्बडम्बरं करोति इत्यन्वयः। अथ = वाक्यारम्भार्थकमिदमव्ययम्, इन्द्रमणिमेचकच्छविः = इन्द्रमणिरिव = इन्द्रनीलमणिरिव, मेचका = नीलवर्णा, छविः = कान्तिः, यस्य सः, कः अयं = कोऽसौ पुरः स्थितो बालकः, ध्वनिना एव = कण्ठरवेणैव, मां = रामं, नवनीलनीरधरधीरगर्जितक्षणबद्धकुड्मलकदम्बडम्बरं=नवः = नूतनः, नीलः=कृष्णवर्णः, यो नीरधरः = मेघः, तस्य धीरं=गम्भीरम्, यत् गर्जितं=स्तनितम्, तस्य क्षणे = काले, बद्धपुलकम् = बद्धाः = उत्पन्नाः, पुलकाः = रोमाञ्चाः, यस्य तं, बद्धाः = उद्भिन्नाः, कुड्मलाः = मुकुलाः, यस्य एतादृशस्य कदम्बस्य = नीपतरोः, डम्बरं= सदृशम्, करोति = विदधाति। अस्य बालकस्य शब्दमात्रेणैव रोमाञ्चितो भवामि इति भावः। अत्र द्वयोरुपमयोर्मिथोऽनपेक्षया स्थितेः संसृष्टिः। मञ्जुभाषिणी वृत्तम् ॥ १७ ॥

लव इति। असौ = दूरादागतः, अयं = पुरः स्थितः, ज्यायान् = ज्येष्ठः, अग्रज इति भावः, आर्यः = पूज्यः।

राम इति। इत एव = अत्रैव, स्थान इति शेषः, आह्वय = आकारय।

---

राम—अभी इन्द्रनील मणिके सदृश श्याम कान्तिवाला यह कौन शब्दमात्रसे मुझको नये और श्याम वर्णवाले मेघके गम्भीर गर्जनके अवसरमें विकसित मुकुलवाले कदम्बके सदृश रोमाञ्चयुक्त कर रहा है ? ॥ १७ ॥

लव—ये मेरे बड़े भाई पूज्य कुशजी भरत ऋषिके आश्रमसे लौटे हैं।

राम—( उत्कण्ठाके साथ ) तब वत्स ! इस चिरञ्जीवको भी यहीं बुलाओ।

लव—जो आज्ञा ( ऐसा कहकर जाते हैं। )

( अनन्तर कुश प्रवेश करते हैं। )

कुशः—( सक्रोधं कृतधैर्यं धनुरास्फाल्य । )

दत्तेन्द्राभयदक्षिणैर्भगवतो वैवस्वतादा मनो-
दृप्तानां दमनाय दीपितनिजक्षत्रप्रतापाग्निभिः ।
आदित्यैर्यदि विग्रहो नृपतिभिर्धन्यं ममैतत्ततो
दीप्तास्त्रस्फुरदुग्रदीधितिशिखानीराजितज्यं धनुः ॥ १८ ॥

कुश इति । सक्रोधं कृतधैर्यमिति पदद्वयमपि क्रियाविशेषणम् । आस्फाल्य = ताडयित्वा ।

दत्तेन्द्राभयेति । भगवतो वैवस्वतात् मनोः आ दत्तेन्द्राभयदक्षिणैः, दृप्तानां दमनाय दीपितनिजक्षत्रप्रतापाग्निभिः आदित्यैः नृपतिभिः विग्रहो यदि, ततः दीप्तास्त्रस्फुरदुग्रदीधितिशिखानीराजितज्यं मम एतत् धनुर्धन्यम् इत्यन्वयः । भगवतः = ऐश्वर्यसमन्वितात्, वैवस्वतात् = विवस्वत्पुत्रात्, मनोः आ = मनुमारभ्य, 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी, वैवस्वतमनो राज्यकालादारभ्येति भावः, दत्तेन्द्राभयदक्षिणैः = दत्ता = वितीर्णा, इन्द्राय = देवराजाय, अभयदक्षिणा = अभयदानम्, यैस्तैः, एवं च दृप्तानां = दर्पयुक्तानां, दमनाय = निग्रहाय, 'दहनीये'ति पाठे नाशायेत्यर्थः, दीपितनिजक्षत्रप्रतापाग्निभिः = दीपित = प्रज्वलितः, निज = स्वीयः, क्षत्रप्रतापः = क्षत्रियप्रभावः, एव अग्निर्यैस्तैः, एतादृशैः आदित्यैः = सूर्यवंशोत्पन्नैः, नृपतिभिः = राजभिः, विग्रहो यदि = विरोधश्चेत्, ततः = तदा, दीप्तास्त्रस्फुरदुग्रदीधितिशिखानीराजितज्यं = दीप्तानाम् = ज्वलितानाम्, अस्त्राणाम्=आयुधानाम्, स्फुरन्त्यः = प्रकाशमानाः, उग्राः = तीक्ष्णाः, या दीधितयः = किरणाः, तासां शिखया = कोट्या, नीराजिता = कृतनीराजना, कृताऽऽरार्तिकेति भावः, ज्या = मौर्वी, यस्य तत्, एतादृशं मम = कुशस्य, एतत् = हस्तस्थं, धनुः=कार्मुकं धन्यं = कृतार्थम्, भवेदिति शेषः । सूर्यवंश्यैः प्रबलभूपालैः संग्रामे प्राप्ते सति ममैतद्धनुः प्रशंसनीयं भवेदिति भावः । एतेन अतिवीरवैशिष्ट्यवर्णनेन कुशस्य पराक्रमोत्कर्षो व्यज्यते । अत्र 'दत्तेन्द्राभयदक्षिणैः' इत्यत्र 'दीपिते'त्यादौ च द्वयोरूपकयोर्मिथोऽनपेक्षया स्थितेः संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

कुश—( क्रोधके साथ धैर्यपूर्वक धनुषको ताडितकर )

भगवान् वैवस्वत मनुसे आरम्भकर इन्द्रतकको अभय दक्षिणा देनेवाले, दर्पयुक्त पुरुषोंके दमनके लिए अपने क्षत्रिय-प्रतापरूप अग्निको प्रज्वलित करनेवाले सूर्यवंशोत्पन्न राजाओंसे विरोध हो जाय तो प्रज्वलित अस्त्रोंकी प्रकाशमान और भयङ्कर किरणोंकी शिखा ( अग्रभाग ) से आरती की गई मौर्वीसे युक्त मेरा धनुष धन्य होगा ॥ १८ ॥

( विकटं परिक्रामति । )

रामः—कोऽप्यस्मिन् क्षत्रियपोतके पौरुषातिरेकः । तथाहि ।

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो वीरो रसः किमयमित्युत दर्प एव ॥१९॥

लवः—( उपसृत्य । ) जयत्यार्यः ।

कुशः—नन्वायुष्मन् ! किमिय वार्ता युद्धं युद्धमिति ?

---

विकटमिति । विकट = विषम, परिक्रामति = परितः पादविक्षेप करोति ।

राम इति । क्षत्रियपोतके = क्षत्रबालके, कोऽपि = अनिर्वचनोयः, पौरुषातिरेकः = पौरुषस्य = तेजस , अतिरेक = अतिशयः । तमेव वर्णयति—

दृष्टिरिति । दृष्टिः तृणीकृतजगत्त्रयसत्त्वसारा, धीरोद्धता गतिः धरित्रीं नमयति इव, कौमारके अपि गिरिवत् गुरुता दधान· अयं किं वीरो रसः ? उत दर्प एव एति ? इत्यन्वयः । दृष्टि = नेत्र, तृणीकृतजगत्त्रयसत्त्वसारा = तृणीकृतः = तृणवदवज्ञात·, जगत्त्रयस्य = लोकत्रितयस्य, सत्त्वसारः = बलोत्कर्ष , यया सा, अयं बालको लोकत्रयमपि तृणवन्मन्यत इत्यस्य दर्शनेन प्रतीयत इति भावः । धीरोद्धता = धीरा = गाम्भीर्ययुक्ता, उद्धता = दर्पयुक्ता, गति = पादन्यासः, अस्येति शेष·, धरित्रीं = पृथ्वीं, नमयति इव = अवनतां करोति इव । तथा च कौमारकेऽपि = बाल्येऽपि, गिरिवत् = पर्वतवत् , गुरुता = गौरवं, दधान = धारयन् , अयं = बालक·, किं, वीरो रस = वीराख्यो रस·, उत = अथवा, दर्प एव = अभिमान एव, एति = आगच्छति । अस्य बालस्य लोकोत्तरं पौरुषं व्यज्यत इति भाव· । अत्र द्वितीयचरण उत्प्रेक्षा, गिरिवदित्यत्रोपमा च, तथा च द्वयोर्मिथोऽनपेक्षया स्थितेः संसृष्टिः । वसन्ततिलका वृत्तम् ॥ १९ ॥

कुश इति । किमियं वार्ता युद्धं युद्धमिति ? अत्र तु न किमपि युद्धं पश्यामि

---

( विकटरूपसे घूमते हैं । )

**राम**—इस क्षत्रिय-बालकमें अनिर्वचनीय तेजका आधिक्य है, जैसे—

इसका नेत्र तीनों लोकोंके बलके उत्कर्षको तृणकी तरह अवज्ञा करनेवाला है, एवम् गाम्भीर्य और दर्पसे युक्त इसकी गति पृथ्वीको अवनत-सी कर रही है । बाल्यावस्था-( बचपन ) में भी पर्वतकी तरह गौरवको धारण करता हुआ यह क्या वीर रस अथवा अभिमान ही आ रहा है ॥ १९ ॥

**लव**—( समीप जाकर ) आर्यकी जय हो ।

**कुश**—आयुष्मन् ! 'युद्ध युद्ध' यह क्या वृत्तान्त है ?

लवः—यत्किंचिदेतत् । आर्यस्तु दृप्तं भावमुत्सृज्य विनयेन वर्तताम् ।

कुशः—किमर्थम् ।

लवः—यदत्र देवो रघुनन्दनः स्थितः । स रामयणकथानायको ब्रह्मकोशस्य गोप्ता ।

कुशः—आशंसनीयपुण्यदर्शनः स महात्मा । किन्तु स कथमस्माभिरुपगन्तव्यः ? इति * संप्रधारयामि ।

लवः—यथैव गुरुस्तथोपसदनेन ।

---

इति भावः ।

लव इति । एतत् = युद्धम्, यत्किञ्चित् = अल्पमिति भावः । दृप्तं=दर्पयुक्तम्, उत्सृज्य = त्यक्त्वा, विनयेन = नम्रतया, वर्तता = तिष्ठतु ।

लव इति । देवः = महाराजः, रघुनन्दन = रामचन्द्रः । ब्रह्मकोशस्य = ब्रह्माण्डस्य, यद्वा ब्राह्मणस्य, जातावेकवचनम्, यद्वा वेदरूपधनस्य, गोप्ता = रक्षकः, उपलक्षणं चैतत्, गोब्राह्मणप्रतिपालक इति भाव । 'स च स्निह्यत्यावयोरुत्कण्ठते च युष्मत्सन्निकर्षस्ये'ति पाठान्तरं तत्र—स्निह्यति = स्नेहं करोति । युष्मत्सन्निकर्षस्य = भवत्संनिधेः, 'उत्कण्ठत' इति पदेन योगे 'अधीगर्थदयेशा कर्मणि' इति कर्मणि षष्ठी, उत्कण्ठते = उत्कण्ठा करोति ।

कुश इति । आशंसनीयपुण्यदर्शनः = आशंसनीयम् = अभिलषणीयम्, पुण्यं = पवित्रम्, दर्शनं = साक्षात्कारः, यस्य सः । कथं = केन प्रकारेण, उपगन्तव्यः = उपस्थातव्यः, सम्प्रधारयामि = निश्चिनोमि ।

लव इति । गुरुः = पूज्यजनः, पित्रादिरिति भावः, उपसदनेन = समीपगमनेन, 'उपचारणे'ति पाठे व्यवहारेणेति भावः, प्राप्य इति शेषः ।

---

लव—यह कुछ है । आर्य अभिमानयुक्त भावको छोड़कर नम्रतासे व्यवहार करें ।

कुश—क्यों ?

लव—क्योंकि यहाँपर महाराज रामचन्द्र विद्यमान हैं । वे रामायणकी कथाके प्रधानपुरुष और वेदरूप धनके रक्षक हैं ।

कुश—वे महात्मा अभिलाषके योग्य पवित्र दर्शनवाले हैं । परन्तु किस प्रकार मुझे उनके पास जाना चाहिए मैं यह निश्चय करता हूँ ।

लव—गुरुकी तरह उनके पास जाना चाहिए ।

---

* क्वचित् 'न' इत्यधिकः पाठः ।

कुशः—कथं हि नामैतत् ।

लवः—अत्युदात्तः सुजनश्चन्द्रकेतुरौर्मिलेयः प्रियवयस्येति सख्येन मामुपतिष्ठते । तेन सम्बन्धेन धर्मतस्तात एवायं राजर्षिः ।

कुशः—सम्प्रत्यवचनीयो राजन्येऽपि प्रश्रयः ।

( उभौ परिक्रामतः )

लवः—पश्यत्वेनमार्यो महापुरुषमाकारानुभावगाम्भीर्यसंभाव्यमान-

---

कुश इति । एतत् = रामस्य गुरुवदुपगमनीयत्वम्, कथं नाम = केन प्रकारेण, कथं हि नाम रामो गुरुवन्माननीय ? इति भावः ।

लव इति । अत्युदात्तः =अतिशयोच्चस्वभावः, सुजनः = सज्जनः, और्मिलेयः= ऊर्मिलापुत्रः, चन्द्रकेतुरिति यावत्, 'स्त्रीभ्यो ढक्'इति ढक् प्रत्ययः, प्रियवयस्य = हे प्रियमित्र, इति = इत्थं, सम्बोध्य, सख्येन = मैत्र्या, 'सख्युर्यः' इति यः, उपतिष्ठते = सङ्गच्छते, 'उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्' इति सङ्गतिकरणे आत्मनेपदम् । सम्बन्धेन = मैत्रीरूपेण, राजर्षिः = रामचन्द्रः, तात एव = पिता एव, अतोऽस्मिन् पितरीव आदरः प्रदर्शनीय इति भावः ।

कुश इति । सम्प्रति = अधुना, रामस्य पितृत्वेऽभ्युपगते सतीति भावः, राजन्येऽपि = क्षत्रियेऽपि, रामेऽपीति भावः । प्रश्रयः = प्रणयः, 'प्रश्रयप्रणयौ समौ' इत्यमरः, विनय इत्यर्थः, अवचनीयः = निर्दुष्टः, अद्य यावत् ऋते ब्राह्मणेभ्यो न कोऽपि क्षत्रिय आवाभ्यामभिवन्दितः, साम्प्रतं चन्द्रकेतुना सहास्माकं सख्यसम्बन्धात्तत्पितरि क्षत्रियश्रेष्ठे रामचन्द्रे विनयप्रदर्शनं नानुचितमिति भावः । 'करणीयः' इति पाठे कर्तव्य इत्यर्थः ।

लव इति । आकारानुभावगाम्भीर्यसंभाव्यमानविविधलोकोत्तरसुचरितातिः-

---

कुश—यह कैसे ?

लव—अतिशय ऊँचे स्वभाववाले, सज्जन, ऊर्मिलापुत्र ( चन्द्रकेतु ) 'प्रिय मित्र !' ऐसा सम्बोधन कर मित्रभावसे मेरे साथ सङ्गति कर रहे हैं । इस सम्बन्धसे ये राजर्षि धर्मसे पिता ही हैं ।

कुश—इस समय क्षत्रियमें प्रणय भी निर्दोष है ।

( दोनों घूमते हैं । )

लव—आकार, प्रभाव और गम्भीरतासे जिनके चरित्रोंका अनेक प्रकारके लोकोत्तर

विविधलोकोत्तरसुचरिताशयम् ।

कुशः—( निर्वर्ण्य । )

अहो प्रासादिकं * रूपमनुभावश्च पावनः † ।
स्थाने रामायणकविर्देवीं वाचमवीवृधत् ॥ २० ॥

( उपसृत्य ) तात ! प्राचेतसान्तेवासी कुशोऽभिवादयते ।

रामः—एह्येह्यायुष्मन् !

शयम् = आकारेण = सौम्याकृत्या, अनुभावेन = प्रभावेण, गाम्भीर्येण च = अक्षोभ्यत्वेन च, संभाव्यमानः = अनुमीयमानः, विविधः = अनेकप्रकारः, लोकोत्तरः = भुवनातिशायी, सुचरितानाम् = सुकर्मणाम्, अतिशय = उत्कर्षः, यस्य तम्, एतादृशमेनम् = अतिनिकटस्थं, महापुरुषं = श्रीरामचन्द्रम् ।

अहो इति । अहो प्रासादिकं रूपम्, पावनः अनुभावश्च । रामायणकविः देवीं वाचम् अवीवृधत् स्थाने इत्यन्वयः । अहो = आश्चर्यम्, प्रासादिकं = प्रसादसम्पन्नं, रूपम् = आकारः, दर्शनोत्तरमेव अयमस्त्यनुग्रहप्रवाह इति मतिपथे भासत इति भावः । पावनः = पवित्रः, अनुभावश्च = प्रभावश्च, अस्तीति शेषः । रामायणकविः = रामायणरचयिता, वाल्मीकिरिति भावः । देवीं वाचं = वाग्देवीम् अवीवृधत् = वर्द्धितवान्, वृधधातोर्णिचि लुङि चङि द्वित्वम्, 'व्यवीवृतत्' इति पाठे विवर्तयामास, रामायणकथारूपेण परिणतामकरोदिति भावः, व्युपसर्गकात् वृतुधातोर्णिचि लुङि द्वित्वम्, ( इति ) स्थाने = युक्तम्, रामसदृशं धीरोदात्तं नायकमुद्दिश्य रचितं वाल्मीकिमहाकाव्यं सार्थकमिति भावः । अत्र वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ २० ॥

उपसृत्येति । उपसृत्य = समीपं गत्वा, रामस्येति शेषः । प्राचेतसान्तेवासी = वाल्मीकिच्छात्रः ।

उत्कर्षका अनुमान किया जाता है, ऐसे इन महापुरुषका आर्य दर्शन करें ।

कुश—( देखकर )

अहो ! इनका प्रसादसम्पन्न रूप और पवित्र प्रभाव है । ( इनके वर्णनके लिए ) रामायणके कवि ( वाल्मीकिजी ) ने जो वाग्देवीको परिवर्धित किया है, वह उचित है ॥ २० ॥

( निकट जाकर ) पिताजी ! वाल्मीकि ऋषिका छात्र कुश अभिवादन करता है ।

रामः—चिरञ्जीव ! आओ आओ ।

* 'प्रामोदिकम्' इति पाठान्तरम् । † 'तादृशः' इति पाठान्तरम् ।

अमृताध्मातजीमूतस्निग्धसंहननस्य ते ।
परिष्वङ्गाय * वात्सल्यादयमुत्कण्ठते जनः ॥ २१ ॥

( परिष्वज्य, स्वगतम् । ) तत्किमित्यय च दारकः ।

अङ्गादङ्गात्स्रुत † इव निजः स्नेहजो देहसारः
प्रादुर्भूय स्थित इव बहिश्चेतनाधातुरेकः ।

---

अमृतेति । अयं जनः वात्सल्यात् अमृताध्मातजीमूतस्निग्धसंहननस्य परिष्वङ्गाय उत्कण्ठत इत्यन्वयः । अयं = त्वत्पुर स्थितः, जनः = नरः, अहमिति भावः, वात्सल्यात् = स्नेहाद्धेतो, अमृताध्मातजीमूतस्निग्धसंहननस्य = अमृतेन = जलेन, आध्मात. = पूर्णः, यो जीमूत = मेघ., स इव स्निग्धं = मसृणम्, संहननं = शरीरम्, यस्य तस्य, 'पयः कीलालममृतम्' इति 'गात्रं वपु संहननं शरीरं वर्ष्म विग्रह. ।' इति चामर', तादृशस्य ते = तव, परिष्वङ्गाय = आलिङ्गनं कर्तुम्, 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । उत्कण्ठते = उत्सुको भवति । अत्रोपमाऽलङ्कारः । अयं जन इत्युक्तेर्दयनीयत्वरूपवस्तुध्वनिश्च ॥ २१ ॥

परिष्वज्येति । किमिति = केन हेतुना, दारकः = वालकः ।

अङ्गादङ्गादिति । अङ्गात् अङ्गात् स्रुतः स्नेहजो निजो देहसार इव, एकः चेतनाधातु. बहि. प्रादुर्भूय स्थित इव, सान्द्रानन्दक्षुभितहृदयप्रस्रवेण अवसिक्तः सः गाढाश्लेषः ( सन् ) मम हिमच्योतम् आशंसति इव हि इत्यन्वयः । अयं दारक इति पदद्वयं पूर्वस्थगद्यादनुवर्तनीयम्, अङ्गादङ्गात् = सर्वेभ्योऽङ्गेभ्यः, स्रुत = क्षरितः, स्नेहज = प्रेमोत्पन्नः, निज = स्वकीय, देहसार इव = देहे = शरीरे, सार = उत्तमांश इव, क्वचित् 'देहजः स्नेहसार' इति पाठान्तरम्, एवं च एक = मुख्य, चेतनाधातुः = चैतन्यरूपपदार्थः, बहि. = बाह्यदेशे, प्रादुर्भूय = आविर्भूय, स्थित इव = विद्यमान इव, साक्षात्कारार्हः सन् स्थित

---

यह जन ( रामचन्द्र ) स्नेहके कारण अमृतसे पूर्ण मेघके सदृश कोमल शरीरवाले तुम्हारे आलिङ्गनके लिए उत्कण्ठित हो रहा है । ॥ २१ ॥

( आलिङ्गन कर, मन ही मन ) तब किस लिए यह बालक—

सम्पूर्ण अङ्गोंसे क्षरित, प्रेमसे उत्पन्न—अपने शरीरके उत्तम अंशके सदृश, मुख्य चैतन्य रूप पदार्थ बाह्यदेशमें आविर्भूत होकर विद्यमानके तुल्य, गाढ आनन्दसे क्षुब्ध हृदयके द्रवसे

---

* 'परिष्वङ्गस्य' इति पाठान्तरम् । † 'स्नुत' इति पाठान्तरम् ।

सान्द्रानन्दक्षुभितहृदयप्रस्रवेणावसिक्तो
गाढाऽऽश्लेषः स हि मम हिमच्योतमाशंसतीव ॥ २२ ॥

लवः—ललाटन्तपस्तपति घर्मांशुः । तदत्र सालवृक्षच्छायायां मुहूर्त्तमासनपरिग्रहं करोतु तातः ।

---

इवेति भावः, सान्द्रानन्दक्षुभितहृदयप्रस्रवेण = सान्द्रः = निविडः, य आनन्दः = प्रमोदः, तेन क्षुभितं = प्राप्तक्षोभम्, यद्धृदयं, तस्य प्रस्रवेण = द्रवेण, अवसिक्तः = आर्द्रीकृतः, 'सृष्ट इव' इति पुस्तकान्तरपाठे = निर्मित इवेत्यर्थः, अस्तीति शेषः । सः = तादृशो दारकः, गाढाऽऽश्लेष = गाढः = दृढः, आश्लेषः= आलिङ्गनम्, यस्य सः, दृढमालिङ्गितः सन्निति भावः । मम = रामस्य, हिमच्योतं = तुषाराऽऽसेचनम्, आशंसति इव = सूचयति इव, हि = निश्चयेन, अयं पुत्रवत्स्पर्शोत्तरं मदीयं सन्तापमपनयतीति भावः । अत्र चतुर्थचरणे 'गात्रं श्लेषे यदमृतरसस्रोतसा सिञ्चतीव' इति पुस्तकान्तरपाठस्तत्र—गात्रं श्लेषे यदमृतरसस्रोतसा सिञ्चति इवेत्यन्वयः । एवं च श्लेषे = आलिङ्गने, कृते सतीति शेषः, अमृतरसस्रोतसा=पीयूषरसप्रवाहेण, गात्रं = शरीरं, सिञ्चति इव = उक्षति इवेत्यर्थः । अत्र प्रथमद्वितीयचतुर्थचरणेषु तिसृणामुत्प्रेक्षाणां मिथोऽनपेक्षया स्थितेः संसृष्टिः । मन्दाक्रान्ता वृत्तम् ॥ २२ ॥

लव इति । घर्मांशुः=घर्माः=उष्णाः, अंशवः=किरणाः, यस्य सः, सूर्य इत्यर्थः, 'घर्मदीधिति'रिति पाठेऽप्ययमेवार्थः । ललाटन्तपः = ललाटं तपतीति = भालतापकः सन्निति भावः, 'असूर्यललाटयोर्दृशितपोः' इति खश्, 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमश्च, तपति = तापं करोति । तत् = तस्माद्धेतोः, सालवृक्षच्छायाया = सर्जतरुच्छायाया, 'सालच्छाये' इति पाठेऽप्ययमेवार्थः, सालानां छायेति सालच्छायं तस्मिन्, पूर्वपदार्थबाहुल्यात् 'छायाबाहुल्ये' इति नपुंसकत्वम् । मुहूर्त्तं = घटिकाद्वयं यावत्, 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया, आसनपरिग्रहम् = उपवेशम् ।

---

आर्द्र किया गया यह बालक दृढ आलिङ्गन करनेपर जैसे ( सन्तप्त ) मुझे बरफसे सिञ्चन कर रहा है ॥ २२ ॥

लव—सूर्य ललाटको तप्त कर रहे हैं अर्थात् मध्याह्नका समय हो रहा है। इस कारण पिताजी इस सर्ज वृक्षकी छायामें कुछ समय तक आसनग्रहण करें।

रामः—यदभिरुचितं वत्सस्य ।

( सर्वे परिक्रम्य यथोचितमुपविशन्ति । )

रामः—( स्वगतम् । )

अहो ! प्रश्रययोगेऽपि गतिस्थित्यासनादयः ।
साम्राज्यशंसिनो भावाः कुशस्य च लवस्य च ॥ २३ ॥
वपुरवियुतसिद्धा एव लक्ष्मीविलासाः
प्रतिकलकमनीयां कान्तिमुद्भेदयन्ति ।

---

राम इति । अभिरुचितम् = अभीष्टम्, 'कर्मादीनामपि सम्बन्धमात्रविवक्षाया षष्ठ्येवे'ति नियमात् वत्सस्येत्यत्र षष्ठी, अतः 'रुच्यर्थानां प्रीयमाण' इति प्रीयमाणस्य सम्प्रदानत्वाभाव ।

अहो इति । अहो प्रश्रययोगेऽपि कुशस्य लवस्य च गतिस्थित्यासनादयो भावाः साम्राज्यशंसिन इत्यन्वयः । अहो = आश्चर्यं, प्रश्रययोगेऽपि = प्रश्रयस्य = विनयस्य, योगे = सम्बन्धे, सत्यपि, कुशस्य लवस्य च=उभयोरपि बालकयोः, गतिस्थित्यासनादय = गति = गमनम्, स्थिति = अवस्थानम्, आसनम् = उपवेशनम्, एतानि आदिर्येषां ते, 'आदि' कथनाभिरीक्षणादिपरिग्रहः, भावा = क्रियाः, साम्राज्यशंसिन =साम्राज्यं शंसन्तीति = सार्वभौमत्वसूचकाः, सन्तीति शेषः ॥२३॥

वपुरिति । यथा वा स्वे रश्मयः अमलिनं चन्द्रम् इव माकरन्दा बिन्दवो विकसितम् अरविन्दम् इव उद्भेदयन्ति, ( तथैव ) अवियुतसिद्धा एव लक्ष्मीविलासाः वपु प्रतिकलकमनीयां कान्तिं च उद्भेदयन्ति इत्यन्वयः । यथा = येन प्रकारेण, वेति पद पादपूरणार्थकम् । स्वे=स्वकीयाः, रश्मयः = किरणाः, अमलिनं = मालिन्यरहितम्, निष्कलङ्कमिति भावः । चन्द्रम् इव = इन्दुमिव, 'चन्द्रम्' इत्यत्र 'रत्नम्' इति पुस्तकान्तरपाठः, उद्भेदयन्तीत्यत्रान्वयः । एवं यथा माकरन्दाः = पुष्परससम्बन्धिनः, 'मकरन्दः पुष्परस' इत्यमर, बिन्दवः = कणाः,

---

राम—वत्सकी जैसी रुचि ।

( सब लोग घूमकर यथायोग्य बैठ जाते हैं। )

राम—( मन ही मन )

अहो ! नम्रताका सम्बन्ध होनेपर भी कुश और लवके गमन, स्थिति और आसन आदि क्रियायें साम्राज्यकी सूचना करनेवाली हैं ॥ २३ ॥

जिस प्रकार अपनी किरणें निष्कलङ्क चन्द्रको प्रकाशित करती हैं, एवम् जैसे पुष्परसके

अमलिनमिव चन्द्रं रश्मयः स्वे यथा वा
विकसितमरविन्दं बिन्दवो माकरन्दाः ॥ २४ ॥
भूयिष्ठं च रघुकुलकौमारमनयोः पश्यामि ।
कठोरपारावतकण्ठमेचकं वपुर्वृषस्कन्ध*सुबन्धुरांसयोः ।

विकसितं = प्रफुल्लम्, अरविन्दम् इव = कमलमिव, उद्भेदयन्ति = उत्पादयन्ति, (तथैव) अवियुतसिद्धा एव = अपृथक्सिद्धा एव 'अविहितसिद्धा' इति पाठान्तरं, तस्य स्वभावसिद्धा इति भावः, लक्ष्मीविलासाः = लावण्यातिशयाः वपुः = शरीरं, प्रतिकलकमनीयाम् = प्रतिकलम् = अनुक्षणम्, कमनीया = रमणीयाम्, कान्ति = द्युतिम्, च, उद्भेदयन्ति = धातूपसर्गाणामनेकार्थत्वात् वपुः उल्लासयन्ति, कान्ति चोत्पादयन्तीति भावः, पुस्तकान्तरेषु तु द्वितीयचरणे 'प्रतिजनकमनीयं कान्तिमत्केतयन्ति' इति पाठस्तत्र अविहितसिद्धा एव लक्ष्मीविलासाः प्रतिजनकमनीयं कान्तिमत् वपुः केतयन्तीत्यन्वयः । अविहितसिद्धा एव = स्वभावसिद्धा एव, लक्ष्मीविलासाः = लावण्यातिशयाः, प्रतिजनकमनीयं = सर्वजनेच्छाविषयं, कान्तिमत् = प्रचुरशोभायुक्तं, वपुः = शरीरं, 'कित निवासे' इति धातोरकर्मकत्वात् 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसञ्ज्ञक इति वाच्यम्' इति कर्मत्वम् । केतयन्ति = निवसन्तीत्यर्थः । अत्र द्वयोरुपमयोर्मिथोऽनपेक्षया स्थिते संसृष्टिरलङ्कारः । मालिनी वृत्तम् ॥४॥

भूयिष्ठमिति । अनयोः = कुशलवयोः, भूयिष्ठम् = बहुतरं, रघुकुलकौमारम् = रघुवंशोत्पन्नबालकत्वम्, 'भूयिष्ठां रघुकुलकुमारच्छायाम्' इति पाठे-रघुकुलकुमारच्छाया = रघुवंशोत्पन्नबालककान्तिमित्यर्थः ।

कठोरेति । वृषस्कन्धसुबन्धुरांसयोः वपुः कठोरपारावतकण्ठमेचकं, वीक्षितं प्रसन्नसिंहस्तिमितं, ध्वनिश्च माङ्गल्यमृदङ्गमांसलः (अस्ति) इत्यन्वयः । वृषस्कन्धसुबन्धुरांसयोः = वृषस्कन्धौ = वृषभांसौ, इव सुबन्धुरौ = अतिशयसुन्दरौ, अंसौ = स्कन्धौ,

बिन्दुसमूह विकसित कमलको उत्पन्न करते हैं, उसी तरह स्वभावसे ही सिद्ध सौन्दर्यके अतिशय शरीरको उल्लासित करते हैं और प्रतिक्षण रमणीय कान्तिको भी पैदा करते हैं ॥२४॥

इन दोनोंमें रघुवंशमें उत्पन्न कुमारका बहुत सादृश्य देख रहा हूँ ।

साँढके कन्धोंके सदृश सुन्दर कन्धेवाले कुश और लवका शरीर, जवान कबूतरके गलेके

*'स्कन्धमबन्धु—' इति पाठान्तरम् ।

प्रसन्नसिंहस्तिमितं च वीक्षितं ध्वनिश्च माङ्गल्यमृदङ्गमांसलः ॥२५॥

( निपुणं निरूपयन्। ) अये ! न केवलमस्मद्वंशसंवादिन्याकृतिः।

अपि जनकसुतायास्तच्च तच्चानुरूपं
स्फुटमिह शिशुयुग्मे नैपुणोन्नेयमस्ति।

---

ययोस्तयोः, कुशलवयोरिति भावः, 'वृषस्कन्धमवन्धुराशकम्' इति पाठान्तरे तु वृषस्कन्धम् = वृषस्येव = वृषभस्येव, स्कन्धौ यस्मिंस्तत्, अवन्धुराः = अनुन्नतनीचाः, समा इत्यर्थः, अंशाः = अवयवाः, यस्मिंस्तदिति पदद्वयमपि वपुर्विशेषणं ज्ञेयम्, वपुः = शरीरं, कठोरपारावतकण्ठमेचकं = कठोरः = तरुणः, यः पारावतः = कपोतः, तस्य कण्ठः = गलः, इव मेचकं = नीलम्, वीक्षितम् = अवलोकनं, प्रसन्नसिंहस्तिमितं = प्रसन्नः=प्रशान्तः, यः सिंहः=केसरी, तद्दर्शनमिव स्तिमितं = चाञ्चल्यरहितम्; तथा च ध्वनिश्च = कण्ठस्वरश्च, माङ्गल्यमृदङ्गमांसलः = माङ्गल्यः = मङ्गलसूचकः, यो मृदङ्गः = मुरजः, लक्षणया मुरजध्वनिः, स इव मांसलः = स्फीतः, गम्भीर इति भावः, अस्तीति शेषः। सर्वथानयोः कुमारयोश्चेष्टा रघुकुलकौमारं सूचयतीति भावः। अत्र चतसृणामुपमानां मिथोऽनपेक्षया स्थितेः संसृष्टिरलङ्कारः। वंशस्थं वृत्तं-'जतौ तु वंशस्थमुदीरितं जरौ' इति तल्लक्षणम् ॥२५॥

निपुणमिति। निपुणं = सम्यक्, निरूपयन् = विचारयन्। आकृतिः = आकारः, अनयोरिति भावः। अस्मद्वंशसंवादिनी = अस्मद्वंशसंवादः = अस्मत्कुलसादृश्यम्, अस्ति यस्याः सा, अनयोराकृतिरेवास्मद्वंशसंवादिनी न, किं तर्हि ? इत्यर्थं श्लोकेन प्रतिपादयति—

अपीति। इह शिशुयुग्मे नैपुणोन्नेयम् तच्च तच्च जनकसुताया अनुरूपं स्फुटम्, अस्ति। ननु अभिनवशतपत्रश्रीमत् तत् प्रियाया आस्यं पुनः मे अक्ष्णोः गोचरीभूतम् इव इत्यन्वयः। इह = अस्मिन्, शिशुयुग्मे = बालकयुगले, कुशलवयोरिति भावः, 'युग्मं तु युगलं युगम्' इत्यमरः, नैपुणोन्नेयम् = नैपुणेन=निपुणतया, उन्नेयम् = अनुमेयम्, तच्च तच्च = अवयवादिकं गुणजातं च' जनक-

---

सदृश नीला है, दर्शन प्रशान्त सिंहके सदृश चाञ्चल्यरहित है और शब्द मङ्गलसूचक पखावजकी आवाजके सदृश गम्भीर है ॥ २५ ॥

( अच्छी तरह देखते हुए ) अरे ! आकारमात्र हमारे वंशके साथ सादृश्यवाला नहीं है। बल्कि—

इन दोनों बालकोंमें अच्छी तरह अनुमान करने योग्य अवयव आदि और गुणसमूह

ननु पुनरिव तन्मे गोचरीभूतमक्ष्णो-
रभिनवशतपत्त्रश्रीमदास्यं प्रियायाः ॥ २६ ॥
शुक्ला*च्छदन्तच्छविसुन्दरीयं सैवोष्ठमुद्रा स च कर्णपाशः ।
नेत्रे पुनर्यद्यपि रक्तनीले तथापि सौभाग्यगुणः स एव ॥ २७ ॥

---

सुतायाः = मैथिल्याः, सीताया इत्यर्थः, अनुरूपं = सदृशं, स्फुटं = व्यक्तम् , अस्ति= वर्तते, अनयोरवयवानां सीताया अवयवैः स्फुटं सादृश्यमस्ति । दयादाक्षिण्यादि-गुणाना चाक्षुषप्रत्यक्षाभावात् अनयोर्गुणानां सीताया गुणैः सह यत् सादृश्यं तदवहितपुरुषैरनुमेयमस्तीति भावः। नन्विति वाक्यारम्भे, अभिनवशतपत्त्रश्रीमत् = अभिनवं = नूतनम् , शतपत्त्रमिव = कमलमिव, श्रीमत् = शोभायुक्तम् , 'सहस्रपत्त्रं कमलं शतपत्त्रं कुशेशयम् ।' इत्यमरः, तत्=पूर्वानुभूतं, प्रियायाः=सीतायाः, आस्यं= मुखं, पुनः=भूयः, मे=मम, रामस्येति भावः, अक्ष्णोः=नेत्रयोः, गोचरीभूतम् इव = विषयीभूतम् इव, अस्तीति शेषः । द्वादशसु संवत्सरेषु अनवलोकितं प्रियामुखं कुश-लवयोर्मुखदर्शनात्सादृश्येन अवलोकितमिवेति भावः । अत्रोपमोत्प्रेक्षयोरङ्गाङ्गि-भावेन सङ्करः, स्मरणालङ्कारश्च व्यङ्ग्यः । मालिनी वृत्तम् ॥ २६ ॥

शुक्लाच्छेति । शुक्लाच्छदन्तच्छविसुन्दरी इयम् ओष्ठमुद्रा सा एव, कर्ण-पाशश्च स एव, नेत्रे पुनः यद्यपि रक्तनीले, तथापि सौभाग्यगुणः स एव इत्यन्वयः । शुक्लाच्छदन्तच्छविसुन्दरी = शुक्लाः = शुभ्राः, अच्छाः = निर्मलाः, ये दन्ताः = दशनाः, तेषा छविः=कान्तिः, तया सुन्दरी=मनोरमा, क्वचित्तु शुक्लस्थाने 'मुक्ता' पदपाठस्तत्र-मुक्ताः=मौक्तिकानि, इव अच्छाः इति विग्रहः कार्यः, इयम् = एषा, ओष्ठमुद्रा=अधरोत्तरोष्ठस्थितिः, सा एव=सीताया एव, कर्णपाशश्च = सुन्दरौ कर्णौ च, 'पाशः केशादिपूर्वः स्यात्तत्सङ्घे, कर्णपूर्वकः । सुकर्णे' इति मेदिनी, स एव = सीतासम्बन्ध्येव, नेत्रे पुनः = नयने तु, अनयोरिति शेषः, यद्यपि, रक्तनीले = अरुण-

---

सीताके सदृश स्पष्ट है । नये कमलके सदृश शोभायुक्त पूर्वदृष्ट प्रिया ( सीता ) का मुख फिर मेरे नेत्रोंमें प्रकट हो गया है क्या ? ऐसा लग रहा है ॥ २६ ॥

सफेद और निर्मल दाँतोंकी कान्तिसे सुन्दर यह ओष्ठमुद्रा वही ( सीताकी ही ) है, कर्णपाश भी वही ( सीताका ही ) है, यद्यपि नेत्र लाल और काले हैं, तथापि सौन्दर्य-गुण वही ( सीताका ही ) है ॥ २७ ॥

---

* 'मुक्ता' इति पाठान्तरम् ।

प्रसन्नसिंहस्तिमितं च वीक्षितं ध्वनिश्च माङ्गल्यमृदङ्गमांसलः ॥२५॥

( निपुणं निरूपयन् । ) अये ! न केवलमस्मद्वंशसंवादिन्याकृतिः ।

अपि जनकसुतायास्तच्च तच्चानुरूपं
स्फुटमिह शिशुयुग्मे नैपुण्योन्नेयमस्ति ।

---

ययोस्तयोः, कुशलवयोरिति भावः, 'वृषस्कन्धमवन्धुरांशकम्' इति पाठान्तरे तु वृषस्कन्धम् = वृषस्येव = वृषभस्येव, स्कन्धौ यस्मिंस्तत्, अवन्धुराः = अनुन्नतनीचाः, समा इत्यर्थः, अंशाः = अवयवाः, यस्मिंस्तदिति पदद्वयमपि वपुर्विशेषणं ज्ञेयम्, वपुः = शरीरं, कठोरपारावतकण्ठमेचकं = कठोरः = तरुणः, यः पारावतः = कपोतः, तस्य कण्ठः = गलः, इव मेचकं = नीलम्, वीक्षितम् = अवलोकनं, प्रसन्नसिंहस्तिमितं = प्रसन्नः=प्रशान्तः, यः सिंहः =केसरी, तद्दर्शनमिव स्तिमितं = चाञ्चल्यरहितम्; तथा च ध्वनिश्च = कण्ठस्वरश्च, माङ्गल्यमृदङ्गमांसलः = माङ्गल्यः = मङ्गलसूचकः, यो मृदङ्गः = मुरजः, लक्षणया मुरजध्वनिः, स इव मांसलः = स्फीतः, गम्भीर इति भावः, अस्तीति शेषः। सर्वथानयोः कुमारयोश्चेष्टा रघुकुलकौमारं सूचयतीति भावः। अत्र चतसृणामुपमानां मिथोऽनपेक्षया स्थितेः संसृष्टिरलङ्कारः। वंशस्थं वृत्तं-'जतौ तु वंशस्थमुदीरितं जरौ' इति तल्लक्षणम् ॥२५॥

निपुणमिति। निपुणं = सम्यक्, निरूपयन् = विचारयन्। आकृतिः = आकारः, अनयोरिति भावः। अस्मद्वंशसंवादिनी = अस्मद्वंशसंवादः = अस्मत्कुलसादृश्यम्, अस्ति यस्याः सा, अनयोराकृतिरेवास्मद्वंशसंवादिनी न, किं तर्हि ? इत्यर्थं श्लोकेन प्रतिपादयति—

अपीति। इह शिशुयुग्मे नैपुण्योन्नेयम् तच्च तच्च जनकसुताया अनुरूपं स्फुटम्, अस्ति। ननु अभिनवशतपत्रश्रीमत् तत् प्रियाया आस्यं पुनः मे अक्ष्णोः गोचरीभूतम् इव इत्यन्वयः। इह = अस्मिन्, शिशुयुग्मे = बालकयुगले, कुशलवयोरिति भावः, 'युग्मं तु युगलं युगम्' इत्यमरः, नैपुण्योन्नेयम् = नैपुण्येन=निपुणतया, उन्नेयम् = अनुमेयम्, तच्च तच्च = अवयवादिकं गुणजातं च' जनक-

---

सदृश नीला है, दर्शन प्रशान्त सिंहके सदृश चाञ्चल्यरहित है और शब्द मङ्गलसूचक पखावजकी आवाजके सदृश गम्भीर है ॥ २५ ॥

( अच्छी तरह देखते हुए ) अरे ! आकारमात्र हमारे वंशके साथ सादृश्यवाला नहीं है। बल्कि—

इन दोनों बालकोंमें अच्छी तरह अनुमान करने योग्य अवयव आदि और गुणसमूह

दुःखातिशयो हृदयस्य मे विप्रलम्भः । यमाविति च भूयिष्ठमात्मसंवादः । जीवद्द्वयापत्यचिह्नो हि देव्या गर्भिणीभाव आसीत् * ( सास्रम् । )

परां कोटिं स्नेहे परिचयविकासादधिगते †
रहो विस्रब्धाया अपि सहजलज्जाजडदृशः ।

दुःखातिशयः = आनन्दकष्टप्रकर्षः, येन सः, एतादृशो मे = मम, हृदयस्य = चित्तस्य, विप्रलम्भः = विप्रलम्भशृङ्गारः । यमौ = यमजौ, आत्मसवादः = आत्मनः = बुद्धे, संवादः = संगतिः, भूयिष्ठं = प्रचुरतरं, यथा स्यात्तथेति क्रियाविशेषणम्, अस्तीति क्रियापदमध्याहार्यम् । कुशलवयोर्यमजत्वादेतौ सीतातनूजावित्यत्र मदीया बुद्धिः संगच्छते । कुत एतदिति प्रतिपादयति—जीवेति । हि = यतः, देव्याः = सीतायाः, गर्भिणीभावः = गुर्विणीत्वं, जीवद्द्वयापत्यचिह्नः = जीवद्द्वयं = जीवद्वितयम्, यदपत्यं = संततिः, तस्य चिह्नं = लक्षणम्, यस्मिन् सः, एतादृश आसीत् = अभूत् ।

परामिति । स्नेहे परिचयविकासात् परा कोटिम् अधिगते रहो विस्रब्धाया अपि सहजलज्जाजडदृशः ( सीतायाः ) आदौ करतलपरामर्शकलया मया एव द्विधा गर्भग्रन्थिः ज्ञातः, तदनु कैः दिवसैः तया अपि ज्ञात इत्यन्वयः । स्नेहे = प्रेम्णि, परिचयविकासात् = परिचयस्य = संस्तवस्य, विकासात् = अतिशयात्, परा कोटिम् = अत्युत्कर्षम्, अधिगते = प्राप्ते सति, रहः = एकान्ते, पदमेतदव्ययं ज्ञेयम्, विस्रब्धाया अपि = विश्वस्ताया अपि, एतादृश एकान्तस्थाने न कोऽपि पश्येदिति जातविश्वासाया अपीति भावः, तथापि सहजलज्जाजडदृशः = सहजा = स्वाभाविकी, या लज्जा = व्रीडा, तया जडे = निश्चेष्टे, दर्शनासमर्थे इति

वाला हो गया है । ये दोनों जुड़वे भाई हैं, इसमें भी बहुत कुछ बुद्धिका सवाद (मिलान) है । सीताका गर्भिणीभाव दो सन्तानोंका चिह्नवाला था । ( आँखोंमें आसू भरकर )—

परिचयके आधिक्यके कारण प्रेमके अतिशय उत्कर्षको प्राप्त होनेपर एकान्त में विश्वासयुक्त होकर भी स्वाभाविक लज्जासे मूँदी हुई आँखोंवाली सीताके उदरमें करस्पर्शकी चातुरीमे

* '· राकृतिर्वपुश्च । यदपि स्वत · णीति, तत्र विमृशामि अपि खलु तच्चित्र ·· मातमुद्भूत स्यात् । ··· मपि अनुशुश्रुम । अय च सम्प्लवमानमात्मान द्रुजाति · · यस्य मे विस्रम्भयते । भूयिष्ठञ्च मया द्विधा प्रतिपन्नो देव्या गर्भभार आसीत्' इति महान् पाठभेदो ग्रन्थान्तरेषु ।

† 'पुरारूढे स्नेहे ·· · सादुपचिते' इति पाठान्तरम् ।

(विचिन्त्य ।) तदेतत्प्राचेतसाध्युषितमरण्य, यत्र किल देवी परित्यक्ता। इय चानयोराकृतिर्वयोऽनुभावश्च । यत्स्वतःप्रकाशान्यस्त्राणीति च, तत्रापि स्मरामि खलु तदपि चित्रदर्शनप्रासङ्गिकं शस्त्राभ्यनुज्ञानं प्रबुद्ध स्यात्। न ह्यसाम्प्रदायिकान्यस्त्राणि पूर्वेषामपि शुश्रुमः। अय विस्मयसप्लवमानसुख-

कृष्णे, सातायास्तु नीले एवेति भाव, तथापि = नेत्रयोर्भेदे सत्यपीति भावः, सौभाग्यगुण = सौन्दर्यगुणः, स एव = एकरूप एव, स्वल्पाश एव भेदसद्भावात्सौन्दर्यादिगुणेषु अनयोर्बालकयो सीतासादृश्यात्किमेतौ सीतातनुजाविति वितर्कः। अत्रैकस्य ओष्ठमुद्रादेरेकस्यासम्भवादसम्भवद्वस्तुसम्बन्धरूपा निदर्शना। इन्द्रवज्रोपेन्द्रवज्रयो समिश्रणादुपजातिर्वृत्तम् ॥ २७ ॥

तदेतदिति । प्राचेतसाध्युषित = प्राचेतसेन = वाल्मीकिना, अध्युषित = कृतनिवासम्, यत्र = यस्मिन्नरण्ये, देवी = सीता । अनयो' = कुशलवयोः, आकृति = आकार', सीताया इव अवयवसंस्थानविशेष इति भावः। वय' = द्वादशवत्सरपरिमितमित्यर्थ, अनुभावश्च = प्रभावश्च, ईदृश इति शेष । तमेव प्रतिपादयति—यदिति । अस्त्राणि = जृम्भकाणि, स्वत प्रकाशानि = गुरूपदेशं विना ज्ञातानि, चित्रदर्शनप्रासङ्गिकं = चित्रदर्शने = आलेख्यविलोकने, प्रासङ्गिकं = प्रसङ्गानुप्रसक्तम्, चित्रदर्शनावसरोद्गतमिति भाव । शस्त्राभ्यनुज्ञानं = 'सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ती'ति ( पृ० २८ ) जृम्भकास्त्रप्राप्त्यनुमति', प्रबुद्धं स्यात् = प्रकट भवेत्, इति स्मरामीति पूर्वेण सम्बन्ध । हि = यस्मात्, असाम्प्रदायिकानि = गुरूपदेशक्रमरहितानि, अस्त्राणि = जृम्भकास्त्राणि, पूर्वेषामपि = प्राचीनानामपि, मनुप्रभृतीनामपीति भाव, न शुश्रुम' = न श्रुतवन्तः, वयमिति शेष, उत्तमपुरुषे लिटोऽयं प्रयोगश्चिन्त्य', यत्तु 'अत्यन्तापह्नवे लिड् वक्तव्य' इति लिट् इति केचित्तदपि चिन्त्यमत्यन्तापह्नवाभावात् । विस्मयसंप्लवमानसुखदु'खातिशय' = विस्मये = आश्चर्ये, सप्लवमान' = मज्जन्, सुख-

( विचार कर ) यह वही वाल्मीकि ऋषिसे निवास किया गया वन है, जहांपर सीताका परित्याग किया था। इन दोनोंका यह आकार, यह अवस्था और यह प्रभाव है। जो कि इन दोनोंको जृम्भकास्त्र स्वत प्रकाशित ( गुरुके उपदेशके विना ही प्राप्त ) हुए हैं। इस विषयमें मैं स्मरण करता हू कि चित्र देखनेके समयपर की गई अस्त्रप्राप्तिकी वह अनुमति प्रकट हो गई हो। पहलेके लोगोंमें भी गुरुके उपदेशके विना अस्त्र प्रकट नहीं हुए थे, ऐसा हमलोग सुनते थे। मेरे हृदयका यह विप्रलम्भ शृङ्गार सुखदु खके अतिशयको आश्चर्यमें डुबा देने-

दुःखातिशयो हृदयस्य मे विप्रलम्भः । यमाविति च भूयिष्ठमात्मसंवादः ।
जीवद्द्वयापत्यचिह्नो हि देव्या गर्भिणीभाव आसीत् *( सास्रम् । )

परां कोटिं स्नेहे परिचयविकासादधिगते †
रहो विस्रब्धाया अपि सहजलज्जाजडदृशः ।

---

दुःखातिशयः = आनन्दकष्टप्रकर्षः, येन सः, एतादृशो मे = मम, हृदयस्य = चित्तस्य, विप्रलम्भः = विप्रलम्भश्शृङ्गारः । यमौ = यमजौ, आत्मसंवादः = आत्मनः = बुद्धेः, संवादः = संगतिः, भूयिष्ठं = प्रचुरतरं, यथा स्यात्तथेति क्रियाविशेषणम्, अस्तीति क्रियापदमध्याहार्यम् । कुशलवयोर्यमजत्वादेतौ सीतातनूजावित्यत्र मदीया बुद्धिः संगच्छते । कुत एतदिति प्रतिपादयति—जीवेति । हि = यतः, देव्याः = सीतायाः, गर्भिणीभावः = गुर्विणीत्वं, जीवद्द्वयापत्यचिह्नः = जीवद्द्वयं = जीवद्द्वितयम्, यदपत्यं = संततिः, तस्य चिह्नं = लक्षणम्, यस्मिन् सः, एतादृश आसीत् = अभूत् ।

परामिति । स्नेहे परिचयविकासात् परां कोटिम् अधिगते रहो विस्रब्धाया अपि सहजलज्जाजडदृशः ( सीतायाः ) आदौ करतलपरामर्शकलया मया एव द्विधा गर्भग्रन्थिः ज्ञातः, तदनु कैः दिवसैः तया अपि ज्ञात इत्यन्वयः । स्नेहे = प्रेम्णि, परिचयविकासात् = परिचयस्य = संस्तवस्य, विकासात् = अतिशयात्, परां कोटिम् = अत्युत्कर्षम्, अधिगते = प्राप्ते सति, रहः = एकान्ते, पदमेतदव्ययं ज्ञेयम्, विस्रब्धाया अपि = विश्वस्ताया अपि, एतादृशे एकान्तस्थाने न कोऽपि पश्येदिति जातविश्वासाया अपीति भावः, तथापि सहजलज्जाजडदृशः = सहजा = स्वाभाविकी, या लज्जा = व्रीडा, तया जडे = निश्चेष्टे, दर्शनासमर्थे इति

---

वाला हो गया है। ये दोनों जुडवें भाई हैं, इसमें भी बहुत कुछ बुद्धिका संवाद (मिलान) है। सीताका गर्भिणीभाव दो सन्तानोंका चिह्नवाला था। ( आँखोंमें आँसू भरकर )—

परिचयके आधिक्यके कारण प्रेमके अतिशय उत्कर्षको प्राप्त होनेपर एकान्तमें विश्वासयुक्त होकर भी स्वाभाविक लज्जासे मूँदी हुई आँखोंवाली सीताके उदरमें करस्पर्शकी चातुरीसे

---

* '...राकृतिर्वपुश्च । यदपि स्वत ... णीति, तत्र विमृशामि अपि खलु तच्चित्र ... प्रातमुद्भूतं स्यात् । ... मपि अनुशुश्रुम । अयं च सम्प्लवमानमात्मानं सुखाति ... यस्य मे विस्रम्भयते । भूयिष्ठं मया द्विधा प्रतिपन्नो देव्या गर्भभार आसीत्' इति महान् पाठभेदो ग्रन्थान्तरेषु ।

† 'पुरारूढे स्नेहे ... सादुपचिते' इति पाठान्तरम् ।

मयैवादौ ज्ञातः करतलपरामर्शकलया
द्विधा गर्भग्रन्थिस्तदनु दिवसैः कैरपि तया ॥ २८ ॥

( रुदित्वा । ) तत्किमेतौ पृच्छामि केनचिदुपायेन ?

लवः—तात ! किमेतत् ?

बाष्पवर्षेण नीतं वो जगन्मङ्गलमाननम् ।
अवश्यायावसिक्तस्य पुण्डरीकस्य चारुताम् ॥ २९ ॥

---

यावत् , दृशौ = नेत्रे, यस्यास्तस्याः, लज्जानिमीलितलोचनायाः सीताया इति भाव , आदौ = प्रथमं, करतलपरामर्शकलया = करतलेन = पाणितलेन, यः परामर्श=स्पर्श , उदरस्येति शेष , तस्य कलया = चातुर्येण, मया एव = रामेण एव, द्विधा = द्वाभ्या प्रकाराभ्याम् , अपत्यद्वयप्रकारेणेत्यर्थ, अवस्थित इति शेष, गर्भग्रन्थिः = भ्रूणबन्धः, ज्ञात = विदित , तदनु = तदनन्तरं, मज्ज्ञानानन्तरमिति भावः, कै = कतिपयै, दिवसै = वासरै, 'अपवर्गे तृतीया' इति तृतीया, तया अपि = सीतया अपि, ज्ञात = विदित । अतोऽपि इमौ मदीयौ तनयाविति तर्कयामीति भाव । अत्र 'मया, तये'त्यनयोः 'ज्ञात' इत्येकक्रियारूपधर्मेणाभिसम्बन्धात् तुल्ययोगितालङ्कार । शिखरिणी वृत्तम् ॥ २८ ॥

रुदित्वेति । रुदित्वा=अश्रुविमोचन कृत्वा, उपायेन=यत्नेन, छलेनेति भावः ।

बाष्पेति । जगन्मङ्गलं वः आननं वाष्पवर्षेण अवश्यायावसिक्तस्य पुण्डरीकस्य चारुता नीतम् इत्यन्वय । जगन्मङ्गल = लोककल्याणहेतुभूतम् , वः = युष्माकम् , आननं = वदनं, वाष्पवर्षेण = अश्रुवृष्टया, अवश्यायावसिक्तस्य = अवश्यायै = तुषारै, अवसिक्तस्य = कृतसेकस्य, 'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् ।' इत्यमर, पुण्डरीकस्य = श्वेतकमलस्य, चारुता = शोभा, नीत = प्रापितम् , एतत्किमिति पूर्ववाक्येन सम्बन्ध । रोदनस्य को हेतुः ? इति भावः । अत्र मुखकर्तृके पुण्डरीकचारुतानयनेऽसम्भवति सादृश्यरूपार्थे वाक्यस्य पर्यवसानेन असम्भवद्वस्तुसम्बन्धरूपो निदर्शनालङ्कारः ॥ २९ ॥

---

पहले मैंने ही दो सन्तानोंवाली गर्भग्रन्थिको जान लिया, पीछे कई दिनोंके बाद उन्होंने ( सीताने ) भी जान लिया था ॥ २८ ॥

( रोकर ) तब क्या किसी उपायसे इन दोनोंसे पूछूँ ?

लव—पिताजी ! यह क्या ?

जगत्का मङ्गलरूप आपका मुख, आँसूकी वृष्टिसे तुषारोंसे सींचे गये श्वेतकमलकी सुन्दरताको प्राप्त हुआ है ॥ २९ ॥

कुशः—अयि वत्स !

विना सीतादेव्या किमिव हि न दुःखं रघुपतेः ?
प्रियानाशे कृत्स्नं किल जगदरण्यं हि भवति ।
स च स्नेहस्तावानयमपि वियोगो निरवधिः
किमेवं त्वं*पृच्छस्यनधिगतरामायण इव ॥ ३० ॥

---

विनेति । सीतादेव्या विना रघुपतेः किमिव दुःखं न हि ? हि प्रियानाशे कृत्स्नं जगत् अरण्यं भवति किल । स च स्नेह तावान् , अयमपि वियोगो निरवधिः, त्वम् अनधिगतरामायण इव किम् एवं पृच्छसि ? इत्यन्वयः । सीतादेव्या विना = सीतादेवीं त्यक्त्वा, स्थितस्येति भावः, रघुपतेः = रामचन्द्रस्य, किमिव = किं वस्तु, दुःखं न = कष्टकारक न, सीतावियुक्तस्य रामस्य सर्वमपि वस्तु दुःखायैवेति भावः । हि = निश्चयेन । हि = यतः, प्रियानाशे = प्रियायाः = दयितायाः, नाशे = अदर्शने, कृत्स्नं = संपूर्णं, 'विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम् ।' इत्यमरः, जगत् = लोकः, अरण्यं = वनमयं, भवति = जायते, सर्वेषामपि जनानामिति शेषः, किल = निश्चयेन । स च = प्रागनुभूतः, स्नेहः = प्रेमा, तावान् = तत्परिमाणः, अपरिमित इति भावः । अयमपि = सम्प्रत्यनुभूयमानः, वियोगः = विरहः, निरवधि = अवसानशून्यः, लोकापवादात् सीतायाः परित्यक्तत्वेनायं वियोगोऽवधेरियत्तया शून्योऽस्तीति भावः । त्वं = लवः, अनधिगतरामायण इव = अनधिगतम् = अविदितम् , रामायणं = तन्नामकं महाकाव्यम् , येन स इव, किं = किमर्थम् , एवं = 'किमेतत् वाष्पवर्षेणे'त्यादिरूपं, पृच्छसि = अनुयुङ्क्षे ? रामायणाऽऽख्यानकमधीतवतस्तवायं प्रश्नोऽयुक्त इति भावः । अत्र द्वितीयचरणस्थसामान्यार्थेन प्रथमचरणस्थविशेषार्थसमर्थनादर्थान्तरन्यासोऽलङ्कारः । 'जगदरण्यं भवती'त्यत्र परिणामश्च, तथा चानयोरङ्गाङ्गिभावेन सङ्करः । शिखरिणी वृत्तम् ॥ ३० ॥

---

कुश—अयि वत्स !

महारानी सीताके बिना रामचन्द्रको कौन-सा पदार्थ दुःखजनक नहीं है ? क्योंकि प्रियाका अभाव होनेपर सपूर्ण ससार जीर्ण ( उजडे हुए ) वनके समान हो जाता है । वह प्रेम उस परिमाणका था और यह विरह अवधिशून्य है; तुम रामायण नहीं पढे हुएको तरह क्यों ऐसा पूछ रहे हो ? ॥ ३० ॥

---

* 'किमित्येवम्' इति पाठान्तरम् ।

रामः—( स्वगतम् । ) अये, तटस्थ आलापः । कृतं प्रश्नेन । मुग्धहृदय ? कोऽयमाकस्मिकस्ते संप्लवाधिकारः ? एवं निर्भिन्नहृदयावेगः शिशुजनेनाप्यनुकम्पितोऽस्मि । भवतु तावदन्तरयामि ( प्रकाशम् । ) वत्सौ ! 'रामायणं रामायणमिति श्रूयते भगवतो वाल्मीकेः सरस्वतीनिष्यन्दः प्रशस्तिरादित्यवंशस्य' तत्कौतूहलेन यत्किंचिच्छ्रोतुमिच्छामि ।

कुशः—कृत्स्न एव सन्दर्भोऽस्माभिरावृत्तः, स्मृतिप्रत्युपस्थितौ तावदिमौ बालचरितस्यासाते द्वौ श्लोकौ ।

रामः—उदीरयत वत्सौ !

---

राम इति । आलाप = भाषण, तटस्थः = उदासीन , सीतयाऽऽत्मसम्बन्धस्याद्योतक इति भावः । प्रश्नेन = अनुयोगेन, किं युवां सीतापुत्रावित्याकारेणेति भावः, कृतम् = अलम् । आकस्मिक = अकस्माद्भवः, निष्कारण इति भावः । संप्लवाधिकार =दूरगमनाधिकृतिः, दुर्लभविषयमनोरथायासः किमर्थ इति यावत् । 'स्नेहपरिप्लवो विकार' इति पाठे—प्रेमचञ्चला विकृतिरित्यर्थः । निर्भिन्नहृदयावेगः-निर्भिन्नः = आविर्भूत , हृदयस्य = चित्तस्य, आवेग =सम्भ्रम , यस्य स । अनुकम्पितः = अनुकम्पास्पदीकृत । अन्तरयामि = प्रच्छादयामि । सरस्वतीनिष्यन्द = सरस्वत्या = वाण्या , निष्यन्दः = द्रव , आदित्यवंशस्य=सूर्यकुलस्य, प्रशस्ति = चरित्रकीर्तनम् । कौतूहलेन = उत्कण्ठया ।

कुश इति । कृत्स्न एव = संपूर्ण एव, सन्दर्भः ग्रन्थः, आवृत्तः = अभ्यस्तः, स्मृतिप्रत्युपस्थितौ = स्मृतौ = स्मरणे, प्रत्युपस्थितौ = विषयभूतौ ।

राम इति । उदीरयतम् = वदतम् , युवामिति शेष ।

---

राम—(मन ही मन ) अरे ! भाषण उदासीन है । इसलिए प्रश्न निष्प्रयोजन है । मूर्ख हृदय ! तेरा यह क्या अकारण दूर जानेका अधिकार है ? इस तरह हृदयका सम्भ्रम प्रकट होनेसे बालकसे भी दयाका पात्र किया गया हूं । अस्तु । मनका आवेग छिपाता हूं । ( प्रकाश भावसे ) वत्स ! 'रामायण रामायण यह भगवान् वाल्मीकिकी वाणीका द्रव और सूर्यवंशका चरित्र कीर्तन है' ऐसा सुना जाता है, इस कारण कौतूहलसे कुछ सुननेकी इच्छा करता हूं ।

कुश—हम लोगोंने सम्पूर्ण ग्रन्थका ही अभ्यास किया है, इस समय बालचरित्रके ये दो श्लोक स्मरणमें उपस्थित हैं ।

राम—वत्स ! कहो ।

कुशः—

प्रिया तु सीता रामस्य दाराः पितृकृता इति ।
गुणै रूपगुणैश्चापि प्रीतिर्भूयोऽप्यवर्धत ॥ ३१ ॥
तथैव रामः सीतायाः प्राणेभ्योऽपि प्रियोऽभवत् ।
हृदयं त्वेव जानाति प्रीतियोगं परस्परम् ॥ ३२ ॥

---

प्रियेति । प्रिया सीता रामस्य पितृकृता दारा इति, गुणैः रूपगुणैश्चापि प्रीतिः भूयोऽपि अवर्धत इत्यन्वयः । प्रिया = वल्लभा, सीता = जनकनन्दिनी, रामस्य = रामचन्द्रस्य, पितृकृता = पित्रा=जनकेन, कृताः = दत्ता, मन्त्रोच्चारणपुरःसरं प्रतिपादिता इति भावः, दाराः = पत्नी, 'भार्या जायाथ पुंभूम्नि दाराः' इत्यमरः, इति = अनेन हेतुना, तथा गुणैः = शीलादिभिः, रूपगुणैश्च = सौन्दर्यरूपगुणैश्च, सीतायाः इति शेषः, अपि = पादपूरणार्थकमव्ययम्, प्रीतिः = प्रेमा, सीतायामिति शेषः, भूयोऽपि = पुनरपि, अवर्द्धत = ववृधे । पुस्तकान्तरेषु तु—

प्रकृत्यैव प्रिया सीता रामस्यासीन्महात्मनः ।
प्रियभावः स तु तया स्वगुणैरेव वर्द्धितः ॥ ३१ ॥

इति पाठान्तरं तत्र—सीता महात्मनो रामस्य प्रकृत्या एव प्रिया आसीत्, स तु प्रियभावः तया स्वगुणैः एव वर्द्धित इत्यन्वयः । सीता = जानकी, महात्मनः = महानुभावस्य, रामस्य = रामचन्द्रस्य, प्रकृत्या एव = स्वभावेनैव, प्रिया=अभीष्टा, 'अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ।' इत्यमरः, आसीत् = अभवत् । स तु = प्रागनुभूतस्तु, प्रियभावः=अभीष्टत्वं, तया = सीतया, स्वगुणैः एव = विनयाज्ञापालनदयादाक्षिण्यप्रभृतिभिरात्मगुणैः एव, वर्द्धितः =एधितः इत्येव व्याख्येयम् ॥३१॥

रामोऽपि सीताया अभीष्टोऽभूदिति प्रतिपादयति—

तथैवेति । रामः तथा एव सीतायाः प्राणेभ्यः अपि प्रियः अभवत्, तु हृदयम् एव परस्परं प्रीतियोगं जानाति इत्यन्वयः । रामः = रामचन्द्रः, तथा एव = तेन प्रकारेणैव, सीता यथा रामस्य प्रिया तथैवेति भावः । सीतायाः = जानक्याः, प्राणेभ्योऽपि = असुभ्योऽपि, प्रियः = अभीष्टतरः, अभवत् = आसीत् । तु = पुनः, हृदयम् एव = सीतारामयोश्चित्तम् एव, न त्वन्य इति भावः, एवकारेण सीता-

---

कुश—प्रिया सीता मन्त्रोच्चारणके साथ जनक महाराजसे प्रतिपादित रामकी पत्नी थीं, इस कारणसे शील आदि और सौन्दर्यरूप गुणोंसे भी सीतामें प्रीति और भी बढ़ी हुई थी ॥३१॥

राम उसी तरहसे सीताके प्राणोंसे भी अधिक प्रिय थे, परन्तु हृदय ही परस्परका प्रेमसम्बन्ध जानता है ॥ ३२ ॥

रामः—कष्टमतिदारुणो हृदयमर्मोद्धातः। हा देवि! एवं किलैतदासीत्। अहो निरन्वयविपर्यासविप्रलम्भस्मृतिपर्यवसायिनस्तावकाः संसारवृत्तान्ताः।

क तावानानन्दो निरतिशयविस्रम्भबहुलः ?
क वाऽन्योन्यप्रेम ? क च नु गहनाः कौतुकरसाः ?।

---

रामयोरपि हृदयव्यतिरेकेण स्वप्रीतिज्ञानाभाव प्रतिपाद्यते, परस्पर = मिथोभूतं, प्रीतियोग = प्रेमसम्बन्धं, जानाति = वेत्तीत्यर्थः। अत्र आर्या परिसङ्ख्यालङ्कार ॥ ३२ ॥

राम इति। हृदयमर्मोद्धात = हृदयमेव मर्म=सन्धिस्थानम्, तस्य उद्धातः = प्रहारः, अतिदारुणः = अतिशयकठोरः। एतत् = इदं वर्णनम्, एवं किल = एतादृशं किल, अस्माकं प्राचीनस्थितेरनुरूपमेतद्वर्णनमिति भावः। तावकाः = त्वदीया, संसारवृत्तान्ता = संसारोदन्ता, निरन्वयविपर्यासविप्रलम्भस्मृतिपर्यवसायिन = निरन्वयः = निःसम्बन्ध, आकस्मिक इत्यर्थ, अहेतुक इति यावत्, यो विपर्यासः = अवस्थान्तरम्, तेन ये विप्रलम्भस्मृती = वियोगस्मरणे, तत्पर्यवसायिनः = तद्विषयतामात्रवन्त।

क्वेति। निरतिशयविस्रम्भबहुल तावान् आनन्दः क ? वा अन्योन्यप्रेम क ? गहनाः कौतुकरसाश्च क नु ? सुखे वा दुःखे वा हृदययो तत् ऐक्यं क नु खलु ? तथापि पाप एष प्राण स्फुरति; न तु विरमति इत्यन्वय। निरतिशयविस्रम्भबहुलः = निरतिशय = निर्गतोऽतिशयो यस्मात्, अत्यधिक इति भावः। यो विस्रम्भः = विश्वासः, तेन बहुल = अधिक, तावान् = तत्प्रमाण, अपरिमेय इति भावः। आनन्द = हर्ष, क=कुत्र, गत इति शेष। वा = अथवा, अन्योन्यप्रेम = परस्पराश्रितः प्रणयः, क = कुत्र गत ?, 'क तेऽन्योन्यं यत्ना' इति पाठे—ते=प्रागनुभूता, अन्योन्य=परस्परं, यत्ना = प्रीतिसंपादनप्रयासाः, क = कुत्र गता ? इति भाव। गहना = अगाधाः, कौतुकरसाश्च = क्रीडानुरागाश्च, क

---

राम—कष्ट है। हृदयरूप सन्धिस्थानका प्रहार अतिशय कठोर है। हा देवि! यह वैसा ही था, अहो! अहेतुक दूसरी दशासे वियोग और स्मरणमें पर्यवसित होनेवाले तुम्हारे ससारके वृत्तान्त हैं।

अत्यधिक विश्वाससे अधिक अपरिमेय आनन्द कहाँ ? अथवा परस्परका वह प्रेम कहाँ ?

सुखे वा दुःखे वा क नु खलु तदैक्यं हृदययो-
स्तथाप्येष प्राणः स्फुरति, न तु पापो विरमति ॥ ३३ ॥

भोः कष्टम् ।

प्रियागुणसहस्राणां क्रमोन्मीलनतत्परः ।
य एव दुःसहः कालस्तमेव स्मारिता वयम् ॥ ३४ ॥

तदा किंचित्किंचित्कृतपदमहोभिः कतिपयै-

---

नु = कुत्र गता नु, खलु = निश्चयेन ? । सुखे वा = प्रमोदे वा, दुःखे वा = कष्टे वा, हृदययो = चित्तयो॰, मम सीतायाश्चेति शेष॰, तत् = प्रागनुभूतम्, ऐक्यम् = एकत्वम्, अभिन्नत्वमिति भावः । क नु खलु = कुत्र गतं नु खलु ? तथापि = एतेषु सर्वेषु गतेष्वपीति भावः, पाप॰ = कल्मषयुक्त, दुःखस्य पापफलत्वात्पाप इति कथनं संगच्छते, एष॰ = अयं, प्राण = हृदयवायु, स्फुरति = संचलति, न तु विरमति = न तु नश्यति, 'व्याङ्परिभ्यो रम' इति परस्मैपदम् । एतादृशविप्रलम्भे वेदनामर्षणापेक्षया मरणमेव मे वरमिति भाव । शिखरिणी वृत्तम् ॥ ३३ ॥

प्रियेति । प्रियागुणसहस्राणा क्रमोन्मीलनतत्परो य एव कालः दुःसह॰, वयं तम् एव स्मारिता इत्यन्वय॰ । प्रियागुणसहस्राणा = प्रियाया = सीतायाः, गुणाना = सौन्दर्यसौजन्यादीनाम्, सहस्राणि = दशशत्यः, तेषाम्, क्रमोन्मीलनतत्पर॰ = क्रमेण = अनुक्रमेण, उन्मीलनतत्पर॰ = प्रकाशनाऽऽसक्त॰, 'एकोन्मीलनपेशलः' इति पाठान्तरे—एकं = मुख्यम्, यत् उन्मीलनं, तत्र ॰पेशल॰ = मधुर इत्यर्थ॰, य एव, कालः = समयः, दुःसहः = दुःखेन सोढु शक्य॰, विरहावस्थाया स्मर्तुमशक्य इति भावः । वयम्, अत्र 'अस्मदो द्वयोश्च' इति बहुवचनम्, तम् एव = पूर्वोक्तं दु॰सहसमयमेव, स्मारिताः = तद्विषयकस्मरणवन्तः कृता इति भावः । अतो महाकष्टमिति तात्पर्यम् ॥ ३४ ॥

तदेति । यत्र वय स्नेहाकूतव्यतिकरघनो मदनो हृदि, प्रगल्भव्यापारो वपुषि

---

अगाध क्रीडाका अनुराग कहा ? सुखमें अथवा दुःखमें दोनों हृदयोंकी वह एकता कहा ? तो भी पापपूर्ण यह प्राणवायु चल रहा है, नष्ट नहीं होता है ॥ ३३ ॥

हाय ! कष्ट है ।

प्रियाके हजारों गुणोंका क्रमसे प्रकाशनमें तत्पर जो समय ही दुःसह ( दुःखसे सहा जानेवाला ) है, हमको उसीकी याद आ रही है ॥ ३४ ॥

जिस समय तारुण्य, प्रेम और विशिष्ट विषयमें अभिप्रायके सम्बन्धसे गाढ कामदेव हृदयमें

तदेतद्विस्तारि स्तनमुकुलमासीन्मृगदृशः।
वयःस्नेहाकूतव्यतिकरघनो यत्र मदनः
प्रगल्भव्यापारः स्फुरति हृदि मुग्धश्च वपुषि ॥ ३५ ॥

लवः—अयं तु चित्रकूटवर्त्मनि मन्दाकिनीविहारे सीतादेवीमुद्दिश्य रघुपतेः श्लोकः—

---

च मुग्धः स्फुरति, तदा किञ्चित्किञ्चित्कृतपदं मृगदृशः तत् स्तनमुकुलं कतिपयैः अहोभिः ईषद्विस्तारि आसीत् इत्यन्वयः। तत्कालस्य तु सहत्वं विवृणोति तदेति। यत्र = यस्मिन् काले, वयःस्नेहाकूतव्यतिकरघनः = वयसः = अवस्थायाः, तारुण्यस्येति भावः, स्नेहस्य = अनुरागस्य, आकूतस्य = विशिष्टविषयाभिप्रायस्य, व्यतिकरः = सम्बन्धः, तेन घनः = सान्द्रः, एतादृशो मदनः = कामदेवः, हृदि = मनसि, प्रगल्भव्यापारः = प्रगल्भः = प्रौढः, व्यापारः = क्रिया, यस्य सः, तादृशः, तथा वपुषि च = शरीरे च, मुग्धः = नातिप्रौढः, लज्जयेति भावः, एतादृशः सन् स्फुरति = वर्तते, तदा = तस्मिन्नवसरे, किञ्चित्किञ्चित् = शनैः शनैः, कृतपदं = विहितस्थानं, मृगदृशः = हरिणनयनायाः, सीतायाः इत्यर्थः, तत् = प्रागनुभूतं, स्तनमुकुलं = कुचकुड्मलं, कतिपयैः = कैश्चित्, अहोभिः = दिवसैः, ईषद्विस्तारि = अल्पविस्तारशीलम्, आसीत् = अभवत्, यौवनारम्भे मन्मथो हृदये प्रौढत्वेनाविर्भवति, परं मुग्धत्वाच्छरीरे न तथाविधः प्रौढो भवतीति भावः। अत्र पूर्वार्द्धे आसीदिति भूतकालनिर्देशः, उत्तरार्द्धे च स्फुरतीति वर्तमानकालनिर्देशस्ततश्च विरहाकुलत्वाद्रामस्य चित्तभ्रान्तिर्लक्ष्यते। औचित्याच्छ्लोकोऽयं रामस्याऽऽत्मगतत्वेन पठित इति प्रतीयते। अत्र एकस्य मदनस्य हृद्वपुर्गामित्वात्पर्यायोऽलङ्कारः। शिखरिणी वृत्तम् ॥ ३५ ॥

लव इति। चित्रकूटवर्त्मनि = चित्रकूटपर्वतमार्गे, मन्दाकिनीविहारे = गङ्गातटक्रीडायाम्।

---

प्रौढ क्रियावाला होकर और शरीरमें लज्जाके कारण प्रौढ न होकर रहता है, उस समय धीरे धीरे स्थान लेनेवाला हरिणनयना सीताका वह कुड्मलसदृश पयोधर कुछ दिनोंके अनन्तर कुछ विस्तारवाला हो गया था ॥ ३५ ॥

लव—चित्रकूट पर्वतके मार्गमें गङ्गाजलकी क्रीडामें महारानी सीताको उद्देश्य करके रघुनाथका यह श्लोक है—

त्वदर्थमिव विन्यस्तः शिलापट्टोऽयमायतः ।
यस्यायमभितः पुष्पैः प्रवृष्ट इव केसरः ॥ ३६ ॥

रामः—( सलज्जास्मितस्नेहकरुणम् । ) अति हि नाम मुग्धः शिशुजनः विशेषतस्त्वरण्यचरः । हा देवि ! स्मरसि वा तस्य तत्समयविस्रम्भातिप्रसङ्गस्य ?

श्रमाम्बुशिशिरीभवत् प्रसृतमन्दमन्दाकिनी-

त्वदर्थमिति । अयम् आयतः शिलापट्टः त्वदर्थं विन्यस्त इव, यस्य अभितः अयं केसरः पुष्पैः प्रवृष्ट इव इत्यन्वयः । अयं = पुरः स्थितः, आयतः = दीर्घः, शिलापट्टः = पाषाणपट्टः, त्वदर्थं = तत्रोपवेशनार्थमिति भावः, विन्यस्तः इव = स्थापितः इव, अस्तीति शेषः । यस्य = शिलापट्टस्य, अभितःपदप्रयोगेऽपि द्वितीयाऽभावः आर्षः, अभितः = सर्वतः, अयं = पुरः स्थितः, केसरः = वकुलवृक्षः, 'अथ केसरः । वकुलः.' इत्यमरः, पुष्पैः = कुसुमैः, प्रवृष्ट इव = प्रारब्धवृष्टिरिव, 'आदिकर्मणि क्तः कर्तरि चे'ति कर्तरि क्तः, अस्तीति शेषः, अतोऽत्र त्वमुपविशेति भावः । 'अयं श्लोको रामायणज्ञैस्तकैः प्रश्नशित इति वदन्ति' इति वीरराघवः । अत्र द्वयोरुत्प्रेक्षयोः सङ्करः ॥ ३६ ॥

राम इति । सलज्जास्मितस्नेहकरुणं = लवेन रहस्यप्रकाशनात् लज्जा = व्रीडा, लवस्य सरलतादर्शनात्स्मितम्=ईषद्धास्यं, वात्सल्याद्धेतोः स्नेहः =प्रेम, एतादृशी प्रियतमा त्यक्तेति करुणः =शोकः, तैः सहितं यथा तथेति क्रियाविशेषणम् । शिशुजनः= बालजनः, लव इति भावः । अति हि नाम=अत्यर्थं हि, मुग्धः =मूढः, वक्तव्यावक्तव्यज्ञानहीनः, सरल इति भावः । अरण्यचरः =वनचारी । तत्समयविस्रम्भातिप्रसङ्गस्य= तत्समये = त्वदर्थमित्यादिश्लोककथनकाले, यो विस्रम्भः = आवाभ्यामृतेऽत्र कोऽपि नास्तीति ज्ञानजन्यो विश्वासः, तेन योऽतिप्रसङ्गः=भोगातिमात्रता, तस्य 'स्मरसी'तिपदेन योगे 'अधीगर्थदयेशां कर्मणी'ति कर्मणि षष्ठी ।

श्रमाम्बिति । श्रमाम्बुशिशिरीभवत् प्रसृतमन्दमन्दाकिनीमरुत्तर-

यह दीर्घ पाषाणपट्ट ( चट्टान ) मानो तुम्हारे लिए स्थापित किया गया है, जिसके चारों तरफ यह वकुल वृक्ष फूलोंसे वृष्टिका प्रारम्भ सा कर रहा है ॥ ३६ ॥

राम—( लज्जा, मन्दहास, वात्सल्य और शोकके साथ ) बालक अतिशय मूढ़ ( वक्तव्य और अवक्तव्यके ज्ञानसे रहित ) और विशेषतः वनचर है । हा देवि ! उस समयमें विश्वाससे जो विशिष्ट घटना हुई थी, उसको याद करती हो ?

१ श्रमसे उत्पन्न स्वेदजलसे ठण्डा होते हुए तथा मन्द गतिसे चले हुए गङ्गाजीके वायुसे

तदेतद्विस्तारि स्तनमुकुलमासीन्मृगदृशः ।
वयःस्नेहाकूतव्यतिकरघनो यत्र मदनः
प्रगल्भव्यापारः स्फुरति हृदि मुग्धश्च वपुषि ॥ ३५ ॥

लवः—अयं तु चित्रकूटवर्त्मनि मन्दाकिनीविहारे सीतादेवीमुद्दिश्य रघुपतेः श्लोकः—

---

च मुग्धः स्फुरति, तदा किञ्चित्किञ्चित्कृतपदं मृगदृशः तत् स्तनमुकुलं कतिपयैः अहोभिः ईषद्विस्तारि आसीत् इत्यन्वयः । तत्कालस्य तु सहत्वं विवृणोति तदेति । यत्र = यस्मिन् काले, वयःस्नेहाकूतव्यतिकरघनः = वयसः = अवस्थायाः, तारुण्यस्येति भावः, स्नेहस्य = अनुरागस्य, आकूतस्य = विशिष्टविषयाभिप्रायस्य, व्यतिकरः = सम्बन्धः, तेन घनः = सान्द्रः, एतादृशो मदनः = कामदेवः, हृदि = मनसि, प्रगल्भव्यापारः = प्रगल्भः = प्रौढः, व्यापारः = क्रिया, यस्य सः, तादृशः, तथा वपुषि च = शरीरे च, मुग्धः = नातिप्रौढः, लज्जयेति भावः, एतादृशः सन् स्फुरति = वर्तते, तदा = तस्मिन्नवसरे, किञ्चित्किञ्चित् = शनैः शनैः, कृतपदं = विहितस्थानं, मृगदृशः = हरिणनयनायाः, सीताया इत्यर्थः, तत् = प्रागनुभूतं, स्तनमुकुलं = कुचकुड्मलं, कतिपयैः = कैश्चित्, अहोभिः = दिवसैः, ईषद्विस्तारि = अल्पविस्तारशीलम्, आसीत् = अभवत्, यौवनारम्भे मन्मथो हृदये प्रौढत्वेनाविर्भवति, परं मुग्धत्वाच्छरीरे न तथाविधः प्रौढो भवतीति भावः । अत्र पूर्वार्द्धे आसीदिति भूतकालनिर्देशः, उत्तरार्द्धे च स्फुरतीति वर्तमानकालनिर्देशस्ततश्च विरहाकुलत्वाद्रामस्य चित्तभ्रान्तिर्लक्ष्यते । औचित्याच्छ्लोकोऽयं रामस्याऽऽत्मगतत्वेन पठित इति प्रतीयते । अत्र एकस्य मदनस्य हृद्वपुर्गोभित्वात्पर्यायोऽलङ्कारः । शिखरिणी वृत्तम् ॥ ३५ ॥

लव इति । चित्रकूटवर्त्मनि = चित्रकूटपर्वतमार्गे, मन्दाकिनीविहारे = गङ्गातटक्रीडायाम् ।

---

प्रौढ क्रियावाला होकर और शरीरमें लज्जाके कारण प्रौढ न होकर रहता है, उस समय धीरे धीरे स्थान लेनेवाला हरिणनयना सीताका वह कुड्मलसदृश पयोधर कुछ दिनोंके अनन्तर कुछ विस्तारवाला हो गया था ॥ ३५ ॥

लव—चित्रकूट पर्वतके मार्गमें गङ्गाजलकी क्रीडामें महारानी सीताको उद्देश्य करके रघुनाथका यह श्लोक है—

त्वदर्थमिव विन्यस्तः शिलापट्टोऽयमायतः ।
यस्यायमभितः पुष्पैः प्रवृष्ट इव केसरः ॥ ३६ ॥

रामः—( सलज्जस्मितस्नेहकरुणम् । ) अति हि नाम मुग्धः शिशुजनः विशेषतस्त्वरण्यचरः । हा देवि ! स्मरसि वा तस्य तत्समयविस्रम्भातिप्रसङ्गस्य ?

श्रमाम्बुशिशिरीभवत् प्रसृतमन्दमन्दाकिनी-

---

त्वदर्थमिति । अयम् आयत शिलापट्ट त्वदर्थं विन्यस्त इव, यस्य अभितः अयं केसर पुष्पै प्रवृष्ट इव इत्यन्वय । अय = पुर स्थित, आयत = दीर्घ, शिलापट्ट = पाषाणपट्ट, त्वदर्थं = तवोपवेशनार्थमिति भाव, विन्यस्त इव = स्थापित इव, अस्तीति शेष । यस्य = शिलापट्टस्य, अभित पदप्रयोगेऽपि द्वितीयाऽभाव आर्ष, अभित = सर्वत, अयं = पुर स्थित, केसर = वकुलवृक्षः, 'अथ केसर । वकुल ' इत्यमर, पुष्पै = कुसुमै, प्रवृष्ट इव = प्रारब्धवृष्टिरिव, 'आदिकर्मणि क्तः कर्तरि चे'ति कर्तरि क्त, अस्तीति शेष, अतोऽत्र त्वमुपविशेति भाव । 'अयं श्लोको रामायणलेखकै प्रचारित इति वदन्ति' इति वीरराघव । अत्र द्वयोरुत्प्रेक्षयोः सङ्करः ॥ ३६ ॥

राम इति । सलज्जस्मितस्नेहकरुणं = लवेन रहस्यप्रकाशनात् लज्जा = व्रीडा, लवस्य सरलतादर्शनात्स्मितम्=ईषद्धास्यं वात्सल्याद्धेतोः स्नेह=प्रेम, एतादृशी प्रियतमा त्यक्तेति करुणः=शोकः, तै सहितं यथा तथेति क्रियाविशेषणम् । शिशुजनः=बालजन, लव इति भाव । अति हि नाम=अत्यर्थं हि, मुग्ध =मूढ, वक्तव्यावक्तव्यज्ञानहीन, सरल इति भावः । अरण्यचरः=वनचारी । तत्समयविस्रम्भातिप्रसङ्गस्य= तत्समये = त्वदर्थमित्यादिश्लोककथनकाले, यो विस्रम्भ = आवाभ्यामृतेऽत्र कोऽपि नास्तीति ज्ञानजन्यो विश्वास, तेन योऽतिप्रसङ्ग =भोगातिमात्रता, तस्य 'स्मरसी'तिपदेन योगे 'अधीगर्थदयेशां कर्मणी'ति कर्मणि षष्ठी ।

श्रमाम्बिति । श्रमाम्बुशिशिरीभवत् प्रसृतमन्दमन्दाकिनीमरुत्तर-

---

यह दीर्घ पाषाणपट्ट ( चट्टान ) मानो तुम्हारे लिए स्थापित किया गया है, जिसके चारों तरफ यह वकुल वृक्ष फूलोंसे वृष्टिका प्रारम्भ-सा कर रहा है ॥ ३६ ॥

राम—( लज्जा, मन्दहास, वात्सल्य और शोकके साथ ) बालक अतिशय मूढ ( वक्तव्य और अवक्तव्यके ज्ञानसे रहित ) और विशेषतः वनचर है । हा देवि ! उस समयमें विश्वाससे जो विशिष्ट घटना हुई थी, उसकी याद करती हो ?

१ श्रमसे उत्पन्न स्वेदजलसे ठण्डा होते हुए तथा मन्द गतिसे चले हुए गङ्गाजीके वायुसे

तदेतद्विस्तारि स्तनमुकुलमासीन्मृगदृशः ।
वयःस्नेहाकूतव्यतिकरघनो यत्र मदनः
प्रगल्भव्यापारः स्फुरति हृदि मुग्धश्च वपुषि ॥ ३५ ॥

लव.—अयं तु चित्रकूटवर्त्मनि मन्दाकिनीविहारे सीतादेवीमुद्दिश्य रघुपतेः श्लोकः—

---

च मुग्धः स्फुरति, तदा किञ्चित्किञ्चित्कृतपदं मृगदृशः तत् स्तनमुकुलं कतिपयैः अहोभिः ईषद्विस्तारि आसीत् इत्यन्वयः । तत्कालस्य तु सदृत्तं विवृणोति तदेति । यत्र = यस्मिन् काले, वयःस्नेहाकूतव्यतिकरघनः = वयसः = अवस्थायाः, तारुण्यस्येति भावः, स्नेहस्य = अनुरागस्य, आकूतस्य = विशिष्टविषयाभिप्रायस्य, व्यतिकरः = सम्बन्धः, तेन घनः = सान्द्रः, एतादृशो मदनः = कामदेवः, हृदि = मनसि, प्रगल्भव्यापारः = प्रगल्भः = प्रौढः, व्यापारः = क्रिया, यस्य सः, तादृशः, तथा वपुषि च = शरीरे च, मुग्धः = नातिप्रौढः, लज्जयेति भावः, एतादृशः सन् स्फुरति = वर्तते, तदा = तस्मिन्नवसरे, किञ्चित्किञ्चित् = शनैः शनैः, कृतपदं = विहितस्थानं, मृगदृशः = हरिणनयनायाः, सीतायाः इत्यर्थः, तत् = प्रागनुभूतं, स्तनमुकुलं = कुचकुड्मलं, कतिपयैः = कैश्चित्, अहोभिः = दिवसैः, ईषद्विस्तारि = अल्पविस्तारशीलम्, आसीत् = अभवत्, यौवनारम्भे मन्मथो हृदये प्रौढत्वेनाविर्भवति, परं मुग्धत्वाच्छरीरे न तथाविधः प्रौढो भवतीति भावः । अत्र पूर्वार्द्धे आसीदिति भूतकालनिर्देशः, उत्तरार्द्धे च स्फुरतीति वर्तमानकालनिर्देशस्ततश्च विरहाकुलत्वाद्रामस्य चित्तभ्रान्तिर्लक्ष्यते । औचित्याच्छ्लोकोऽयं रामस्याऽऽत्मगतत्वेन पठित इति प्रतीयते । अत्र एकस्य मदनस्य हृद्वपुर्गामित्वात्पर्यायोऽलङ्कारः । शिखरिणी वृत्तम् ॥ ३५ ॥

लव इति । चित्रकूटवर्त्मनि = चित्रकूटपर्वतमार्गे, मन्दाकिनीविहारे = गङ्गातटक्रीडायाम् ।

---

प्रौढ क्रियावाला होकर और शरीरमें लज्जाके कारण प्रौढ न होकर रहता है, उस समय धीरे धीरे स्थान लेनेवाला हरिणनयना सीताका वह कुड्मलसदृश पयोधर कुछ दिनोंके अनन्तर कुछ विस्तारवाला हो गया था ॥ ३५ ॥

लव—चित्रकूट पर्वतके मार्गमें गङ्गाजलकी क्रीडामें महारानी सीताको उद्देश्य करके रघुनाथका यह श्लोक है—

त्वदर्थमिव विन्यस्तः शिलापट्टोऽयमायतः ।
यस्यायमभितः पुष्पैः प्रवृष्ट इव केसरः ॥ ३६ ॥

रामः—( सलज्जास्मितस्नेहकरुणम् । ) अति हि नाम मुग्धः शिशुजनः विशेषतस्त्वरण्यचरः । हा देवि ! स्मरसि वा तस्य तत्समयविस्रम्भातिप्रसङ्गस्य ?

श्रमाम्बुशिशिरीभवत् प्रसृतमन्दमन्दाकिनी-

---

त्वदर्थमिति । अयम् आयतः शिलापट्टः त्वदर्थं विन्यस्त इव, यस्य अभितः अयं केसरः पुष्पैः प्रवृष्ट इव इत्यन्वयः । अयं = पुरः स्थितः, आयतः = दीर्घः, शिलापट्टः = पाषाणपट्टः, त्वदर्थं = तवोपवेशनार्थमिति भावः, विन्यस्तः इव = स्थापित इव, अस्तीति शेषः । यस्य = शिलापट्टस्य, अभितः पदप्रयोगेऽपि द्वितीयाऽभाव आर्षः, अभितः = सर्वतः, अयं = पुरः स्थितः, केसरः = वकुलवृक्षः, 'अथ केसरः । वकुलः' इत्यमरः, पुष्पैः = कुसुमैः, प्रवृष्ट इव = प्रारब्धवृष्टिरिव, 'आदिकर्मणि क्तः कर्तरि चे'ति कर्तरि क्तः, अस्तीति शेषः, अतोऽत्र त्वमुपविशेति भावः । 'अयं श्लोको रामायणलेखकैः प्रक्षिप्त इति वदन्ति' इति वीरराघवः । अत्र द्वयोरुत्प्रेक्षयोः सङ्करः ॥ ३६ ॥

राम इति । सलज्जास्मितस्नेहकरुणं = लवेन रहस्यप्रकाशनात् लज्जा = व्रीडा, लवस्य सरलतादर्शनात्स्मितम्=ईषद्धास्यं, वात्सल्याद्धेतोः स्नेहः=प्रेम, एतादृशी प्रियतमा त्यक्तेति करुणः=शोकः, तैः सहितं यथा तथेति क्रियाविशेषणम् । शिशुजनः= बालजनः, लव इति भावः । अति हि नाम=अत्यर्थं हि, मुग्धः=मूढः, वक्तव्यावक्तव्यज्ञानहीनः, सरल इति भावः । अरण्यचरः=वनचारी । तत्समयविस्रम्भातिप्रसङ्गस्य= तत्समये = त्वदर्थमित्यादिश्लोककथनकाले, यो विस्रम्भः = आवाभ्यामृतेऽत्र कोऽपि नास्तीति ज्ञानजन्यो विश्वासः, तेन योऽतिप्रसङ्गः=भोगातिमात्रता, तस्य 'स्मरसी'तिपदेन योगे 'अधीगर्थदयेशां कर्मणी'ति कर्मणि षष्ठी ।

श्रमाम्बि्वति । श्रमाम्बुशिशिरीभवत् प्रसृतमन्दमन्दाकिनीमरुत्तर-

---

यह दीर्घ पाषाणपट्ट ( चट्टान ) मानो तुम्हारे लिए स्थापित किया गया है; जिसके चारों तरफ यह वकुल वृक्ष फूलोंसे वृष्टिका प्रारम्भ-सा कर रहा है ॥ ३६ ॥

राम—( लज्जा, मन्दहास, वात्सल्य और शोकके साथ ) बालक अतिशय मूढ ( वक्तव्य और अवक्तव्यके ज्ञानसे रहित ) और विशेषतः वनचर है । हा देवि ! उस समयमें विश्वाससे जो विशिष्ट घटना हुई थी, उसकी याद करती हो ?

श्रमसे उत्पन्न स्वेदजलसे ठण्डा होते हुए तथा मन्द गतिसे चले हुए गङ्गाजीके वायुसे

मरुत्तरलितालकाकुलललाटचन्द्रद्युति ।
अकुङ्कुमकलङ्कितोज्ज्वलकपोलमुत्प्रेक्ष्यते
निराभरणसुन्दरश्रवणपाशमुग्ध मुखम् ॥ ३७ ॥

( स्तम्भित इव स्थित्वा, सकरुणम् । ) अहो नु खलु भोः!

चिरं ध्यात्वा ध्यात्वा निहित इव निर्माय पुरतः

---

लितालकाकुलललाटचन्द्रद्युति अकुङ्कुमकलङ्कितोज्ज्वलकपोलं निराभरणसुन्दरश्रवणपाशमुग्धं मुखम् उत्प्रेक्ष्यत इत्यन्वयः । श्रमाम्बुशिशिरीभवत् = श्रमेण = परिश्रमेण, जनित यत् अम्बु = जल, स्वेदजलमिति भावः, तेन शिशिरीभवत् = शीतलीभवत् ; प्रसृतमन्दमन्दाकिनीमरुत्तरलितालकाकुलललाटचन्द्रद्युति = प्रसृतः = प्रचलितः, मन्दः = मन्थरः, यो मन्दाकिनीमरुत् = गङ्गावातः, तेन तरलिताः = चञ्चलीकृताः, ये अलकाः = चूर्णकुन्तलाः, तैः आकुला = आच्छादिता, ललाटचन्द्रद्युति = चन्द्रसदृशभालकान्तिः, यस्य तत् । अकुङ्कुमकलङ्कितोज्ज्वलकपोलम् = अकुङ्कुमकलङ्कितौ = केसरेण अचिह्नितौ, अपि, उज्ज्वलौ = प्रकाशमानौ, कपोलौ = गण्डौ, यस्मिंस्तत्, 'कलङ्कोऽङ्कापवादयो' इत्यमरः । तथा च निराभरणसुन्दरश्रवणपाशमुग्धं = निराभरणौ = भूषणरहितौ, तथापि सुन्दरौ=मनोहरौ, यौ=श्रवणपाशौ=प्रशस्तौ कर्णौ, ताभ्यां मुग्धं=सुन्दरम्, 'मुग्धः सुन्दरमूढयोः' इति विश्वः, 'सौम्य'पदपाठेऽप्ययमेवार्थः, एतादृशं त्वदीयं, मुखं = वदनम्, उत्प्रेक्ष्यते = पुरतो दृश्यत इव । अत्रेवादिद्योतकपदाभावात्प्रतीयमानोत्प्रेक्षा, 'ललाटचन्द्रे'त्यत्र रूपकं, कपोलस्य कुङ्कुमेन अकलङ्कितत्वेऽपि उज्ज्वलत्वस्य तथा च श्रवणपाशयोर्निराभरणत्वेऽपि सुन्दरत्वस्य प्रतिपादनाच्च विभावने च, एषामङ्गाङ्गिभावेन सङ्करः । पृथ्वी वृत्तम् ॥ ३७ ॥

स्तम्भित इति । स्तम्भित = जातस्तम्भः ।

चिरमिति । प्रवासे च चिरं ध्यात्वा ध्यात्वा निर्माय पुरतो निहित इव प्रिय-

---

चञ्चल अलकोंसे जिसके चन्द्रतुल्य ललाटकी कान्ति आच्छादित हो रही है ऐसा, केशरका लेप न होनेपर भी उज्ज्वल कपोलवाला और भूषणके विना भी सुन्दर कर्णपाशोंसे मनोहर तुम्हारा मुख मानो प्रत्यक्ष देख रहा हूं ॥ ३७ ॥

( स्तम्भितकी तरह होकर, शोकके साथ ) ओह !

प्रियजनके प्रवासमें बहुत समय तक वारवार चिन्ता करके कल्पनासे रचनाकर सामने

प्रवासे चाश्वासं न खलु न करोति प्रियजनः ।
जगज्जीर्णारण्यं भवति च कलत्रे ह्युपरते
कुकूलानां राशौ तदनु हृदयं पच्यत इव ॥ ३८ ॥

( नेपथ्ये । )

वसिष्ठो वाल्मीकिर्दशरथमहिष्योऽथ जनकः

---

जन आश्वासं न करोति ( इति ) न, खलु । कलत्रे उपरते जगत् जीर्णारण्यं भवति हि । तदनु हृदयं कुकूलानां राशौ पच्यत इव इत्यन्वयः । प्रवासे च = प्रियजनस्य देशान्तरगमने च, चिरं बहुकालं, ध्यात्वा ध्यात्वा=मुहुर्मुहुश्चिन्तयित्वा, निर्माय = कल्पनया रचयित्वा, पुरतः = अग्रतः, निहित इव=स्थापित इव, प्रियजनः = अभीष्टजनः, आश्वासं = सान्त्वना, न करोति = न विदधाति, इति न = एतत् न, अपि तु सान्त्वना करोत्येव, खलु=निश्चयेन, सीताया जीवन्त्या तदभावेऽपि सङ्कल्पतस्तद्रूपनिर्माणेनापि सान्त्वनायुक्त आसमिति भावः । परं कलत्रे = पत्न्याम्, उपरते = मृते सति, 'विकल्पव्युपरमे' इति पाठे—विकल्पस्य = अलीकप्रियजनकल्पकस्य संकल्पस्य, व्युपरमे = निवृत्तौ सत्याम्, जगत् = लोकः, जीर्णारण्यं= वृक्षादिरहितपुरातनवनसदृशं, भवति हि = जायते ननु, 'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।' इति स्मरणादिति भावः, गृहिण्याः प्रियजनस्य वा नाशे तादृशः सङ्कल्पोऽपि न स्फुरति, येन कंचित्कालं सान्त्वना लभ्येतेति तात्पर्यम् । तदनु=जगतो जीर्णारण्यत्वे परिणतेरनन्तरमिति भावः, हृदयं = चित्त, कुकूलाना = तुषाग्नीना 'कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले ।' इत्यमरः, राशौ = समूहे, पच्यत इव=दह्यत इव, कर्मकर्तृ लकारः, आतिदेशिकयगादयः । पत्नीनाशे हृदयं पुटपाकवदत्यर्थं तप्यत इति भावः । अत्रोत्प्रेक्षाद्वय, जगज्जीर्णारण्यमित्यत्र व्यस्तरूपकं चेत्येतेषा मिथोऽनपेक्षया स्थितेः संसृष्टिः । शिखरिणी वृत्तम् ॥३८॥

वसिष्ठ इति । अरुन्धत्या सह एव वसिष्ठो वाल्मीकिः दशरमहिष्यः अथ

---

स्थापित किये गयेकी तरह होकर प्रिय जन सान्त्वना नहीं करता है यह बात नहीं है अर्थात् सान्त्वना करता ही है । परन्तु पत्नीके लोकान्तरित होनेपर लोक वृक्षादिरहित पुराने वनके सदृश हो जाता है, उसके अनन्तर हृदय तुषानलकी राशिमें जैसे स्वयम् दग्ध हो जाता है॥३८॥

( नेपथ्यमें )

अरुन्धतीके साथ वसिष्ठ, वाल्मीकि, दशरथकी महारानियाँ और जनक—लव और

सहैवारुन्धत्या शिशुकलहमाकर्ण्य सभयाः ।
जराग्रस्तैर्गात्रैरथ खलु सुदूराश्रमतया
चिरेणागच्छन्ति त्वरितमनसो विश्लथजटाः ॥ ३९ ॥

रामः—कथं भगवत्यरुन्धती वसिष्ठोऽम्बाश्च जनकश्चात्रैव । कथं खलु ते द्रष्टव्याः ? ( सकरुणं विलोक्य । ) तातजनकोऽप्यत्रैवायात इति वज्रेणेव

---

जनकः शिशुकलहम् आकर्ण्य सभयाः ( अत एव ) त्वरितमनसः विश्लथजटाः ( सन्तः ) अथ सुदूराश्रमतया जराग्रस्तैः गात्रैः चिरेण आगच्छन्ति खलु इत्यन्वयः । अरुन्धत्या = वसिष्ठपत्न्या, सह एव = सार्धम् एव, वसिष्ठ =तन्नामा ऋषिः, वाल्मीकिः = आदिकविः, दशरथमहिष्यः = कौसल्यादयः, अथ = अनन्तरम्, जनकः = विदेहाधिपतिः, शिशुकलह = शिश्वोः = लवचन्द्रकेत्वोः, कलहम् = युद्धम् , आकर्ण्य = श्रुत्वा, सभयाः = भीतियुक्ताः, त्वरितमनसः = शीघ्रतायुक्तचित्ताः, विश्लथजटा = विश्लथा = शिथिलाः, जटा = सटाः, येषां ते, तादृशाः सन्तः; अथ = अनन्तरं, सुदूराश्रमतया = सुदूर = युद्धस्थलादतिदूरः, यः आश्रम = तपःस्थानम् , तस्य भावः सुदूराश्रमता, तया, आश्रमस्य युद्धस्थलाद् दूरवर्तित्वेनेति भावः, 'विश्लथजटा' इत्यत्र 'श्रमजडा' इति पुस्तकान्तरपाठस्तत्र—श्रमेण = दूरमार्गगमनश्रान्त्या, जडा =असमर्थाः, सन्त इत्यर्थः । जराग्रस्तैः = जरया = वार्द्धक्येन, ग्रस्तैः = व्याप्तैः, गात्रैः = शरीरैः, उपलक्षिताः सन्तः, 'इत्थंभूतलक्षणे' इति तृतीया, 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः, इत्यमरः, चिरेण = बहुकालेन, आगच्छन्ति = आयान्ति, खलु = निश्चयेन । बालयोर्लवचन्द्रकेत्वोः कलहप्रतिषेधनार्थं वसिष्ठादयः आयान्तीति भावः । अत्र जराग्रस्तगात्रस्य चिरेणागमनं प्रति हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । शिखरिणी वृत्तम् ॥ ३९ ॥

**राम इति** । कथं = केन प्रकारेण, निर्दोषाया गर्भिण्या धर्मपत्न्याः परित्यक्ताऽहं कथमरुन्धत्यादीनां मुखं पश्यामीति भावः, तातजनकोऽपि = पितृसमः पूजनीयो जनकोऽपि, भार्यापितृत्वात्स्वपितृत्वोपचारः, वज्रेण इव = कुलिशघातेन

---

चन्द्रकेतुका युद्ध सुनकर भययुक्त और शीघ्रतायुक्त चित्तवाले होकर गतिवशात् शिथिल जटावाले होते हुए तथा आश्रम दूर होनेके कारणसे बुढ़ापेसे ग्रस्त शरीरोंसे ( दूरतक चलनेसे थक जानेके कारण) बहुत विलम्ब करके आ रहे हैं ॥ ३९ ॥

**राम**—किस तरह भगवती अरुन्धती, भगवान् वसिष्ठ, मातायें और जनकजी भी आ गये ? मैं कैसे उन लोगोंका दर्शन करूँ ? पिता जनकजी भी यहींपर आ गये हैं, मन्द भाग्य-

ताडितोऽस्मि मन्दभाग्यः ।

सम्बन्धस्पृहणीयताप्रमुदितैर्ज्येष्ठैर्वसिष्टादिभि-
र्दृष्ट्वापत्यविवाहमङ्गलविधौ तत्तातयोः सङ्गमम् ।
पश्यन्नीदृशमीदृशः पितृसखं वृत्ते महावैशसे
दीर्ये किं न सहस्रधाऽहमथवा रामेण किं दुष्करम् ॥ ४० ॥

---

इव, ताडितोऽस्मि = प्रहृतोऽस्मि ।

सम्बन्धेति । सम्बन्धस्पृहणीयताप्रमुदितैः ज्येष्ठैः वसिष्ठादिभिः अपत्यविवाहमङ्गलविधौ तत्तातयोः संगमं दृष्ट्वा महावैशसे वृत्ते ईदृशं पितृसखं पश्यन् ईदृशः अहं किं सहस्रधा न दीर्ये ? अथ वा रामेण किं दुष्करम् ? इत्यन्वयः । सम्बन्धस्पृहणीयताप्रमुदितैः = सम्बन्धस्य = अपत्यानां विवाहसम्बन्धस्य, स्पृहणीयतया = श्लाघ्यतया, प्रमुदितैः = अतिशयहर्षयुक्तैः, ज्येष्ठैः = श्रेष्ठैः, वसिष्ठादिभिः = वसिष्टप्रभृतिभिः ऋषिभिः, आदिपदेन गौतमकौशिकादीनां परिग्रहः, तथा च तैरनुष्ठित इति शेषः, अपत्यविवाहमङ्गलविधौ = अपत्यानां = कन्यापुत्राणाम्, विवाहमङ्गलविधौ = पाणिग्रहणकल्याणकर्मणि, पुस्तकान्तरेषु तु "ज्येष्ठै"रित्यत्र 'जुष्टे' इति पाठस्तत्र—वसिष्ठादिभिर्जुष्टे = सेवित इत्यर्थः, एवं च "विधौ" इत्यत्र "महे" इति पाठस्तत्र—उत्सव इत्यर्थः, "मह उद्धव उत्सवः" इत्यमरः । तत्तातयोः = तेषाम् = अपत्यानां, कन्यापुत्ररूपाणामित्यर्थः, यद्वा, तयोः = तथाविधयोः प्रसन्नयोः, तातयोः = पित्रोः, जनकदशरथयोरिति भावः, संगमं = समेलनं, दृष्ट्वा = अवलोक्य, साम्प्रतं तु = इदानीन्तु, महावैशसे वृत्ते = सीतात्यागरूपमहाहिंसायां जातायाम्, ईदृशम् = अतिशयदुःखितं, पितृसखं = तातमित्रं, दशरथसुहृदं जनकमिति भावः । ईदृशः = महावैशसनिमित्तभूतः, अहं = रामः, पश्यन् = अवलोकयन् किं = कथं, सहस्रधा = सहस्रप्रकारैः, न दीर्ये = न विदीर्णो भवामि ? कर्मकर्तृप्रयोगः । अथवा = पक्षान्तरे, विदीर्णत्वाभाव इति भावः, रामेण = मया, किं = किं कार्यं, दुष्करं = दुःखेन कर्तुं

---

वाला मैं वज्रसे ताडितकी तरह हो गया हूं।

सम्बन्धकी श्लाघ्यतासे अतिशय हर्षसम्पन्न श्रेष्ठ वसिष्ठ आदि ऋषियोंसे अनुष्ठित, सन्तानोंके विवाहोंकी माङ्गलिक विधिमें उनके पिता (जनक और दशरथ) का समेलन देखकर—और इस समय महाहिंसाके होनेपर इस तरहका (हत्यारा) मैं क्यों हजारों प्रकारोंसे (टुकड़ोंमें) विदीर्ण नहीं होता हूं, अथवा रामसे क्या दुष्कर है ? ॥ ४० ॥

( नेपथ्ये । )

भो भोः ! कष्टम् ।

अनुभावमात्रसमवस्थितश्रियं सहसैव वीक्ष्य रघुनाथमीदृशम् ।
प्रथमप्रबुद्धजनकप्रबोधिता विधुराः प्रमोहमुपयान्ति मातरः ॥ ४१ ॥

रामः—

जनकानां रघूणां च यत्कृत्स्नं गोत्रमङ्गलम् ।

---

शक्यं, यो नाम रामो निरपराधां गर्भवतीं धर्मपत्नीं सीतां श्वापदसङ्कुले विपिने परित्यक्तवान्, तेन किं कार्यं दुष्करं, सर्वमपि क्रूरं कार्यं सुकरमतो पनकमुखावलोकनेनापि नाहं विदीर्णो भविष्यामीति भावः । अत्रार्थापत्तिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ४० ॥

अनुभावेति । अनुभावमात्रसमवस्थितश्रियम् ईदृशं रघुनाथं सहसा एव वीक्ष्य प्रथमप्रबुद्धजनकप्रबोधिता मातरः विधुराः प्रमोहमुपयान्ति इत्यन्वयः । अनुभावमात्रसमवस्थितश्रियम् = अनुभावमात्रेण = प्रभावमात्रेण समवस्थिता = विद्यमाना, श्रीः = शोभा, यस्य तम्, ईदृशम् = एतादृशं, सहजप्रभावमात्रेण दर्शनीयं परं नितान्तकृशमिति भावः । रघुनाथं = रामचन्द्रं, सहसा एव = अतर्कितरूपेण एव, वीक्ष्य = दृष्ट्वा, प्रथमप्रबुद्धजनकप्रबोधिताः = प्रथमं = प्राक्, प्रबुद्धः = मूर्च्छापगमात् प्राप्तसंज्ञः, 'प्रमूढ' पदपाठे प्रमूढः = मूर्च्छितः, यो जनकः = विदेहाधिपतिः, तेन प्रबोधिताः = कृतप्रबोधाः, मातरः = जनन्यः, कौसल्यादय इति भावः, विधुराः = शून्येन्द्रियाः सत्यः, प्रमोहं = प्रकृष्टमूर्च्छाम्, उपयान्ति = प्राप्नुवन्ति । सीताविरहादतिशयकृशो रामः तेजोविशेषमात्रेण जनकादिभी रामोऽयमिति परिज्ञातः, ज्ञानोत्तरं च सर्वेऽपि मूर्च्छितास्ततश्च प्राक्प्रबुद्धेन जनकेन प्रबुद्धा अपि राममातरः शोकावेगातिशयेन पुनः प्रकृष्टां मूर्च्छां प्राप्तवत्य इति भावः । मञ्जुभाषिणी वृत्तम् ॥ ४१ ॥

जनकानामिति । जनकानां रघूणां च यत् कृत्स्नं गोत्रमङ्गलं, तत्र अपि

---

( नेपथ्यमें )

ओह ! कष्ट है ।

प्रभावमात्रसे शोभासम्पन्न रामचन्द्रको अतर्कित भावसे ही देखकर पहले होशमें आये हुए जनकसे होशमें लाई गई कौसल्या आदि मातायें निश्चेष्ट होती हुई अतिशय मूर्च्छावस्थाको प्राप्त हो रही हैं ॥ ४१ ॥

**राम**—जनकवंश और रघुवंशमें उत्पन्न राजाओंकी जो सीता, सम्पूर्ण रूपसे कुलके

तत्राप्यकरुणे पापे वृथा वः करुणा मयि ॥ ४२ ॥

यावत्संभावयामि । ( इत्युत्तिष्ठति । )

कुशलवौ—इत इतस्तातः ।

( सकरुणं परिक्रम्य निष्क्रान्ताः सर्वे । )

इति महाकविभवभूतिविरचित उत्तररामचरिते
कुमारप्रत्यभिज्ञान नाम षष्ठोऽङ्कः ॥ ६ ॥



अकरुणे पापे मयि वः करुणा वृथा इत्यन्वय । जनकाना = जनकवंश्याना, रघूणां च = रघुवंश्याना राज्ञा च, यत् = सीतारूपं वस्तु, कृत्स्नं = संपूर्णं, 'विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम्' । इत्यमरः, गोत्रमङ्गलं = कुलकल्याणम् , आसीदिति शेषः, तत्र अपि = तस्मिन्नपि, जनकरघुवंश्याना राज्ञा गोत्रमङ्गले सीतारूपे वस्तुन्यपीति भावः, अकरुणे=निर्दये, अकारणनिर्वासनेनेति भावः, ( अतएव ) पापे = पापयुक्ते, मयि = रामे, वः = युष्माकं, करुणा = दया, वृथा = व्यर्था, घातुके पापे दण्डविधान समुचित न तु दयाप्रदर्शनमिति भावः । अत्र पापं प्रति करुणाव्यर्थत्वस्य हेतोः पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ४२ ॥

यावदिति । यावत् संभावयामि = अभ्युत्थानाभिवादनादिभिः सत्कारं करिष्यामि, अत्र 'यावत्पुरानिपातयोर्लट्' इति भविष्यदर्थे लट् । उत्तिष्ठति = उत्थानमभिनयति ।

कुशलवाविति । इतः = अत्र, आगच्छत्विति शेषः ।

इति श्रीशेषराजशर्मप्रणीतायामुत्तररामचरितव्याख्यायां चन्द्रकलाभिधानायां कुमारप्रत्यभिज्ञान नाम षष्ठोऽङ्कः ॥ ६ ॥



कल्याणस्वरूप थीं, उनपर भी निर्दय और पापयुक्त मुझ रामपर आप लोगोंकी दया व्यर्थ है ॥ ४२ ॥

अच्छा, मैं इन लोगोंका सत्कार करता हूं । ( ऐसा कहकर उठते हैं । )

कुश और लव—पिताजी ! इधर आवें, इधर ।

( करुणाके साथ घूमकर सब चले जाते हैं । )

यह 'कुमारप्रत्यभिज्ञान' नामक छठा अङ्क समाप्त हुआ ॥ ६ ॥



# सप्तमोऽङ्कः ।

( ततः प्रविशति लक्ष्मणः । )

लक्ष्मणः—भोः, किं नु खलु * भगवता वाल्मीकिना सब्रह्मक्षत्रपौरजानपदाः प्रजाः सहास्माभिराहूय कृत्स्न एव सदेवासुरतिर्यङ्निकायः सचराचरो भूतग्रामः स्वप्रभावेण संनिधापितः । आदिष्टश्चाहमार्येण—'वत्स लक्ष्मण ! भगवता वाल्मीकिना स्वकृतिमप्सरोभिः प्रयुज्यमानां द्रष्टुमुपनिमन्त्रिताः स्म । गङ्गा†तीरमातोद्यस्थानमुपगम्य क्रियतां समाज-

लक्ष्मण इति । भोः = इत्यन्तःकरणं प्रति सम्बुद्धिः । भगवता = ऐश्वर्यादिसम्पन्नेन, सब्रह्मक्षत्रपौरजानपदाः = ब्रह्मभिः = ब्राह्मणैः, क्षत्रैः = क्षत्रियैः, पौरैः = नागरिकैः, जानपदैः = देशवासिजनैः, सहिताः, प्रजाः = जनान्, 'प्रजा स्यात् सन्ततौ जने' इत्यमरः, आहूय = आकार्य, कृत्स्न एव = समस्त एव, सदेवासुरतिर्यङ्निकायः = देवाः = इन्द्रादयोऽमराः, असुराः = वलादयो दैत्याः, तिर्यञ्चः = नागादयः, एतेषां निकायः = समूहः, तेन सहितः; सचराचरः = चरैः = जङ्गमैः, अचरैः = स्थावरैः, सहितः; भूतग्रामः = प्राणिसमूहः, स्वप्रभावेण = आत्मतपःशक्त्या, किं नु संनिधापितः = कथं नु संनिधिं प्रापितः ? एतेन चराचराणां सकलप्राणिनामेकत्र स्थापनेन विस्मयो द्योत्यते । आर्येण = पूज्येन, रामचन्द्रेणेति भावः, आदिष्टः = आज्ञप्तः । अप्सरोभिः = उर्वशीप्रभृतिभिः, प्रयुज्यमानाम् = अभिनीयमानां, स्वकृतिम् = आत्मरचनां, नाटकरूपामिति शेषः, उपनिमन्त्रिताः = अभ्यर्थिताः, वयमिति शेषः । आतोद्यस्थानं = चतुर्विधवाद्यस्थानं गङ्गातीरं = भागीरथीतटम्, उपगम्य = प्राप्य, समाजसन्निवेशः =

( अनन्तर लक्ष्मण प्रवेश करते हैं )

लक्ष्मण—अरे ! भगवान् वाल्मीकिने हम लोगोंके साथ तथा ब्राह्मण, क्षत्रिय, नागरिक और देशवासी जनोंके साथ प्रजाओंको बुलाकर संपूर्ण देवता, दैत्य और नाग आदिके साथ स्थावरजङ्गमात्मक प्राणि समूहको अपने प्रभावसे किस तरह इकट्ठा कर लिया है । आर्य (रामचन्द्र) ने मुझे आज्ञा दी है कि—'वत्स लक्ष्मण ! भगवान् वाल्मीकिने अप्सराओंसे अभिनय की जानेवाली अपनी रचना ( नाटक ) को देखनेके लिए हम लोगोंको निमन्त्रित किया है । चार तरहके बाजाओंके स्थान गङ्गातटमें जाकर समाजका यथायोग्य स्थानविभाग कर लो' ।

* 'भोः, किंनु खलु' इत्यस्य स्थाने 'भो भो' इत्येव क्वचित्पाठः ।

† 'तद्गङ्गा–' इति पाठान्तरम् ।

संनिवेशः' इति । कृतश्च मर्त्यामर्त्यस्य भूतग्रामस्य समुचितस्थानसंनिवेशो मया । अयं तु—

राज्याश्रमनिवासो*ऽपि प्राप्तकष्टमुनिव्रतः ।
वाल्मीकिगौरवादार्य इत एवाभिवर्त्तते ॥ १ ॥

( ततः प्रविशति रामः । )

रामः—वत्स लक्ष्मण ! अपि स्थिता रङ्गप्राश्निकाः ?

लक्ष्मणः—अथ किम् ।

---

समाजस्य = सभायाः, संनिवेशः = यथोचितस्थानविभागः । मर्त्यामर्त्याश्च = मर्त्याश्च = मरणशीलाश्च, अमर्त्याश्च = मरणरहिताश्च, तेषां समाहारस्तस्य, भूतग्रामस्य = प्राणिसमुदायस्य, समुचितस्थानसंनिवेशः = समुचितस्थानस्य=अधिकारानुरूपस्थानस्य, संनिवेशः = प्रतिष्ठापनम् ।

राज्याश्रमेति । राज्याश्रमनिवासः अपि प्राप्तकष्टमुनिव्रतः आर्यः वाल्मीकिगौरवात् इत एव अभिवर्त्तते इत्यन्वयः । राज्याश्रमनिवासोऽपि = राज्यम् = भूमिपरिपालनात्मकं राजकर्म, एव आश्रमः = स्वच्छन्दाचारप्रतिबन्धको नियमविशेषः, तस्मिन् निवासः = स्थितिः, यस्य सः तादृशः सन्नपि, प्राप्तकष्टमुनिव्रतः = प्राप्त = गृहीतम् , कष्टं = दुःखरूपम् , मुनिव्रतं = तपस्विव्रतं, ब्रह्मचर्यादिकमित्यर्थः, येन सः, आर्यः = पूज्यः, रामचन्द्र इत्यर्थः । वाल्मीकिगौरवात्-वाल्मीकेः=प्राचेतसस्य, गौरवात् = गुरुत्वबुद्धेर्हेतोः, इत एव = अस्मिन् स्थान एव, अभिवर्त्तते = आयाति । अत्र विरोधाभासोऽलङ्कारः ॥ १ ॥

राम इति । रङ्गप्राश्निकाः = रङ्गस्य = नाट्यस्थानस्य, प्राश्निकाः = सामाजिकाः, 'प्रेक्षकाः' इति पाठे-दर्शका इत्यर्थः, स्थिता अपि = कृतस्थितयः सन्ति किम् ? अपिः प्रश्नार्थकः ।

लक्ष्मण इति । अथ किम् = अङ्गीकारद्योतकमव्ययद्वयम् ।

---

मैं भी मनुष्य और देवरूप प्राणिसमूहका यथोचित स्थानविभाग कर चुका हूं । ये—

राज्यरूप आश्रममें निवास करते हुए भी दुःखरूप मुनिव्रतको प्राप्त किये हुए आर्य ( रामचन्द्रजी ) वाल्मीकि ऋषिके गौरवसे इसी ओर आ रहे हैं ॥ १ ॥

( अनन्तर राम प्रवेश करते हैं । )

**राम**—वत्स लक्ष्मण ! नाट्यस्थानके सामाजिकलोग उपस्थित हैं क्या ?

**लक्ष्मण**—जी हां ।

---

* 'निवासे' इति पाठान्तरम् ।

रामः—इमौ पुनर्वत्सौ कुमारचन्द्रकेतुसमां प्रतिपत्तिं लम्भयितव्यौ।

लक्ष्मणः—प्रभुस्नेहप्रत्ययात्तथैव कृतम्। इदं चास्तीर्णं राजासनम्। तदुपविशत्वार्यः।

रामः—( उपविश्य। ) प्रस्तूयतां भोः!

सूत्रधारः—( प्रविश्य। ) भगवान्भूतार्थवादी प्राचेतसः स्थावरजङ्गमं जगदाज्ञापयति—'यदिदमस्माभिरार्षेण चक्षुषा समुद्वीक्ष्य पावनं वचनामृतं करुणाद्भुतरसं च* किंचिदुपनिबद्धम्। तत्र कार्व्यगौरवादवधातव्यम्' इति।

---

राम इति। इमौ = सन्निधिस्थौ, वत्सौ = वात्सल्यास्पदे, कुशलवाविति भाव, कुमारचन्द्रकेतुसमा = कुमारचन्द्रकेतुना = चन्द्रकेतुनाम्ना कुमारेण, समा=तुल्याम्, 'तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्' इति तृतीया षष्ठी वा, तत· समास·, प्रतिपत्तिं = सम्मान, लम्भयितव्यौ = प्रापयितव्यौ।

लक्ष्मण इति। प्रभुस्नेहप्रत्ययात् = प्रभो = महाराजस्य, स्नेहेन = कुशलवयोः प्रदर्शितया प्रीत्या, य प्रत्यय· = ज्ञानम्, तस्मात्, 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु।' इत्यमर, तथैव = प्रभोरिच्छानुसरणमेव, कृतम् = अनुष्ठितम्। राजासन = सिंहासनम्, आस्तीर्णं = स्थापितम्।

राम इति। प्रस्तूयताम् = अभिनय आरभ्यतामित्यर्थ·।

सूत्रधार इति। भूतार्थवादी=भूतार्थं=सत्यम्, वदति = वदतीति तच्छील, 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनि, प्राचेतस = प्रचेतसः = वरुणस्य, अपत्यं पुमान् = वाल्मीकि, आज्ञापयति = आदिशति। आर्षेण = ऋषिसम्बन्धिना, अलौकिकेनेति भाव, चक्षुषा = दृष्ट्या, समुद्वीक्ष्य=सम्यक् = अतिशयेन, उद्वीक्ष्य=दृष्ट्वा, पावनं=स्वदर्शनादन्येषां शुद्धिजननम्, करुणाद्भुतरसं=करुणाद्भुतौ रसौ, यस्मिंस्तत्, एतादृशं किञ्चित् वचनामृत = वचनम् = वच, अमृतम् =

---

राम—वात्सल्यभाजन ये दो कुमार, कुमार चन्द्रकेतुके समान स्थानसे सम्मानित किये जायँ।

लक्ष्मण—महाराजके स्नेहके ज्ञानके कारण ऐसा ही किया गया है। यह सिंहासन स्थापित है। आर्य विराजमान हों।

राम—( बैठकर ) आरम्भ करें।

सूत्रधार—( प्रवेश कर ) सत्यवादी भगवान् वाल्मीकि चराचर जगत्को आज्ञा देते हैं—'हमने अलौकिक दृष्टिसे देखकर पवित्रकारक करुण और अद्भुत रसवाला अमृततुल्य वचनसे युक्त जो नाटक बनाया है, उसमें काव्यके गौरवसे आपलोगोंको ध्यान देना चाहिए।'

---

* पावनकरुणाद्भुतरसे' इति पाठान्तरम्।

रामः—एतदुक्तं भवति। साक्षात्कृतधर्माणो महर्षयः। तेषामृतम्भराणि भगवतां परोरजांसि प्रज्ञानानि न कचिद्व्याहन्यन्त इति न हि शङ्कनीयानि।

( नेपथ्ये। )

हा अज्जउत्त! हा कुमार लक्खण! एआइणिं असरणं आसण्णप्पसववेअणं अरण्णे हदासं सावदा अहिलसन्दि। हा! दाणिं मन्दभाइणी भाईरईए अत्ताणं णिक्खिविस्सम्।(हा आर्यपुत्र! कुमारलक्ष्मण! एकाकिनीमशर-

---

पीयूषम् इव, "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति समासः, उपनिबद्धं = रचितम्। तत्र = वचनामृते, काव्यगौरवात्=काव्यस्य=रूपकस्वरूपस्य कविकर्मणः, गौरवात् = महनीयत्वात्, 'कार्यगौरवात्' इति पाठेऽप्ययमेवार्थः, अवधातव्यम् = अवधानं कर्तव्यं, सावधानैर्भवितव्यमिति भावः।

राम इति। एतत् = इदम्, उक्तं = कथितम्। साक्षात्कृतधर्माणः = साक्षात्कृतः = प्रत्यक्षीकृतः, धर्मः = अलौकिकश्रेयःसाधनरूपः, यैस्ते, 'धर्मादनिच् केवलात्' इति समासान्तोऽनिच्, ऋतं = सत्यं, 'भराणि' इति पदेन योगेऽपि 'कर्तृकर्मणोः कृति' इत्यस्य अनित्यत्वान्न षष्ठीति वीरराघवः, भराणि = बिभ्रतीति भराणि, पचाद्यच् धारकाणीत्यर्थः, पुस्तकान्तरेषु 'अमृतसाराणी'ति पाठस्तस्य-अमृतमिव = पीयूषमिव, सारः = स्थिरांशः, येषां तानीत्यर्थः, परोरजांसि = रजसः पराणि, रज इति तमसोऽप्युपलक्षणं, केवलसत्त्वमयानीति भावः, 'राजदन्तादिषु परम्' इति रजःपदस्य परनिपातः, पारस्करादित्वात्सुट्। प्रज्ञानानि = प्रकृष्टतत्त्वबोधाः, क्वचित् = कुत्रचित्, भूते भविष्यति वर्तमाने वा काले इत्यर्थः, न व्याहन्यन्ते = न कुण्ठितानि भवन्ति, इति = अस्माद्धेतोः, न हि शङ्कनीयानि = शङ्कायोग्यानि न भवन्तीति शेषः।

हेति। एकाकिनीम् = एकाम्, 'एकादाकिनिच्चासहाये' इत्याकिनिच्, तदन्तात् 'ऋन्नेभ्यो ङीप्' इति ङीप्, 'एकाकी त्वेक एककः' इत्यमरः, अशरणाम् = अविद्यमानम् = अवर्तमानं, शरणं=रक्षिता, यस्यास्ताम्, रक्षकरहितामित्यर्थः, आसन्नप्रसववेदनाम् = आसन्ना=समीपागता, प्रसववेदना=प्रसूतिकष्टं, यस्यास्ताम्,

---

राम—यह कहा जाता है। महर्षियोंने धर्मका प्रत्यक्ष कर लिया है। ऐश्वर्यसम्पन्न उनके, सत्यके धारण करनेवाले और रजोगुणसे परवर्ति ज्ञान किसी कालमें भी व्याहत नहीं होते हैं, इस कारणसे वे शङ्काके योग्य नहीं हैं।

( नेपथ्यमें। )

हा आर्यपुत्र! कुमार लक्ष्मण! अकेली, रक्षकसे रहित, उपस्थित प्रसव-वेदनावाली और

णामासन्नप्रसववेदनामरण्ये हताशां श्वापदा अभिलपन्ति । हा ! इदानीं मन्दभाग्या भागीरथ्यामात्मानं निक्षिपामि ।

लक्ष्मणः—कष्टं वतान्यदेव किमपि ।

सूत्रधारः—विश्वंभरात्मजा देवी राज्ञा त्यक्ता महावने ।
प्राप्तप्रसवमात्मानं गङ्गादेव्यां विमुञ्चति ॥ २ ॥

( इति निष्क्रान्तः । )

प्रस्तावना ।

---

हताशां = निराशां, व्यर्थमनोरथामिति भावः । श्वापदाः = दुष्टपशवः, व्याघ्रादय इति भावः । अभिलपन्ति=भक्षयितुमिच्छन्ति । मन्दभाग्या=अल्पभाग्या, अहमिति शेषः । भागीरथ्यां—गङ्गायाम्, आत्मानं=शरीरम्, 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ।' इत्यमरः, निक्षिपामि=पातयामि ।

लक्ष्मण इति । अन्यदेव = आशास्यविषयादपरमेव, किमपि = अकथनीयमिति भावः ।

विश्वम्भरेति । विश्वम्भरात्मजा देवी राज्ञा महावने त्यक्ता प्राप्तप्रसवम् आत्मानं गङ्गादेव्यां विमुञ्चति इत्यन्वयः । विश्वम्भरात्मजा = विश्वं विभर्तीति विश्वम्भरा=पृथ्वी, "सञ्ज्ञायां भृतॄवृजिधारिसहितपिदमः" इति खच्, ततः 'अरुर्द्विषदजन्तस्य मुम्' इति मुम्, 'भूर्भूमिरचलानन्ता रसा विश्वम्भरा स्थिरा ।' इत्यमरः, तस्याः=पृथिव्याः, आत्मजा=पुत्री, देवी=महाराज्ञी, सीतेति भावः, राज्ञा= नृपेण, रामचन्द्रेणेति भावः, महावने = निविडारण्ये, त्यक्ता = परित्यक्ता, प्राप्तप्रसवं = प्राप्तः = लब्धः, प्रसवः=प्रसूतिकालः, यस्य तम्, एतादृशम्, आत्मानं= शरीरं, गङ्गादेव्यां = भागीरथीदेव्यां, गङ्गाजलप्रवाह इति भावः, विमुञ्चति = पातयति ॥ २ ॥

प्रस्तावनेति । प्रस्तावना=इयमन्तर्नाटकस्य प्रस्तावना ।

---

जङ्गलमें आशासे शून्य मुझको व्याघ्र आदि हिंस्र जन्तु खानेकी इच्छा कर रहे हैं । हाय ! इस समय मन्द भाग्यवाली मैं अपने शरीरको गङ्गाजीमें डालती हूं ।

लक्ष्मण—कष्ट है । यह और ही कुछ है ।

सूत्रधार—पृथ्वीकी पुत्री महारानी सीता महाराज रामसे महावनमें परित्यक्त होती हुई प्रसववेदनाके उपस्थित होनेपर अपने शरीरको गङ्गाके प्रवाहमें डाल देती हैं ॥ २ ॥

( ऐसा कहकर चला जाता है । )

प्रस्तावना ।

रामः—( सावेगम्। ) देवि! देवि! लक्ष्मणमवेक्षस्व।

लक्ष्मणः—आर्य! नाटकमिदम्।

रामः—हा देवि दण्डकारण्यवासप्रियसखि! एष ते रामाद्विपाकः।

लक्ष्मणः—आर्य! आश्वस्य दृश्यताम् प्रबन्धस्त्वार्षः।

रामः—एष सज्जोऽस्मि वज्रमयः।

( ततः प्रविशति उत्सङ्गितैकैकदारकाभ्यां पृथिवीगङ्गाभ्यामालम्बिता

---

राम इति। सावेगं = सभयम्। अवेक्षस्व = विलोकय, मयि सापराधेऽपि लक्ष्मणं विलोक्य त्वया गङ्गाप्रवाहे पतनं नैव करणीयमिति भावः। 'क्षणमपेक्षस्वे'ति पाठे—क्षणं = कश्चित्कालं यावत्, 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः।' इत्यमरः, अपेक्षस्व—प्रतीक्षस्व, मामिति शेषः। अहमपि त्वदनुसारी भवामि त्वद्रक्षणं वा करिष्यामीति भावः।

लक्ष्मण इति। इदम् = उच्यमानगङ्गापतनं, नाटकं = नाटकप्रयोज्याभिनयस्वरूपम्, न वास्तवमिति भावः।

राम इति। दण्डकारण्यवासप्रियसखि = दण्डकारण्ये = जनस्थाने, यो वासः = निवासः, तस्मिन् हे प्रियसखि = अभीष्टसहचरि! एतया सम्बुद्ध्या मदीयवनवासे त्वया साहचर्यं कृतं परमेकाकिनीं निरपराधां त्वां वने त्यक्त्वा मया त्वत्साहचर्यं कर्तुं न पारितमिति ध्वन्यते। विपाकः = परिणामः, मत्कर्तृकेयं त्वदीया दुरवस्था सञ्जातेति भावः।

लक्ष्मण इति। आश्वस्य=आश्वासं कृत्वा, दुःखं लघूकृत्येति भावः। प्रबन्धस्तु= दृश्यकाव्यरूपा रचना तु, आर्षः = ऋषिसम्बन्धी, ऋषिप्रणीत इति भावः।

राम इति। वज्रमयः = कुलिशमयः, अतिकठोर इति भावः। सज्जोऽस्मि = तत्परोऽस्मि, सीताविपत्तिनाटकं द्रष्टुमिति शेषः।

तत इति। उत्सङ्गितैकैकदारकाभ्याम् = उत्सङ्गितः = अङ्केन गृहीतः, एकैकः=

---

राम—( भयके साथ ) देवि! देवि! लक्ष्मणको देखो।

लक्ष्मण—आर्य! यह नाटक है।

राम—हा देवि! दण्डकारण्यनिवासमें प्रियसखि! रामसे यह तुम्हारा परिणाम हुआ।

लक्ष्मण—आर्य! आश्वस्त होकर देखिए। यह ऋषिकी रचना है।

राम—यह मैं वज्रमय होता हुआ तत्पर हूँ।

( अनन्तर एक एक बालकको गोदमें लिये हुई पृथिवी और गङ्गाके द्वारा सम्हाली गई

प्रमुग्धा सीता )

रामः—वत्स ! असंविज्ञातपदनिबन्धने तमसीवाहमद्य प्रविशामि, धारय माम् ।

देव्यौ—

समाश्वसिहि कल्याणि ! दिष्ट्या वैदेहि ! वर्धसे ।
अन्तर्जले प्रसूतासि रघुवंशधरौ सुतौ ॥ ३ ॥

सीता—(आश्वस्य) दिट्ठिआ दारए पसूदह्मि । हा अज्जउत्त ! ( दिष्ट्या दारकौ प्रसूतास्मि । हा आर्यपुत्र ! )

लक्ष्मणः—(पादयोर्निपत्य ।) आर्य ! दिष्ट्या वर्धामहे । कल्याणप्ररोहो

---

एक एकः, दारकः = बालकः, याभ्या ताभ्याम् , आलम्बिता = धारिता, प्रमुग्धा = मूर्च्छातिशययुक्ता ।

राम इति । असंविज्ञातपदनिबन्धने = असंविज्ञातम् = अविदितम् , पदनिबन्धनं = स्थानसम्बन्धः, पादन्यासो वा, यस्मिंस्तादृशे, तमसि=अन्धकारे । धारय= अवलम्बस्व ।

समाश्वेति । हे कल्याणि वैदेहि ! समाश्वसिहि, दिष्ट्या वर्द्धसे, अन्तर्जले रघुवंशधरौ सुतौ प्रसूता असि इत्यन्वयः । हे कल्याणि = हे मङ्गलवति ! वैदेहि = सीते !, समाश्वसिहि = समाश्वस्ता भव, दिष्टया = भाग्येन, वर्द्धसे = एधसे, ( यत् ) अन्तर्जले = जले, विभक्त्यर्थेऽव्ययीभाव , 'तृतीयासप्तम्योर्बहुलम्' इत्यत्र बहुलग्रहणादमभावः, रघुवंशधरौ = रघुकुलधारकौ, सुतौ = पुत्रौ , प्रसूता = उत्पादितवती, असि = वर्तसे । अत्र वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ३ ॥

सीतेति । प्रसूता = उत्पादितवती, कर्तरि क्त ।

लक्ष्मण इति । कल्याणप्ररोहः = कल्याणः = शुभकरः, प्ररोहः—अङ्कुरः, यस्य

---

मूर्च्छित सीता प्रवेश करती है । )

राम—अविदित स्थान सम्बन्धवाले अन्धकारमें मैं आज प्रवेश-सा कर रहा हूं । मुझे सहारा दो ।

दोनों देवियां (पृथिवी और गङ्गा)–हे कल्याणि सीते ! तुम समाश्वस्त होओ, भाग्यसे बढ रही हो । तुमने जलके भीतर रघुवंशको धारण करनेवाले दो कुमारोंको पैदा किया है ॥३॥

सीता—( आश्वस्त होकर ) मैंने भाग्यसे दो बालकोंको प्रसव किया है । हा आर्यपुत्र !

लक्ष्मण—( रामके पैरोंपर गिरकर ) आर्य ! भाग्यसे हमलोग बढ़ रहे हैं । रघुवंश शुभ

रघुवंशः । ( विलोक्य । ) हा कथं क्षुभितबाष्पोत्पीडनिर्भरः प्रमुग्ध एवार्य ( वीजयति । )

देव्यौ—वत्से ! समाश्वसिहि ।

सीता—( समाश्वस्य । ) भअवदीओ ! का तुह्मे ? मुञ्चह । ( भगवत्यौ ! के युवाम् ? मुञ्चतम् । )

पृथिवी—इयं ते श्वशुरकुलदेवता भागीरथी ।

सीता—णमो दे भअवदि ! ( नमस्ते भगवति ! )

भागीरथी—चारित्रोचितां कल्याणसंपदमधिगच्छ ।

लक्ष्मणः—अनुगृहीताः स्मः ।

---

सः । क्षुभितबाष्पोत्पीडनिर्भर =क्षुभित• =चलितः, चासौ बाष्पोत्पीड• =अश्रुसमूह•, तेन निर्भरः =आकुल•, प्रमुग्ध एव =प्रमूढ एव, मूर्च्छित एवेति भावः । वीजयति =व्यजनेन वातं करोति । वीजधातुरयं चुरादिषु 'बहुलमेतन्निदर्शनम्' इत्युक्तेर्विडम्बयतीत्यादिवदूह्य• ।

सीतेति । मुञ्चतं =त्यजतं, 'मुच्लृ मोक्षण' इति धातोर्लोटि मध्यमपुरुषद्विवचनम् ।

पृथिवीति । श्वशुरकुलदेवता =श्वशुरकुलस्य =पत्यु• पितृवंशस्य, देवता = योगक्षेमनिर्वाहिका देवी, भागीरथी =गङ्गा ।

भागीरथीति । चारित्रोचिता =चारित्रस्य =पातिव्रत्यसच्चरितस्य, उचिताम् =अनुरूपाम् , 'उपचिताम्' इति पाठे—चारित्रेण उपचिता =वृद्धामित्यर्थ•, कल्याणसम्पदं =श्रेयःसंपत्तिम् , अधिगच्छ =प्राप्नुहि ।

लक्ष्मण इति । अनुगृहीता• स्मः =कृतानुकम्पाः स्म , रामः सीताऽहं च आशीर्विषयीकृता• स्म इत्यर्थ ।

---

अङ्कुरवाला हुआ है । ( देखकर ) हाय ! क्यों बढ़े हुए अश्रुसमूहसे आकुल होकर आर्य मूर्च्छित हो हो गये हैं । ( पङ्खा झलते हैं । )

दोनों देवियाँ ( पृथिवी और गङ्गा )—वत्से ! समाश्वस्त होओ ।

सीता—( समाश्वस्त होकर ) भगवति ! आप लोग कौन हैं ? मुझे छोड़िए ।

पृथिवी—ये तुम्हारे श्वशुरकुलकी देवता गङ्गाजी हैं ।

सीता—हे भगवति ! आपको नमस्कार है ।

भागीरथी—चरित्रके योग्य कल्याणसम्पत्तिको प्राप्त करो ।

लक्ष्मण—हमलोग अनुगृहीत हो गये हैं ।

भागीरथी—इयं ते जननी विश्वम्भरा।

सीता—हा अम्ब ! ईरिसी अहं तुए दिट्ठा ? ( हा अम्ब ! ईदृश्यहं त्वया दृष्टा। )

पृथिवी—एहि पुत्रि वत्से सीते !

( उभौ आलिङ्ग्य मूर्च्छतः। )

लक्ष्मणः—( सहर्षम्। ) कथमार्या गङ्गापृथिवीभ्यामभ्युपपन्ना।

रामः—दिष्ट्या खल्वेतत्। करुणान्तरं तु वर्तते।

भागीरथी—अत्रभवती विश्वम्भरा * व्यथत इति जितमपत्यस्नेहेन।

---

भागीरथीति। जननी = माता, विश्वम्भरा = पृथिवी, विश्वम्भरेति साभिप्रायोक्तिः, पुत्र्या त्वयि एवमलीकापवादिनोऽपि जनान् बिभर्तीति क्षमातिशयव्यञ्जनात्।

सीतेति। ईदृशी = एतादृशी, मिथ्यापवादेन त्यक्ता आपत्प्राप्ता चेति भावः।

लक्ष्मण इति। आर्या = पूज्या, सीतेति भावः। अभ्युपपन्ना = अनुगृहीता, 'अभ्युपपत्तिरनुग्रहः' इत्यमरः।

राम इति। एतत् = इदं, मातृपुत्र्योरालिङ्गनोत्तरं मूर्च्छारूपमिति भावः। करुणान्तरं = मद्दुःखातिरिक्तं दुःखम्।

भागीरथीति। अत्रभवती = पूज्या, विश्वम्भरा = विश्वधारिणी, क्षमाप्रधाना पृथिवीति तात्पर्यम्, व्यथते = दुःखिता भवति, इति = अस्माद्धेतोः, अपत्य-

---

भागीरथी—ये तुम्हारी माता पृथिवी हैं।

सीता—हा माता ! आपने मुझे ऐसी अवस्थामें देखा ?

पृथिवी—पुत्रि वत्से सीते ! आओ।

( दोनों आलिङ्गन कर मूर्च्छित होती हैं )

लक्ष्मण—( हर्षके साथ ) किस तरह आर्याको गङ्गा और पृथिवीने अनुगृहीत किया ?

राम—भाग्यसे यह बात हुई। यह दूसरी शोककी बात हो रही है।

भागीरथी—संसारको धारण करनेवाली पूजनीया पृथिवी भी दुःखित हो रही हैं,

---

* 'पृथिवी—एहि पुत्रि ! ...अत्र भवती विश्वम्भरा" इत्यस्य स्थाने 'पृथिवी—एहि पुत्रि ! एहि वत्से ! ( इति सीतामालिङ्ग्य मूर्च्छति। ) लक्ष्मणः—( सहर्षम् ) दिष्ट्या पृथिवीगङ्गाभ्यामभ्युपपन्ना आर्या। रामः—( अवलोक्य ) करुणतरं खल्वेतद्वर्तते। भागीरथी—विश्वम्भरा' इत्येष महान् पाठभेदो दृश्यते।

सर्वसाधारणो ह्येष मनसो मूढग्रन्थिरान्तरश्चेतनावतामुपप्लवः संसारतन्तुः । सखि भूतधात्रि ! वत्से वैदेहि ! समाश्वसिहि ।

पृथिवी—( आश्वस्य । ) देवि ! सीता प्रसूय कथमाश्वसिमि ?

सोढश्चिरं राक्षसमध्यवासस्त्यागो द्वितीयस्तु सुदुःसहोऽस्याः ।

---

स्नेहेन = सन्तत्यनुरागेण, जितम् = अभिभवः कृतः, बलवानपत्यस्नेहो धीरानप्यभिभवतीत्यर्थः । यद्वा = अथवा, मनसः = हृदयस्य, मूढग्रन्थिः = मोहात्मकं बन्धनं, चेतनावता = प्राणिनाम्, आन्तरः = आभ्यन्तरः, उपप्लवः = चाञ्चल्यहेतुरिति भावः, संसारतन्तुः = विश्वसंधायकः, एषः = अपत्यस्नेहः, सर्वसाधारणः = सर्वेषु = सकलेषु, साधारण =सामान्यः, अपत्यस्नेहो न केवलं पृथिव्या किन्तु सर्वेषु समान इति भावः । हि = निश्चयेन, भूतधात्रि = हे विश्वम्भरे ! ।

पृथिवीति । प्रसूय = जनयित्वा, कथं = केन प्रकारेण, आश्वसिमि = क्षीणदुःखा भवामीति भावः ।

सोढ इति । अस्याः चिरं राक्षसमध्यवासः सोढः, द्वितीय त्यागस्तु सुदुःसह इति श्लोकपूर्वार्द्धस्यान्वयः । अस्याः = सीतायाः, चिरं = बहुकालपर्यन्तं, राक्षसमध्यवास = राक्षसाना = निशाचराणाम्, मध्ये = अन्तरे, वासः = निवासः, सोढः = मर्षितः । द्वितीयः = अपरः, मिथ्यापवादप्रयुक्त इति भावः, एतादृशः, त्यागस्तु = निर्वासनं तु, सुदुःसहः = सुतरां सहनानर्ह इति भावः । क्वचित् 'सोढः, त्यागः सुदुःसहः' इत्येतेषां स्थाने क्रमतः 'एकः, साङ्गः, सुदुःश्रवः' इति पाठान्तराणि, तत्र— साङ्गः—अङ्गैः = रावणराक्षस्यादितर्जनजनिततापैः, सहितः = युक्तः, द्वितीयः त्यागस्तु सुदुःश्रवः = सुतरां श्रवणानर्हः, पातिव्रत्यदूषकलोकापवादरूपत्वादिति भावः ।

---

इस कारणसे सन्तानके स्नेहने जीत लिया । अथवा यह (सन्तानस्नेह) सबमें सामान्यरूपसे रहनेवाला, मनका मोहबन्धनरूप, प्राणियोंका आभ्यन्तरिक चाञ्चल्यहेतु और ससारका तन्तुस्वरूप है । सखि भूतधात्रि ( पृथिवि ) ! वत्से सीते ! आश्वस्त हो ।

पृथिवी—( आश्वस्त होकर ) देवि ! सीताको प्रसव करके कैसे आश्वस्त होऊं ?

इनका बहुत कालतक राक्षसोंके बीचमें रहना सहन किया, पतिसे किया गया यह दूसरा त्याग तो अतिशय दुःसह हो रहा है ।

गङ्गा—

को नाम पाकाभिमुखस्य जन्तुर्द्वाराणि दैवस्य पिधातुमीष्टे ? ॥ ४ ॥

पृथिवी—भगवति भागीरथि ! युक्तमेतत्सर्वं वो रामभद्रस्य ?

न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः ।
नाहं न जनको नाग्निर्नेतु तु वृत्तिर्न सततिः ॥ ५ ॥

---

को नामेति । को नाम जन्तुः पाकाभिमुखस्य दैवस्य द्वाराणि पिधातुम् ईष्टे इति श्लोकोत्तरार्द्धान्वयः । को नाम जन्तुः = को नाम प्राणी, पाकाभिमुखस्य = कर्मफलप्रदानतत्परस्य, दैवस्य = भाग्यस्य, द्वाराणि=अनुभवमार्गान्, पिधातुम् = अपिधातुं, रोद्धुमिति भावः, 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।' इत्यपेरकारलोपः ईष्टे = समर्थो भवति । नियतिवशादेव सीतयैतादृशं दुःखमनुभूतं, नियतिगतिमुल्लङ्घयितुं न कोऽपि समर्थोऽतः शोको वृथेति भावः । अत्रार्थापत्त्यर्थान्तरन्यासयोरङ्गाङ्गिभावेन सङ्करः । इन्द्रवज्रा वृत्तम् ॥ ४ ॥

पृथिवीति । सकलं= सर्वम् , एतत् = सीता प्रत्यनिष्टाचरणं, वः=युष्माकं, स्नेहपात्रस्येति भावः । अनयोक्त्या भगवत्या भूतधात्र्या स्वसम्बन्धः परिहृत इति ध्वनितम् , युक्तं = संगतम् ?

नेति । बाल्ये बालेन पीडितः पाणिः न प्रमाणीकृतः, अहं न, जनकः न, अग्निः न, तु वृत्तिः न, सन्ततिः न इत्यन्वयः । बाल्ये = शैशवे, बालेन = शिशुना, अविमृश्यकारित्वादज्ञेनेति वा, 'अज्ञो भवति वै बाल' इति स्मरणात् , पीडित = गृहीतः, विवाहकर्मणीति शेषः, पाणिः = करः, न प्रमाणीकृतः = निर्णयहेतुर्न कृतः, शास्त्रीयविधिनोद्वाहिता सीता कथं त्याज्येति विचारो न कृत इति भावः । अहं = पृथिवी, न = न प्रमाणीकृतेत्येवं यथायोग्यं सर्वत्र लिङ्गविपरिणामो विधेयः, पृथिव्याः समुत्पन्नाऽयोनिजेयं सीतेति विचारोऽपि न कृत इति तात्पर्यम् । जनकः = राजर्षिर्वैदेहः, न = न प्रमाणीकृतः, अधिगताध्यात्मशास्त्रो राजर्षिर्जनकोऽपि

---

गङ्गा—कौन प्राणी, फल देनेके लिए तत्पर भाग्यके द्वारोंको बन्द करनेके लिये समर्थ होता है ? ॥ ४ ॥

पृथिवी—भगवति भागीरथि ! यह सब करना आपके रामभद्रको उचित है ?

बालक (वा अनभिज्ञ) रामभद्रने बाल्यावस्थामें किये गये पाणिग्रहणकी भी अपेक्षा नहीं की, तथा न मेरी, न जनककी, न अग्निकी, न सीताके पातिव्रत्यकी और न सन्तानकी ही अपेक्षा की ॥ ५ ॥

सीता—हा अज्जउत्त ! सुमरेसि ? ( हा आर्यपुत्र ! स्मरसि ? )

पृथिवी—आः, कस्तवार्यपुत्रः ?

सीता-( सलज्जास्रम् । ) जह अम्बा भणादि । ( यथाम्बा भणति । )

रामः—अम्ब पृथिवि ! ईदृशोऽस्मि ।

गङ्गा—भगवति वसुन्धरे ! शरीरमसि संसारस्य । तत्किमसंविदानेव

---

रामेण सीतायाः परित्यागे नापेक्षित इत्याकूतम् । अग्निः = अनलः, विवाहे साक्षित्वेन स्थित आहोस्वित् लङ्कायां सीतापातिव्रत्यनिकषीभूतः, न = न प्रमाणीकृतः, रामकृतेन सीतानिर्वासनेनाग्नेरप्यप्रामाण्यं समर्थ्यत इति हृदयम् । तु = पुनः, वृत्तिर्न = सीतायाः पातिव्रत्यपूर्णमाचरणमपि न प्रमाणीकृतम्, 'नानुवृत्तिः' इति पाठान्तरे—छायावत्पत्युरनुगमनमित्यर्थः । सन्तति = वंश, न = न प्रमाणीकृतः, सीतापरित्यागे मद्वंशनाशः स्यादित्यपि विचारो न कृतः । अहो अविमृश्यकारिता रामभद्रस्येति भावः । अत्र प्रमाणीकरणरूपयैकया क्रियया पाण्यादीनां कर्मत्वेन सम्बन्धात्तुल्ययोगितालङ्कारः ॥ ५ ॥

सीतेति । स्मरसि = किं स्मरणं करोपि, ममेति शेषः ।

पृथिवीति । आः = कोपद्योतकमव्ययमिदम्, कस्तवार्यपुत्रः = आर्यपुत्रपदेन रामस्त्वया नोच्चारणीय इति भावः ।

सीतेति । अम्बा = माता, भवतीति भावः, यथा भणति = यथा कथयति, तथैवेति शेषः ।

राम इति । ईदृशः = एतादृशः, सीतयार्यपुत्रपदेनोच्चारयितुमनर्ह इति भावः ।

गङ्गेति । संसारस्य=विश्वस्य, शरीरं=देहः, आधाररूपेति भावः, असि=वर्तसे । तत् = तस्मात्, कारणादिति शेषः, असंविदाना इव = अजानती इव, संपूर्वस्य 'विद ज्ञाने' इति धातोः 'समो गम्यृच्छिभ्याम्' इत्यधिकारे 'विदिप्रच्छिस्वर-

---

सीता—हा आर्यपुत्र ! क्या मेरा स्मरण करते हैं ?

पृथिवी—ओह ! तुम्हारा कौन आर्यपुत्र है ?

सीता—( लज्जाके साथ और आँसू गिराकर ) जैसा माँ कहती हैं ।

राम—माँ पृथिवि ! मैं ऐसा हूँ ।

गङ्गा—भगवति पृथिवि ! आप संसारकी शरीररूप हैं । इसलिए क्यों अनजानकी

जामात्रे कुप्यसि ?

घोरं लोके विततमयशो या च वह्नौ विशुद्धि-
लङ्काद्वीपे कथमिव जनस्तामिह श्रद्दधातु ? ।
इक्ष्वाकूणां कुलधनमिदं यत्समाराधनीयः
कृत्स्नो लोकस्तदिह विषमे किं स वत्सः करोतु ? ॥ ६ ॥

---

तीनामुपसंख्यानम्' इत्यात्मनेपदं, लटः शानच् , जामात्रे = दुहितुर्भर्त्रे, 'कुप्यसी'ति क्रियापदेन योगे 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति चतुर्थी, सीतापरित्यागे नापराधो रामस्येति भावः ।

तत्र रामस्य विवशत्वं प्रतिपादयति—

**घोरमिति** । लोके घोरम् अयशो विततं, या च लङ्काद्वीपे वह्नौ विशुद्धिः, ताम् इह जनः कथमिव श्रद्दधातु ? इदम् इक्ष्वाकूणां कुलधनं, यत् 'कृत्स्नो लोकः समाराधनीयः', तत् इह विषमे स वत्सः किं करोतु ? इत्यन्वयः । लोके = भुवने, घोरं = भयङ्करम् , अयशः = अकीर्तिः, विततं = विस्तृतं, या च, लङ्काद्वीपे = लङ्काख्ये द्वीपे, वह्नौ = अग्नौ, विशुद्धिः = परीक्षया शुद्धता, तां = विशुद्धिम् , इह = अयोध्यायां, जनः = लोकः, कथमिव = केन प्रकारेण, श्रद्दधातु = विश्वसितु ? इदम् = एतत् , इक्ष्वाकूणाम् = इक्ष्वाकुवंशोत्पन्नानां राज्ञां, कुलधनं = वंशक्रमागतोऽर्थः, यत् , कृत्स्नः = समस्तः, लोकः = जनः, प्रजा इति भावः, समाराधनीयः = संसेवनीयः, शिक्षणरक्षणादिभिरनुरञ्जनीय इति भावः, तत् = तस्मात्कारणात् , इह = अस्मिन् , विषमे = धर्मसङ्कटे, पुस्तकान्तरेषु तु 'तदतिगहनम्' इति पाठस्तत्र–तत्=सर्वलोकसमाराधनम् , अतिगहनम् = अतिशयदुष्करं, सः = तादृशः, वत्सः = रामभद्रः, किं करोतु = किं विदधातु ? लोकापवादादादर्शच्युतेश्च वरं प्राणसमायाः सीतायाः परित्याग इति मत्वा निरुपायेन रामेणैतदाचरितमिति भावः । मन्दाक्रान्ता वृत्तम् ॥ ६ ॥

---

तरह होकर जामाता ( दामाद ) से कुपित होती हैं ?

लोकमें भयङ्कर अकीर्ति फैल गई, लङ्काद्वीपमें सीताकी जो अग्निपरीक्षा हुई, उसका यहाके लोग कैसे विश्वास करें ? इक्ष्वाकुवंशके राजाओंका यह वंशक्रमागत धन है—जो कि सम्पूर्ण प्रजाओंकी शिक्षा और रक्षासे सेवा करनी चाहिए, इस कारण इस धर्मसङ्कटमें वे वत्स ( रामभद्र ) क्या करें ? ॥ ६ ॥

लक्ष्मणः—अव्याहतान्तःप्रकाशा हि देवताः सत्त्वेषु ।

गङ्गा—तथाप्येष तेऽञ्जलिः ।

रामः—अम्ब ! अनुवृत्तस्त्वया भगीरथकुले प्रसादः ।

पृथिवी—नित्यं प्रसन्नास्मि तव । किं त्वसावापातदुःसहः स्नेहसंवेगः । न पुनर्न जानामि सीतास्नेहं रामभद्रस्य ।

---

लक्ष्मण इति । देवता॰ = देवा, सत्त्वेषु = प्राणिषु, 'भूतेषु' इति पाठेऽप्ययमेवार्थ, अव्याहतान्त प्रकाशाः = अव्याहत = अप्रतिबन्ध, अन्त॰प्रकाश॰ = अन्त॰करणवृत्तिज्ञानम्, यासा ता॰, हि = निश्चयेन, देवता॰ सर्वेषामपि प्राणिना मनोवृत्ति जानन्ति, अत पृथिवीदेवतापि रामस्यान्त॰करणवृत्ति जानात्येवेति भावः ।

गङ्गेति । तथापि = रामस्य निर्दोषत्वेऽपि, एष॰ = अयम्, अञ्जलिः = प्रणामाञ्जलिः, ते = तुभ्यम्, 'अञ्जलिः परमा मुद्रा क्षिप्र देवप्रसादिनी ।' इति वचनात्, रामभद्रं प्रत्यनुग्रहार्थमेष प्रणामाञ्जलि॰ समर्प्यत इति भाव॰ । 'गङ्गा-तथाप्येष तेऽञ्जलि॰' इत्यस्य स्थाने क्वचित् 'विशेषेण गङ्गा-तदयमञ्जलिस्ते' इति पाठान्तरं लक्ष्मणोक्तमेवास्ति । तदर्थस्तु स्पष्ट एव ।

राम इति । अम्ब = हे मात !, त्वया = भवत्या, भगीरथकुले = भगीरथवंशे, प्रसादः = अनुग्रह॰, अनुवृत्त॰ = सम्बन्धित॰ ।

पृथिवीति । किन्तु = एव प्रसन्नत्वेऽपि, स्नेहसंवेग॰ = स्नेहस्य = वात्सल्यस्य, संवेगः = त्वरा, आपातदु सहः = आपाते = श्रवणोत्तरक्षणे, दुःसहः = सोढुमशक्य॰, 'दर्शनक्षण आपातस्तथैवाकर्णनक्षणे ।' इति कोष, यद्वा स्नेहसंवेगः = स्नेहेन = पुत्रीविषयवात्सल्येन, संवेग॰ = चाञ्चल्यं भयं वा, सवेग इत्यत्र 'ओविजी भयचलनयो॰' इति धातोर्भावे घञ्, 'चजो कु घिण्यतो' इति कुत्वम् । सीतास्नेहं = सीताया=जानक्याम्, स्नेह = प्रेम, न न जानामि = अपि तु जानाम्येवेति भावः, 'द्वौ नञावेकं प्रकृतार्थं द्योतयत' इति नयादिति तात्पर्यम् ।

---

लक्ष्मण—प्राणियोंमें देवतालोग प्रतिबन्धरहित मनोज्ञानवाले होते हैं ।

गङ्गा—तो भी आपको नमस्कारकी अञ्जलि है ।

राम—मात ! आपने भगीरथवंशमें अनुग्रहका अनुवर्तन किया है ।

पृथिवी—मैं आपसे प्रसन्न हूँ, परन्तु यह स्नेहसे उत्पन्न चञ्चलता आपातत दु सह होती है । सीतापर रामचन्द्रका प्रेम मैं नहीं जानती हूँ, यह बात नहीं है ।

दह्यमानेन मनसा दैवाद्वत्सां विहाय सः ।
लोकोत्तरेण सत्त्वेन प्रजापुण्यैश्च जीवति ॥ ७ ॥

रामः—सकरुणा हि गुरवो गर्भरूपेषु ।

सीता—( रुदती कृताञ्जलि । ) णेदु म अत्तणो अङ्गेसु विलअं अम्बा । ( नयतु मामात्मनोऽङ्गेषु विलयमम्बा । )

गङ्गा—कि ब्रवीषि ? अविलीना वत्से ! संवत्सरसहस्राणि भूया. ।

पृथिवी—वत्से ! अवेक्षणीयौ ते पुत्रौ † ।

---

दह्यमानेनेति । स दैवात् दह्यमानेन मनसा वत्सा विहाय लोकोत्तरेण सत्त्वेन प्रजापुण्यैश्च जीवति इत्यन्वयः । स = रामभद्र., दैवात्=भाग्याद्धेतो., दह्यमानेन= सन्तप्यमानेन, मनसा = चित्तेन, वत्सा=सीता, विहाय = त्यक्त्वा, लोकोत्तरेण = लोकश्रेष्ठेन, अलौकिकेनेति भाव, सत्त्वेन = धैर्येण, प्रजापुण्यैश्च=प्रजाना = जनानाम्, पुण्यैश्च=सुकृतैश्च, जीवति=प्राणधारणं करोति । दु खितमनसा वत्सा परित्यज्य सात्त्विकलोकोत्तरस्वधैर्येण रामराज्यसुखभागधेयाना प्रजाना पुण्यातिशयेन च रामो जीवतीति भाव. ॥ ७ ॥

राम इति । गुरव =पूज्यजना., पृथिव्यादय इति भाव., गर्भरूपेषु—गर्भाणाम् = भ्रूणानाम्, इव रूप = स्वरूपं, येषा तेषु अपत्यतुल्येष्वित्यर्थ., अस्मास्विति शेष, सकरुणा=सदया ।

सीतेति । विलयम् = अदर्शन, नयतु = प्रापयतु ।

गङ्गेति । संवत्सरसहस्राणि = सहस्रवत्सरपर्यन्तं, 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया, अविलीना = जीविता, भूया = भवतात्, आशीर्लिङ् ।

पृथिवीति । ते = तव, त्वयेति भाव., 'अवेक्षणीयौ' इति पदेन योगे

---

वे ( रामभद्र ) भाग्यके कारण सन्तापयुक्त चित्तसे सीताका परित्याग करके अलौकिक धैर्यसे और प्रजाओंके पुण्योंसे भी जी रहे हैं ॥ ७ ॥

राम—पूज्यजन अपत्यरूप हमलोगोंके ऊपर दयालु हैं ।

सीता—( रोती हुई हाथ जोडकर ) माताजी ! मुझे अपने अङ्गोंमें विलीन कर लें ।

गङ्गा—क्या कहती हो ? वत्से ! हजार वर्षतक जीती रहो ।

पृथिवी—वत्से ! तुम्हें दोनों पुत्रोंकी देख-रेख करनी चाहिए ।

---

* पुस्तकान्तरेषु 'किमन्यद् ब्रवीतु ?' इति रामोक्त्यनन्तर 'शान्तम् । अविलीना वत्सर ' इति भागीरथ्युक्तिरूप पाठान्तर वर्तते । † 'अपि रक्षणीयौ ते पुत्रकौ' इति पाठान्तरम् ।

सीता—किं एदेहिं अणाहेहिं ? * ( किमेताभ्यामनाथाभ्याम् ? )

रामः—हृदय ! वज्रमसि † ।

गङ्गा—कथं वत्सौ सनाथावप्यनाथौ ? ‡

सीता—कीरिस मे अभग्गाए सणाहत्तम् ? § ( कीदृशं मे अभाग्यायाः सनाथत्वम् ? )

देव्यौ—

जगन्मङ्गलमात्मानं कथं त्वमवमन्यसे ? ।

'कृत्यानां कर्तरि वा' इति षष्ठी, अवेक्षणीयौ = स्तन्याद्यर्थं निरीक्षणीयौ, रक्षणीयाविति भावः, पुत्रार्थमपि त्वया जीवितव्यमिति भावः ।

सीतेति । अनाथाभ्यां = रक्षकरहिताभ्याम्, एताभ्यां = स्तनन्धयाभ्यामिति भावः, किं = कथं, जीविष्यत इति शेषः ।

राम इति । वज्रं = कुलिशम्, सम्राजो मम धर्मपत्नी सीता देवी यत्स्वतनयावनाथौ कथयति, एतज्ज्ञात्वाऽपि त्वं न विदीर्यसे, अतस्त्वं मदीयं हृदयं वज्रमसीति भावः ।

गङ्गेति । सनाथौ = रक्षकसहितौ, तव पती रामभद्र एवानयो रक्षकोऽस्ति अतः कथमेतावनाथौ कथयसीति भावः ।

सीतेति । अभाग्यायाः = भाग्यरहितायाः, 'अभव्यायाः' इति पाठे-कल्याणरहिताया इत्यर्थः, सनाथत्वं = रक्षकयुक्तत्वम् ।

जगदिति । त्वं जगन्मङ्गलम् आत्मानं कथम् अवमन्यसे ? यत्सङ्गात् आवयोरपि पवित्रत्वं प्रकृष्यत इत्यन्वय । हे सीते ! त्वं = भवती, जगन्मङ्गलं =

सीता—रक्षकरहित ये दोनों कैसे जीते रहेंगे ?

राम—हृदय ! तू वज्र है ।

गङ्गा—वत्सोंके रक्षकके होते हुए भी तुम कैसे इन्हें अनाथ कह रही हो ?

सीता—मुझ भाग्यहीनाको सनाथता कैसे ?

दोनों देवियां (गङ्गा और पृथिवी)—( हे सीते ! ) तुम जगत्के कल्याणस्वरूप अपनेको

* 'अणाधम्हि । ( अनाथास्मि ) इति पाठान्तरम् ।

† 'वज्रमयमसि' इति पाठान्तरम् ।

‡ 'कथं त्वं सनाथाप्यनाथा ?' इति पाठान्तरम् ।

§ 'कीदिसं मम अभव्वाए सणाधत्तणं ? ( कीदृशं ममाभव्यायाः सनाथत्वम् ? ) इति पाठान्तरम् ।

आवयोरपि यत्सङ्गात्पवित्रत्वं प्रकृष्यते ॥ ८ ॥

लक्ष्मणः—आर्य ! श्रूयताम् ।

रामः—लोकः शृणोतु ।

( नेपथ्ये कलकलः । )

रामः—अद्भुततरं किमपि ।

सीता—किंत्ति आवद्धकलकलं पज्जलिअं अन्तरिक्खम् ? ( किमित्याबद्धकलकलं प्रज्वलितमन्तरिक्षम् ? )

---

जगतां = लोकानाम्, मङ्गलम् = कल्याणकारणम्, आत्मानं = त्वं, कथं = केन कारणेन, अवमन्यसे = परिभवसि ?, तिरस्करोषीति भावः । यत्सङ्गात् = यस्य = तव, सङ्गात् = सम्पर्कात्, आवयोरपि = गङ्गापृथिव्योरपि, पवित्रत्वं = शुद्धत्वं, प्रकृष्यते = प्रकर्षत्वं प्राप्नोति, कर्मकर्तरि लट्, त्वत्सम्पर्कादेवावयोः पवित्रत्वं पूर्वापेक्षया समधिकं भवतीति भावः ॥ ८ ॥

लक्ष्मण इति । श्रूयताम् = आकर्ण्यताम्, लोकापवादश्रवणादेव भवता सीता परित्यक्ता, तद्विषये गङ्गापृथिव्यौ किं कथयत इति भवता श्रूयतामिति भावः ।

राम इति । लोकः = जनः, जनाः इत्यर्थः, जात्याख्यायामेकवचनम्, लोक एव शृणोतु येन निष्कारणं सीता, लाञ्छिता, अहं तु तां गङ्गापृथिवीवत्पवित्रां मन्य एव इति भावः ।

नेपथ्य इति । कलकलः = कोलाहलः भवतीति शेषः ।

राम इति । अद्भुततरम् = अत्याश्चर्यं, किमपि = वस्तु, दृश्यत इति शेषः ।

सीतेति । किमिति = केन हेतुना, अन्तरिक्षम् = आकाशम्, आबद्धकलकलम् = आबद्धः = उत्पन्नः, कलकलः = कोलाहलः, यस्मात्तत्, एवं प्रज्वलितं = प्रकाशितं च, अस्तीति शेषः ।

---

क्यों तिरस्कार कर रही हो ? जिस तुम्हारे सम्पर्कसे हम दोनों ( गङ्गा और पृथिवी ) की पवित्रता उत्कर्षको प्राप्त कर रही है ॥ ८ ॥

लक्ष्मण—आर्य ! सुनिये ।

राम—लोक सुने ।

( नेपथ्यमें कोलाहल होता है । )

राम—अतिशय आश्चर्यकारक कुछ है ।

सीता—किस लिए आकाश कोलाहलयुक्त होकर चमक रहा है ?

देव्यौ—ज्ञातम् ।

कृशाश्वः कौशिको राम इति येषां गुरुक्रमः ।
प्रादुर्भवन्ति तान्येव शस्त्राणि सह जृम्भकैः ॥ ९ ॥

( नेपथ्ये । )

देवि ! सीते ! नमस्तेऽस्तु गतिर्नः पुत्रकौ हि ते ।
आलेख्यदर्शनादेव ययोर्दाता रघूद्वहः ॥ १० ॥

---

देव्याविति । ज्ञातं = विदितम्, आकाशे आबद्धकलकलत्वस्य प्रज्वलितत्वस्य च कारणमिति शेषः ।

कृशाश्व इति । कृशाश्वः कौशिको राम इति येषां गुरुक्रमः, तानि एव शस्त्राणि जृम्भकैः सह प्रादुर्भवन्ति इत्यन्वयः । कृशाश्वः = तन्नामा कश्चिदृषिः, क्वचित् 'भृशाश्व' इति पाठान्तरम्, कौशिकः = विश्वामित्रः, रामः = रामचन्द्रश्च, इति = एवं, येषां = शस्त्राणां, गुरुक्रमः = आचार्यपरम्परा, अस्तीति शेषः । तानि एव = तादृशानि एव, गुरुक्रमयुक्तान्येवेति भावः, शस्त्राणि = वारुणादीनि आयुधानि, जृम्भकैः सह = तन्नामकैः शस्त्रैः समं, प्रादुर्भवन्ति = प्रकटीभवन्ति । तेनैव हेतुनाऽऽकाशमाबद्धकलकलं प्रकाशितं च जातमिति भावः ॥ ९ ॥

देवीति । हे देवि सीते ! ते नमः अस्तु, हि ते पुत्रकौ नो गतिः, आलेख्यदर्शनात् एव ययोः दाता रघूद्वहः इत्यन्वयः । हे देवि = हे महाराज्ञि !, सीते = हे वैदेहि ! ते = तुभ्यं, नमः = प्रणामः, अस्तु = भवतु । हि = यस्माद्धेतोः, ते = तव, पुत्रकौ = अनुकम्पितौ तनयौ, 'अनुकम्पायां कन्' इति कन् प्रत्ययः, नः = अस्माकं, गतिः = आश्रयौ, त्वत्पुत्राश्रितत्वात्तुभ्यं नमस्कुर्म इति भावः । आलेख्यदर्शनात् एव = चित्रावलोकनकालात् एव, आलेख्यदर्शनं च प्रथमाङ्के संवृत्तमित्यवधेयम्, ययोः = त्वत्पुत्रयोः, त्वत्पुत्राभ्यामिति भावः, 'कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव' इति सम्प्रदानार्थे षष्ठी, दाता = दायकः,

---

दोनों देवियां ( गङ्गा और पृथिवी )—जाना ।

कृशाश्व, विश्वामित्र और राम, ऐसा जिन शस्त्रोंका गुरुक्रम है, वे ही शस्त्र जृम्भक शस्त्रोंके साथ प्रकट हो रहे हैं ॥ ९ ॥

( नेपथ्यमें । )

हे देवि ! हे सीते ! आपको नमस्कार हो, आपके दो पुत्र हमारे प्राश्रय हैं, चित्र देखने के समयसे ही हमें जिनको सौंपनेवाले रामचन्द्रजी हुए थे ॥ १० ॥

सीता—दिट्ठिआ अत्थदेवदाओ एदाओ। अज्जउत्त! अज्जावि दे पसादा*पडिप्फुरन्दि। ( दिष्ट्या अस्त्रदेवता एताः। आर्यपुत्र! अद्यापि ते प्रसादाः परिस्फुरन्ति। )

लक्ष्मणः—उक्तमासीदार्येण 'सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ती'ति।

देव्यौ—

नमो वः परमास्त्रेभ्यो धन्याः स्मो वः परिग्रहात्।
काले ध्यातैरुपस्थेयं वत्सयोर्भद्रमस्तु वः॥ ११॥

---

अस्माकमिति शेषः, रघूद्वहः = रामचन्द्रः, अभूदिति शेषः। आलेख्यदर्शने रामचन्द्रेण 'सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ति' ( पृ० २८ ) इति वचनेन वयं त्वत्पुत्राभ्यां प्रदत्तानीति भावः। पुस्तकान्तरेषु तु 'आलेख्यदर्शने देवो यदाह रघुनन्दनः' इति पाठान्तरम्। तत्राप्यर्थः सुगमः॥ १०॥

सीतेति। दिष्ट्या=भाग्येन, अस्त्रदेवता =अस्त्राधिष्ठात्र्यो देवताः। अद्यापि=एवं लोकापवादहेतुकपरित्यागकालेऽपि, प्रसादाः=अनुग्रहाः, परिस्फुरन्ति=प्रकाशन्ते।

लक्ष्मण इति। एतानि = जृम्भकादीनि शस्त्राणि।

नम इति। परमास्त्रेभ्यो वो नमः, वः परिग्रहात् धन्याः स्मः, काले ध्यातैः वत्सयोः उपस्थेयं, वो भद्रम् अस्तु इत्यन्वयः। परमास्त्रेभ्यः = जृम्भकाख्यश्रेष्ठास्त्रेभ्यः, वः = युष्मभ्यं, नमः = नमस्कारः। वः = युष्माकं, परिग्रहात् = स्वीकारात्, धन्याः = कृतकृत्याः, स्मः = भवामः। काले = युद्धादिसमये, ध्यातैः = चिन्तितैः, युष्माभिरिति शेषः, वत्सयोः = सीतापुत्रयोः, उपस्थेयम् = समीपे स्थातव्यम्। वः = युष्मभ्यं, युष्माकं वा, 'चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः' इति आशिषि चतुर्थी षष्ठी वा, भद्रं = कल्याणम्, अस्तु = भवतु। पुस्तकान्तरेषु अयं श्लोको रामेणैव पठितः॥ ११॥

---

सीता—भाग्यसे ये अस्त्रदेवता हैं। आर्यपुत्र! अभी तक आपके अनुग्रह प्रकाशित हो रहे हैं।

लक्ष्मण—आर्यने कहा था—'सब तरहसे ये तुम्हारी प्रसूतिको प्राप्त होंगे।'

दोनों देवियां (गङ्गा और पृथिवी)—श्रेष्ठ अस्त्र आपलोगोंको नमस्कार है, आपलोगोंके स्वीकारसे हमलोग धन्य हो गये हैं। युद्ध आदि अवसरपर ध्यान किये जानेपर आपलोगोंको हमारे दो वत्सों ( कुश और लव ) के पास आना चाहिए। आपलोगोंका कल्याण हो॥११॥

---

* 'एदाओ। अज्जउत्त! अज्जावि दे पसादा' इति मध्यगतः पाठः क्वचित्पुस्तके नास्ति।

रामः— क्षुभिताः कामपि दशां कुर्वन्ति मम संप्रति ।
विस्मयानन्दसंदर्भजर्जराः करुणोर्मयः ॥ १२ ॥

देव्यौ—मोदस्व वत्से ! मोदस्व । रामभद्रतुल्यौ ते पुत्रकाविदानीं* संवृत्तौ ।

सीता—भअवदीओ ! को एदाणं खत्तिओइदविहिं कारइस्सदि ? ( भगवत्यौ ! क एतयोः क्षत्रियोचितविधिं कारयिष्यति ? )

रामः—
एषा वसिष्ठशिष्याणां रघूणां वंशनन्दिनी ।

---

राम इति । सम्प्रति क्षुभिताः विस्मयानन्दसदर्भजर्जराः करुणोर्मयः मम काम् अपि दशा कुर्वन्ति इत्यन्वयः । सम्प्रति = अधुना, क्षुभिताः = क्षोभं प्राप्ताः, चञ्चला इति भावः, विस्मयानन्दसन्दर्भजर्जराः = विस्मयानन्दयोः = आश्चर्यहर्षयोः, सन्दर्भेण = ग्रन्थनेन, जर्जराः = विशीर्णाः, तत्र विस्मयो गङ्गापतन-तत्रत्यप्रसव-जृम्भकास्त्रलाभादिमूलकः, आनन्दस्च पुत्रप्राप्तिगङ्गापृथिवीप्रसादादिमूलक इति बोध्यम् , एतादृशाः करुणोर्मयः = करुणस्य = सीतावियोगशोकस्य, ऊर्मयः = तरङ्गाः, अत्रोर्मिपदेन करुणस्य समुद्रत्वं व्यज्यते, मम = रामस्य, कामपि = अनिर्वचनीया, दशाम् = अवस्था, कुर्वन्ति = उत्पादयन्ति ॥ १२ ॥

देव्याविति । मोदस्व = मोदं प्राप्नुहि, इदानीं = साम्प्रतम् , रामभद्रतुल्यौ = रामभद्रसदृशौ, सवृत्तौ = सजातौ, जृम्भकास्त्रलाभेनेति भावः ।

सीतेति । क्षत्रियोचितविधिं = क्षत्रियजातियोग्य कर्म, जातकर्मादिसंस्कारमिति भावः ।

एषेति । वसिष्ठशिष्याणा रघूणा वंशनन्दिनी एषा सीता अपि सुतयोः संस्कर्तारं न विन्दति, कथम् इत्यन्वय । वसिष्ठशिष्याणा = वसिष्ठोपदेश्यानां, 'वसिष्ठगुप्तानाम्' इति पाठान्तरे = वसिष्ठरक्षितानामित्यर्थः, रघूणा = रघुकुलोत्पन्नाना राज्ञा, वंशनन्दिनी = वंशस्य = कुलस्य, नन्दिनी = आनन्दहेतुः,

---

राम—इस समय क्षोभयुक्त आश्चर्य और हर्षके सयोगसे विशीर्ण शोककी तरङ्गें मेरी अनिर्वचनीय अवस्थाको उत्पन्न कर रही हैं ॥ १२ ॥

दोनों देवियां ( गङ्गा और पृथिवी )—प्रसन्न हो जाओ वत्से ! प्रसन्न हो जाओ, तुम्हारे दोनों पुत्र इस समय रामभद्रके तुल्य हो गये हैं ।

सीता—भगवति ! कौन इन दोनोंका क्षत्रियोचित विधि ( सस्कार ) करायेगा ?

राम—वसिष्ठ ऋषिके शिष्य रघुवंशोत्पन्न राजाओंके कुलकी आनन्दहेतु ये सीता भी अपने

---

* 'मन्यस्व वत्से ! रामभद्रतुल्यौ ते पुत्रकाविदानीम्' इति पाठान्तरम् ।

कष्टं सीतापि सुतयोः संस्कर्तारं न विन्दति ॥ १३ ॥

गङ्गा—भद्रे ! किं तवानया चिन्तया ? एतौ हि वत्सौ स्तन्यत्यागात्परेण भगवतो वाल्मीकेरर्पयिष्यामि ।

वसिष्ठ एव ह्याचार्यो रघुवंशस्य संप्रति ।
स एव चानयोर्ब्रह्मक्षत्रकृत्य करिष्यति ॥ १४ ॥

---

पातिव्रत्योत्कर्षादिति भाव , 'वशवर्द्धिनी'ति पाठे—कुलवर्द्धिनीत्यर्थः, प्रसवेनेति शेष', एषा=इय, सीता अपि=मैथिली अपि, 'एषाम्' इति षष्ठ्यन्तपाठे—तद्रघूणामित्यस्य विशेषणं बोध्यम् । सुतयोः=पुत्रयोः, संस्कर्तारम् = उपनयनादिसंस्कारकर्तारमाचार्यम्, 'संस्कृतं भक्षा' इति ज्ञापकात् सुट्, न विन्दति = न लभते, (इति) कष्टं = दुःखम् । वसिष्ठे सत्यपि रघुकुलवधूरियं सीता स्वपुत्रयोः संस्कारकर्त्तारमाचार्यं न प्राप्नोति, किमतः परं कष्टमिति भावः ॥ १३ ॥

गङ्गेति । क्वचित् 'देव्यौ–पुत्रि ?' इति पाठः । स्तन्यत्यागात् परेण=दुग्धपानकालातिक्रमणानन्तरमिति भाव', वाल्मीके = वाल्मीकय इति भावः, 'कर्मादीनामपि सम्बन्धमात्रविवक्षाया षष्ठ्येवे'ति चतुर्थ्यर्थे षष्ठी । यद्वा समीप इति शेष', 'स एतयोः क्षत्रकृत्यः करिष्यति' इत्यधिकः पुस्तकान्तरपाठस्तत्राग्रिमः श्लोको न विद्यते । क्षत्रकृत्य = क्षत्रियोचितजातकर्मादिसंस्कारमिति भावः ।

वसिष्ठ इति । सम्प्रति वसिष्ठ एव रघुवंशस्य आचार्यो हि, स एव च अनयोः ब्रह्मक्षत्रकृत्य करिष्यति इत्यन्वयः । सम्प्रति = अधुना, वसिष्ठ एव=तन्नामा ऋषिरेव, रघुवशस्य = रघुकुलस्य, आचार्य = सस्कारक', हि = निश्चयेन । स एव च = वसिष्ठ एव च, अनयो = सीतासुतयोः, ब्रह्मक्षत्रकृत्यं = ब्राह्मणक्षत्रियकर्म, ब्राह्मणत्वोचितं वेदाध्यापन, क्षत्रियत्वोचितं धनुर्वेदाध्यापन चेति भावः । करिष्यति = विधास्यति, कालान्तर इति शेषः । श्लोकोऽयं बहुषु पुस्तकेषु नावलोक्यते ॥ १४ ॥

---

पुत्रोंके सस्कार करनेवाले आचार्यको नहीं पा रही हैं, कष्ट है ॥ १३ ॥

गङ्गा—कल्याणि ! तुम्हें इस चिन्ताका क्या प्रयोजन है ? दूध छोडनेके बाद इन दोनों वत्सोंको मैं भगवान् वाल्मीकिको अर्पण करूंगी ।

इस समय वसिष्ठ ऋषि ही रघुवशके आचार्य हैं, वे ही इन दोनोंका ब्राह्मणोचित और क्षत्रियोचित सस्कार करेंगे ॥ १४ ॥

यथा वसिष्ठाङ्गिरसावृषिः प्राचेतसस्तथा ।
रघूणां जनकानां च वंशयोरुभयोर्गुरुः ॥ १५ ॥

रामः—सुविचिन्तितं भगवत्या ।

लक्ष्मणः—आर्य ! सत्यं विज्ञापयामि । तैस्तैरुपायैरिमौ वत्सौ कुशलवावुत्प्रेक्षे ।

एतौ हि जन्मसिद्धास्त्रौ प्राप्तप्राचेतसावुभौ ।
आर्यतुल्याकृती वीरौ वयसा द्वादशाब्दकौ ॥ १६ ॥

---

तर्हि साम्प्रतमनयोः को जातकर्मादिसंस्कारं कुर्यादित्यत्राह—

यथेति । रघूणां जनकानां च उभयोः वंशयोः यथा वसिष्ठाङ्गिरसौ ( गुरू ), तथा प्राचेतसः ऋषिः गुरुः इत्यन्वयः । जनकानां=जनकवंशोत्पन्नानां, रघूणां च = रघुवंशोत्पन्नानां राज्ञां च, उभयोः = द्वयोः, वंशयोः = कुलयोः, यथा = येन प्रकारेण, वसिष्ठाङ्गिरसौ = ब्रह्मपुत्रशतानन्दौ, गुरू स्त इति शेषः, तथा = तेन प्रकारेण, प्राचेतसः = वाल्मीकिः, ऋषिः = मुनिः, गुरुः = आचार्यः, अस्तीति शेषः । महर्षिवाल्मीकिरेव अनयोर्जातकर्मादिसंस्कारं विधास्यतीति भावः ॥ १५ ॥

राम इति । भगवत्या = गङ्गया, सुविचिन्तितं = समीचीनो विचारः कृतः ।

लक्ष्मण इति । तैस्तैरुपायैः=बहुभिर्हेतुभिः । उत्प्रेक्षे=सीतापुत्रौ संभावयामि । तत्र हेतुमाह—

एताविति । हि एतौ उभौ वीरौ, जन्मसिद्धास्त्रौ, प्राप्तप्राचेतसौ, आर्यतुल्याकृती, वयसा द्वादशाब्दकौ ( स्तः ) इत्यन्वयः । हि = यतः, एतौ=समीपतरवर्तिनौ, उभौ = द्वौ, कुशलवाविति भावः, वीरौ = शूरौ, जन्मसिद्धाऽस्त्रौ = जन्मसिद्धानि = उत्पत्तिकालप्राप्तानि, अस्त्राणि=जृम्भकास्त्राणि, ययोस्तौ, प्राप्तप्राचेतसौ=प्राप्तः=आसादितः, प्राचेतसः = वाल्मीकिः, याभ्यां तौ, संस्कारार्थं वाल्मीकिप्राप्ताविति भावः,

---

रघु और जनक इन दोनों वंशोंमें जिस तरह वशिष्ठ और शतानन्द गुरु हैं, उसी तरह वाल्मीकि ऋषि भी गुरु हैं ॥ १५ ॥

राम—भगवती गङ्गाजीने अच्छा विचार किया ।

लक्ष्मण—आर्य ! मैं सत्य निवेदन करता हूँ—बहुतेरे कारणोंसे 'ये वत्स कुश और लव ही सीताजीके पुत्र हैं' मैं ऐसी सम्भावना करता हूं ।

क्योंकि ये दोनों वीर हैं, इनको जृम्भकास्त्र जन्मसिद्ध है, दोनोंने वाल्मीकि ऋषिसे संस्कार लाभ किया है, ये दोनों आपके सदृश आकारवाले हैं और दोनों ही वयसे बारह वर्षके हैं ॥१६॥

रामः—वत्सावित्येवाह परिप्लवमानहृदयः प्रमुग्धोऽस्मि* ।

पृथिवी—एहि वत्से ! पवित्रीकुरु रसातलम् ।

रामः—हा प्रिये ! लोकान्तरं गताऽसि ?

सीता—णेदु मं अत्तणो अङ्गेसु विलअं अम्बा । ण सहिस्सं ईरिसं जीअलोअस्स परिभवं अणुभविदुम् । ( नयतु मामात्मनोऽङ्गे विलयमम्बा । न

आर्यतुल्याकृती = आर्यस्य = पूज्यस्य, भवत इति भावः, तुल्या = सदृशी, आकृतिः= आकारः, ययोस्तौ । वयसा = अवस्थया हेतुना, द्वादशाब्दकौ=द्वादशसंख्याकसंवत्सरयुक्तौ स्त इति भावः । 'जातौ प्राचेतसान्मुनेः । वीरौ सम्प्राप्तसंस्कारौ' इति पाठे—एतौ हि प्राचेतसान्मुनेः सम्प्राप्तसंस्कारौ वयसा द्वादशाब्दकौ वीरौ जातौ इत्यन्वयोऽर्थस्तु सुगमः । एतौ कुशलवौ सीतापुत्राविव उत्पत्तिकालादेव प्राप्तजृम्भकावित्येको हेतुः, वाल्मीकितः प्राप्तसंस्काराविति द्वितीयो हेतुः, भवत्सदृशाकाराविति तृतीयो हेतुः, द्वादशवत्सरवयस्काविति चतुर्थो हेतुः, एवं च यमलौ चैताविति श्लोकानुक्तः पञ्चमो हेतुश्च । तथा चैतैर्हेतुभिरिमौ कुशलवौ सीतापुत्रत्वेन निश्चिनोमीति भावः ॥ १६ ॥

राम इति । इमावित्यध्याहार्यम्, इमौ = कुशलवौ, वत्सौ = पुत्रौ, संभाव्येति शेषः, इत्येव = अनेनैव हेतुना, परिप्लवमानहृदयः = परिप्लवमानं = चञ्चलम्, हृदयं = चित्तम्, यस्य सः, एतादृशः सन्, प्रमुग्धः = प्रमूढः ।

पृथिवीति । रसातलं = रसायाः = पृथिव्याः, तलम् = अधोभागम्, पातालमित्यर्थः, 'भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा', 'अधः स्वरूपयोरस्त्री तलम्' इत्यमरः ।

राम इति । लोकान्तरम् = अन्यो लोको लोकान्तरं, तत् = भूलोकभिन्नं लोकं, पातालमिति भावः, 'मयूरव्यंसकादयश्च' इति समासः ।

सीतेति । विलयं = तिरोहितत्वम् । परिभवं = तिरस्कारम्, 'अनादरः

राम—इन दोनों वत्सोंको पुत्र समझकर ही मैं चञ्चलचित्त और अतिशय मोहयुक्त हो रहा हूं ।

पृथिवी—आओ बेटी ! पातालको पवित्र कर लो ।

राम—प्रिये ! दूसरे लोक ( पाताल ) को चली गई हो ?

सीता—माताजी मुझे अपने अङ्गोंमें विलीन कर लें । मैं मनुष्यलोकके ऐसे तिरस्कारका

* 'वत्स ! इत्येवाह मुग्धोऽस्मि' इति पाठान्तरम् ।

सहिष्यामीदृशं जीवलोकस्य परिभवमनुभवितुम्। )

लक्ष्मणः—किमुत्तरं स्यात् ?

पृथिवी—मन्नियोगतः स्तन्यत्यागं यावत्पुत्रयोरवेक्षस्व। परेण तु यथा रोचिष्यते तथा करिष्यामि।

गङ्गा—एवं तावत्।

( इति निष्क्रान्ते देव्यौ सीता च। )

रामः—कथं प्रतिपन्न एव तावत्। हा चारित्रदेवते ! लोकान्तरे पर्यवसिताऽसि ? ( इति मूर्च्छति )।

---

परिभवः परोभावस्तिरस्क्रिया।' इत्यमरः, 'जीवलोकपरिवर्तम्' इति पाठे—जीवलोकस्य = प्राणिलोकस्य, परिवर्तम् = परिवर्तनम् इत्यर्थः, न सहिष्यामि = न सोढुं शक्नोमि, 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्' इति नयेनात्र 'षह मर्षणे' इति धातोः परस्मैपदित्वं बोध्यम्।

लक्ष्मण इति। उत्तरं = प्रतिवाक्यम्, सीतावाक्यम्, पृथिवी किमुत्तरं दास्यतीति भावः, पुस्तकान्तरेषु रामोक्तमेवं तद्वाक्यमस्ति।

पृथिवीति। मन्नियोगतः = मदाज्ञया, स्तन्यत्यागं यावत् = दुग्धत्यागपर्यन्तं, 'ततोऽन्यत्रापि दृश्यते' इति द्वितीया, पुत्रयोः = तनययोः, कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव' इति षष्ठी, अवेक्षस्व = पश्य। परेण तु = परस्मिन् काले तु, 'स्तन्यत्यागानन्तरं त्विति भावः', एनबन्तमव्ययमेतत्। यथा रोचिष्यते = येन प्रकारेण रुचिर्भविष्यति।

गङ्गेति। एवं तावत् = एवमेव, एतदेव कर्तव्यमिति भावः।

राम इति। प्रतिपन्नः = अङ्गीकृतः, पुत्रयोः स्तन्यत्यागानन्तरं सीतया पातालगमनमङ्गीकृतमिति भावः। लोकान्तरे = पाताले, पर्यवसिता = विश्रामं गता।

---

सहन नहीं कर सकता हूं।

लक्ष्मण—क्या उत्तर होगा ?

पृथिवी—मेरी आज्ञासे दूध छोड़नेके समय तक पुत्रोंकी देख-रेख करो। उसके अनन्तर जैसी रुचि होगी, वैसी करूंगी।

गङ्गा—ऐसा ही करना चाहिए।

( अनन्तर देवीद्वय और सीताजी चली जाती हैं। )

राम—किसी तरह सीताने स्वीकार ही कर लिया। हा चारित्रदेवते ! दूसरे लोकमें विश्रामको चली गयी हो ? ( ऐसा कहकर मूर्च्छित हो जाते हैं। )

लक्ष्मणः—भगवन् वाल्मीके ! परित्रायस्व, परित्रायस्व । एष ते काव्यार्थः ?

( नेपथ्ये । )

अपनीयतामातोद्यम् । भो जङ्गमस्थावराः प्राणभृतो मर्त्यामर्त्याः ! पश्यन्त्विदानीं वाल्मीकिनाभ्यनुज्ञातं पवित्रमाश्चर्यम् ।

लक्ष्मणः—( विलोक्य । )

मन्थादिव क्षुभ्यति गाङ्गमम्भो व्याप्तं च देवर्षिभिरन्तरिक्षम् ।
आश्चर्यमार्या सह देवताभ्यां गङ्गामहीभ्यां सलिलादुपैति ॥ १७ ॥

---

लक्ष्मण इति । परित्रायस्व = रक्ष, आर्यं राममिति शेषः । काव्यार्थ — काव्यस्य = दृश्यकाव्यस्य, नाटकस्येत्यर्थः, अर्थः = प्रयोजनमभिधेयं वा, रामस्य विपत्तिमवलोकयेतः परं निवर्तितव्यमिति हृदयम् ।

अपनीयेति । आतोद्यं = ततानद्धसुषिरघनात्मकं वीणादिकं चतुर्विधं वाद्यमिति भावः, अपनीयता = निवर्त्यताम् । जङ्गमस्थावराः = चराचराः, मर्त्यामर्त्याः = मरणामरणधर्मवन्तः । प्राणभृतः = प्राणिनः, सम्बोधनमेतत्, 'अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः ।' इति मनुवचनाद् वृक्षादीनामपि प्राणवत्त्वात्स्थावरोक्तिरविरुद्धा । अभ्यनुज्ञात = समादिष्टम्, पवित्रं = प्रयतं, निर्दोषमिति भावः, पश्यन्त्वित्यन्वयः ।

मन्थादिवेति । गाङ्गम् अम्भो मन्थात् इव क्षुभ्यति, अन्तरिक्षं च देवर्षिभिः व्याप्तम् । आर्या देवताभ्या गङ्गामहीभ्या सह सलिलात् उपैति, आश्चर्यम् इत्यन्वय । गाङ्गं = गङ्गाया इदमिति गाङ्गं = गङ्गायाः, 'तस्येदम्' इत्यण्, अम्भः = जलं, मन्थात् इव = मथनात् इव, क्षुभ्यति=क्षोभं प्राप्नोति । अन्तरिक्षं च= आकाशं च, देवर्षिभिः = देवैः = अमरैः, ऋषिभिः = मुनिभिः, व्याप्तम् = आकीर्णं, कौतुकातिशयादिति भावः । न केवलं पृथिवी जनैराकीर्णा प्रत्युताकाशमपि

---

लक्ष्मण—भगवन् वाल्मीके ! रक्षा कीजिए, रक्षा कीजिए। आपके काव्यका यह प्रयोजन है ?

( नेपथ्यमें । )

चारो तरहके वाद्योंको बन्द करो । हे स्थावर और जङ्गम प्राणिवर्ग ! देवता और मनुष्य-समुदाय ! इस समय आपलोग वाल्मीकि ऋषिसे आदिष्ट पवित्र आश्चर्यको देखें ।

लक्ष्मण—(देखकर) गङ्गाजीका जल, जैसे मथनसे क्षुभित हो रहा है, आकाश देवता और ऋषियोंसे व्याप्त है । आर्या ( सीताजी ), देवी—गङ्गा और पृथिवीके साथ गङ्गाजलसे उठ रही हैं । आश्चर्य है ॥ १७ ॥

( नेपथ्ये । )

अरुन्धति ! जगद्वन्द्ये ! गङ्गापृथ्व्यौ जुषस्व नौ ।
अर्पितेयं तवावाभ्यां सीता पुण्यव्रता वधूः ॥ १८ ॥

लक्ष्मणः—अहो आश्चर्यमाश्चर्यम् । आर्ये ! * पश्य पश्य । कष्टमद्यापि नोच्छ्वसित्यार्यः ।

---

देवर्षिभिराकीर्णमिति भावः । आर्या = सीता, देवताभ्या = देवीभ्या, गङ्गामहीभ्या = जाह्नवीपृथिवीभ्या, सह = समं, सलिलात् = गङ्गाजलात्, उपैति = उत्तिष्ठति । आश्चर्यम् = एतदद्भुतमिति भाव. । अत्रोत्प्रेक्षालङ्कारः । इन्द्रवज्रा वृत्तम् ॥ १७ ॥

अरुन्धतीति । जगद्वन्द्ये हे अरुन्धति ! नौ गङ्गापृथ्व्यौ जुषस्व । आवाभ्याम् इयं पुण्यव्रता वधूः सीता तव अर्पिता इत्यन्वय. । जगद्वन्द्ये = लोकनमस्कार्ये !, अरुन्धति = हे वसिष्ठपत्नि ! नौ = आवा, गङ्गापृथिव्यौ = जाह्नवीपृथिव्यौ, जुषस्व = प्रीयस्व, 'जुषी प्रीतिसेवनयो.' इति धातोर्लोट्, 'भजस्वे'ति पाठे—सेवस्वेत्यर्थः, अस्मत्प्रार्थनापूरणेनानुगृहाणेति भावः । आवाभ्या = गङ्गापृथिवीभ्याम्, इयं = सन्निकृष्टस्था, पुण्यव्रता = पुण्यं = पवित्रम्, व्रतं = नियमः, यस्या. सा, वधूः = स्नुषा, सीता = मैथिली, तव = भगवत्याः, समीप इति शेष., अर्पिता = न्यस्ता, अद्यप्रभृति सीताया· संरक्षणं त्वया कार्यमिति भावः । 'तवावाभ्याम्' इत्यत्र 'तवाभ्यासे' इति पुस्तकान्तरपाठस्तत्र—अभ्याशे = समीप इत्यर्थः, 'सदेशाभ्याशसविधसमर्यादसवेशवत्' इत्यमर· ॥ १८ ॥

लक्ष्मण इति । आर्ये = पूज्ये ! अरुन्धतीं प्रति सम्बुद्धिरियम्, आर्यः = पूजनीय', रामचन्द्र इति भावः, न उच्छ्वसिति = उच्छ्वास न प्राप्नोति, एतावति कालेऽपि चेतना न प्राप्नोतीति भावः, अत एव कष्टम् ।

---

( नेपथ्यमें । )

लोकनमस्कार्ये हे अरुन्धति ! हम दोनों गङ्गा और पृथिवीको प्रसन्न कीजिए । हम दोनों पवित्र व्रतवाली वधू इस सीताको आपको सौंपती हैं ॥ १८ ॥

लक्ष्मण—अहो ! आश्चर्य है आश्चर्य है । आर्ये ( अरुन्धति ) ! देखिये, देखिये । कष्ट है, अभी तक आर्य होशमें नहीं आये हैं ।

---

* 'दिष्ट्या आश्चर्यमाश्चर्यम् । आर्ये !' इति पाठान्तरम् ।

( ततः प्रविशत्यरुन्धती सीता च । )

अरुन्धती—

त्वरस्व वत्से ! वैदेहि ! मुञ्च शालीनशीलताम् ।
एहि जीवय मे वत्सं सौम्यस्पर्शेन पाणिना ॥ १९ ॥

सीता—( ससम्भ्रमं स्पृशति । ) समस्ससदु समस्ससदु अज्जउत्तो । ( समाश्वसितु समाश्वसित्वार्यपुत्रः । )

रामः—(समाश्वस्य सानन्दम् ।) भोः ! किमेतत् ? ( दृष्ट्वा सहर्षाद्भुतम् । ) कथं देवी जानकी ? ( सलज्जम् । ) अये ! कथमम्बाऽरुन्धती ? कथं सर्वे ऋष्यशृङ्गादयोऽस्मद्गुरवः ?

अरुन्धती—वत्स ! एषा भागीरथी रघुकुलदेवता देवी गङ्गा सुप्रसन्ना * ।

---

त्वरस्वेति । वत्से ! हे वैदेहि ! त्वरस्व, शालीनशीलतां मुञ्च, एहि, सौम्यस्पर्शेन पाणिना मे वत्सं जीवय इत्यन्वयः । वत्से=पुत्रि !, हे वैदेहि=हे सीते ! त्वरस्व = त्वरां कुरु, 'ञित्वरा सम्भ्रमे' इति धातोर्लोट् । शालीनशीलताम् = अधृष्टस्वभावत्वं, 'शालीनकौपीने अधृष्टाकार्ययोः' इति निपातनात् शालीन-पदसिद्धिः, मुञ्च = त्यज, लज्जां त्यजेति भावः । तर्हि मया किं कर्तव्यमित्याह— एहि = आगच्छ, सौम्यस्पर्शेन = मृदुलस्पर्शेन, पाणिना = करेण, मे = मम, वत्सं = रामभद्रं, जीवय = प्रबोधय ॥ १९ ॥

राम इति । कथं = केन प्रकारेण । अस्मद्गुरवः=अस्मत्पूजनीया गुरुजनाः ।

अरुन्धतीति । भागीरथी = भगीरथानीता गङ्गा, रघुकुलदेवता = रघुकुलस्य = रघुवंशस्य, देवता = देवी, तत्पूर्वजोद्धारकरणादिति भावः, सुप्रसन्ना = शोभनप्रसादोपेता ।

---

( अनन्तर अरुन्धती और सीताजी प्रवेश करती हैं । )

अरुन्धती—बेटी सीते ! जल्दी करो । लज्जाशीलताको छोड़ो । आओ, कोमल स्पर्शवाले हाथसे मेरे वत्स ( रामभद्र ) को जिलाओ ॥ १९ ॥

सीता—( जल्दीके साथ स्पर्श करती है । ) आश्वस्त हों, आर्यपुत्र ! आश्वस्त हों ।

राम—( होशमें आकर, आनन्दके साथ ) अरे ! यह क्या है ? ( देखकर, हर्ष और आश्चर्यके साथ ) कैसे देवी सीता (आ गई है) ? ( लज्जाके साथ ) अरे ! कैसे माता अरुन्धती और सपूर्ण ऋष्यशृङ्ग आदि हमारे पूज्य जन ( उपस्थित ) हैं ?

अरुन्धती—वत्स ! ये रघुकुलकी देवी भगीरथसे लाई गई गङ्गाजी सुप्रसन्न हो गई हैं ।

---

* 'एषा भगवती भगीरथगृहदेवता सुप्रसन्ना गङ्गा' इति पाठान्तरम् ।

( नेपथ्ये । )

जगत्पते रामभद्र ! स्मर्यतामालेख्यदर्शने मां प्रत्यात्मवचनम् । 'सा त्वमम्ब ! स्नुषायामरुन्धतीव सीतायां शिवानुध्याना भवे'(पृ० ३६)ति । तदनृणास्मि ।

अरुन्धती—इयं ते श्वश्रूर्भगवती वसुन्धरा ।

( नेपथ्ये । )

उक्तमासीदायुष्मता वत्सायाः परित्यागे 'भगवति वसुन्धरे ! सुश्लाघ्यां दुहितरमवेक्षस्व जानकीम्'(पृ० ७८) इति । तदधुना कृतवचनाऽस्मि* ।

रामः—कृतापराधोऽपि भगवति ! त्वयानुकम्पयितव्यो रामः प्रणमति† ।

---

जगदिति । जगत्पते = लोकाधिपते !, आलेख्यदर्शने = चित्रदर्शने, आत्मवचनं = स्वोक्तिः, तदेव रामाभिहितमस्य नाटकस्य प्रथमाङ्कस्थितवचनं प्रतिपादयति—सेति । तत् = तस्माद्धेतोः, त्वदीया प्रार्थनामनुरुध्येति शेषः, अनृणा = ऋणरहिता, गङ्गादेव्या वचनमिदम् ।

उक्तमिति । आयुष्मता = जैवातृकेण, भवता रामभद्रेणेति भावः, वत्सायाः = सीतायाः, उक्तम् = अभिहितम् , आसीत् = अभवत् , किं तदित्याह प्रथमाङ्कस्थितं रामवचनम्—भगवतीति । तत् = तस्माद्भवद्वचनाद्धेतोः, कृतवचना = पालितभवदादेशेति भावः ।

राम इति । कृतापराधः = कृतः = अनुष्ठितः, अपराधः = सीतात्यागरूपमागः, येन सः, अनुकम्पयितव्यः = दयनीयः । प्रणमति = प्रकर्षेण नमति ।

---

( नेपथ्यमें । )

जगत्पते रामभद्र ! चित्रदर्शनके अवसरपर मुझे जो कहा था, उसका स्मरण कीजिए—'हे माता ! ऐसी आप बहू सीतामें अरुन्धतीकी तरह कल्याणकी चिन्ता करनेवाली हों ।' इस कारणसे ( वैसा ही कर ) मैं ऋणरहित हो गई हूं ।

अरुन्धती—ये आपकी सास भगवती पृथिवी हैं ।

( नेपथ्यमें । )

चिरञ्जीवने सीताके परित्यागके अवसरपर कहा था—'भगवति पृथिवि ! प्रशंसनीया पुत्री सीताका देख-रेख करना' । इस कारणसे इस समय मैंने आपके वचनका पालन कर लिया है ।

रामः—भगवति ! अपराध करनेपर भी आपका दयापात्र राम प्रणाम करता है ।

---

* 'अस्मि प्रभोर्वत्सस्य' इत्यधिकं पुस्तकान्तरेषु पाठः ।

† 'कथं कृतमहापराधो भगवतीभ्यामनुकम्पितः ? प्रणमामि वः' इति पाठान्तरम् ।

अरुन्धती—भो भोः पौरजानपदाः ! इयमधुना वसुन्धराजाह्नवीभ्यामेवं प्रशस्यमाना मया चारुन्धत्या समर्पिता * पूर्वं भगवता वैश्वानरेण निर्णीतपुण्यचारित्रा सब्रह्मकैश्च देवैः स्तुता सावित्रकुलवधूर्देवयजनसंभवा जानकी परिगृह्यताम् । कथमिह भवन्तो मन्यन्ते ?

लक्ष्मणः—आर्य ! एवमम्बयाऽरुन्धत्या † च निर्भर्त्सिताः पौरजानपदाः कृत्स्नश्च भूतग्राम आर्यां नमस्कुर्वन्ति । लोकपालाः सप्तर्षयश्च पुष्पवृष्टिभिरुपतिष्ठन्ते ।

---

अरुन्धतीति । पौरजानपदाः = पौरा = पुरवासिन , जानपदा = देशवासिनः, वसुन्धराजाह्नवीभ्या = पृथ्वीगङ्गाभ्याम् , एवम् = इत्थम्—'आवयोरपि यत्सङ्गात्पवित्रत्वं प्रकृष्यते ।' इत्यष्टमश्लोकोक्तप्रकारेणेति भाव , प्रशस्यमाना = अभिष्टुतेति भाव , पूर्वं = रावणवधानन्तरकाले, वैश्वानरेण = अग्निना, निर्णीतपुण्यचारित्रा = निर्णीत = निश्चितम् , पुण्य = पवित्रम् , चारित्रं = सच्चरित्रं, पातिव्रत्यमिति भाव , यस्या' सा, सब्रह्मकै = ब्रह्मदेवयुक्तै', स्तुता = प्रशंसिता, सावित्रकुलवधू = सूर्यवंशस्नुषा, देवयजनसभवा = यज्ञस्थानोत्पन्ना, अयोनिजेति भाव', इयं=मत्समीपस्था, जानकी=मैथिली, परिगृह्यता = राज्ञीत्वेन स्वीक्रियताम् । इह = अस्मिन्विषये, भवन्त कथं मन्यन्ते = किं वोऽभिमतमिति भाव । सीतायाः पातिव्रत्यज्ञापकेष्वेतावत्सु हेतुषु सत्सु रामकर्तृकतत्परिग्रहविषये किं वोऽभिमतमिति भाव' ।

लक्ष्मण इति । एवम् = इत्थम् , निर्भर्त्सिताः = उपालब्धा इति भाव', कृत्स्न = समस्त , भूतग्रामश्च = प्राणिसमूहश्च, भूतग्रामोऽयं गोबलीवर्दन्यायेन पौरजानपदातिरिक्तो ग्राह्य , आर्या = सीता, लोकपाला = इन्द्रादयः, सप्तर्षयश्च = कश्यपादयश्च, उपतिष्ठन्ते = पूजयन्ति, आर्यामिति शेषः, 'उपाद्देवपूजा-

---

अरुन्धती—हे नागरिक और देशवासिगण ! इस समय पृथिवी और गङ्गाजीसे इसतरह प्रशंसा की जानेवाली, मुझ अरुन्धतीसे समर्पण की गई, पहले भी जिनके पवित्र चरित्रका भगवान् अग्निदेवसे निश्चय कर लिया गया है ऐसी और ब्रह्मदेवसे युक्त अन्य देवोंसे स्तुति की गई सूर्यवंशकी वधू ( बहू ) यज्ञस्थानमें उत्पन्न इस सीताजीको ग्रहण कर लें। इस विषयमें आप लोगोंका क्या मत है ?

लक्ष्मण—आर्य ! इस तरह माता अरुन्धतीके उलाहना देनेपर नागरिक और देशवासिगण तथा संपूर्ण प्राणिसमुदाय आर्याको नमस्कार कर रहे हैं। लोकपाल और सप्तर्षिगण भी पुष्पवृष्टिसे आर्याकी पूजा कर रहे हैं।

---

* ' पदा । भगवतीभ्या जाह्नवीवसुन्धराभ्यामेव प्रशस्यमाना ममारुन्धत्या समर्पिता' इति पाठान्तरम् । † 'एवमार्ययाऽरुन्धत्या' इति पाठान्तरम् ।

अरुन्धती—जगत्पते रामभद्र !

नियोजय यथाधर्मं प्रियां त्वं धर्मचारिणीम् ।
हिरण्मय्याः प्रतिकृतेः पुण्यां प्रकृतिमध्वरे ॥ २० ॥

सीता—( स्वगतम् । ) अवि जाणादि अज्जउत्तो सीदाए दुक्खं पडिमज्जिदुम् ? ( अपि जानात्यार्यपुत्रः सीताया दुःखं परिमार्ष्टुम् ? )

रामः—यथा भगवत्यादिशति ।

लक्ष्मणः—कृतार्थोऽस्मि ।

---

सन्नतिकरणमित्रकरणपथिष्विति वाच्यम्' इत्यात्मनेपदम्, एतेन सीताया देवतात्वं व्यज्यते ।

नियोजयेति । (हे जगत्पते !) त्वं हिरण्मय्या प्रतिकृते· पुण्या प्रकृतिं प्रियां धर्मचारिणीम्, अध्वरे यथाधर्मं नियोजय इत्यन्वयः । ( हे जगत्पते=हे लोकाधीश रामभद्र ! ) त्वं = भवान्, हिरण्मय्याः = सुवर्णनिर्मितायाः, 'तस्य विकार' इति मयट्, टित्वान्ङीप्, 'दाण्डिनायने' त्यादिसूत्रेण यलोपनिपात·, प्रतिकृतेः = प्रतिमायाः, पुण्या = पवित्रा, प्रकृतिं = बिम्बभूतां, प्रिया = वल्लभा, धर्मचारिणीं = धर्मानुष्ठानशीलां, सहधर्मिणीं = पत्नीम्, सीतामिति भावः, अध्वरे = यज्ञे, प्रारब्धेऽश्वमेध इति भावः, यथाधर्मं = धर्ममनतिक्रम्येति विग्रहे यथार्थेऽव्ययीभावः, नियोजय=नियुक्ता कुरु, सीतया सहितः सन्नश्वमेधमनुतिष्ठेति भाव· ॥२०॥

सीतेति । परिमार्ष्टुम् = निवारयितुम् । अपिः सम्भावनार्थकः, 'गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि ।' इत्यमरः ।

राम इति । भगवती = अरुन्धती, आदिशति = आज्ञापयति, तथैवानुतिष्ठामीति भावः ।

लक्ष्मण इति । कृतार्थः = कृतकृत्यः, सीतारामयोः समागमरूपप्रयोजनेन सम्पन्न इति भावः ।

---

अरुन्धती—जगत्पते रामभद्र !

आप सुवर्णमयी प्रतिमाकी पवित्र बिम्बभूत प्रिया सद्धर्मचारिणी सीताको यज्ञमें धर्मपूर्वक नियुक्त करें ॥ २० ॥

सीता—( मन ही मन ) आर्यपुत्र सीताके दुःखका निवारण करना भी जानते हैं ।

राम—भगवती जैसी आज्ञा करती हैं ।

लक्ष्मण—मैं कृतकृत्य हो गया हूं ।

सीता—पज्जुज्जीविदह्मि । ( प्रत्युज्जीविताऽस्मि । )

लक्ष्मणः—आर्ये ! अयं लक्ष्मणः प्रणमति ।

सीता—वच्छ ! ईरिसो तुम चिर जीअ । (वत्स ! ईदृशस्त्वं चिरं जीव ।)

अरुन्धती—भगवन् वाल्मीके ! उपनयेदानीं सीतागर्भसंभवौ रामभद्रस्य कुशलवौ । ( इति निष्क्रान्ता । )

रामलक्ष्मणौ—दिष्ट्या तथैवैतत् ।

सीता—* कहिं ते पुत्तआ ? ( क्व तौ पुत्रकौ ? )

( ततः प्रविशति वाल्मीकिः कुशलवौ च । )

वाल्मीकिः—वत्सौ ! एष वां रघुपतिः पिता । एष लक्ष्मणः कनिष्ठतातः ।

---

सीतेति । प्रत्युज्जीविताऽस्मि = पुनः प्राप्तजीवनाऽस्मि, आर्यपुत्रस्वीकारेणेति भावः ।

लक्ष्मण इति । प्रणमति = वन्दते, त्वामिति शेषः, क्वचित् 'निर्लज्जः' इत्यधिकः पाठस्तस्य वने त्वन्निर्वासनादिति शेषः ।

सीतेति । ईदृशः = एतादृशः, वियुक्तयोः प्रजावतीभ्रात्रोः सम्मेलनेन संजातहर्षः सन्निति भावः ।

अरुन्धतीति । रामभद्रस्य उपनय = रामभद्रसमीपं प्रापयेति भावः । अत्रैवान्तर्नाटकाभिनयोऽवसित इत्यवधेयमतः परं वाल्मीक्यादीनां प्रवेशात् ।

वाल्मीकिरिति । वां = युवयोः, 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीया-

---

सीता—मैंने पुनर्जीवनको प्राप्त कर लिया है ।

लक्ष्मण—आर्ये ! यह लक्ष्मण प्रणाम करता है ।

सीता—वत्स ! आप ऐसे ही होकर बहुत काल तक जीते रहें ।

अरुन्धती—भगवन् वाल्मीके ! इस समय सीताके गर्भसे उत्पन्न कुश और लवको रामभद्रके समीपमें ले आइये । ( ऐसा कहकर जाती हैं । )

राम और लक्ष्मण—भाग्यसे यह बात वैसी ही हुई ।

सीता—वे पुत्र कहाँ हैं ?

( अनन्तर वाल्मीकि ऋषि, कुश और लव प्रवेश करते हैं । )

वाल्मीकि—वत्सद्वय ! ये रामचन्द्रजी तुम्हारे पिता हैं । ये लक्ष्मणजी तुम्हारे कनिष्ठ पिता

---

* '( सबाष्पाकुला )' इत्यधिकः पाठः कुत्रचित्पुस्तके ।

एषा सीता जननी। एष राजर्षिर्जनको मातामहः।

सीता—( सहर्षकरुणाद्भुतं विलोक्य। ) कहं तादो? कहं जादा? *
( कथं तात? कथं जातौ? )

वत्सौ—हा तात! हा अम्ब! हा मातामह!

रामलक्ष्मणौ—( सहर्षमालिङ्ग्य। ) ननु वत्सौ! युवां प्राप्तौ स्थः।

सीता—एहि जाद कुस! एहि जाद लव! चिरस्स मं परिस्सजह लोअन्दरादो आअदं † जणणिम्। ( एहि जात कुश! एहि जात लव! चिरस्य मां परिष्वजेथां लोकान्तरादागतां जननीम्। )

---

स्ययोर्वश्चावौ' इति वामादेशः। मातामहः = मातुः पिता, 'पितृव्यमातुलमातामहपितामहाः' इति निपातनसूत्रे 'मातृपितृभ्यां पितरि डामहच्' इति वार्तिकतो डामहच् प्रत्ययः।

सीतेति। सहर्षकरुणाद्भुतं = पतिपुत्राद्युपेतया मया जनको दृष्ट इति हर्षः = आनन्दः, प्रागनुभूतदुःखस्मरणेन करुणः = शोकः, दैवानुकूल्येनातर्किताऽपि घटना पुरत आविर्भवतीति अद्भुतम् = आश्चर्यम्, तैः सहितं यथा तथेति विलोकनक्रियाया विशेषणम्। जातौ = पुत्रौ, कुशलवाविति भावः।

वत्साविति। हा = खेदद्योतकमव्ययमेतत्, एतावत्कालपर्यन्तं भवन्तः कथं नावाभ्यां परिज्ञाताः? खेदविषयोऽयमिति भावः।

रामलक्ष्मणाविति। ननु = सम्बोधनार्थकमव्ययमेतत्।

सीतेति। लोकान्तरात्=पातालात्, जननीं=मातरम्। चिरस्य=बहुकालपर्यन्तम्, परिष्वजेथाम् = आलिङ्गयतम्।

---

( छोटे चाचा ) हैं। ये सीताजी माता हैं और ये राजर्षि जनक तुम्हारे मातामह (नाना) हैं।

सीता—( हर्ष, शोक और आश्चर्यके साथ देखकर ) कैसे पिताजी और दोनों पुत्र आगये हैं?

दोनों बालक—(कुश और लव)—हा पिताजी! हा माताजी! हा मातामह (नानाजी)!।

राम और लक्ष्मण—( हर्षके साथ आलिङ्गन कर ) पुत्रो! प्राप्त हुए हो।

सीता—पुत्र कुश! आओ, पुत्र लव! आओ, दूसरे लोक ( पाताल ) से आई हुई माता मुझको बहुत काल तक आलिङ्गन करो।

---

* 'कहं जादा? ( कथं जातौ? )' इति नास्ति क्वचित्पुस्तकेषु।

† 'जम्मन्तरगदं ( जन्मान्तरगताम् )।

कुशलवौ—( तथा कृत्वा । ) धन्यौ स्वः ।

सीता—भअवं ! एसा हं पणमामि । ( भगवन् ! एषाऽहं प्रणमामि । )

वाल्मीकिः—वत्से ! एवमेव चिरं भूयाः । *

( नेपथ्ये । † )

‡ उत्खातलवणो मधुरेश्वरः प्राप्तः ।

लक्ष्मणः—सानुषङ्गाणि कल्याणानि ।

---

कुशलवाविति । तथा कृत्वा = आलिङ्गयेति भाव, धन्यौ = पुण्यवन्तौ, मातापित्रादिदर्शनादिति भाव•, 'सुकृती पुण्यवान्धन्य' इत्यमरः ।

सीतेति । प्रणमामि = नमस्करोमि, भवन्तं वाल्मीकिमिति शेषः ।

वाल्मीकिरिति । एवमेव = ईदृश्येव, पतिपुत्रादियुक्तैवेति भाव•, चिरं = बहुकालपर्यन्तम्, भूया• = भवतात्, पतिपुत्रादिभिस्ते कदापि वियोगो मा भूदिति भाव ।

उत्खातेति । उत्खातलवण = उत्खात• = उन्मूलित•, लवण• = लवणासुर, येन स, मधुरेश्वर•=मधुरायाः=तन्नाम्न्या• कस्याश्चित्पुर्या•, ईश्वर• = स्वामी, शत्रुघ्न इति भाव, क्वचित्तु 'मथुरेश्वर' इति पाठ । अस्यापि प्रथमारब्धप्रयोजनत्वान्निर्वहणे निवेश ।

लक्ष्मण इति । सानुषङ्गाणि = अनुषङ्गेण = अनुबन्धेन, सहितानि=युक्तानि,

---

कुश और लव—( वैसा ही कर ) हम दोनों धन्य हैं ।

सीता—भगवन् ! यह मैं प्रणाम करती हू ।

वाल्मीकि—बेटी ! बहुतकाल तक ऐसी ( पति-पुत्रवती ) ही रहो ।

( नेपथ्यमें । )

लवणासुरको मारकर मथुराके अधीश्वर ( शत्रुघ्न ) आ गये हैं ।

लक्ष्मण—कल्याण दूसरे कल्याणसे अनुगत हुए हैं ।

---

* एतदग्र—'सीता । अम्महे, तादो, कुलगुरु, अज्जाजणो, सभत्तुआ अज्जा सतादेई सलक्खणा सुपसणा अज्जउत्तचलणा, सम कुसलवावि दिसंति, ता णिब्भरम्हि आणंदेण । ( आश्चर्यम्, तात, कुलगुरु, आर्याजन, सभर्तृका आर्या शान्तादेवी, सलक्ष्मणा• सुप्रसन्ना आर्यपुत्रचरणा, सम कुशलवावपि दृश्यन्ते, तन्निर्भरास्मि आनन्देन ) इतिच्छाया' इत्यधिक• पाठो वर्तते पुस्तकान्तरेषु । † 'कलकल' इत्यधिक पाठ पुस्तकान्तरेषु ।

‡ 'वाल्मीकिः । ( उत्थायावलोक्य च )' इत्यधिकेन पुस्तकान्तरपाठेन सह्वोक्तिरियं वाल्मीकेरिति बोध्यम् ।

रामः—सर्वमिदमनुभवन्नपि न प्रत्येमि । यद्वा प्रकृतिरियमभ्युदयानाम् ।
वाल्मीकिः—रामभद्र ! उच्यतां किं ते भूयः प्रियमुपहरामि ?
रामः—अतः परमपि प्रियमस्ति ? किं त्विदं भरतवाक्यमस्तु ।

पाप्मभ्यश्च पुनाति वर्धयति च श्रेयांसि सेयं कथा
मङ्गल्या च मनोहरा च जगतो मातेव गङ्गेव च ।

---

कल्याणानि=मङ्गलानि, कल्याणानि अन्यैः कल्याणैरनुगतानीति भावः । एतादृशप्रमोदसमये शत्रुघ्नोऽपि लवणासुरं हत्वाऽस्मत्समीपे संप्राप्तोऽतः कल्याणं कल्याणान्तरेणानुगतमिति भावः ।

राम इति । सर्वं = सकलम्, इदं = सीतासमागमादिकम्, अनुभवन्नपि = साक्षात्कुर्वन्नपि, न प्रत्येमि = न विश्वसिमि, दुर्दैवपीडितस्य मे कथं नामैतादृशी सौभाग्यसम्पत्तिरिति मत्वेति भावः । यद्वा = अथवा, अभ्युदयानां कल्याणानाम्, इयं प्रकृतिः = अयं स्वभावः, कल्याणानि अनुग्रहकाले पुरुषं साकल्येन वृण्वन्ति न त्वेकदेशेनेति भावः ।

वाल्मीकिरिति । भूयः = पुनः, ते=तव, प्रियम् = अभीष्टम्, उपहरामि=उपहारीकरोमि ? ।

राम इति । अतः परमपि = अस्मादधिकमपि, पत्नीपुत्रादिप्राप्त्यधिकमपीति भावः, प्रियम् = अभीष्टम्, अस्ति = वर्तते ? काका किमपि न वर्तत इति भावः । किन्तु = परन्तु, एवं सत्यपीति भावः, भरतवाक्यं = नाटकाचार्यभरतर्षिवाक्यम्, अस्तु = भवतु । किं तदित्याह—

पाप्मभ्य इति । जगतो माता इव गङ्गा इव च मङ्गल्या मनोहरा च सा इयं कथा पाप्मभ्यः पुनाति, श्रेयांसि वर्द्धयति च । बुधा अभिनयैः विन्यस्तरूपा शब्दब्रह्मविदः प्राज्ञस्य कवेः परिणताम् इमा ताम् एता वाणीं परिभावयन्तु इत्यन्वयः । जगतः = लोकस्य, माता इव = जननी इव, गङ्गा इव च = भागीरथी इव च, मङ्गल्या = मङ्गलाय हिता, मनोहरा च = मनस आह्लादजनिका

---

राम—इन सब विषयोंको अनुभव करता हुआ भी विश्वास नहीं करता हूँ । अथवा कल्याणोंका यह स्वभाव है ।

वाल्मीकि—रामभद्र ! कहिए, फिर आपके किस अभीष्ट पदार्थको उपहारके रूपमें समर्पण करूँ ?

राम—इससे भी अधिक कुछ अभीष्ट है क्या ? परन्तु भरत ऋषिका यह वाक्य हो—

तामेतां परिभावयन्त्वभिनयैर्विन्यस्तरूपां बुधाः
शब्दब्रह्मविदः कवेः परिणतां प्राज्ञस्य वाणीमिमाम् ॥ २१ ॥
( निष्क्रान्ताः सर्वे । )

इति महाकविभवभूतिविरचिते उत्तररामचरिते 'सम्मेलनं' नाम सप्तमोऽङ्कः ॥

---

च, सा = प्रसिद्धा, इयम् = एषा, कथा = रामायणात्मकप्रबन्धकल्पना, पाप्मभ्यः = पापेभ्यः, 'अस्त्री पङ्कं पुमान् पाप्मा पापं किल्विषकल्मषम् ।' इत्यमरः, पुनाति = पवित्रयति, लोकमिति शेषः । श्रेयांसि च = कल्याणानि च, वर्द्धयति च = पुष्णाति च, क्वचित्तु 'पुनातु', 'वर्द्धयतु' इति पाठौ स्तः । बुधाः = विद्वांसः, अभिनयैः = सात्त्विकादिभिरवस्थानुकारैः, 'भवेदभिनयोऽवस्थानुकारः स चतुर्विधः । आङ्गिको वाचिकश्चैवमाहार्यः सात्त्विकस्तथा ॥' इति साहित्यदर्पणीयं भेदगर्भकमभिनयलक्षणम् , विन्यस्तरूपाः = विन्यस्तं = दर्शितम् , रूपं = स्वरूपम् , यस्यास्ताम् , शब्दब्रह्मविदः = वेदतत्त्वार्थज्ञस्य, प्राज्ञस्य = विपश्चितः, कवेः = कवयितुः, भवभूतेरिति भावः, परिणताम् = प्राप्तपरिणामां, रूपान्तरं प्राप्तामिति तात्पर्यम् , 'परिणतप्रज्ञस्य' इत्याकारकः कविविशेषणात्मकः पुस्तकान्तरपाठः, इमाम् = एताम् , ताम् एताम् = सुप्रसिद्धां, वाणीं = वाचम् , उत्तररामचरितरूपामिति भावः, परिभावयन्तु = विचारयन्तु । महर्षिवाल्मीकेः पद्यात्मकरामायणवाचामेव नाटकरूपेण परिणाममापन्नामुत्तररामचरितरूपां सहृदयशिरोमणेर्भवभूतेर्वाणीं गुणदोषविवेचनेन विद्वांसः परिशीलयन्त्विति भावः । अत्र पूर्णोपमालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २१ ॥

इति श्रीशेषराजशर्मप्रणीतायामुत्तररामचरितव्याख्यायां 'चन्द्रकला'ख्यायां सम्मेलनं नाम सप्तमोऽङ्कः ॥ ७ ॥

---

जगत्की माता और गङ्गाकी तरह मङ्गलके लिए हितकारिणी और मनोहर यह ( रामायणस्वरूपिणी ) कथा लोकको पापोंसे पवित्र करती है और कल्याणोंको बढाती भी है । वही शब्दब्रह्मको जाननेवाले विद्वान् कवि (भवभूति) से दूसरे रूपमें लाई गई और जिसका स्वरूप अभिनयोंसे दिखलाया गया है, ऐसी इस ( उत्तररामचरितस्वरूप ) वाणीका विद्वान् लोग विचार करें ॥ २१ ॥ ( सब लोग जाते हैं । )

यह 'सम्मेलन' नामक सप्तम अङ्क समाप्त हुआ ॥ ७ ॥



अथ टीकाकारस्य

## ग्रन्थसमाप्तौ मङ्गलाचरणम् ।

यत्कार्यं विहितं करोमि सततं पश्चात्करिष्यामि य-
द्रागेणागमजातवर्णितदिशा कर्तव्यबुद्ध्यापि वा
तत्सर्वं भवदीयपादकमलद्वन्द्वेऽर्प्यते श्रद्धया
स्वामिन्! कृष्ण!! न चास्ति मेऽत्र कृतिता, सापि त्वदुक्त्यैव हि ॥

❀ ॐ तत्सत् श्रीकृष्णार्पणमस्तु ❀

**समाप्तोऽयं ग्रन्थः ।**



॥ श्रीः ॥

# उत्तररामचरित

# नोट्स = टिप्पणी

## प्रथम अङ्क

लेखक—पं० श्री कान्तानाथ शास्त्री तेलङ्ग, एम० ए०

पृ० १-२. उत्तररामचरितम् = श्रीरामचन्द्रजी के जीवन के उत्तरार्ध की घटनाओं का वर्णन—यह इस नाटक का नाम है। वस्तुत 'उत्तररामचरितम्' यह पद रामचन्द्रजी के जीवन के उत्तरार्धका वोधक है। तथापि अभेदोपचार से यह पद ग्रन्थ का भी वोध कराता है। अथवा 'उत्तरं रामचरितं यस्मिन् तत्' ऐसा अर्थ करने से भी लक्षणया यह पद ग्रन्थ का वोधक होता है। कवि ने 'महावीरचरितम्' नामक नाटक में रामचन्द्रजी के पूर्वचरित का वर्णन किया है। अत॰ प्रकृत नाटक में उत्तरचरित का वर्णन करते हैं। सस्कृत में 'चरित' और 'चरित्र' दो शव्द हैं। प्रथम शव्द अंग्रेजी के 'Life' शव्द का समानार्थक माना जाता है। इस शव्द का 'जीवन' इस अर्थ मे प्रयोग किया जाता है। यह जीवन के इतिवृत्त का वोध कराता है। दूसरा शव्द अंग्रेजी के 'Character' शव्द का समानार्थक माना जाता है। इस में मनुष्य का स्वभाव, परिस्थिति-विशेष में उसकी चित्तवृत्ति कैसी होती है और वह कैसा व्यवहार करता है, इत्यादि वाते आती हैं।

इदं कविभ्य—शिष्टाचार के अनुसार कवि ने ग्रन्थ के आरंभ में 'इद कविभ्य॰' इत्यादि श्लोकद्वारा नान्दीपाठात्मक मगल किया है। यह प्राचीन परिपाटी है कि किसी भी कार्य को करने के पूर्व विघ्नविघात के लिये मंगलपाठ करना चाहिये। कुछ लोगों का मत है कि ग्रन्थ के आरम्भ में, मध्य में तथा अन्त में तीन वार मङ्गल करना चाहिये। 'ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलमाचरेत्'। मगल तीन प्रकार का होता है—आशीर्वादात्मक, नमस्कारात्मक तथा वस्तुनिर्देशात्मक। 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि मङ्गलम्'। कविने इस नाटक में नमस्कारात्मक मगल किया है।

पूर्वेभ्य कविभ्य = व्यास वाल्मीकि आदि प्राचीन कवियों को। 'प्रशास्महे' इस क्रिया का उद्देश्य होने से 'कविभ्यः' में चतुर्थी हुई। 'क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्'। 'कवीनुद्दिश्य प्रशास्महे' कवियों को उद्देश्य कर प्रार्थना करते हैं—ऐसा वोध होता है। दा-धात्वर्थ को क्रियामात्र का उपलक्षण मान कर 'कर्मणा यमभिप्रैति स सम्प्रदानम्' इससे भी चतुर्थी हो सकती है। इस पद्य में 'कवीनुद्दिश्य इदं प्रशास्महे' कवियों को उद्देश्य कर यह प्रार्थना करते हैं—ऐसा वोध होगा। कुछ लोग आगे आने वाले 'नमोवाकं' इस पद में वर्तमान 'नम॰' शब्द के

